| विषयाः | पृष्ठाङ्काः |
|---|---|
| ५१ दशदिक्पालमन्त्रव्याख्या | ३४१ |
| ५२ प्रतिष्ठामन्त्रव्याख्या | ३४५ |
| ५३ प्राणप्रतिष्ठामन्त्रव्याख्या | ३४६ |
| ५४ पञ्चमहावारुणमन्त्रव्याख्या | ३४७ |
| ५५ बर्हिर्होममन्त्रव्याख्या | ३४८ |
| ५६ पूर्णाहुतिमन्त्रव्याख्या | ३४९ |
| ५७ मूर्द्धानमन्त्रव्याख्या | ३४९ |
| ५८ त्र्यायुष्करणमन्त्रव्याख्या | ३५० |
| ५९ प्रणीताविमोकमन्त्रव्याख्या | ३५० |
| ६० अभिषेकमन्त्रव्याख्या | ३५० |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| ६१ श्राद्धमन्त्रव्याख्या | ३५२ |
| ६२ पार्वणश्राद्धमन्त्रव्याख्या | ३५२ |
| ६३ एकोद्दिष्टश्राद्धमन्त्रव्याख्या | ३५३ |
| ६४ वृषोत्सर्गश्राद्धमन्त्रव्याख्या | ३६२ |
| ६५ एकादशाहद्वादशाहश्राद्धमन्त्रव्याख्या | ३६२ |
| ६६ सपिण्डीकरणमन्त्रव्याख्या | ३७३ |
| ६७ आभ्युदयिकश्राद्धमन्त्रव्याख्या | ३७५ |
| ६८ श्राद्धीयसूक्तमन्त्रव्याख्या | ३७५ |
| ६९ आश्वमेधिकमन्त्रगताश्लीलार्थत्व-परिहारव्याख्या | ३८९ |


॥ इति मन्त्रार्थचन्द्रोदयस्य विषयानुक्रमणिका समाप्ता ॥

---

॥ श्रीगणेशायनमः ॥

# * मन्त्रार्थ चन्द्रोदयः *

## प्रथमपरिच्छेदः ।

यतो जातं जगत्सर्वं यच्च सर्वत्र तिष्ठति ।
स्वयं चैतन्यरूपेण तस्मै श्री ब्रह्मणेनमः ॥ १ ॥
साहपुराभिधग्रामे रौपनार्थिर्द्विजोत्तमः ।
जलपादत्तशर्माऽभूत्कुजौलिकुलदीपकः ॥ २ ॥
तस्य पुत्रोऽभवज्ज्येष्ठो विद्यानाथः प्रियंवदः ।
कर्म्मिणामग्रगण्यस्तु वैदिकानां शिरोमणिः ॥ ३ ॥
शैवः सौम्यतरो नित्यं वेदाध्ययनतत्परः ।
कर्म्मकाण्डे तथाऽऽचारे जमदग्निरिवापरः ॥ ४ ॥
महाराजाधिराजस्य गिद्धौराधिपतेः प्रभोः ।
आश्रयात्कृतकृत्यः सन् काश्यां मुक्तिपदं ययौ ॥ ५ ॥
तस्य पुत्रस्तृतीयोऽहं ख्यातो दामोदराभिधः ।
करोमि वेदमन्त्राणामर्थं सरलया दिशा ॥ ६ ॥

तथाहि—

नत्वा गुरुपदद्वन्द्वं दृष्ट्वा ग्रन्थानशेषतः ।
धर्म्मसंस्थापनार्थाय मन्त्रव्याख्या वितन्यते ॥ ७ ॥
आस्तिका मुदमेष्यन्ति ग्लानिमेष्यन्ति नास्तिकाः ।
दृष्ट्वैव रचनामेतामतो यत्नो विधीयते ॥ ८ ॥
नरो मन्दमतिः क्वाहं क्व वेदो गूढतत्त्वकः ।
यते तथाऽपि तस्यार्थे साम्राज्येमन्दभागिव ॥ ९ ॥

तत्रादौ वेदविचारः प्रस्तूयते । वेदस्तावदस्माकमार्य्यहिन्दुजातीनां सनातनधर्म्मविषये स्वतः प्रामाण्यात्मकोऽपौरुषेयश्चास्ति । ब्राह्मणादिद्विजातयो हि मौञ्जीबन्धनानन्तरं यथाविधि वेदाध्ययनं कृत्वैव विहितयजनादिद्वारा कर्म्मफलानि लब्ध्वा सर्वोन्नतिपथेऽग्रगण्या भवन्ति । अतश्च वेदः स्वाध्यायशब्देन प्रतिपाद्यते । तस्मादुपनयनसमनन्तरं द्विजातिभिर्ब्रह्मचर्य्यपालनपुरस्सरमाचार्य्यसन्निधावेव स्थित्वा यथानियमं स्वाध्यायोऽध्येतव्यः ।

स्वाध्यायमन्तरा कथमपि जीवनोत्कर्षसाधनं न भवितुमर्हति । विशेषतश्च ब्राह्मणानां स्वाध्याय एव सर्वोन्नतिसाधनोपायस्तावद्दरीदृश्यते । तथा न च स्वाध्यायमन्तरेण अपहतपाप्मत्वं वागिन्द्रियभाक्त्वं वा भवितुमर्हति, स्वर्गभाक्तस्य तु कथैव का तदुक्तं श्रुत्या—"अपहतपाप्मा स्वाध्यायादेव पवित्रं वा एतत्तद्योऽनुसृजत्यभागो वाचि भवत्यभागोनाके तदेषाऽभ्युक्ता" "यस्तित्याज सचिवं सखायं न तस्य वाच्यपि भागो अस्ति । यदी ७ शृणोत्यलक ७ शृणोति नहि प्रवेद सुकृतस्य पन्थाम्" इति । "तस्मादहरहः स्वाध्यायोऽध्येतव्य" इति श्रुत्यन्तरेणापि स्वाध्यायाध्ययनमावश्यकत्वेन प्रतिपादितम् । स च स्वाध्यायो वेदो मन्त्रब्राह्मणात्मकत्वेनाभिधीयते, कात्यायनकृतप्रतिज्ञासूत्रे "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति तदुक्तेः । वेदः श्रुतिः स्वाध्यायो निगमश्चेति प्रत्येकमेकपर्य्याय एवास्ति । यद्यपि मन्त्रोऽर्थेऽभिधायकवाक्यतया ब्राह्मणश्चार्थे विधायकवाक्यतया प्रतीयते । तथापि केवलं हि अभिधायकवाक्यं मन्त्रः, विधायकवाक्यं च ब्राह्मणमित्याख्याने सति तदुभयोः कर्म्माभिधायकत्वान्मन्त्रोऽपि ब्राह्मणतया ब्राह्मणञ्च मन्त्रतया प्रतिपादयितुं शक्यते । नहिं मन्त्रब्राह्मणयोः केनापि प्रकारेण पारस्परिकः कश्चिद्भेदो दृश्यते । अतएव मन्त्रद्रष्टारो याज्ञवल्क्यप्रभृतयो महर्षिगणा यस्य शब्दसमुदायस्य मन्त्ररूपेण विनियोगं दर्शितवन्तस्तस्यैव शब्दसमुदायस्य मन्त्रलक्षणं च सङ्घटते "द्रव्यदेवतादिस्मारको मन्त्रः" इति । एवं तस्यैव शब्दसमुदायस्य विनियोगो येन वाक्येनानुमीयते तद्वाक्यस्य ब्राह्मणत्वमनुगम्यते । सुतरां मन्त्रभागो ब्राह्मणभागश्च वेद इति नात्र सन्देहः । मन्त्रस्तावद्यथानुष्ठितकार्य्ये यथावत्स्वरादिज्ञानपुरस्सरमृषिच्छन्दोदेवतार्थज्ञानपूर्वकं यथाविधि विनियुक्तः सन् स्वविवक्षितार्थं प्रकाश्य दृष्टादृष्टफलद्वयसाधको भवति । तदेवानुष्ठितं कर्म्म कदा कस्मिन्देशे कथं कर्त्तव्यमिति सन्देहे ब्राह्मणेनापि विधित्वेन तत्प्रतिपाद्यते । तदेव ब्राह्मणं द्विधा विभक्तं विधिभागोऽर्थवादभागश्चेति । विधिवाक्यसमूहस्य श्रेष्ठतां दृढ़ताञ्च प्रतिपादयितुमेवार्थवादवाक्यस्यापि प्रामाण्यं स्वीकर्त्तव्यम् । तदेव विधिवाक्यं यथा कर्म्मानुष्ठानाभिलाषिणो यजमानस्य कर्म्मप्रवृत्तिमुत्पादयति तथैवार्थवादवाक्यञ्चानुष्ठितकर्म्मप्रशस्ततामवबोधयति । तस्मादेव पूर्वमीमांसाकारेण महर्षिजैमिनिनाऽपि ब्राह्मणभागस्वरूपवेदस्यविधिवाक्ये कर्म्मप्रेरणात्वेन अज्ञातज्ञापकत्वेन च निश्चित्य तदन्तर्गतमर्थवादवाक्यं विधिवाक्यस्तावकत्वेन स्थिरीकृतम् । तथैवाह भगवान्यास्कः "मननान्मन्त्राः" इति । तत्रैव मननहेतुत्वादेव मन्त्रः प्रतिपाद्यते । स्वरादीनां यथाविधि समुच्चारणेन शब्दसमूहस्य यथार्थतया ज्ञानं जायते, इत्यभिप्रायेणैव मननान्मन्त्रो व्याख्यातः । परञ्च नहि मन्त्रार्थज्ञानमन्तरा कर्म्मज्ञानं न च कर्म्मज्ञानं विना कर्म्मप्रवृत्तिर्जायते केषाञ्चिदपि । ततश्च कर्म्मप्रवृत्त्यभावे कर्म्मानुष्ठानमपि दुर्लभतरमेव । तथासति तत्फलस्याप्यभावो निगद्यते । अतएव विधायकब्राह्मणवाक्यस्य विध्यनुसारेण कर्त्तव्यकर्म्मानुष्ठाने यथाविधि विनियुक्तः सन्नेव मन्त्रोयथार्थतया ऐहिकामुष्मिकाभ्युदयनिःश्रेयसनिमित्तो भवतीति निश्चितम् । मन्त्रद्वारा यथा कार्य्यज्ञानं भवति तथैव ब्राह्मणद्वारा कार्य्यस्य विज्ञानं भवतीति नात्र कश्चित्सन्देहः । तद्ज्ञानविज्ञानमूलकमन्त्रब्राह्मणात्मकशब्दराशेर्वेदस्य यथार्थतयाऽध्ययनाध्यापनाभावादेव ब्राह्मणो ब्राह्मण्यतेजोविहीनो, मन्त्रश्च विनियोगहीनः, कर्म्मसमुदायश्च फलहीनः, अतो लोकवृन्दश्च सुखहीनमित्येतत्सकलजनानुभवसिद्धमेवास्ति । किञ्च पुरा खलु यथाविधिवेदाध्ययनादिनिरता अस्माकं पूर्वपूर्वजा ऋषिगणा ईदृगसाधारणधीशक्तिसम्पन्ना मेधाविनोऽतीतानागतपदार्थानां

प्रत्यक्षदर्शिन आसन्। यद्भयादिन्द्राद्योऽपि सर्वदैव कृताञ्जलयो वर्त्तन्तेस्म। अन्येषान्तु पुनः का कथा। ते खलु निरतिशयमेधावैशिष्ट्यात्तमेव मन्त्रब्राह्मणात्मकशब्दराशिमखिलं वेदं जिह्वाग्र एव धारयन्तः सकलैहिकामुष्मिकभद्रमाप्नुवन्त एव ब्रह्मसायुज्यं प्रापुरिति गुरुशास्त्र-परम्परातः श्रूयते। तत्प्रभृत्येव श्रुततया स एव वेदः शिष्यपरम्परया समवधीतः सन्नेव श्रुति-रितिनाम्नाऽभिधीयते। किञ्च कालक्रमेण द्वापरयुगे वेदज्ञगुरुशिष्यसम्प्रदायेषु मेधाशक्तेर्ह्रास-परिदृष्टत्वात्परमकारुणिको भगवान् बादरायणोऽखिलसंसारस्य हितात्मतया तमेव मन्त्रब्रा-ह्मणात्मकं वेदं तत्तत्कण्ठेभ्य एव संगृह्य ग्रन्थाकारं निर्मायतद्रक्षां चकार। तदैव सोऽयं वेदो दुरवगाहत्वादृग्यजुःसामाथर्वेतिनाम्ना चतुर्धा विभक्तस्तेनैव। तत्प्रभृत्येव तत्कारणाद्भग-वान्बादरायणो वेदव्यास इतिनाम्ना सुप्रसिद्धोऽभूत्। नानादेशीयर्षिसन्निकटतः सङ्गृहीततया स एव वेदः प्रत्येकं शाखातश्च विभक्तः सन्नपि मन्त्रब्राह्मणात्मकत्वेन स्वाध्यायशब्देनैव निगद्यते। तदुक्तं भगवता यास्केन "साक्षात्कृतधर्म्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृत-धर्म्मभ्य उपदेशेन मन्त्रान् सम्प्रादुरुपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासि-षुर्वेदञ्च वेदाङ्गानि च" इति। उक्तरूपोऽयं मन्त्रभागो ब्राह्मणभागश्च अपौरुषेयवेदस्यात्मभूतो यथाविधि अध्ययनाध्यापनादिद्वारा यथाभीष्टफललाभाय निरतिशयेन जागर्त्ति। तदर्थबोध-नाय शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्योतिःशास्त्राणि प्रवृत्तानि, एभिरङ्गैः सहयुक्तो वेदः शब्दतोऽध्येयोऽर्थतश्च ज्ञेयः सर्वैरेव द्विजातिभिः। तमेवापौरुषेयं षडङ्गं वेदं मूलप्रमाणस्वरूप-मवलम्ब्य स्मृतिपुराणतन्त्रशास्त्राणि दर्शनशास्त्राणि च प्रकाशीकृत्य तत्तच्छास्त्रकृतश्च महर्षिग-णास्तमेव वेदं शास्त्रान्तरे प्रमाणयन्तिस्म। न चान्यानि कानिचिच्छास्त्राणि वेदे प्रमाणभूतानि दरीदृश्यन्ते। स च सर्वतन्त्रस्वतन्त्रो वेदः सनातनार्य्यहिन्दुजातेरेकतन्मात्रतया महादुर्ग-स्वरूप एव दृश्यते। तस्मिन्महाप्राचीनवेदे महाप्राकारमध्यस्थेव सनातनार्य्यहिन्दुजातिः सुर-क्षिताऽस्ति। एवं वेदप्रभावादेव सनातनधर्म्मोऽपि चातुर्वर्ण्यसमाजस्यास्तित्वे पापमयमहा-कालकरालव्यालकलियुगप्रेरितस्वेच्छाचारप्रचाराऽवैदिकधर्म्मनिराकरणे च प्रवृत्तोऽस्तीति सुधियो विभावयन्तु गीर्वाणवाणीविलासकला कुशलाः श्रीमन्तो भवन्तः।

तद्वेदस्याध्ययनाध्यापनाभावादेव अधुना सनातनार्य्यहिन्दुजातिर्दिनानुदिनं शक्ति-हीना क्षीणप्रभावा हतश्रीरपि दृश्यते। वेदाध्ययनमावश्यकत्वेन मन्वादिभिरप्युक्तं तद्यथा–

"वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्।
अविलुप्तब्रह्मचर्य्यो गृहस्थाश्रममावसेत्॥" इति।

तत्र चतुर्णां वेदानां दुःखगाहत्वेनाध्ययनेऽशक्तत्वात्क्रमशस्त्रयाणां द्वयोरेकस्यापि वेद-स्याध्ययनमवश्यं कर्त्तव्यमिति श्रुतिस्मृतिसर्वसिद्धान्तः। तत्रापि यावतीयसर्वशाखाविशिष्ट-स्यैकस्यापि वेदस्याध्ययनेऽक्षमत्वात्स्वशाखामात्रस्यापि अध्ययनमतीवावश्यकत्वेन सुनिश्चित-मस्ति। अत एव "स्वाध्यायोऽध्येतव्यः" इति श्रुतिवाक्ये स्वपदोपादानं वर्त्तते। वास्तविक-तया समग्रवेदशास्त्रस्याध्ययने सत्येव वैदिकसमस्तक्रियाकाण्डस्य सम्यग् ज्ञानं भवितुमर्हति। नहि कर्म्मकाण्डं विना ज्ञानकाण्डेऽधिकारः केषाञ्चिदपीति सर्वं भाष्यग्रन्थेषु स्पष्टम्। ननु कथन्तर्हि शुकादौ कर्म्मकाण्डं विनाऽपि ज्ञानोपलब्धिरितिचेत्तत्रोच्यते। तत्रापि प्राक्तन निष्कामकर्म्मणः फलेन भवितव्यं "कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतंं समाः। एवन्त्वयि

नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे ॥ ( शु. य. वा. सं. ४०।२।३७ )" इतिमाध्यन्दिनीयश्रुतेः कर्म्मद्वारैव ज्ञानोपलब्धिप्रतिपादनात् । तस्माद्वेदमन्तरा पारदर्शित्वं कर्म्मफलावाप्तिश्च न सम्भवितुमर्हति । तत्रापि मन्त्रब्राह्मणात्मकेऽस्मिन्वेदे कर्म्मकाण्डमुपासनाकाण्डं ज्ञानकाण्डञ्च वर्त्तते । तत्र यतः कर्म्मकाण्डविना ज्ञानकाण्डे नाधिकारस्तस्मात्पुरुषार्थमिच्छद्भिः सर्वैरेव द्विजातिभिः प्रथमं कर्म्मकाण्ड एव यतितव्यम् । तच्च कर्मकाण्डं द्विविधं श्रौतं स्मार्त्तञ्च, तदुभयत्र मन्त्रार्थज्ञानमतीवावश्यकं तद्यथा—

"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥" "यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते । अनग्राविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥" "अर्थहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥" "अथ योऽर्थवित्तस्य ब्रह्मवीर्य्यवत्तरं भवति । जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते ॥" "यथा खरश्चन्दनभारवाही भारस्य वेत्ता नतु चन्दनस्य । एवं हि शास्त्राणि बहून्यधीत्य चार्थेषु मूढाः खरवद्वहन्ति ॥" "योऽधीत्य विधिवद्विप्रो वेदार्थं न विचारयेत् । स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥" "वेदास्याध्ययनं सर्वं धर्म्मशास्त्रस्य चापि यत् । अजानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा ॥" "यथापशुर्भारवाही न तस्य भजते फलम् । द्विजस्तथार्थानभिज्ञो न वेदफलमश्नुते ॥" "पाठमात्ररतान्नित्यं द्विजातींश्चार्थवर्ज्जितान् । पशूनिव तु तान्प्राज्ञो वाङ्मात्रेणापि नार्च्चयेत् ॥" "ज्ञातव्यश्च तथैवार्थो मन्त्राणां कर्म्मसिद्धये । अन्यथा पाठमात्रेण पङ्के गौरिव सीदति ॥" "अर्थं ज्ञात्वा तु यः कश्चित् कर्म्माणि कुरुते द्विजः । स तत्फलमवाप्नोति नान्यथा फलभाग्भवेत् ॥" "भारवाही भृतकः केवलं क्लेशभाग्भवेत् । तस्मादर्थपरिज्ञाने यत्नः कार्य्यो विजानता ॥" "अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः । स्वर्गलोकमवाप्नोति धर्म्मानुष्ठानकृद्विजः ॥" "वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् । इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते ॥" "वेदार्थवित् प्रवक्ता च ब्रह्मचारी सहरुदः । शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः ॥" "समुच्चितं स्तोकमपि श्रुताधीतं विशिष्यते । चतुर्णामपि वेदानां केवलाध्ययनाद्विजाः ॥" "अनूचो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः । धारिभ्यश्चार्थतत्त्वज्ञास्तेभ्योऽप्यध्यात्मचिन्तकाः ॥"

इत्यादिश्रुतिस्मृतिवाक्यैरनर्थज्ञनिन्दाश्रवणादर्थज्ञाने फलश्रवणाच्च मन्त्रार्थज्ञानाय सर्वैरेव फलार्थिभिर्यतितव्यं तावत् ॥

तत्र मन्त्रार्थज्ञानाय यद्यपि बहुशो भाष्यग्रन्थाः सन्ति महीधरादिप्रणीतास्तेषु च यथाप्रकरणं दर्शयागादि क्रमेण मन्त्राणां यथार्थरीत्या व्याख्या विशदीकृताऽस्ति । न च तथा कर्म्मान्तरानुष्ठानपक्षे मन्त्रार्थः सङ्गच्छते । हलायुधभद्रदेवगुणविष्णुशत्रुघ्नशर्म्मप्रभृतिभिर्यद्यपि कर्म्मान्तरानुष्ठानपक्षे यथाकथञ्चिन्मन्त्रार्थः स्फुटीकृतः स्वीयभाष्येषु । किन्तु तैरपि यथैव भाष्यान्तरे मन्त्रार्थो दृष्टस्तथैव व्यलेखि । सोऽपि मन्त्रार्थो यथाप्रकरणं दर्शादियागेष्वेव सङ्गच्छते न च कर्मान्तरानुष्ठानपक्षेऽपि । तस्माच्छ्रीपरमेश्वरकृपया कर्मान्तरानुष्ठानपक्षे तत्तद्वैदिकमन्त्राणां युक्तिप्रमाणसम्वलितं मीमांसाव्याकरणनिरुक्तश्रुतिस्मृतिसम्मतमर्थं विशदीकर्त्तुमहं समुद्यतोऽस्मि । तत्स्पष्टीकरणं मन्त्रव्याख्यानावसरे सुतरां भविष्यति । ननु माधवोवटमहीधरप्रभृतिभिर्यो मन्त्रार्थः स्फुटीकृतः सतु ब्राह्मणकल्पसूत्रमीमांसादिसम्मतोऽस्ति । तद्वैपरीत्येऽर्थान्तरस्वीकारेऽन्यकृतवेदार्थस्येव भवत्कृतस्यास्य वेदमन्त्रार्थस्यापि अप्रा-

माण्यं स्यादतोऽस्मिन्विषये भवत्प्रयत्नस्तु तुषकुट्टनवद्व्यर्थ एवेति चेन्न, मत्कृतवेदमन्त्रार्थस्यापि श्रुतिस्मृतिनिरुक्तव्याकरणमीमांसादिसम्वलितत्वात्। तथाहि माधवोवटमहीधरप्रभृतिभिर्यो मन्त्रार्थः स्फुटीकृतोऽस्ति स एव मन्त्रार्थो यदि कर्म्मान्तरानुष्ठानपक्षेऽपि स्वीक्रियेत। तर्हि तादृशार्थपरिज्ञानेन फलवैयर्थ्यमेव प्रसज्येत। नहि अन्यार्थस्तुत्याऽन्यः कश्चित्तुष्यति। कथं तर्हि गणानान्त्वेति मन्त्रघटकाश्वार्थस्तुत्या गणपतिस्तुष्येत्। न च तस्य तुष्ट्यभावे तत्कर्म्मफलावाप्तिश्च सम्भाव्येत। एवमेव 'अम्बेऽअम्बिके', 'विष्णोरराटम्', 'अग्निमूर्द्धा', 'उद्बुध्यस्वाग्ने' इत्यादिषुच बोद्धव्यम्। अतः फललाभाय दर्शयागादिव्यतिरिक्तकर्म्मान्तरानुष्ठानपक्षे तत्तद्विनियोगानुसारेण तत्तन्मन्त्राणामर्थान्तरकल्पनया मन्त्रार्थज्ञानमतीवावश्यकम्। "ऊहः खलु कर्त्तव्यः" इति भाष्यकारोक्तेः। एतदेव कल्पसूत्रवृत्तौ कर्कोपाध्यायेनाप्युक्तम्। न चोहाभावे किञ्चित्फलं लभ्येत। अतएव "अग्नये त्वा जुष्टं गृह्णामि" इत्यत्र, पैत्र्ये कर्मणि "पित्रेत्वा जुष्टं गृह्णामि"इति वाक्योहो भवति। एवं विनियोगान्तरापेक्षया सर्वत्र तावदर्थान्तरोहः कर्त्तव्य इति सर्वसम्मतम्। अतो मयापि तत्तद्विनियोगानुसारेण तत्तन्मन्त्राणामर्थान्तरं क्रियते। गणानान्त्वेत्यादिमन्त्राणां मध्ये केषाञ्चिल्लिङ्गात्केषाञ्चित्स्मृतिवाक्याच्च विनियोगो भवतीति साम्प्रदायिकाः समामनन्ति। तदेवं मन्त्रेषु शब्दगतिविभुत्वात्कर्म्मकाण्डे तत्तत्प्रकरणोपयुक्ततया दर्शयागादिषु सा व्याख्या यथा साध्वी तथैव कर्म्मान्तरानुष्ठानपक्षे तत्तद्विनियोगानुसारेण मत्कृताऽपि व्याख्या साध्व्येव। अपि च यथाहि निर्ऋतिशब्दनिर्वचनप्रसङ्गे "वहुप्रजा निर्ऋतिमाविवेश" इत्यत्र नैरुक्तानां मते निर्ऋतिशब्देन भूमिरुच्यते। परिव्राजकानां मते तु निर्ऋतिशब्देन कृच्छ्रापत्तिरभिधीयते। तदेवं मन्त्रेषु शब्दगतिविभुत्वादुभयमुपपद्यत एव। एवमन्यत्रापि यथा "दधिक्राव्णो अकारिषम्" (ऋ. सं. ३, ७, १३, ६) इत्येष मन्त्रः अग्न्युपस्थाने अग्निहोत्रे, अयमेव चाग्निष्टोमे "दधिक्राव्णो अकारिषमित्याग्नीध्रे दधि भक्षयन्ति (आ० सू० ६, १३,)" इति दधिभक्षणे, तथा चाश्वमेधे "दधि क्राव्णो अकारिषमित्युत्थितायां सर्वा जपन्ति" इत्यश्वसन्निधावेनं पत्न्यो जपन्ति महिष्यामुत्थितायाम्। तथा चाश्वमेध प्रकरणे "दधिक्राव्णो अकारिषम्" (शु. य. वे. वा. मा. सं. २३, ३२)" इति। महिषीमुत्थाप्य पुरुषा दधि क्राव्ण इत्याहुः (का. सू. २०, ६, २१)" इति महिषीं यजमानस्य प्रथमपरिणीतां पत्नीमश्वसमीपसुप्तामुत्थाप्य पुरुषा अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारोऽमुं मन्त्रं पठन्ति। तत्रैवं सति प्रतिविनियोगमस्यान्येनार्थेन भवितव्यम्। तस्मादेते वक्तुरभिप्रायवशादन्यत्वमपि भजन्ते मन्त्राः। नहि एतेषु अर्थस्य इयत्तावधारणमस्ति महार्थाह्येते दुःपरिज्ञानाश्च भवन्ति। यथाऽश्वारोहवैशिष्ट्यादश्वः साधुः साधुतरश्च वहति एवमेते वक्तृवैशिष्ट्यात्साधून् साधुतराँश्चार्थान् स्रवन्ति। अतएव यथाप्रकरणं निरुक्तशास्त्रेण शब्दनिर्वचनं कृत्वा व्याख्यातव्याः। तस्मान्मन्त्रेषु यावन्तोऽर्था उपपद्येरन् ते सर्व एव यथाप्रकारणमूह्याः। अत्र न कश्चिदपराधः सम्भवति। तथा मीमांसकमतेनापि मत्कृतमन्त्रार्थः साधुतर एव स्यात्। यस्मान्मीमांसका लिङ्गश्रवणाद्विनियोगमर्थबोधञ्च स्वीकुर्वन्ति। कर्म्मान्तरपक्षेऽपि यथोपयोगिमन्त्रेषु तत्तद्देवतालिङ्गञ्च श्रूयते। यथा गणानान्त्वा गणपतिमित्यत्र गणपतिलिङ्गश्रवणं भवति एवमन्येष्वपि "अम्बेऽअम्बिके, विष्णोरराटम्, आकृष्णेन" इत्यादिषु च मन्त्रेषु तत्तद्देवतालिङ्गश्रवणं सुस्पष्टमेव प्रतिभाति। अर्थप्रकाशनं शब्दसामर्थ्यं लिङ्गमितिमीमांसकाः समामनन्ति। तस्य तत्तन्मन्त्रेषु सत्त्वान्मत्कृतमन्त्रार्थे मीमांसया न कश्चिद्विरोध इति प्रत्येतव्यम्। एवमविरोधसत्त्वेऽपि

येषां मनसि विरोधत्वेन भ्रान्तिश्चेत्तर्हि असूयां निर्धूय तैर्निरवशेषं प्रतिमन्त्रं मदीयभाष्यमक्षरशो द्रष्टव्यम् । तदवलोकनेनैव सुष्ठुभ्रान्तिर्दूरं गमिष्यतीत्यत्र न कश्चित्सन्देह इति विदाङ्कुर्वन्तु सज्जनाः । एवं निगमरहस्यमभिधाय इदानीं द्विजातीनामावश्यकत्वेन तद्विज्ञानप्रयोजनं प्रदर्श्यते । तद्यथा पापमयमहाकालकरालव्यालकलिकालेऽस्मिन् यावन्ति मतमतान्तराण्यनुदिनं समुद्भवन्ति तानि सर्वाण्यपि सनातनधर्म्मखण्डनायैव प्रवृत्तानीव दरीदृश्यन्ते । समयप्राबल्यादिदानीन्तदार्य्यहिन्दुजातिरप्यनार्य्यजातिरिव अवैदिकधर्म्मप्रवृत्ता सती वैदिकसनातनधर्म्मखण्डनार्थमेव बद्धपरिकरा भवति । अतः सनातनधर्म्मस्य सर्वापद्भ्यो रक्षणोपायश्चिन्त्यः । तत्र नहि वेदमन्तरोपायान्तरं भवितुमर्हति । तत्राग्निहोत्राद्यनुष्ठानरूपः श्रौतधर्म्मस्त्विदानीं विलुप्तप्राय एव दृश्यते । वेदाध्ययनाध्यापनाभावादाधुनिकार्य्यहिन्दुजातीयानामेकान्ततो वैदिकधर्म्मविमुखत्वेन सोमयागादिश्रौतानुष्ठानाभावाच्च इड़ा-बर्हिः-स्फ्य-शम्याचखाल-चमस-कपालदिययज्ञीयसुप्रसिद्धपात्रादीनामपि व्यवहाराभावात्तान्यधुना यज्ञीयपात्रादियज्ञसाधनवस्तुविशेष इतिशब्देनाभिधीयन्ते । श्रौतानुष्ठानरूपवैदिकधर्म्मस्यायं समाचारः । स्मार्त्तानुष्ठानरूपवैदिकधर्म्मस्तु यावच्छिखासूत्रं यथाकथञ्चिन्नाममात्रेणापि स्थास्यतीत्यनुमीयते । किन्तु तत्रापि वैदिकरहस्यस्य विज्ञानाभावात्तत्र मन एव न रमते केषाञ्चिदपि । अतो वास्तविकतया कर्म्मसम्पादनमपि न भवति प्रत्युत तद्वैपरीत्यमेव भवति । अतो वैदिकरहस्यज्ञानाय सर्वैर्द्विजातिभिरवश्यमेव यतितव्यम् । सुगमतया वैदिकरहस्यज्ञानार्थमेव मयैतद्ग्रन्थनिर्माणे महान् परिश्रमः कृतः । ग्रन्थस्यास्य सकृदवलोकनेन कस्मिंश्चिदपि शास्त्रे मध्यमोत्तीर्णानामाचार्य्यपरीक्षोत्तीर्णानां वा यथाभाग्यमधीतविद्यानां सर्वेषामेव द्विजातीनां वैदिकरहस्यज्ञानं गुरुमन्तराऽपि झटित्येव सम्पद्येत । अन्यथा तु अनेकशास्त्राचार्य्यपरीक्षोत्तीर्णा अपि बहुशो विद्वांसो यथेदानीम् "पादः" इत्यधिकृत्य "इयादिपूरणः" इत्यनेन वरेण्यमित्यत्र "वरणियम्" इतिव्यूहेन पादपूरणे सति चतुर्विंशत्यक्षरा गायत्री भवतीत्यपि न स्मरन्ति । गायत्रीसन्ध्यातर्पणदेवपूजनैकोद्दिष्टपार्वणश्राद्धविवाहादिमन्त्रार्थज्ञानस्य तु कथैव का । तथा सति कथमनेन मन्त्रेणैतत्कर्म्म क्रियत इति प्रश्ने विद्वांसोऽप्यविद्वांस इव मूकायन्त एव सन्तः पलायन्ते । सति वैदिकरहस्यज्ञाने स्वसनातनधर्म्मसंरक्षणेऽपि प्रवृत्तिस्तत्रानुरक्तिश्च सुतरां स्वयमेव भविष्यति । एतदर्थमयमेक एव मन्त्रार्थचन्द्रोदयनामकः खलु ग्रन्थो जागर्त्ति । एतस्याध्ययनाध्यापनावलोकनद्वारा स्वल्पविद्योऽपि जनोऽवैदिकमतमतान्तरखण्डने समर्थो भविष्यतीत्यत्र न कश्चित्सन्देहलेशोऽपि । किमधिकं बहुवाक्पल्लवितेनेति शिवम् ॥

❀ हरिः ॐ शान्तिः शान्तिः शान्तिः ❀

इति श्रीदामोदरशर्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये

उपोद्घातप्रकरणनामकः प्रथमः परिच्छेदः समाप्तः ।

---

# द्वितीयपरिच्छेदः ।

## अथ प्रबुद्धसमनन्तरजपनीयमन्त्रः ।

ॐ पुनर्मनः पुनरायुर्मऽआगन्पुनः प्राणः पुनरात्मा मऽआगन्पुनश्चक्षुः पुनः श्रोत्रं मऽआगन् । वैश्वानरोऽअदब्धस्तनूपाऽअग्निर्नः पातु दुरितादवद्यात् ॥ १ ॥

अस्य मन्त्रस्य प्रजापतिर्ऋषिरेकाधिका ब्राह्मी बृहतीच्छन्दोऽग्निर्देवता प्रबुद्धसमनन्तरजपे विनियोगः । "विबुद्धमस्वपस्यन्तं पुनर्मन इति वाचयति" इतिकात्यायनोक्तेः । यज्ञादन्यत्राध्वर्य्योरभावात्स्वयं वक्तीत्यूहः । स्वयं जपतीत्यर्थः । मे मम ( देवदत्तादेः ) मनः पुनरागन् सुप्तिसमये विलीय पुनरिदानीं शरीरे समागतमित्यर्थः । आङ्पूर्वाद्गमेर्लङि शपि लुप्ते हल्ङ्याभ्य इतिप्रत्ययलोपे मकारस्य नकारे प्रथमपुरुषैकवचने आगन्निति रूपं बोध्यम् । किंच स्वापकाले मे मम आयुर्जीवनं नष्टप्रायं भूत्वा पुनरागन् इदानीं पुनरुत्पन्नमिवासीदित्यर्थः । तथा मे मम प्राणः मुखनासिकाप्रभवः प्राणवायुः पुनरागन् स्वापकाले योऽन्यत्र गतः स इदानीं पुनरत्रागत इत्यर्थः । तथा मे मम आत्माजीवः पुनरागन् स्वापकाले योऽन्यत्र गतः स एवेदानीं पुनरत्रागत इत्यर्थः । तथा मे मम चक्षुरिन्द्रियं पुनरागन् स्वापकाले यदन्यत्र गतमिवासीत्तदिदानीं प्रबुद्धसमये पुनरत्र समागतमित्यर्थः । तथा मे मम श्रोत्रं श्रोत्रेन्द्रियं पुनरागन् स्वापकाले यदन्यत्र गतमिवासीत्तदिदानीं प्रबुद्धसमये पुनरत्र समागतमित्यर्थः । तथा च श्रुतिः "सर्वे हवा एते स्वपतोऽपक्रामन्ति ते ह वा सर्वे प्रबुद्धे पुनरायन्ति" इति ।

स्वापकाले मन आदीनामपक्रमो भवति तेषां पुनर्यथास्थानमागमनं भवतीति श्रुत्यर्थोऽवन्तव्यः । एवं सर्वेन्द्रियेषु समागतेषु सत्सु अयं वैश्वानरोऽग्निः विश्वेभ्यो नरेभ्यो हितो वैश्वानरः सर्वपुरुषोपकारकः ( नरे संज्ञायामितिपूर्वपददीर्घः । ) अवद्यात् दुर्यशसः दुरितात् पापाच्च नोऽस्मान् पातु रक्षत्वित्यर्थः । स च वैश्वानरोऽग्निः किंभूतः इत्यपेक्षायामुच्यते । अदब्धः "दभ्नोतिर्वधकर्म्मेतिनिघण्टुः । न दब्धः अदब्धः अवध्यः अहिंसितः न केनापि हिंसितुं शक्य इत्यर्थः । तथा तनूपाः तनूं पातीति तनूपाः अस्मदीयशरीरपालक इत्यर्थः । एवंभूतोऽग्निः स दुर्यशसः सकाशादन्यस्माच्च पापादस्मान्पातु । नोऽस्मानित्यत्र बहुवचनं "अस्मदोद्वयोश्चे"ति पाणिनिवचनाद्भार्यापुत्राद्यपेक्षया वा । इदानीमहं प्रबुद्धोऽस्मि स चाहमद्याऽहर्निशमेवम्भूतं परस्त्रीपरद्रव्यहरणादिकर्म न कुर्य्यां येन मम इह संसारे दुर्यशः स्यात् । तथा नैतादृशमनृतादिकमपि वदेयं येन मम पातकं स्यात्तथाऽग्निर्मामवद्याद्दुरिताच्च पात्वित्याशंसावाक्यार्थः ॥ १ ॥

इति प्रबुद्धसमनन्तरजपनीयमन्त्रव्याख्या ।

---

## अथ प्रातःसूक्तव्याख्या ।

**प्रातरग्निं प्रातरिन्द्रꣳ हवामहे प्रातर्मित्रावरुणा प्रातरश्विना ।**
**प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रꣳ हुवेम ॥ १ ॥**

प्रातरग्निमितिसप्तर्चप्रातःसूक्तस्य वसिष्ठऋषिराद्याया ऋचो जगतीच्छन्दो द्वितीयादिषण्णामृचां त्रिष्टुप्छन्दः सर्वासामृचां लिङ्गोक्ता देवता प्रातर्जपे विनियोगः, प्रातरग्निमित्यादिषु प्रातरिति लिङ्गात् । अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयदिति व्याख्याधर्मे उवटाचार्योक्तेरिहानया कारिकया हीनपदान्यध्याहृत्य व्याख्यायते ऋगियम् । प्रातःशब्दो वीप्सावचनः प्रभातवचनश्च ततोऽयमर्थः । वयं प्रातः प्रातः पुनः पुनः अग्निं देवं हवामहे आह्वयाम इत्यर्थः । अद्येतिशेषः । यद्वा प्रातः अद्य प्रभातकाले अग्निं तन्नाम्ना प्रसिद्धं देवं हवामहे आह्वयाम इत्यर्थः । स्वस्यैकत्वेऽपि "अस्मदोद्वयोश्च"तिपाणिनिवचनादिह बहुवचनं भार्य्यापुत्राद्यपेक्षया वा । एवमग्रेऽपि सर्वत्र बोध्यम् । तथा प्रातः अद्य प्रभातकाले इन्द्रं देवेशं हवामहे इत्यनुषङ्गः । वयमाह्वयाम इत्यर्थः । तथा प्रातः अद्य प्रभातकाले मित्रावरुणा ( सुपां सुलुगिति-विभक्तेराकारः) मित्रावरुणौ देवौ हवामहे वयमाह्वयाम इत्यर्थः । तथा प्रातः अद्य प्रभातकाले अश्विना ( अत्रापि पूर्वसूत्रेणैवाकारः ) अश्विनौ देवौ देवभिषजौ हवामह इत्यनुषङ्गो वयमाह्वयाम इत्यर्थः ॥

तथा प्रातः अद्य प्रभातकाले भगं द्वादशादित्यान्तर्गतं तन्नामकं सूर्य्यविशेषं, पूषणम् इममपि द्वादशादित्यान्तर्गतं तन्नामकं सूर्य्यविशेषमेव तथा ब्रह्मणस्पतिं वेदस्य पालकं च ब्रह्माख्यं देवं हवामहे इत्यनुषङ्गः, वयमाह्वयाम इत्यर्थः । तथा प्रातः अद्य प्रातःकाले सोमं चन्द्रमसं देवम् , उत उतशब्दोऽप्यर्थे अपि च रुद्रं देवं शिवमिति यावत् हुवेम आह्वयाम इत्यर्थः । अस्माभिराहूता सर्वेऽप्येते अग्न्यादिरुद्रान्ता देवा अद्य प्रातःकालमारभ्य द्वितीयप्रातःकालपर्य्यन्तमस्माकं कल्याणं कुर्वन्त्वित्याशंसावाक्यार्थः । हवामहे, हुवेम इति "बहुलं छन्दसी"ति ह्वयतेः सम्प्रसारणे रूपद्वयम् ॥ १ ॥

**प्रातर्जितं भगमुग्रꣳ हुवेम वयं पुत्रमदितेर्यो विधर्त्ता ।**
**आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥ २ ॥**

वयमीदृशं तं भगं द्वादशादित्यान्तर्गतमादित्यविशेषं सूर्य्यं देवं हुवेम आह्वयाम । अद्यप्रातः प्रभातकाले इतिवाक्यशेषः । तं कीदृशं प्रातर्जि तं प्रातः प्रभाते जयतीति प्रातर्जितत्तं प्रातर्जितं प्रातर्जयनशीलमित्यर्थः । आदित्यस्योदयसमये तद्ग्रथं देवविरोधिनोऽसुरा रक्षांसि च रुन्धन्ति तदानीं वालखिल्यादयो देवर्षयः स्वतपःप्रभावादब्रूपैर्वज्रैस्तानपाकुर्वन्ति एवमादित्यस्य प्रातर्जयो भवति । अतः प्रातःकाले सन्ध्यामुपास्य इदानीन्तनैरपि मनुष्यैस्तदसुरादिनिरासार्थमितोऽपि वज्ररूपा अप आदित्यमण्डलमुद्दिश्य प्राच्यामुत्क्षिपन्ति मण्डलस्य पुरतोऽसुरादीनां सङ्घीभूयस्त्वेन स्थितत्वात् । एवं तदानीं सूर्य्यार्थमर्घ्यप्रदानमपि सूर्यस्य तेजोवृद्धिकरमेव भवति । तस्मात्सूर्य्यप्रसादादर्घ्यप्रदातुरपि तेजोबलवृद्धिर्भवतीति प्रातः सन्ध्यायाः फलं प्रकृत्य श्रुतावभिहि-

तमिति श्रुतिकथानुसन्धेया"तदुभये प्राजापत्याः पस्पृधिरे देवाश्चासुराश्च तदादित्यमेवोपरुरुधिरे तदिदानीमपि रुन्धते०"—इत्यादि। तं पुनः कीदृशम् उग्रमुत्कृष्टमुद्गूर्णायुधमुद्गूर्णदानं वा आदित्योपासकानां झटित्यभीष्टफलप्राप्तिदर्शनात्। तथा अदितेः पुत्रम् अदितिर्देवमाता तस्याः पुत्रं तनयम्। तं कमित्यपेक्षायामुच्यते। यो भग आदित्यः विधर्त्ता जगतो धारयितेत्यर्थः। तथा यश्च आध्रश्चित् चिच्छब्दोऽप्यर्थे। "ध्रै तृप्तौ" न ध्रायति न तृप्यति स अध्रः नञोऽकारस्य दीर्घश्छान्दसः। यद्वा आसमन्तात् ध्रः आध्र अध्र एव आध्रः इति वा स्वार्थे तद्धितः। आध्रः अतृप्तः बुभुक्षितो दरिद्रोऽपि यं भगं प्रतिभक्षि भजस्व अर्थादुदयमित्याह। नक्तमनशितस्य बुभुक्षितस्य दरिद्रस्य सूर्य्योदये सति भिक्षादिद्वारा क्षुन्निवृत्तेः सम्भवात्सोऽपि यदुदयं कामयते। अत आदित्यं प्रति दरिद्रोऽपि ब्रूते यत् हे आदित्य, त्वमुदयं भजस्व अर्थाज्झटित्युदितो भवेति प्रार्थयत इति भावः। स दरिद्रः किं कुर्वन्नाहेत्यपेक्षायामुच्यते। यं भगं मन्यमानः पूजयन्नित्यर्थः। स्वार्थसिद्धये तदुदयं कामयन् उदयं भजस्वेत्याहेति भावः। मन्यतिरर्चतिकर्म्मेति यास्कः। स हि सूर्योदये भिक्षादिना किञ्चिल्लभते तत उदयं वाञ्छतीत्यभिप्रायः। न केवलमाध्रः दरिद्र एव तदुदयं कामयते किन्तु तुरश्चित् (चिदित्यप्यर्थे) तुरः आतुरः व्याधिग्रस्तो रोगीत्यर्थः, सोऽपि यं भगं मन्यमानः भक्षि उदयं भजस्वेत्याह। सोऽपि स्वार्थसिद्धये यदुदयं कामयते इत्यर्थः। दिवा तस्य सुखोदयादिति भावः। रोगिणो हि रात्रिः कष्टेन यातीति सकलजनानुभवसिद्धिः। यद्वा तुरस्त्वरमाणो यमः स एव हि प्राणिनां मारणाय दिनानि गणयति। अतएव सोऽपि यं भगं मन्यमानः पूजयन् हे भग, भक्षि भजस्वोदयमिति यं भगं प्रत्याह। तथा राजाचित् (चिदित्यप्यर्थे) राजाऽपि यं भगं मन्यमानः पूजयन् हे भग, भक्षि उदयं भजस्वेति यं भगं प्रत्याह। तदुदये हि राज्ञां सर्वव्यवहारदर्शनादिना सर्वेष्टसिद्धिः। अतः सोऽपि यदुदयं वाञ्छतीत्यर्थः। तमेतादृशं भगं सूर्य्यं वयमद्य प्रातः प्रभातकाले हुवेम आह्वयाम इत्यर्थः। सचाऽस्माभिराहूतः सन्नद्य प्रातःकालमारभ्य द्वितीयप्रातःकालपर्य्यन्तमस्माकं कल्याणं विदधात्वित्याशंसावाक्यार्थः। भक्षीति भजतेः शपि लुप्ते लोडर्थे लटि मध्यमैकवचने रूपम्। यत्र यत्र यकारस्याधो भागे विन्दुरस्ति तत्र तत्र चवर्गीयजकारसदृशोच्चारणं कर्त्तव्यमिति साम्प्रदायिकानां सङ्केतः। वस्तुतस्तु पदादिस्थस्य अन्यहलसंयुक्तस्य संयुक्तस्याऽपि यकारस्यादिमध्यावसानेषु जकारसदृशोच्चारणं विधेयम्। प्रतिज्ञासूत्रे तदुक्तं कात्यायनेन "अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तस्य संयुक्तस्याऽपि रेफोष्मान्याभ्यामृकारेण चाविशेषेणादिमध्यावसानेपूच्चारणे जकारोच्चारणं "द्विर्भावेऽप्येवमि"ति। अत्र यद्यपि सूत्रकारेण पदादिस्थस्यैवोक्तम्। किन्तु याज्ञवल्क्येन पादादिस्थस्याऽपि जकारसदृशोच्चारणमुक्तं यद्यथा 'पादादौ च पदादौ च संयोगावग्रहेषु च यः (जः) शब्द इति विज्ञेयो योऽन्यः स य् (जः) इति स्मृतः॥" इति। अन्यत्र तु यकारस्य ईषत्स्पृष्टत्वेनैवोच्चारणं कर्त्तव्यमिति तेनैव तत्रैवोक्तं "पादाद्यन्तं पदाद्यन्तं तथावग्रह कालिकम्। ईषत्स्पृष्टं विजानीयात्तस्मिन्काले तु कारयेत्॥ तथान्यच्च उपसर्गात्परो यस्तु पदादिरपि दृश्यते। ईषत्स्पृष्टं यथाविद्युत्पदच्छन्दात्परं भवेत्॥" इति तु पादादौ च पदादौ चेत्युक्तस्यापवादार्थं विशेषवचनमित्यनुसन्धेयम्। इदमेव निर्धारितमग्रेऽपि सर्वत्र बोध्यमिति॥ २॥

भग॒ प्रणे॑त॒र्भग॒ सत्य॑राधो॒ भगे॒मां धिय॒मुद॑वा॒दद॑न्नः ।
भग॒ प्र नो॑ जनय॒ गोभि॒रश्वै॒र्भग॒ प्र नृभि॑र्नृ॒वन्तः॑ स्याम ॥ ३ ॥

हे भग, हे प्रणेतः, हे भग, (आदरातिशयद्योतनार्थं पुनः पुनः सम्बोधनम् ("अभ्यासे भूयांसमर्थं मन्यते" इति यास्कोक्तेः ।) हे सत्यराधः, सत्यमनश्वरं राधो धनं यस्य स सत्यराधास्तत्सम्बुद्धौ हे सत्यराधः हे भग, त्वं ददत् धनं प्रयच्छन् सन् नोऽस्माकम् इमां धियं प्रज्ञां कर्म वा ( धीरिति कर्मनामेति यास्कोक्तेः । ) उदव उद्गमय उदित्ययमुपसर्गः अवेत्यनेन समवैति । अवेत्यस्य द्व्यचोऽतस्तिङ इति दीर्घे 'उदवा' इति संहितायां बोध्यम् । यथा वयं सूक्ष्मार्थान्पश्येम तथाऽस्मान्कुर्विति भावः । किंच हे भग, नोऽस्मान् गोभिः अश्वैः प्रजनय प्रवर्धय गा अश्वाँश्च बहूनस्मभ्यं देहीत्यर्थः । तथा हे भग, वयं त्वत्प्रसादात् नृभिः पुत्रादिभिः नृवन्तः मनुष्यवन्तः प्रस्याम प्रकर्षेण भवेमेत्यर्थः । अत्रोपसर्गस्य क्रियापदेन सह व्यवहितसम्बन्धः व्यहिताश्चेति पाणिनिवचनात् । ददिति "दद दाने" इत्यस्य नाभ्यस्तेति नुमागमाभावे शतरि प्रथमैकवचने रूपं बोध्यम् ॥ ३ ॥

उ॒तेदानीं॒ भग॑वन्तः स्यामो॒त प्र॑पि॒त्व उ॒त मध्ये॒ऽअह्ना॑म् ।
उ॒तोदि॑ता मघव॒न्त्सूर्य॑स्य व॒यं दे॒वाना॑ᳯ सुम॒तौ स्या॑म ॥ ४ ॥

उत अपि च हे मघवन्, मघं धनं तच्च उदकरूपं तेजोमयं वा अस्याऽस्तीति मघवा तत्सम्बुद्धौ हे मघवन्, हे धनवन्, उदकवन्, "आदित्याज्जायते वृष्टिः" इति स्मृतेः । यद्वा हे मघवन्, धनवन्, तेजोमय ज्ञानमय, "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेः । हे रवे, त्वत्प्रसादात् वयमिदानीं प्रातरुदयसमये भगवन्त ऐश्वर्य्यवन्तो ज्ञानवन्तो वा स्याम भवेमेत्यर्थः । पुनः प्रत्याह । उत अपि च सूर्य्यस्य 'तव' प्रपित्वे प्रपतने अस्तसमये त्वत्प्रसादाद्वयं भगवन्तः ऐश्वर्य्यवन्तो ज्ञानवन्तो वा स्याम भवेमेत्यर्थः । न केवलं प्रातः समये सायं समय एव किन्तु अह्नांमध्ये उत मध्यन्दिनेऽपि समये त्वत्प्रसादाद्वयं भगवन्तः स्याम ऐश्वर्य्यवन्तो ज्ञानवन्तो वा भवेमेत्यर्थः । किं बहुना हे भग, आदित्य, त्वत्प्रसादात्सर्वदाऽस्माकं धनवत्ता ज्ञानवत्ता चाऽस्त्विति भावः । किंच हे भग, आदित्य, देवानां सुमतौ कल्याण्यां बुद्धौ वयं स्याम त्वत्प्रसादात्सर्वदा वयं भवेमेत्याशयः । देवास्त्वत्प्रसादादस्मासु शोभनामनुग्रहविषयां बुद्धिं सर्वदा विदधात्वित्याशंसावाक्यार्थः ॥ ४ ॥

भग॑ऽए॒व भग॑वाँ २॥ऽ अस्तु देवा॒स्तेन॑ व॒यं भग॑वन्तः स्याम ।
तं त्वा॑ भग॒ सर्व॒ऽइज्जो॑ हवीति॒ स नो॑ भग पुरऽए॒ता भ॑वे॒ह ॥ ५ ॥

इनो भगो धामनिधिश्चाँशुमाल्यब्जिनीपतिरित्यमरसिंहोक्तेः भग आदित्यस्तस्य ये रश्मयस्ते देवा इहाभिप्रेतास्तान्प्रत्युच्यते । हे देवाः, भग एव भगवानस्तु भग आदित्यः स एव भगवान् ऐश्वर्य्यवान् धनवान् अस्तु भवतु अस्मद्विषये इति शेषः । किमन्यैरदातृभिर्धनिभिर्देवैरिति भावः । तेन भगदत्तेन आदित्यप्रदत्तेन धनेन वयं भगवन्तः स्याम भवेमेत्यर्थः । एवं भगव्यतिरिक्तान्देवान्तुच्छीकुर्वन् भगावयवभूतान् रश्मिरूपान्देवान्प्रत्युक्त्वाऽथ भगं प्रत्यु-

च्यते। हेभग, आदित्य, सर्वं इत् ( इच्छब्द एवार्थे ) सर्वं एव जनः तं प्रसिद्धं त्वा त्वां जोहवीति अत्यन्तमाह्वयति स्वाभीष्टसिद्धये इति शेषः। जोहवीति ह्वयतेर्यङ्लुगन्ताल्लटि प्रथमपुरुषैकवचने रूपं बोध्यम्। हेभग, आदित्यं, यतः सर्वोऽपि जनः स्वाभीष्टसिद्धये त्वामेव जोहवीति, अतो वयमपि त्वामेवाह्वयाम इति शेषः। स त्वमिहास्मिन्प्रभातसमये नोऽस्माकं सर्वव्यवहारकर्म्मणि पुरएता भव पुरोऽग्रे एतीति पुरएता अग्रयायी भव। अस्माकं सर्वव्यवहारकर्मणि अग्रेसरोभूत्वाऽस्मत्सर्वकार्य्याणि त्वं साधयेत्याशंसावाक्यार्थः॥ ५॥

समध्वरायोषसोऽनमन्त दधिक्रावेव शुचये पदाय।
अर्वाचीनं वसुविदं भगं नो रथमिवाऽश्वा वाजिनऽआवहन्तु॥ ६॥

उषसः प्रातःकालाधिष्ठात्र्यो देवता अध्वराय समनमन्त ( लडर्थे लङ् छन्दसि लुङ्-लङ्लिट इतिपाणिनिवचनात्) संनमन्ते प्रह्वीभवन्तीत्यर्थः। तदानीं प्रातरग्निहोत्रादेः प्रवर्त्तमानत्वात्। कस्मै क इवेत्याकाङ्क्षायां दृष्टान्त उच्यते। शुचये पदाय दधिक्रावा इव दधाति अश्ववाहमिति दधिः ("आदृगमहन०"—इति किप्रत्ययः) दधिः सन् क्रामतीति दधिक्रावा ("अन्येभ्योऽपि दृश्यते" इति वनिप्प्रत्ययः "विड्वनोरनुनासिकस्यात्" इति धातोराकारः) दधिक्रावा अश्वः अग्न्याधानार्थं शुचिपदं तदर्थं यथाऽश्वः प्रह्वीभवति तथा उषसोऽपि अध्वराय संनमन्ते इति भावः। ता उषस ईदृशं भगमादित्यं नोऽस्माकमर्वाचीनमभिमुखमावहन्तु आगमयन्त्वित्यर्थः। कीदृशं भगमित्यपेक्षायामुच्यते। वसुविदं वसु धनं विन्दतीति वसुवित्तं तथोक्तम् ("इगुपध०—इतिकः) कमिवेति चेत्तत्रोच्यते रथमिव तथाहि वाजिनोऽन्नवन्तो वेगवन्तो वा अश्वा यथा रथमाहन्ति तथा उषसोऽपि अस्मदभिमुखं भगमावहन्त्विति भावः॥ ६॥

अश्वावतीर्गोमतीर्नऽउषासो वीरवतीः सदमुच्छन्तु भद्राः।
घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः॥ ७॥

उषसः उषोऽधिष्ठात्र्यो देवताः सदं सदाकालं वोऽस्मानुच्छन्तु विवासयन्तु अज्ञानलक्षणंपाशं मोचयन्त्वित्यर्थः। "उच्छी विवासे" इत्यस्य लोट्प्रथमपुरुषबहुवचने रूपम्। किंभूता उषसः इत्यपेक्षायामुच्यते। अश्वावतीः अश्वावत्यः ( अश्ववत्य इतिप्राप्ते वा छन्दसीति पूर्वसवर्णदीर्घे अश्ववतीरिति प्रथमाबहुवचने रूपं तत्राश्वशब्दस्य च "मन्त्रे सोमाश्वेन्द्रिय" इति पाणिनीयसूत्रेण संहितायां दीर्घो बोध्यः। पुनः किम्भूताः गोमतीः ( अत्राऽपि पूर्ववत्पूर्वसवर्णदीर्घः ) गोमत्यः। तथा वीरवतीः ( अत्राऽपि पूर्ववत् ) वीरवत्यः। तथा भद्राः भन्दनीयाः कल्याणरूपा इत्यर्थः तथा घृतं "घृतमित्युदकनामेति निघण्टुः" तच्चावश्यायरूपमिहाभिप्रेतम्। तेन अवश्यायजलमित्यर्थः तत् दुहाना क्षरन्त्यः तथा विश्वतः सर्वतः प्रपीता धर्म्मार्थकामैराप्यायिता इत्यर्थः। प्यायः पीति प्यायः 'पी' इत्यादेशो बोध्यः। एवं परोक्षलिङ्गेनप्राथ्यं प्रत्यक्षलिङ्गत्वेनेहोच्यते। हे उषसः, यूयं स्वस्तिभिः अविनाशैः नोऽस्मान् सदा सर्वदा पात पालयतेत्यर्थः। एषाभ्यर्थनाऽस्मदीया युष्मदन्तिके, इत्याशंसावाक्यार्थः॥ ७॥

इति श्रीदामोदरशर्म्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये प्रबुद्धसमनन्तरजपनीय-मन्त्रादिप्रातःस्मरणीयसूक्तव्याख्यात्मको नाम द्वितीयः परिच्छेदः समाप्तः॥

# तृतीयः परिच्छेदः ।

## अथ मूत्रपुरीषोत्सर्गमन्त्रः ।

इ॒यं ते॑ य॒ज्ञिया॑ त॒नूर॒पो मु॑ञ्चामि॒ न प्र॒जाम् ॥

अ॒ꣳहो॒मुचः॒ स्वाहा॑कृताः पृथि॒वीमावि॑शत पृथि॒व्या संभ॑व ॥ १ ॥

सर्वमिदं प्रजापतिरपश्यदित्याम्नायोक्तेरेतन्मन्त्रसमुदायस्य प्रजापतिर्ऋषिः अस्यां कण्डिकायां मन्त्रत्रयं तत्र "इयं ते लोष्टम्" इति सर्वानुक्रमसूत्रे कात्यायनोक्तेः "इयं ते" इत्यस्य लोष्टं देवता "अष्टाक्षरं यजुरनुष्टुप्" इति सूत्रभाष्यकृदुक्तेः 'इयं ते' इत्यस्यानुष्टुप्छन्दः कृष्णविषाणया लोष्टादाने विनियोगः । अपो मूत्रमिति तत्रैव कात्यायनोक्तेः अपो मुञ्चामीत्यस्य मूत्रं देवता मेहने विनियोगः । अपो मुञ्चामीति मेहतीति कात्यायनोक्तेः । इयं त्रयोविंशत्यक्षरा तेनैकाधिका सामत्रिष्टुप् । एकोना आर्षी गायत्री वा । पृथिव्या लोष्टमिति तत्रैव कात्यायनोक्तेः पृथिव्या सम्भवेत्यस्य लोष्टं देवता छन्दस्तु षडक्षरत्वाद्दैवीत्रिष्टुप् याजुषीगायत्री वा मूत्रस्थाने लोष्टप्रक्षेपणे विनियोगः । एवं हि वस्तुतस्तु अस्याः कण्डिकाया विनियोगो यद्यपि कात्यायनेन मूत्रत्याग एवोक्तस्तथाऽपि पुरीषोत्सर्गोऽप्यनयैव कर्त्तव्य इति याज्ञिकसम्प्रदायविदां परामर्शः । पुरीषोत्सर्गमन्त्रस्य पृथगविधानात्तदानीं पुरीषोत्सर्गसमये मूत्रोत्सर्गस्य च सत्त्वात् । मूत्रपुरीषयोः संनियोगशिष्टत्वेनैव मूत्रे मन्त्रप्रयोगविधानात्पुरीषे च स एव मन्त्रोऽवगन्तव्य इति सर्वसिद्धान्तः । यद्यपि मूत्रपुरीषोत्सर्गसमये "पुरीषे मैथुने होमे प्रस्रावे दन्तधावने । स्नानभोजनजप्येषु सदा मौनं समाचरे" दिति वचनात्तदानीं लौकिकवागुच्चारस्याऽपि प्रतिषेधात्सुतरां वेदमन्त्रोच्चारणानर्हत्वान्मूत्रपुरीषोत्सर्गं कर्त्तुमिच्छन्प्रथमत एवामुं मन्त्रं पठेदिति सर्वयाज्ञिकसम्प्रदायानुमोदिता व्यवस्था । "द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः । स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः । ( म० स्मृ० ४।१२७" इति स्मृतेः। "मेक्ष्यन्कृष्णविषाणया लोष्टं किञ्चिद्वादत्तइयं त इति ( का० ७।४।३६।" मेक्ष्यन् मूत्रं करिष्यन् कृष्णविषाणया कृष्णमृगशृङ्गेण लोष्टं किंचित्तृणादिकं वा गृह्णातीति सूत्रार्थः । अथ मन्त्रार्थः । यज्ञपुरुषं प्रत्युच्यते । तद्यथा हे यज्ञपुरुष, इयं पृथिवी ते तव यज्ञिया तनूरस्तीति शेषः । यज्ञयोग्योऽयं प्रदेश इत्यर्थः । अतोऽस्या मूत्राद्युपहतिपरिहाराय व्यवधानं कर्त्तुं लोष्टं तृणं वा स्वीकरोमीतिभावः । यद्वा हे पृथिवि, इयं लोष्टरूपा ते तव यज्ञिया यज्ञार्हा तनूरस्तीतिशेषः । तामहमाददे इति शेषः । स्वीकरोमीत्यर्थः । इतः स्थानात्पृथक्करणार्थमितिभावः । "अपो मुञ्चामीति मेहतीति" ( का० ७।४।३७ ॥ सूत्रस्य स्पष्टोऽर्थः । अथ मन्त्रार्थः । अपो मूत्ररूपा अहं मुञ्चामि प्रजां प्रजोत्पत्तिनिमित्तं रेतो न मुञ्चामीत्यर्थः । अतो हे आपः, मूत्राख्याः, यूयं पृथिवीमाविशत प्रविशतेत्यर्थः । किंभूता यूयं इत्यपेक्षायामुच्यते । अंहोमुचः अंहसः पापात् मुञ्चन्ति पुरुषं पृथक्कुर्वन्तीति अंहोमुचः पापान्मोचयित्र्य इत्यर्थः । तथा स्वाहाकृताः पूर्वं पानकाले स्वाहेति मन्त्रेण स्वीकृताः पीता इति यावत् । यद्वा स्वाहाकृताः

सत्यो भूमिमाविशतेत्यर्थः । "पृथिव्या सम्भवेत्यात्तं निदधाति ( का० ७।४।३८ )" गृहीतं लोष्टादिकं मूत्रादिस्थाने क्षिपेदिति सूत्रार्थः । अत्र मूत्रपुरीषोत्सर्गानन्तरं शेषमन्त्रोच्चारणं मनसैव तदानीं कृतमूत्रादित्वेनात्मनोऽशुचित्वाद्वेदमन्त्रोच्चारणानर्हत्वादितिभावः । अथ मन्त्रार्थः । हे लोष्टादिक, त्वं पृथिव्या सह सम्भव एकीभवेत्यर्थः ॥ १ ॥

॥ इति मूत्रपुरीषोत्सर्गमन्त्रव्याख्या ॥

---

## अथ दन्तधावनमन्त्रः ।

अन्नाद्याय व्यूहध्वꣳ सोमो राजायमागमत् ।
स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च ॥ १ ॥

अन्नाद्यायेत्यस्याथर्वण ऋषिरनुष्टुप्छन्दो वनस्पतिर्देवता दन्तधावने विनियोगः । "औदुम्बरेण दन्तान्धावेत अन्नाद्याय०" इति पारस्करोक्तेः । अथ मन्त्रार्थः । अतिरिक्तमिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । हेवनस्पते, दन्तधावन, त्वं व्यूहध्वम् "ऊह वितर्के" विपूर्वः प्रसिद्धार्थः । तत्र तिङां तिङो भवन्तीतिवचनान्मध्यमपुरुषैकवचनस्थाने तदीयबहुवचनम् । व्यूहस्व त्वं प्रसिद्धो भवेत्यर्थः । यतोऽयं सोमः चन्द्रमा आगमत् आगतवानित्यर्थः । त्वां प्रतीतिशेषः । "गम्लृ गतौ" इत्यस्मादाङ्पूर्वाल्लुङि प्रथमपुरुषैकवचने लृदित्वाच्च्लेरङि कृते इतश्चेति इकारलोपे "लुङ्लङ्लृङ्०"–इत्यडागमे आङ आकारेण सह सवर्णदीर्घे आगमदिति रूपं भवति । किं भूतः सोमः राजा वनस्पतीनां प्रभुरित्यर्थः । यद्वा राजते शोभते इति राजा शोभमान इत्यर्थः । यद्वा राजा राजसूययाजीत्यर्थः । "राजा वै राजसूयेनेष्ट्वा भवतीतिश्रुतेः । हे दन्तधावन, स भवान् वनस्पतिः मे मम मुखं प्रमार्क्ष्यते शोधयिष्यतीत्यर्थः । प्रमार्क्ष्यते इति "मृजू शुद्धौ" इत्यस्माल्लृटि सुप्तिङुपग्रहेतिकारिकयोपग्रहव्यत्ययेनात्मनेपदे प्रथमपुरुषैकवचने रूपम् । भवान् केन मम मुखं प्रमार्क्ष्यते इत्यपेक्षायामुच्यते । यशसा च ( अत्र चकारः पादपूरणार्थ एव ) यशसा कीर्त्या मम मुखं प्रमार्क्ष्यते भवानित्यर्थः । तथा पुनः केन प्रमार्क्ष्यते भगेन च ( अत्रत्यश्चकारः समुच्चयार्थः ) सौभाग्येन च मे मम मुखं प्रमार्क्ष्यते भवानित्यर्थः । कस्मै प्रयोजनाय प्रमार्क्ष्यते अन्नाद्याय अन्नभक्षणायेत्यर्थः । अनेन दन्तधावनेन यशो भगः अन्नं च मम भूयासुरित्याशंसावाक्यार्थः ॥१॥

इति श्रीदामोदरशर्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये शौचदन्तधावनमन्त्रव्याख्यात्मकस्तृतीयः परिच्छेदः समाप्तः ॥ ३ ॥

---

# चतुर्थपरिच्छेदः ।



## अथ स्नानमन्त्रारम्भः ।

उरुᳶ हि राजा व्वरुणश्चकार सूर्य्याय पन्थामन्वेतवाऽउ ।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥ १ ॥
नमो व्वरुणायाभिष्ठितो व्वरुणस्य पाशः—यजुरिदम् ॥ २ ॥

### अथ स्नानमन्त्रव्याख्या

अथ दन्तधावनानन्तरं कृतस्नानस्यैव पुरुषस्य सन्ध्यातर्प्पणदेवपूजादिष्वधिकारादिहावसरप्राप्तं स्नानीयमन्त्रजातं व्याख्यास्यते। तत्राऽदौ तोयाऽभिमन्त्रणोऽयं मन्त्रः। तत्र अस्यां कण्डिकायाम् 'उरुᳶ. हि. विधश्चित्' इति ऋक् 'नमो व्वरुणाया-पाशः' इतियजुः, इत्यनयोर्मन्त्रविवेकः । ऋष्यादिकन्त्वित्थं तद्यथा—उरु ᳶ. हीत्यस्य शुनःशेप ऋषिस्त्रिष्टुप्छन्दो वरुणो देवता स्नानीयतोयाभिमन्त्रणे विनियोगः। "उरु ᳶ. हीति तोयमामन्त्र्य" इति कात्यायनोक्तेः। मन्त्रगत उकारोऽवधारणे बोद्धव्यस्तेनायमर्थः। "राजा वै राजसूयेनेष्ट्वा भवति साम्राड्वाजपेयेन तरति सर्व ᳶ. पाप्मानं योऽश्वमेधेन यजेते"ति श्रुतेः राजा अर्थात् राजसूययाजी अपामधिपतिः वरुणः उ वरुण एव हि यतः यस्मात् सूर्य्याय ('षष्ठ्यर्थे चतुर्थीति वाच्यम्' इति वार्त्तिकेनेह षष्ठ्यर्थे चतुर्थी ) सूर्य्यस्य अन्वेतवै अन्वेतुम् अनुक्रमेण अन्वहं प्रत्यहं गन्तुम् अपदे नास्ति पदे यस्मिन् तत्तथोक्तं यत्र दत्तं पदं प्रतिमुद्रितं न भवति तस्मिन् अपदे अन्तरिक्षे उरु विस्तीर्णं पन्थां पन्थानं मार्गं चकार कृतवानित्यर्थः। तस्मादस्माकमपि अपदे अन्तरिक्षे पादा प्रतिधातवे पादौ प्रतिधातुं निक्षेप्तुं पन्थानं मार्गम् अकः करोतु ( लोडर्थे लङ् "छन्दसि लुङ्लङ्लिट' इतिपाणिनिवचनात्। ) अस्माकं स्वर्गगमनाय मार्गं करोत्वित्यर्थः। पन्थामित्यत्र नकारलोपश्छान्दसः। अन्वेतवै प्रतिधातवे इत्यत्र अनुपूर्वादिणः प्रतिपूर्वाद्धधातेश्च "तुमर्थे से से०"इत्यादिना क्रमात्तवै तवे प्रत्ययौ बोद्धव्यौ। पादेत्यत्र तु सुपां सुलुगित्यादिना विभक्तेराकारश्च बोध्यः। अक इतिकरोतेरदादित्वेन लङि शपि लुप्ते अड़ागमे तिप इकारलोपे धातोर्गुणे रपरत्वे हल्ङ्यादिना तलोपे रेफस्य विसर्गे च रूपं बोध्यम्। ) उत अपि च यो वरुणः हृदयाविधश्चित् 'चिच्छन्दोऽप्यर्थे' हृदयं विध्यति मर्म्मोच्चारणेन पीड़यतीति हृदयवित् ( नहि वृति वृषीत्यादिना क्विबन्ते व्यधौ परे हृदयस्य दीर्घे हृदयावित् ) तस्य हृदयाविधः पिशुनस्यापि अपवक्ता अपवदिता निन्दकस्यापि तिरस्कर्त्ता किमुत अन्येषां पापकारिणामित्यर्थः। यतोऽस्माभिर्वरुणस्य पाशः अभिष्ठितः आक्रान्तः तस्माद्वरुणाय नमः नमस्कुर्म्म इत्यर्थः। वरुणस्य जलरूपपाशाक्रमणेन या अप्रीतिर्जायते सा वरुणः नमस्कारेण अपनीयते, इति मत्वा वरुणनमस्कारपूर्वकं जलावतरणं क्रियतेऽस्माभिरित्यभिप्रायः। नमो वरुणायेति पूर्वमन्त्र शेषः॥ १॥ २॥

ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशावितता महान्तः।
तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः ॥ ३ ॥

येतेशतमित्यस्य वामदेवऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता स्नानीयतोयाऽऽलोडने विनियोगः। स्नानसूत्रे 'आवर्त्तयेद्येतेशतम्' इतिकात्यायनोक्तेः। अथ मन्त्रार्थः। हे वरुण, तव ये यज्ञियाः यज्ञार्हाः यज्ञसम्पादिनो यज्ञसंबन्धिनो वा शतं शतसङ्ख्यकाः पाशाः जलरूपाः तथा ये च सहस्रं सहस्रसंख्यकाः महान्तः उत्कृष्टाः वितताः विस्तीर्णाः पाशाः सन्तीतिशेषः। तेभिः (पञ्चम्यर्थे तृतीया सुपां सुपो भवन्तीति वचनात्। तत्राऽपि भिस् न भवति बहुलं छन्दसीतिपाणिन्युक्तेः।) तेभ्यः शतसंख्यकेभ्यश्च पाशेभ्यः सकाशात् नोऽस्मान् सविता सुवति स्वस्वव्यापारे जगत्प्रेरयतीति सविता सर्वप्रेरकः सूर्य्यः उत अपि च विष्णुः वेवेष्टि सर्वमिति विष्णुः व्यापकः परमेश्वरः विश्वे "विश्वे देवा दश स्मृता" इति देवगणानांमध्ये प्रतिपादनात् दशसंख्यकाः गणदेवताविशेषाः विश्वेदेवनामका गणदेवाश्चेतियावत्। तथा स्वर्काः स्वञ्चनाः सुगतयो मरुतः एकोनपञ्चाशद्वायवः स्वर्का इति पृथगेवोपादेयाः स्वर्काः सुदीप्तयः सूर्यकिरणाः अन्ये वा दीप्यमाना देवाः मरुतः पूर्वोक्तसंख्याविशिष्टा वायवश्च पूर्वोक्ताः एते सवित्रादयः सर्वे देवाः मुञ्चन्तु मोचयन्तु (अन्तर्भावितो णिजर्थो बोध्यः) पृथक्कुर्वन्त्वित्यर्थः। वरुणपाशतोऽस्मान्पृथक् कृत्य तेभ्यः सकाशादस्मान्रक्षन्त्वित्याशंसावाक्यार्थः। वरुणपाशभूतानामपां यज्ञार्हत्वं सोमयज्ञप्रकरणे वसतीवरीग्रहणप्रसङ्गे वेदे "हविष्मतीरिमाऽ आपो हविष्माँ २॥ऽ आविवासति।" इत्यादिना सुस्पष्टं प्रतीयते। अतो यज्ञियाः पाशा इत्युक्तमिहापि। अपामगाधप्रदेशे जलचरजन्तुव्यतिरिक्तसर्वप्राणिनां मग्नत्वे सति पाशवद्दुहुदुःखदत्वात्पाशत्वोपचारः। अतोऽत्र पाशशब्देन अगाधजलान्येव उच्यन्ते। तस्माद्वरुणपाशरूपाऽगाधजलतः स्वरक्षणमस्माभिः प्रार्थ्यते, इत्यभिप्रायः ॥ ३ ॥

सुमित्रियानऽआपऽओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः ॥ ४ ॥

प्रजापतिदृष्टमनुष्टुप्छन्दस्कं वरुणदैवतं यजुः। अस्य विनियोगश्चात्र जलादाने कात्यायनेनोक्तः। स्नानसूत्रे यथा "सुमित्रियानऽइत्यपोऽञ्जलिनादाय" इति। अपां वरुणदेवताकत्वात्तदधिष्ठातृवरुणं प्रार्थयते। अतिरिक्तमितिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि–हे वरुण, त्वत्प्रसादात् त्वदनुज्ञाने वर्त्तमाना आपः जलानि ओषधयः फलपाकान्ताः व्रीहियवाद्याः नः अस्माकं सुमित्रियाः साधुमित्रत्वेन अवस्थिताः सन्तु भवन्तु। दुर्मित्रिया इत्यस्य विनियोगो द्वेष्यं प्रतिनिषिञ्चने कात्यायनेनोक्तः स्नानसूत्रे यथा–'दुर्मित्रिया इति द्वेषं प्रतिनिषिञ्चेत्' इति। तथा–हे वरुण, यः शत्रुः अस्मान् द्वेष्टि द्वेषं करोति यं च शत्रुं वयंद्विष्मः द्वेषं कुर्म्मः तस्मै उभयात्मकाय शत्रवे आपः ओषधयश्च पूर्वोक्ताः दुर्मित्रियाः दुष्टमित्रत्वेन अवस्थिताः सन्तु भवन्तु। एवं वरुणं सम्प्रार्थ्य वयं स्नानं कुर्म्मस्तथा सति अस्माकं कल्याणं शत्रोस्तद्वैपरीत्यञ्च सम्भवतीत्याशंसावाक्यार्थः ॥ ४ ॥

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।
समूढमस्य पा ँ सुरे ॥ ५ ॥

इदं विष्णुरित्यस्य मेधातिथिर्ऋषिर्गायत्रीछन्दो विष्णुर्देवता मृदाङ्गालम्भने विनियोगः। आलभेदङ्गानि मृदेदं विष्णुरिति कात्यायनोक्तेः। अथ मन्त्रार्थः—

"तत्सृष्ट्वा तदेवानुप्राविशदि"ति श्रुतेः सर्वं प्राणिषु अन्तर्यामिरूपेण विशतीति विष्णः सर्वान्तर्यामी सर्वसाक्षी वेवेष्टि व्याप्नोति सर्वमिति वा विष्णुः सर्वव्यापकः परमेश्वरः त्रिविक्रमावतारं कृत्वा इदं विश्वं सर्वं स्थावरजङ्गमात्मकं ब्रह्माण्डमण्डलं विचक्रमे विभज्य क्रमते स्म आक्रान्तवानित्यर्थः। कथमाक्रान्तवानित्यभिप्रेत्य तदेवोच्यते त्रेधा प्रकारवचने धा प्रत्ययः त्रिप्रकारेण अग्निवायुसूर्य्यरूपेण भूम्यन्तरिक्षस्वर्गलोकेषु पदं निदधे निहितवान्। भूमावग्निरूपेण एकं पदं निहितवान्-अन्तरिक्षे वायुरूपेण एकं पदं निहितवान्-दिवि सूर्य्यरूपेण एकं पदं निहितवान् अतस्तिस्रो देवता अग्निवायुसूर्य्याख्या एव प्रधानभूताः अन्यासान्तु देवतानामेतास्वेवान्तर्भावः। अतो यास्केनाप्युक्तं "तिस्रो देवता अग्निवायुसूर्य्याख्या" इति। पदमिति सुपां सुपो भवन्तीति पाणिनीयसूत्रेण सप्तम्येकवचनस्थाने प्रथमैकवचनं विभक्तिव्यत्ययेन ततोऽयमर्थः। अस्य विष्णोः पदं पदे समूढं सम्यगन्तर्हितं विश्वमिति शेषः। अथवा अस्य विष्णोः पदं पद्यते गम्यते ज्ञायते मुमुक्षुभिरितिपदम् अद्वैताख्यं स्वरूपं विज्ञानघनानन्दमयमक्षरमित्येवं लक्षणं पदं समूढं सम्यगविज्ञातमकृतात्मभिरित्यर्थः। कस्मिन्निव पांसुरे लुप्तोपमानमेतत् पांसुरे इव रलयोर्डलयोस्तथेतिस्मरणात्पांसुले रजस्वले प्रदेशे प्रक्षिप्तं द्रव्यमिव तत् द्रव्यं यथा अन्तर्हितं दर्शनायोग्यं भवति तद्वदस्य विष्णोस्तत्पूर्वोक्तं पदमकृतात्मभिरज्ञेयं भवतीत्यर्थः। तदुक्तं श्रुत्या—"तद्विष्णोः परमं पद ठं. सदा पश्यन्ति सूरयः दिवीव चक्षुराततमि"ति। य एवं भूतो विष्णुस्तस्य पादप्रक्षेपणेन यस्माद्भूमिः पवित्राऽभूदतस्तदीयमृदाऽङ्गानि स्पृशाम इति वाक्यशेषः। मृदमङ्गेषु लिम्पाम इति भावः। एतत्पवित्रमृत्तिकाभ्यङ्गेन अस्माकमङ्गान्यपि पवित्राणि भविष्यन्तीत्यभिप्रायेणानेन मन्त्रेण मृदाङ्गानि स्पृशाम इत्याशयः। अतो मृदाङ्गालम्भने विनियुक्तोऽयं मन्त्रः कात्यायनेनेत्यवगन्तव्यम्॥ ५॥

आपोऽ अस्मान्मातरं शुधयन्तु घृतेन नो घृतप्वः पुनन्तु।
विश्व ठं. हि रिप्रं प्रवहन्ति देवी रुदिदाभ्यः शुचिरा पूतऽ एमि॥६॥

अब्देवत्या त्र्यवसानाऽत्यष्टिछन्दस्का प्रजापतिदृष्टेयमृक् अस्या विनियोगश्च निमज्जने कात्यायनेनोक्तः। स्नानसूत्रे यथा "निमज्जेदापो अस्मानि"ति तथा—'उदिदाभ्य' इतिप्राजापत्यमेकपादं जागतं यजुः तस्य विनियोगश्चोन्मज्जने कात्यायनेनोक्तः। स्नानसूत्रे यथा—'स्नात्वोदिदाभ्य इत्युन्मज्य' इति। "तमिद्गर्भं प्रथमं दध्रऽआपो यत्र देवाः समगच्छन्त विश्वे" इति श्रुतेरपां मातृत्वं श्रुतिप्रसिद्धं तस्मादिह एवमुच्यते यत्किल मातरः मिमते इति मातरः जगन्निर्म्मात्र्यः सर्वप्राणिनां जीवनहेतुत्वान्मातृवत्पालयित्र्यो वा आपः अस्मान् यजमानान् शुन्धयन्तु "शुन्ध शुद्धौ" शोधयन्तु अपहतिनिवारणेन अस्मान् पवित्रीकुर्वन्त्वित्यर्थः। तथा घृतप्वः "घृतमित्युदकनामेति निघण्टुः" "घृ क्षरणे" जिघर्त्ति क्षरतीतिघृतं तेन घृतेन क्षरितजलेन पुनन्तीति घृतप्वः घृतं हि अपां परमं तेजः पवित्रं च तथा च श्रुतिः "तद्वै सुपूतं यं घृतेन पुनन्ती"ति घृतप्वः जलदेवताः घृतेन क्षरितजलेन नोऽस्मान् पुनन्तु दुरितनिवा-

रणेन शुद्धीकुर्व्वन्त्विति भावः। किञ्च हि यस्मात् देवीः ( दिव्यन्तीति देव्यः इति प्राप्ते वा छन्दसीति पूर्वसवर्णदीर्घे देवीरित्येवं भवति ) देवीः देव्यः द्योतमाना आपः स्वभावत एव विश्वं सर्वं रिप्रं ( "रपो रिप्रमिति पापनामानी भवतः" इति यास्कः। ) रिप्रं पापं प्रवहन्ति प्रकर्षेण अपनयन्तीत्यर्थः। तस्मादापो देव्यः जलदेवताः ममापि सर्वं पापं दूरीकुर्वन्त्विति वाक्य शेषः। तस्मादहमपि आसु अप्सु स्नात्वा स्नानेन शुचिः शुद्धः सन् तथा आपूतः आसमन्ताद्भावेन पूतः आचमनेन अन्तरतोऽपि शुद्धः सन् इत् 'इदेवार्थे' स्नानाचमनाभ्यां वहिरन्तरतश्च शुद्धः सन्नेवेत्यर्थः। आभ्यः अद्भ्यः सकाशात् उदेमि उद्गच्छामि ( व्यवहिताश्चेति पाणिनीयसूत्रेण उदित्युपसर्गस्य एमीति व्यवहितेनाऽपि क्रियापदेनात्र सम्बन्धः। ) स्नानेन वहिः शुद्धः आचमनेन अन्तः शुद्धो भूत्वा जलान्निर्गच्छामि। जलदेवताप्रसादान्मम नात्र किञ्चिदमङ्गलमिति हृदि निश्चित्य निमज्योन्मज्य स्नानं विधाय जलाद्वहिर्गच्छामीति भावः ॥ ६ ॥

मानस्तोके—इति शतरुद्रियप्रकरणेऽग्रे व्याख्यास्यते। तत्रास्य व्याख्या द्रष्टव्या। मानस्तोके इत्यस्य विनियोगः सर्वाङ्गगोमयोपलेपने कात्यायनेनोक्तः। स्नानसूत्रे यथा—"गोमयेन विलिम्पेन्मानस्तोके इति" ॥९॥

इ॒मं मे॑ व्वरुण श्रुधी हव॑म॒द्या च॑ मृडय।

त्वाम॑व॒स्युराच॑के ॥ ८ ॥

वरुणदेवत्या गायत्री शुनःशेपदृष्टेयमृक्। इमम्मे, तत्त्वा, त्वन्नो अग्ने, सत्वन्नो अग्ने इति चतसृणामृचां विनियोगस्त्वभिषिञ्चने कात्यायनेनोक्तः। स्नानसूत्रे यथा ततोऽभिषिञ्चेदिमम्मेव्वरुणेति चतसृभिः। हे वरुण, त्वं मे मम इमं हवमाह्वानं श्रुधि शृणु। श्रुशृणुपॄकृवृभ्यश्छन्दसीति पाणिनीयसूत्रेण हेर्धिः। अन्येषामपीति संहितायां दीर्घः। च पुनः हे वरुण, अद्या (निपातस्य चेति संहितायां दीर्घः।) अद्य अस्मिन्दिने आमृडय अस्मानितिशेषः। "मृड सुखने" आसमन्ताद्भावेन अस्मान् सुखय कालान्तरं नापेक्षणीयमित्यर्थः। कुतश्चिदित्याशङ्क्याह। हे वरुण, यतोऽहं अवस्युः अवनमवः पालनम् "अवतेरसुन् प्रत्ययः" तदिच्छतीति अवस्युः ( सुप आत्मनः क्यजिति क्यच्प्रत्ययस्ततश्च क्याच्छन्दसीति उप्रत्ययः ) आत्मनो रक्षणमिच्छन् त्वाम् आचके कामये "आचक इति कान्ति कर्म्मे"तियास्कः कान्तिरिच्छा त्वामिच्छामीत्यर्थः। अतोऽस्मानद्यैव सुखय न कालान्तरापेक्षा कर्त्तव्येति भावः ॥ ८ ॥

तत्त्वा॑ यामि॒ ब्रह्म॑णा॒ व्वन्द॑मान॒स्तदा शास्ते॒ यज॑मानो ह॒विर्भिः॑।

अहे॑डमानो व्वरुणे॒ह बो॒द्ध्युरु॑श ऽँ स॒मान॒ आयुः॒ प्रमो॑षीः ॥ ९ ॥

वरुणदेवत्या त्रिष्टुप् शुनःशेपदृष्टा ऋगियम्। विनियोगश्चास्य "इमम्मे" इत्यत्रैव प्रदर्शितः पूर्वमेव। तत्त्वेत्यत्र व्यत्ययो वहुलमिति पाणिनीयसूत्रेण हलो व्यत्ययेन यकारस्थाने तकारे कृते तदित्येवं भवति। अतोऽत्र तच्छब्दो यदर्थो बोद्धव्यः तदाशास्ते इत्यत्र तच्छब्दश्रवणात्।

अथ मन्त्रार्थः। हे वरुण, यजमानः यज्ञकर्त्ता पुरुषः हविर्भिः दत्तैश्चरुपुरोडाशादिभिः यत् धनपुत्रादिकमाशास्ते कामयते इच्छतीत्यर्थः। यत्कामः सन् तुभ्यं हवींषि दत्ते।

अहमपि स्नानकर्त्ता पुरुषः ब्रह्मणा त्रयीलक्षणेन वेदेन वन्दमानः त्वां स्तुवानः स्तुवन् सन् तदेव धनपुत्रादिकं त्वा त्वां यामि याचामि तत् धनपुत्रादिकं मह्यं त्वया दीयतामिति त्वां प्रार्थयामीत्यर्थः। ( यामीति याच्ञा कर्म्मसु पठित इति यास्कः )। किञ्च हे उरुशंस, शंसनं शंसः स्तुतिः "शंसु स्तुतौ" उरुः महान् शंसः स्तुतिर्यस्य स उरुशंसः तत्सम्बुद्धौ हे उरुशंस बहुस्तुते, इह अस्मिन् स्थाने अहेड़मानः हेड़ते क्रुध्यतीति हेड़मानः न हेड़मानः अहेडमानः अक्रुधः प्रसन्नो भूत्वेत्यर्थः। बोधि बुद्ध्यस्व त्वं मदभ्यर्थनामितिशेषः। अनुजानीहीत्यर्थः। 'बुध अवगमने' इत्यस्माल्लोण्मध्यमपुरुषैकवचने सेर्ह्यपिच्चेति सेर्ह्यादेशे हुझल्भ्योहेर्धिरिति हेर्ध्यादेशे वाच्छन्दसीति पाणिनीयसूत्रेण हेरपित्त्वाभावे गुणे छान्दसत्वाद्धलोपे बोधीति रूपम्। बुध्वा नोऽस्माकमायुर्जीवनं मा प्रमोषीः मा चोरय ( मुष स्तेये लुङ् 'न माङ्योगे' इति पाणिनीयसूत्रेण अड्भावप्रतिषेधः। नोऽस्माकमित्यत्र सुपां सुपो भवन्तीति षष्ठ्या एकवचनस्थाने बहुवचनम् ) ममायुर्मा खण्डय पूर्णमायुर्मह्यं देहीत्यर्थः। आत्मनो गुरुत्वात्पूजार्थं बहुवचनं भार्यापुत्राद्यपेक्षया वा तत्पक्षे नोऽस्माकमायुर्जीवनं मा प्रमोषीः मा अव खण्डय मा विनाशय पूर्णमायुरस्मभ्यं देहीत्याशयः। एवं वरुणं सम्प्रार्थ्य यः स्नाति तस्य वरुणप्रसादात्पूर्णमायुर्भवतीत्यवगन्तव्यम् ॥ ९ ॥

त्वन्नोऽ अग्ने व्वरुणस्य व्विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः।
यजिष्ठो व्वह्नितमः शोशुचानो व्विश्वा द्वेषाᳬसि प्रमुमुग्ध्यस्मत् ॥ १० ॥

अग्निवरुणदेवत्या त्रिष्टुप् वामदेवदृष्टा ऋगियम्। अस्या अपि विनियोगः "इमम्मे" इत्यत्र पूर्वमेवोक्तः। तिस्रो देवताः अग्निवायुसूर्य्याख्या इति निरुक्ते दैवतकाण्डे सविशेषमुक्तवान्यास्काचार्य्यः। तत्र अग्निर्यद्यपि भूमिस्थाना देवता तथाप्यत्र माध्यमिकं वैद्युतानलमेवाभिलक्षीकृत्य अग्निं प्रत्युच्यते अप्सु तस्य सत्त्वात्। तथाहि–हे अग्ने जलान्तर्गतवह्ने, त्वं नः अस्मान् स्नानकर्त्तॄन् प्रति देवस्य दीव्यतीति देवः तस्य देवस्य द्युतिस्तुतिक्रीड़ादियुक्तस्य वरुणस्य हेड़ः "हेड़ इति क्रोधनामेति निघण्टुः" हेड़ः क्रोधम् अवयासिसीष्ठाः निवर्त्तय 'यसु ऊपक्षये' अवपूर्वस्य णिजन्तस्यास्याशीर्लिङि रूपम्। स्नानकाले यदस्माभिर्जलातिक्रमणं कृतं तज्जनितं यदस्मान्प्रति वरुणस्य हेड़ः क्रोधः समजनि तन्निराकर्त्तुं त्वां वयं प्रार्थयामः, त्वञ्च झटित्येव वरुणक्रोधमपनय दूरीकुर्वित्यर्थः। किञ्च हे अग्ने, विद्वान् वरुणक्रोधापनयनस्वीयसामर्थ्यं जानन् यजिष्ठः अतिशयेन यष्टा यजिष्ठः ( तुरिष्ठेमेयःस्विति तृचो लोपः ) यष्टृतमः यागातिशय उत्तम इत्यर्थः। तथा वह्नितमः वहतीति वह्निः अत्यन्तं वह्निर्वह्नितमः हविषां चरुपुरोड़ाशादीनां वोढा इत्यर्थः। तथा शोशुचानः अत्यन्तं शोचते दीप्यते इति शोशुचानः ( शोचतेर्यङन्ताच्छानच्प्रत्ययः ) शोशुचानः हविषा उत्तरोत्तरं देदीप्यमान इत्यर्थः। एवं भूतस्त्वं विश्वा ( निशब्दो बहुलमिति प्रातिशाख्यसूत्रेण निलोपे विश्वा इति यद्वा शेश्छन्दसीति विश्वशब्दात्परस्य शेर्लोपे प्रत्ययलक्षणेन 'नपुंसकस्य झलचः' इति नुमि 'सर्वनामस्थाने च' इत्युपधाया दीर्घे 'न लोपः प्रातिपदिकान्तस्येति' न लोपे "विश्वा" इति ) विश्वा अर्थात् विश्वानि सर्वाणि द्वेषांसि दौर्भाग्यानि अस्मत् अस्मत्तः सकाशात् प्रमुमुग्धि प्रमुञ्च दूरीकुरु ( मुचेर्व्यत्ययेन शपः श्लुः। ) अग्नेर्देवयजनं हविर्वहनञ्च श्रुत्याऽभिहितं "होतायक्षदग्निᳬस्विष्टकृतमयाड़ग्निरश्विनोश्छागस्य हविषः प्रियाधामा-

नीति" "आदेवान्वक्षि यक्षि चेति" जलातिक्रमणजन्यवरुणक्रोधापनयनार्थमग्निं स्तुत्वा यः स्नानं विधत्ते तस्याग्निप्रसादाद्वरुणक्रोधजन्याऽशेषारिष्टशान्तिपूर्वकं सकलमनोरथसिद्धिर्भवतीत्यभिप्रायेण स्नाने विनियुक्तोऽयं मन्त्रः कात्यायनेनेत्यवगन्तव्यम् ॥ १० ॥

सत्वन्नोऽ अग्नेऽवमो भवोती नेदिष्ठोऽअस्याऽ उषसो व्युष्टौ ।
अवयक्ष्व नो व्वरुणꣳ रराणो व्वीहि मृडीकꣳ सुहवोनऽएधि ॥११॥

अग्निवरुणदेवत्या त्रिष्टुप् वामदेवदृष्टा ऋगियम् । अस्या अपि विनियोगः ( इमम्मे ) इत्यत्रैव पूर्वमुक्तः । यत्तदोर्नित्यसम्बन्धादिह तच्छब्दश्रवणाद्यच्छब्दोऽध्याहर्त्तव्यः । हे अग्ने, यस्त्वं दाहपाकप्रकाशैरस्माननुगृह्णन् सर्वदाऽस्मद् गृहे वर्त्तसे इति शेषः । स त्वम् अस्याः उषसः प्रातःकालस्य व्युष्टौ समाप्तौ अस्मिन्नेव दिने ऊती ऊत्या अवनेन नः अस्माकम् अवमः अवतीत्यवमः अवतेरमप्रत्ययः रक्षकः पालकः नेदिष्ठः अत्यन्तमन्तिको नेदिष्ठः ( अन्तिकबाढयोर्नेदसाधाविति इष्ठे परे नेदादेशः ) अन्तिकतमः समीपतमश्च भव । तथा हे अग्ने, रराणः (रमु क्रीडायामित्यस्माच्छानच् प्रत्ययः) रममाणः क्रीडमानस्त्वं नः अस्माकं कल्याणार्थं वरुणम् अवयक्ष्व ( अव पूर्वाद्यजतेर्लोटि शपो लुक् ) अवयज वरुणञ्च यष्ट्वा मृडीकं मृड सुखने सुखकरे अर्थात् अस्माकं हविः वीहि ( वेतः खादनार्थस्य लोणूमध्यमैकवचने सेर्ह्यपिच्चेतिह्यादेशे रूपं भवति । ) अस्माकं हविः चरुपुरोडाशादिकं भक्षय । पश्चान्नोऽस्माकं कल्याणार्थं सुहवः स्वाह्वानश्च एधि ( अस्तेर्लोण्मध्यमैकवचने ध्वसोरेद्धावभ्यासलोपश्चेत्येकारः आभीयत्वेन एत्वस्यासिद्धत्वाद्धेर्धिः, श्नसोरित्यल्लोपश्चबोध्यः ) शोभनाह्वानश्च भव । एवं त्वत्प्रसादाद्वरुणयजनद्वाराऽस्माकं सर्वाभीष्टसिद्धिर्भविष्यति अतस्त्वां सम्प्रार्थ्य स्नानं करिष्याम इत्यभिप्रायः ॥ ११ ॥

मापो मौषधीर्हिꣳसीर्धाम्नो धाम्नोराजꣳस्ततो व्वरुणनो मुञ्च ।
यदाहुरघ्न्या इति व्वरुणेति शपामहे ततो वरुणनो मुञ्च ॥ १२ ॥

अस्याः कण्डिकायाः पूर्वार्द्धे प्रजापतिदृष्टं वरुणदैवतं यजुर्द्वयं तत्र प्रथमस्य याजुषी गायत्रीच्छन्दो द्वितीयस्य स्वराट् साम्नी गायत्रीच्छन्दोऽवगन्तव्यम् । उत्तरार्द्धे यदाहुरिति प्रजापतिदृष्टा वरुणदेवत्या गायत्री अवसानहीना ऋक्च । तत्र अघ्न्या इत्यत्र इयादिपूरण इति पिङ्गलछन्दःसूत्रेण व्यूहेन पादपूर्तिर्ज्ञेया गायत्र्या अष्टाक्षरपादत्वात् । मापः-उदुत्तमंमुञ्चन्त्ववभृथेति मन्त्रचतुष्टयस्य च विनियोगो निमज्जोन्मज्जन एव कात्यायनेनोक्तः । स्नानसूत्रे यथा-"माप उदुत्तमं मुञ्चन्त्ववभृथेत्यन्ते चैतन्निमज्योन्मज्य"इति । अथ मन्त्रार्थः हे जलाधिष्ठातृ वरुण, त्वम् अस्मत्स्नानपानयोग्याः अपः जलानि तथा अस्मद्भक्षणयोग्याः ओषधीर्व्रीह्याद्याश्च माहिंसीः मा विनाशय । अग्रे तच्छब्दश्रवणाद्यच्छब्दोऽध्याहर्त्तव्यः । तथा पुरा वरुणेन राजसूय यागः कृतः । अतएव वरुणः राजेत्युच्यते । राजसूययाजी राजा भवतीति श्रुत्यभिहितम् । तथा च श्रुतिः "राजा वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेनेति । अतएवमुच्यते हे राजन् राजसूययाजिन् , हे वरुण, यस्माद्यस्मात् धाम्नः धाम्नः धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोरिति" हैमचन्द्रकोशादौ दर्शनात् धाम शब्दः स्थानवाची

त्वदीयपाशसमन्वितात् यस्मात् यस्मात् स्थानात् वयं बिभीमस्तस्मात्तस्मात् स्थानात् नः अस्मान् मुञ्च मोचय। यदाहुरित्यस्यार्थो यथा—"अघ्न्या इति गो नामेति" निघण्टुः। हन्तुमयोग्याः अघ्न्याः गावः सदैव पूजनीया इति वेदस्मृतिलोकवाक्यानि यदाहुः वदन्तीत्यर्थः। हे वरुण, वयंतु इति शपामहे इति करणमत्र पूर्वोक्तार्थप्रदर्शनार्थं या हन्तुमयोग्या अवध्या गाव इति वेदस्मृतिलोकवाक्यानि कथयन्ति तदतिक्रम्य ताः अघ्न्याः गाः वयं शपामहे, शपतिर्हिंसार्थः अर्थात् हिंस्मः। अन्यथाऽपि सर्वान्प्रति शृङ्गादिना हूत्कारकरणमिति गोरवभावः तादृशापराधसत्त्वे वयं लगुड़ादिना अहिंस्या अपि ताः ताड़याम इत्यभिप्रायः। ततः तस्मात् गोहिंसाजनितपापात् गोताड़नपापादित्यर्थः नः अस्मान् मुञ्च मोचयेत्यर्थः। एवं वरुणप्रार्थनापूर्वकं स्नाने कृते स्नानकर्तॄणां गोवधादिपापराहित्यं निष्पापत्वात्सुखञ्च भवंतीत्यभिप्रायेणास्य मन्त्रस्य स्नाने कात्यायनेन विनियोगः प्रदर्शित इत्यवगन्तव्यम्॥ १२॥

उदु॑त्त॒मं व॑रुण॒ पाश॑ म॒स्मदवा॑ध॒मं व्विम॑ध्य॒मꣳ श्र॑थाय।

अथा॑व॒यमा॑दित्यव्र॒ते तवाना॑गसो॒ऽअदि॑तये स्याम॥ १३॥

वरुणदेवत्या त्रिष्टुप् शुनःशेपदृष्टा ऋगियम्। अस्या विनियोगस्तु माप इत्यत्रोक्तः। उदित्युपसर्गोऽववि एतावपि च श्रथयेत्यनेन सम्बध्यन्ते छन्दसि परेऽपि व्यवहिताश्चेति पाणिन्युक्तेः। हे वरुण, त्वम् उत्तमम् उपरितनम् उर्ध्वस्थितं शिरःप्रदेशे स्थापितं पाशं जलरूपम् अस्मत् अस्मत्तः सकाशात् उच्छ्रथाय उच्छ्रथय उत्कृष्य विनाशयेत्यर्थः। "श्रथ हिंसायां" मित्वाण्णिचि ह्रस्वः लोटि मध्यमैकवचने रूपं श्रथायेति संहितायां दीर्घश्छान्दसः। तथा च हे वरुण, अधमम् अधस्तनम् अधोदेशे स्थितं पादप्रदेशे स्थापितं पाशं जलरूपम् अस्मत् अस्मत्तः सकाशात् अवश्रथाय अवश्रथय अस्मत्तोऽवकृष्य अवाचीनं कृत्वा विनाशयेत्यर्थः। तथा च हे वरुण, मध्यमं मध्यस्थं मध्यप्रदेशे स्थापितं पाशं जलरूपं अस्मत् अस्मत्तः सकाशात् विश्रथाय विश्रथय विशेषतया श्लथीकृत्य विनाशयेत्यर्थः। तथा सति हे आदित्य, अदितेरपत्यं पुमानादित्यस्तत्सम्बुद्धौ हे आदित्य, अदिति पुत्र, हे वरुण, अथ पाशत्रय विनाशानन्तरम् अनागसः अनपराधाः निष्पापाः वयं तव व्रते तवानुष्ठानकर्म्मणि वर्त्तमानाः सन्तः अदितये स्याम अदीनतायै भवाम दीनराहित्यमेव सुखकारणं सुखिनो भवेमेत्यर्थः। "व्रतमिति कर्मनामेति" निघण्टुः। एवं वरुणं स्तुत्वा ये स्नानं विदधते तेषां पापराहित्यं सर्वसौख्यञ्च भवतीत्यभिप्रायेणैव स्नाने विनियुक्तोऽयं मन्त्र इत्यनुसन्धेयम्॥१३॥

मु॒ञ्चन्तु॑ मा शप॒थ्या॒दथो॒ व्वरु॒ण्या॒दु॒त।

अथो॑ य॒मस्य॒ पड्वी॑शात्सर्व॑स्माद्देव किल्वि॒षात्॥ १४॥

अब्देवत्याऽनुष्टुप् बन्धुदृष्टेयमृक्। अस्या अपि विनियोगस्तु माप इत्यत्रोक्तः। स्नानप्रकरणवशादिह आपः इति कर्त्तृपदमध्याहर्त्तव्यं ततोऽयमर्थः। आपः जलानि शपथ्यात् शपथे भवं शपथ्यं तस्मात् शपथ्यात् शपथनिमित्तात् पापात् मा मां मुञ्चन्तु मोचयन्तु। अथोऽपि च वरुण्यात् वरुणे भवं वरुण्यं तस्मात् वरुण्यात् वरुणापराधनिमित्तात्

पापात् मा मां मुञ्चन्तु मोचयन्तु। उत अपि च यमस्य यमसम्बन्धिनः पड्वीशात् पड्वीशशब्दो बन्धनवाची यमबन्धननिमित्तात्पापात् मा मां मुञ्चन्तु मोचयन्तु पृथक्कुर्वन्तु। अथो अपि च सर्वस्मात् देवकिल्बिषात् देवाऽपराधनिमित्तात्पापान्मा मां मुञ्चन्तु मोचयन्तु। यथा वयं सर्वथा निष्पापा भवेम तथाऽऽपः कुर्वन्त्वित्यर्थः। अपां नरसूनुत्वान्नरस्य च सर्वपापक्षयकर्त्तृत्वादेव तत्सूनुभूता अपः सम्प्रार्थ्य ये स्नानमाचरन्ति तान्निष्पापान्कृत्वाऽऽपः सुखीकुर्वन्तीत्याशयेन स्नाने विनियुक्तोऽयं मन्त्रः कात्यायनेनेत्यवगन्तव्यम् ॥ १४॥

अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः।
अवदेवैर्देवकृतमेनोऽयासिषमवमर्त्यैर्मर्त्यकृतंपुरुराव्णोदेवरिषस्पाहि ॥ १५॥

अवभृथयज्ञदैवतं प्रजापतिदृष्टं अष्टचत्वारिंशदक्षरत्वात् ब्राह्मनुष्टुप्छन्दस्कं यजुः। अस्य यजुषो विनियोगस्तु "माप"इत्यत्रोक्तः। अवाचीनानि पात्राणि जलमध्ये भ्रियन्ते यस्मिन् यज्ञविशेषे सोऽयमवभृथः। तत्सम्बुद्धौ हे अवभृथ, यज्ञ, तथा हे निचुम्पुण, "चुप मन्दायां गतौ" नितरां चोपति मन्दं गच्छतीति निचुम्पुणः ( उणूप्रत्ययो मुमागमश्च ) तत्सम्बुद्धौ हे निचुम्पुण, मन्दगते, यद्यपि त्वं निचेरुः असि नितरां चरतीति निचेरुः नितरां गमनशीलोऽसि तथाप्यत्र निचुम्पुणो भवेतिशेषः। मन्दगतिर्भव कुतो मन्दगतिर्भवामीति चेत्तत्रोच्यते अवदेवैरिति। तत्र अवेत्ययमुपसर्गो यासिषमिति क्रियापदेन सह सम्बध्यते। हे तथाविधावभृथाख्ययज्ञ, देवैर्द्योतनात्मकैः प्रकाशमानैः अस्मदीयैरिन्द्रियैः देवकृतं देवेषु हविःस्वामिषु कृतं यदेनः पापं तत् देवकृतमेनः पापम् अवयासिषं जलेऽहमवनीतवानस्मि। तथा मर्त्यैर्मनुष्यैरस्मत्सहायभूतैर्ऋत्विग्भिर्याजकैर्होत्रादिभिः मर्त्यकृतं मर्त्येषु यज्ञदर्शनार्थमागतेषु मनुष्येषु कृतं यदवज्ञारूपमेनः पापं तत् मर्त्यकृतमेनः पापम् अवयासिषं जलेऽहमवनीतवानस्मि। इदमस्मत्त्यक्तं पापं यथा त्वां न व्याप्नुयान्न प्राप्नुयात्तथा त्वं मन्दं गच्छेत्यभिप्रायः। तथा च हे देव, द्युतिस्तुतिक्रीडादियुक्त, हे अवभृथ यज्ञ विशेष, पुरुराव्णः पुरुशब्दो बहुवाची रा दाने पुरुबहु विरुद्धफलं राति ददातीति पुरुरावा बहुविरुद्धफलदाता तस्मात् ( "आतो मनिन्क्वनिब्वनिपश्चे"ति वनिप् प्रत्ययः। ) तादृशात् रिषः ( "रिष हिंसायामि"त्यस्मात्क्विप् प्रत्ययः। ) रेषतीति रिट् तस्मात् रिषः वधात् पाहि रक्ष अस्मानिति शेषः। अवभृथस्नाने अमुं मन्त्रं पठन् जले यजमानो निमज्जति अतोऽत्रापि स्नानकर्म्मणि कात्यायनेन विनियुक्तोऽयं मन्त्रः। एवमवभृथाख्यं यज्ञविशेषं तदधिष्ठातृदेवं सम्प्रार्थ्य ये स्नानं विदधते तेषां पापराहित्यं सर्वं सुखञ्च भवतीत्यभिप्रायः॥ १५॥

आपोहिष्ठेति तृचं सन्ध्याप्रकरणेऽग्रे व्याख्यास्यते। विनियोगस्तु आपोहि तृचमिदमापः हविष्मतीः देवीराप इतिद्वे अपोदेवा द्रुपदादिव शन्नो देवीरपा ॐ रसमपोदेवीः पुनन्तुमेति नव चित्पतिर्मेति त्रयोविंशतिमन्त्राणां दर्भैः पावने विनियोगः कात्यायनेनोक्तः। स्नानसूत्रे यथा "दर्भैः पावयेदापोहिष्ठेति तिसृभिरिदमापो हविष्मतीर्देवीराप इति द्वाभ्यामपोदेवा द्रुपदादिव शन्नोदेवी रपा ॐ रसमपोदेवीः पुनन्तुमेति नवभिश्चित्पतिर्मेति"।

इदमापः प्रवहता वद्यञ्च मलञ्च यत्। यच्चाभिदुद्रोहानृतं यच्च शेपेऽअभीरुणम्॥
आपो मा तस्मादेनसः पवमानश्च मुञ्चतु ॥ १६ ॥

अब्देवत्या त्र्यवसाना महापंक्तिः प्रजापतिदृष्टेयमृग्। अस्या विनियोगस्तु आपोहिष्ठेत्यत्रोक्तः। हे आपः यूयमिदं पापं प्रवहत मत्तः सकाशाद्दूरं नयत। इदमस्तु सन्निकृष्टे प्रयोगो भवति। इदं प्रत्यक्षं यत्किञ्चिन्मदीयं पापं तद्दूरीकुरुतेत्यर्थः। यत्तदोर्नित्यसम्बन्धत्वाद्यच्छब्दश्रवणात्तच्छब्दोऽध्याहर्तव्यः। यच्च अवद्यं अवदनीयम् अभिशापादि यच्च मलं शरीरलग्नं प्रसिद्धं तच्च तदपि यूयं प्रवहत अपनयत मत्तो दूरं नयत। किञ्च यच्च अहम् अनृतम् असत्यम् उक्त्वा मिथ्या भाषणं कृत्वेत्यर्थः अभिदुद्रोह दुग्धवानस्मि "द्रुह जिघांसायाम्" यच्च अहम् अभीरुणं बिभेतीति भीरुः न भीरुः अभीरुस्तम् अभीरुणम् अनपराधिनम् शेपे शपितवानस्मि। यो हि अनपराधी स एव न बिभेति यस्तु अपराधी सतु बिभेत्येव एवम् अनपराधिनं प्रति यन्मयाभिशापो दत्तस्तस्मादेनसः पापाच्च मा मां यूयं मुञ्चतेतिशेषः। पवमानश्च मुञ्चत्वित्यस्यान्तिमपादस्य पवमानो देवता पवमानश्च वायुः "पवमानः प्रभञ्जन" इत्यमरसिंहोक्तेः। मत्कृतमन्यदपि यत्किञ्चित्पापं तस्मात्पापात् पवमानः प्रभञ्जनो वायुर्मा मां मुञ्चतु पृथक्करोत्वित्यर्थः। एवमनेन मन्त्रेण यः स्नाति तस्य स्नातुः पुरुषस्य अपां वायोश्च प्रसादात्पापराहित्यं सुखप्रसाधनञ्च निश्चितमेव भवतीत्यभिप्रायणैव स्नाने विनियुक्तोऽयं मन्त्रः कात्यायनेनेत्यवगन्तव्यम्॥ १६ ॥

हविष्मतीरिमाऽआपो हविष्माँ २॥ऽ आविवासति।
हविष्मान्देवोऽअध्वरो हविष्माँ २॥ऽ अस्तु सूर्यः ॥ १७ ॥

लिङ्गोक्तदेवत्याऽनुष्टुप् प्रजापतिदृष्टेयमृग्। अस्या अपि विनियोग आपोहिष्ठेत्यत्रोक्तः। हविष्मानिति विशेषणपदश्रवणाद्विशेष्यपदं यजमान इत्यध्याहर्त्तव्यं ततोऽयमर्थः। हविष्मान् हविषा संयुक्तो यजमानः हविष्मतीः हविषा संयुक्ता इमा आपः "सुपां सुपो भवन्तीति द्वितीयाबहुवचनस्थाने प्रथमाबहुवचनं विभक्तिव्यत्ययेन ज्ञेयं अपः जलानि आविवासति ( विवासतिः परिचर्यार्थः ) इति यास्कोक्तेः परिचरतीत्यर्थः। "यत्र वै यज्ञस्य शिरोऽच्छिद्यत तस्य रसो द्रुत्वाऽपः प्रविवेशे"ति श्रुतेरपां हविष्मत्वम्। "अहरहः स्वाहा कुर्य्यादन्नाभावे केन चिदाकाष्ठादि"ति गृह्यकारोक्तेर्यजमानस्याऽपि नित्यहोमकर्त्तृत्वाद्धविष्मत्वम्। अतएव हविष्मतीरिमा आपो हविष्मानिति दृश्यतेऽस्मिन्वेदमन्त्रे इति तु स्मार्त्तपक्षेऽनुसन्धेयं, श्रौते त्वन्यदेव हविष्मत्वनिमित्तम् अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणमित्यादि कात्यायनोक्तेः। एवं देवः द्योतमानः वेदमन्त्रैः सम्पादितत्वात्प्रकाशमानः अध्वरः यागोऽपि स्वशरीरनिष्पत्तये हविष्मानस्तु हविषा संयुक्तो भवतु आभिः हविष्मतीभिरद्भिरित्यर्थः। किञ्च सूर्योऽपि देवः हविष्मानस्तु हविषा संयुक्तो भवतु यजमानस्य फलदानाय तृप्त्यर्थञ्चेति शेषः। 'एतस्मै वै गृह्णाति य एष तपती'ति श्रुतेः सूर्यस्य हविष्मत्वं सुस्पष्टम्। य एवं समन्त्रकं स्नाति तस्यापां प्रसादात् व्रीहियवाज्यादिहविष्मत्वं यज्ञकर्त्तृत्वञ्च सम्वर्द्धते निश्चितमेवेत्यभिप्रायेणास्य मन्त्रस्य स्नाने विनियोगः कात्यायनेन प्रदर्शित इत्यनुसन्धेयम्॥ १७ ॥

देवीरापोऽअपान्नपाद्योवऽऊर्मिर्हविष्यऽइन्द्रियावान्मदिन्तमः ।
तं देवेभ्योदेवत्रादत्तशुक्रपेभ्यो येषां भागस्थस्वाहा ॥१८॥

अब्देवत्या पङ्क्तिः प्रजापतिदृष्टा ऋगियम्। अस्या अपि विनियोगः आपोहिष्ठेत्यत्रोक्तः। दीव्यन्तीतिदेव्यः इति प्राप्ते "वाछन्दसीति" पूर्वसवर्णदीर्घे सति देवीरित्येवं भवति तथा हि—हे आपोदेवीः, आपोदेव्यः, हविष्यः हविर्योग्यः यज्ञिय इति यावत् तथा इन्द्रियावान् इन्द्रः आत्मा तस्य इदम् इन्द्रियं वीर्य्यं तदस्यास्तीति इन्द्रियवान् इन्द्रियावानित्यत्र "मन्त्रे सोमाश्वेन्द्रिये"ति मतौ परे इन्द्रियशब्दस्य छान्दसो दीर्घः। पीतः सन् इन्द्रियवीर्य्यवृद्धिकारी इति यावत् मदिन्तमः मदयतीति मदी अतिशयेन मदी मदिन्तमः (नाद्धस्येतितमपि नुडागमः) अत्यन्तहर्षकारी तर्पयितृतमः इति यावत् एवं भूतः वः युष्माकमपां नपात् नपात्संज्ञकः अपत्यरूपो य ऊर्मिः अप्संघातः कल्लोलः देवत्रा (देवमनुष्येत्यादिना त्रा प्रत्ययः) देवान्प्रति यायी गमनशीलोऽस्ति देवत्रा देवान्प्रति यायिनं तमूर्मिं शुक्रपेभ्यः शुक्र इत्युपलक्षणं शुक्रादीन् सोमग्रहान् पिबन्तीति शुक्रपाः शुक्रं शुद्धं दीप्तं सोमं पिबन्तीति शुक्रपा इति वा तेभ्यः शुक्रपेभ्यः शुक्रादिग्रहपानकर्तृभ्यस्तेभ्यो देवेभ्यो दत्त प्रयच्छत। केभ्यो देवेभ्य इत्यपेक्षयामुच्यते हे आपः, येषां देवानां यूयं भागः स्थ सुपां सुपो भवन्तीति प्रथमाबहुवचनस्थाने प्रथमैकवचनं भागः स्थ भागरूपा भवथ तेभ्यो देवेभ्यस्तथाविधं स्वीयमपत्यरूपमूर्मिं प्रयच्छतेत्यर्थः। एवमनेन मन्त्रेण यः स्नाति तस्येन्द्रियवीर्य्यं वर्द्धते सर्वतोभावेन तृप्तिश्च नितरां भवतीत्यभिप्रायेणैव अस्या अपि ऋचः स्नाने विनियोगः कात्यायनेनाभिहित इति बोद्धव्यम्॥ १८ ॥

कार्षिरसि समुद्रस्य त्वाऽक्षित्याऽउन्नयामि ।
समापोऽअद्भिरग्मत समोषधीभिरोषधीः ॥ १९ ॥

आज्यजलदेवत्याऽनुष्टुप् प्रजापतिदृष्टा ऋगियम्। अस्या अपि विनियोग आपोहिष्ठेत्यत्रोक्तः। अपामन्तर्गतं रसाख्यं यद्द्रव्यं तद्भक्षणेनैव क्षीरोत्पत्तिः क्षीरस्यैवातञ्चनभावेन दध्युत्पत्तिः दध्नो मन्थनेनाज्योत्पत्तिः। एवं जलान्तर्गताज्यभावमुपलक्ष्य स्नानकर्त्ताऽऽज्यपदार्थं प्रति वक्ति यत् हे आज्यपदार्थ, त्वं कार्षिरसि कर्षतीत्येवंशीलः कार्षिः अन्तर्गतशमलापनेताऽसि। तदाह तित्तिरिः "कार्षिरसीत्याह शमलमेवासामपप्लावयती"ति अथवा हे आज्यपदार्थ, त्वं कार्षिरसि आकृष्टोऽसि देवतया भक्षितोऽसीत्यर्थः सूर्य्यदेवता स्वरश्मिजालैर्जलगतं रसाख्यं पदार्थं भक्षति वर्षासु च भक्षितं तदेव रसाख्यं द्रव्यं वृष्टिद्वारा भूमौ निक्षिपति तस्माद्भूमिगतरसद्रव्यात्तृणाद्युत्पत्तिस्तृणादिभक्षणेन क्षीरोत्पत्तिः क्षीरस्यैवातञ्चनेन दध्युत्पत्तिर्दध्नो मन्थनेनाज्योत्पत्तिः। अत उच्यते हे आज्यपदार्थ, त्वं कार्षिराकृष्टोऽसि देवतया भक्षितोऽसीति। जलान्तर्गताज्यपदार्थमेवमुक्त्वेदानीं जलं प्रत्युच्यते हे जल, समुद्रस्य जलस्य अक्षित्यै अनुपक्षीणतायै त्वा त्वामुन्नयामि उद्वहामि उद्वहणञ्चात्र स्नानकाले मस्तकोपरि किञ्चिज्जलादानम् "आपो वै समुद्रः" इति श्रुतेरत्र समुद्रपदेन जलस्यैव ग्रहणम्। अनेन मन्त्रेण स्नानं कुर्वतः पुरुषस्य सति जलप्रयोजने जलदेवता जलप्रदानेन जलक्षैण्यमपाकरोतीत्यभिप्रायः। तथा आपः प्रसिद्धान्येव जलानि अद्भिः जीवमात्रोत्पत्तिनिमित्तभूता-

भिरद्भिः समग्मत सङ्गच्छन्ताम्। गमेर्लोडर्थेलङि तङि प्रथमपुरुषस्य बहुवचने शपि लुप्ते गमहनेत्युपधालोपे समग्मतेतिरूपंभवति। समित्युपसर्गावृत्त्या क्रियापदावृत्तिर्बोध्या। तथा ओषधीः (वाछन्दसीति पूर्वसवर्णदीर्घः) ओषधयः मुद्गमसूरादिकाः ओषधीभिर्व्रीहियवादिभिः समग्मत सङ्गच्छन्ताम्। अपां कारणभूतत्वादोषधीनामपि योगोऽस्त्विवतिभावः। एवं स्नानं विदधतः पुरुषस्य शस्यप्राचुर्य्यञ्च भवति तथासति सौख्यलाभश्च सौख्यस्य शस्याऽधीनत्वात्। लोकेऽपि दृश्यते यस्य शस्य प्राचुर्य्यं तस्यैव सौख्यं यस्य शस्याभावस्तस्य रूप्यकादिद्रव्यवतोऽपि पुरुषस्य क्रीतान्नभोजनत्वाद्यथावसरं कष्टमेव भवति तदपनोदनेन स्नानकर्तुः सर्वदा सौख्यमेव भवतीत्यभिप्रायेणैव अस्या अपि ऋचो विनियोगः स्नानेऽभिहितः कात्यायनेनेति बोद्धव्यम्॥ १९॥

अपो देवा मधुमतीरगृभ्णन्नूर्ज्जस्वती राजस्वश्चितानाः।

याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः॥ २०॥

अब्देवत्या त्रिष्टुप् वरुणदृष्टा ऋगियम्। अस्या अपि विनियोगस्तु आपोहिष्ठेत्यत्रैवोक्तः। यत्तदोर्नित्यसम्बन्धादिह याभिरिति यच्छब्दश्रवणात्तच्छब्दोऽध्याहर्त्तव्यः। छन्दसि परेऽपीति अतेरुपसर्गस्य क्रियापदात्परत्वं बोध्यम्। देवाः इन्द्रादयः मधुमतीः मधुस्वादोपेताः मधुरा इत्यर्थः तथा ऊर्ज्जस्वतीः ऊर्ज्जो विद्यते यासु तास्तथोक्ता विशिष्टान्नरसयुक्ता इत्यर्थः तथा राजस्वः राज्ञः सूयन्ते जनयन्तीति राजस्वः नृपोत्पादिका इत्यर्थः तथा चितानाः चेतयमानाः सदेवतत्वात्परिदृष्टकारिणीः एवम्भूता या अपः अगृभ्णन् अमृतत्वेन गृहीतवन्तः। तथा याभिः अद्भिः देवाः इन्द्रादयः मित्रावरुणौ देवौ अभ्यषिञ्चन् मित्रावरुणयोरभिषेकं कृतवन्त इत्यर्थः तथा याभिश्च अद्भिर्देवाः आदित्यप्रभृतयः इन्द्रं देवम् अरातीः शत्रून् अत्यनयन् अतीत्य आनीतवन्तः इन्द्रं शत्रूनत्यक्रामयन्नित्यर्थः। ता अपः स्नानार्थमहं गृह्णामीति शेषः। एवमनेन मन्त्रेण यः स्नानं विधत्ते तस्य स्नातुः पुरुषस्य रोगराहित्यं शत्रुराहित्यञ्च भवति ततश्च सुखं सम्पद्यते। अरोगिणोऽसपत्नस्यैव सुखं लोके दृश्यते तत्सम्पादनार्थमनेन मन्त्रेण स्नातव्यमित्यभिप्रायः॥ २०॥

द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव।

पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः॥ २१॥

ऋगियं सन्ध्याप्रकरणे व्याख्यास्यते तत्राऽस्या व्याख्या द्रष्टव्या विनियोगस्तु आपोहिष्ठेत्यत्रोक्तः॥ २१॥

शन्नो देवी रभिष्टयऽआपो भवन्तु पीतये।

शंय्यो रभिस्रवन्तुनः॥ २२॥

अब्देवत्या प्रजापति दृष्टा गायत्री ऋगियम्। अस्या अपि विनियोगस्तु आपोहिष्ठेत्यत्रोक्तः। देवीरित्यत्र वाछन्दसीति पूर्वसवर्णदीर्घो बोद्ध्यः। देवीः देव्यः द्योतमानाः स्वच्छाः आपः जलानि नोऽस्माकमभिष्टये अभिषेकाय स्नानाय पीतये पानाय च शं सुखकरा भवन्तु। किञ्च आपः शंय्योः "शमिति सुखनामेति निघण्टुः" तच्च रोगाणां शमनत्वेन भवति, युः

यवनं "इदंयुरिदं कामयमान इति यास्कः" तच्च भयानां पापानां च भवति, शं च युश्चेति समाहारद्वन्द्वः शंयु तस्य शंय्योः 'कर्म्मणि षष्ठी बाहुलकात्' रोगाणां शमनं भयानां पापानां च यवनं पृथक्करणं यथा स्यात् तथा अभिस्रवन्तु । आपोऽस्माकं स्नाने पाने च सुखयित्र्यो भवन्तु तथा अस्माकं भयरोगनाशं पापराहित्यञ्च कुर्वन्त्वितिभावः ॥ २२ ॥

अपाᳬरसमुद्वयसᳬ सूर्य्ये सन्तᳬ समाहितम् ।

अपाᳬरसस्य योरसस्तं वो गृह्णाम्युत्तमम् ॥ २३ ॥

अब्देवत्याऽनुष्टुप् बृहस्पतीन्द्रद्रष्टा ऋगियम् । अस्या अपि विनियोगस्तु "अपो देवा" इत्यत्रोक्तः । हे आपः, वः युष्माकम् अपां सम्बन्धिनः रसस्य अमृतीभावपदार्थस्य यः रसः रस्यते इति रसः आस्वादनीयो माधुर्य्योपेतो द्रव्यविशेषस्तमहम् उत्तमम् उत्कृष्टं रसमहं गृह्णामि स्नानपानार्थं स्वीकरोमि । किम्भूतं रसमहं गृह्णामीत्यपेक्षायामुच्यते । अपां रसं जलान्तर्गतमाधुर्यस्य सारभूतम् तथा उद्वयसम् "वय इत्यन्न नामेति निघण्टुः" उत् उद्गतं वयः अन्नं यस्मात्तं तथोक्तम्—वय इति क्षीरादीनामप्युपलक्षणं तेन अन्नक्षीराद्युपसेचनसर्वद्रव्यपदार्थोत्पादकमित्यर्थः । तथा सूर्य्ये समाहितं तत्किरणद्वारा स्थापितम् । अतएव सूर्ये सन्तं वर्त्तमानम्—एवम्भूतम् उत्कृष्टं रसमहं गृह्णामीत्यर्थः । सूर्य्य एव अष्टाभिर्मासैः स्वकिरणद्वारा अपां सारभूतं रसाख्यं द्रव्यं सर्वतः समाकृष्य स्वस्मिन् स्थापयति ततो वर्षर्त्तौ स्वस्मिन् समाहितं स्थापितं सन्तं स्वस्मिन् वर्तमानं तमेव रसं वृष्टिद्वारा भूमौ निक्षिपति तत एवान्नं क्षीराद्युपसेचनद्रव्यञ्च सम्भवति । अत उक्तं मनुना "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥" इति स्नानपक्षेऽयमेवार्थः सङ्गच्छते । एवमेतन्मन्त्रोच्चारणपूर्वकं स्नाने कृते सति स्नानकर्त्तुः शस्य वृद्धिः क्षीरादिद्रव्यवृद्धिश्चैतद् द्वयमपि भवति ततः सुतरां सुखमपि सम्पद्यते इत्यभिप्रायेणैव अस्या अपि ऋचः स्नाने कात्यायनेन विनियोगः प्रदर्शित इत्यवगन्तव्यम् ॥ २३ ॥

अपोदेवी रुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः ।

तासा मास्थानादुज्जिहतामोषधयः सुपिप्पलाः ॥ २४ ॥

अब्देवत्या वरुणदेवत्या वा न्यङ्कुसारिणीछन्दस्का सिन्धुद्वीपद्रष्टा ऋगियम् । अस्या अपि ऋचः आपोहिष्ठेत्यत्र विनियोग उक्तः । अतिरिक्तमिति कारिकया हीनपदमध्याहृत्य व्याख्यायते । हे वरुण, मधुमतीः मधुस्वादोपेताः माधुर्य्यगुणविशिष्टाः देवीः द्योतमानाः अपः जलानि प्रजाभ्य अयक्ष्माय ( षष्ठ्यर्थे पञ्चमी ) प्रजानाम् अयक्ष्माय यक्ष्मा व्याधिः राजरोगः यक्ष्मणोऽभावः अयक्ष्मं तस्मै अयक्ष्माय प्रजानामारोग्याय उपसृज स्नानीयपानीयजलाशयप्रदेशे क्षेत्रे च आसिञ्च वृष्टिद्वारा प्रक्षिपेत्यर्थः । तासां वृष्टिद्वारा समागतानां भूमिस्थितानामपां स्थानात् सुक्षेत्ररूपप्रदेशादिति यावत् सुपिप्पलाः पिप्पलं फलमुच्यते शोभनं पिप्पलं फलं यासां ताः सुपिप्पलाः सुफलाः शोभनफलयुक्ताः ओषधयः आ समन्तात् उज्जिहताम् उद्गच्छन्तु उत्पद्यन्तामित्यर्थः । एवं मन्त्रोचारणपूर्वकं स्नानकर्त्तुः शस्यप्राचुर्यमारोग्यत्वञ्चेति फलद्वयं भवतीत्यभिप्रायेणैव अस्या अपि ऋचः स्नाने कात्यायनेन विनियोगोऽभिहित इति बोद्धव्यम् ॥ २४ ॥

पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः ।
पुनन्तु प्रपितामहाः पवित्रेण शतायुषा ॥ २५ ॥
पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।
पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ २६ ॥

द्वे पितृदेवत्येऽनुष्टुभौ प्रजापतिदृष्टे ऋचौ । विनियोगस्त्वापोहिष्ठेत्यत्रोक्तः। सोम्यासः सोम्या एव सोम्यासः ( आज्जसेरसुगित्यसुगागमः ) सोमं सम्पादयन्तीति सोम्याः सोमसम्पादिनः पितरः मा मां स्नानकर्त्तारं पुनन्तु (पुञ् पवने इत्यस्मादाशंसायां लोट् ) शोधयन्त्वित्यर्थः । पितर इति एकस्मिन्नपि पितरि गुरुत्वाद्बहुवचनं पितृव्यादिसापेक्षया वा बहुवचनं तथैव पितामहादिष्वपि बहुवचनमनुसन्धेयम्। सोम्यासः सोम्याः सोमसम्पादिनः पितामहाः मा मां स्नानकर्त्तारं पुनन्तु शोधयन्तु पवित्री कुर्वन्त्वित्यर्थः। केन पुनन्त्वित्यपेक्षायामुच्यते । पवित्रेण पुनन्तु "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्र चिदि"ति लक्षणविशिष्टेन दर्भमयेन पवित्रेण मां पुनन्तु । कथम्भूतेन पवित्रेण मां पुनन्त्वित्यपेक्षायामुच्यते । शतायुषा शतं शतवर्षमितमायुर्यस्मात्तच्छतायुः तेन शतायुषा येन पवित्रेण पूतः शतायुर्भवतीत्यर्थः । पुनन्तु मा पितामहाः पुनन्तु प्रपितामहा इति पुनरुक्तिरादरार्था "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः । विशेषार्था वा पुनरुक्तिः । पितामहाः मा मां पुनन्तु तथा प्रपितामहाश्च मा मां पुनन्तु यथा शतायुषा पवित्रेण पूतः सन्नहं विश्वं सर्वमायुर्व्यश्नवै व्याप्नवै प्राप्नुयामित्यर्थः ( अशू व्याप्तौ ततो लोट् ) । पवित्रीकरणत्वादिमे ऋचौ स्नाने विनियुक्ते स्तः । अत आभ्यामृग्भ्यां स्नाने कृते सति स्नानकर्त्तुः शतायुष्ट्वं भवतीत्यभिप्रायः ॥ २५ ॥ २६ ॥

अग्नऽआयूंषि पवसऽआसुवोर्ज्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥ २७ ॥

अग्निदेवत्या गायत्री प्रजापतिदृष्टा ऋगियम् । अस्या अपि विनियोगस्त्वापोहिष्ठेत्यत्रोक्तः । हे अग्ने, त्वम् आयूंषि आयुःप्रापकाणि कर्म्माणि पवसे ( अन्तर्भावितो ण्यर्थः ) पावयसे चेष्टयसे । अत एव नः अस्मदर्थम् ऊर्ज्जम् क्षीरादिकम् इषम् अन्नं व्रीह्यादिकञ्च आसुव ज्ञापय अस्मभ्यं देहीत्यर्थः । जीवनहेतुत्वात्तयोरितिभावः । तथा आरे दूरेऽपि स्थितानां दुच्छुनां दुष्टाश्च ते श्वानश्च इति दुच्छ्वानस्तेषां दुच्छुनां ( कर्म्मणि षष्ठी ) दुच्छुनः दुष्टान् शुनः सारमेयप्रायान् दुर्ज्जनान् बाधस्व पीड़य विनाशयेत्यर्थः । श्वसदृशानां दुष्टानां वाग्बाणैरविद्ध एव पुरुषः परमायुः प्राप्नोतीत्यर्थः । "तस्माद्वा आत्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" इति श्रुतेरिह अपामुत्पत्तिकारणभूतोऽग्निः स्नानकर्त्रा स्तूयते । एतन्मन्त्रोच्चारणपूर्वकं स्नाने कृते सति स्नानकर्त्तुर्धान्यक्षीरादिप्राप्तिः परमायुश्च भवतीत्येतदभिप्रायेणैव कात्यायनेन स्नाने विनियुक्ता ऋगियम् , अतो मयाऽप्यत्र स्नानप्रकरणानुसारेणैवाऽस्या ऋचो व्याख्या कृतेति सुज्ञैरवगन्तव्यम् ॥ २७ ॥

पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।
पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ २८ ॥

देवजनधीविश्वभूतजातवेदोदेवत्याऽनुष्टुप् प्रजापतिदृष्टा ऋगियम्। अस्या अपि विनियोगस्त्वापोहिष्ठेत्यत्रोक्तः। देवानां जनाः देवजनाः देवानुगामिनो जनाः मा मां पुनन्तु शोधयन्तु तथा मनसा मनइन्द्रियेण सह धियो बुद्धयः "धीरितिकर्म्मनामे"ति निघण्टुरितिवा धियः कर्म्माणि मा मां पुनन्तु एवं विश्वा निशब्दो बहुलमिति प्रातिशाख्यसूत्रेण निलोपः विश्वानि सर्वाणि भूतानि क्षित्यप्तेजोवाय्वाकाशाख्यानि महाभूतानि प्राणिजातानि वा मा मां पुनन्तु तथा हे जातवेदः, अग्ने, त्वमपि मा मां पुनीहि पवित्रीकुरु। पञ्चमहाभूतान्तर्गतानामपां स्तुतिं स्नानकर्त्ता स्वात्मशुद्ध्यर्थं विधत्ते। तत्सहचरितानामन्येषामपि स्तवनं स्वात्मनोऽतिशयशोधनार्थं कुरुते। अतः स्नानप्रकरणे कात्यायनेन विनियुक्ता इयमृक् तदनुसारेण मया व्याख्याताऽपि ॥ २८ ॥

पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् ।
अग्ने क्रत्वा क्रतूँ॥रनु ॥ २९ ॥

अग्निदेवत्या गायत्री प्रजापतिदृष्टा ऋगियम्। अस्या अपि विनियोगस्त्वापोहिष्ठेत्यत्रोक्तः। दीव्यतीतिदेवस्तत्सम्बुद्धौ–हे देव, द्युतिस्तुतिक्रीड़ादियुक्त, हे अग्ने, दीद्यत् अतिदीव्यतीति दीद्यत् "दिवेर्यङ्लुगन्ताच्छतरि रूपम्" अतिदीप्यमानस्त्वं शुक्रेण शुक्लेन शुद्धेन पवित्रेण मा मां पुनीहि पवित्रीकुरु। तथा क्रतून् अस्माकं यज्ञान् अनु अनुलक्षीकृत्य क्रत्वा क्रतुना "क्रतुरिति कर्म्म नामेति निघण्टुः" कर्म्मणा च मा मां पुनीहि यज्ञेषु कर्म्मद्वारा मां पवित्रीकुर्व्वित्यर्थः। इहाऽपि अपां कारणभूतोऽग्निरेव स्तूयते अग्नौ च परितुष्टे तत्प्रसादात्स्तुतिकर्तुः स्नातुः पुरुषस्य स्नानकर्म्मणाऽतीवशुद्धताप्राप्तिर्भवति। शुद्धत्वे च सति निष्पापत्वात्सुतरां सुखावाप्तिः सम्पद्यते। तस्मादेतन्मन्त्रोच्चारणपूर्वकं स्नानकर्त्ता स्नानं विधत्ते ॥ २९ ॥

यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ।
ब्रह्म तेन पुनातु मा ॥ ३० ॥

अग्निब्रह्मदेवत्या गायत्री प्रजापतिदृष्टा ऋगियम्। अस्या अपि विनियोगस्त्वापोहिष्ठेत्यत्रोक्तः। हे अग्ने, अर्चिषि ज्वालायाम् अन्तरा मध्ये यत् ब्रह्मत्रयीरूपं परब्रह्मरूपं वा पवित्रं विततं विस्तृतं प्रसारितं वर्त्तत इति शेषः। यज्ञान्ते पवित्रस्याग्नौ प्रतिपत्तिरित्यभिप्रेत्यैव इह एवमुक्तम्। तेन पवित्रेण मा मां पुनातु भवानिति शेषः। अत्राऽपि परम्परयाऽग्निरेव स्तूयते। शेषञ्च पूर्ववदिहाऽपि बोद्धव्यम् ॥ ३० ॥

पवमानः सोऽअद्य नः पवित्रेण विचर्षणिः ।
यः पोता स पुनातु मा ॥ ३१ ॥

सोमवायुदेवत्या गायत्री प्रजापतिदृष्टा ऋगियम्। अस्या अपि विनियोगस्त्वापोहिष्ठेत्यत्रोक्तः। यः पवमानः पवतेऽसौ पवमानः शोधकः सोमः चन्द्रः विचर्षणिः विविधं चष्टे

पश्यतीति विचर्षणिः द्रष्टा कृताकृतज्ञः रात्रौ पुण्यपापकर्तॄणां जनानां साक्षी स एव सोमश्चन्द्रः अद्य अस्मिन्दिने पवित्रेण नः अस्मान् पुनातु शोधयतु। तथा यश्च पोता पुनाति पवते वाऽसौ पोता वायुः सोऽपि मा मां पुनातु शोधयतु पवित्रीकरोत्वित्यर्थः। अनयोः पावकत्वञ्च समाम्नायते यथा—"त्रिभिः शुद्ध्यन्त्यमेध्यानि सूर्यचन्द्रांशुवायुभिः" इति अत्रात्मशोधनार्थं चन्द्रवायू स्तूयेते। शेषमत्राऽपि पूर्ववदेव बोद्धव्यम्॥ ३१॥

**उभाभ्यां देव सवितः पवित्रेण सवेन च। मां पुनीहि विश्वतः॥ ३२॥**

सवितृदेवत्या गायत्री प्रजापतिदृष्टेयमृक्। अस्या अपि विनियोगस्त्वापोहिष्ठेत्यत्रोक्तः। दीव्यतीति देवः द्युतिस्तुतिक्रीडादियुक्तः सुवति स्वस्वकर्म्मणि जगत्प्रेरयतीति सविता सर्वप्रेरकः, सूर्य्योदये सत्येव वैदिकलौकिकसकलकर्म्मणां प्रवर्त्तमानत्वात्। तत्सबुद्धौ हे देव, सवितः सूर्य्यः, दर्भमयेन पवित्रेण सवने अभ्यनुज्ञया च इति उभाभ्यां पवित्रसवाभ्यां विश्वतः सर्वतः मां पुनीहि शोधय पवित्रीकुर्वित्यर्थः। अत्रापि तेजसः सकाशादपामुत्पत्तित्वादेव तेजःपुञ्जो भगवानादित्य एव स्तूयते। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥" इति मनूक्तेः। शेषमिहापि पूर्ववदेव बोध्यम्॥३२॥

**वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः।**

**तया मदन्तः सधमादेषु वयꣳ स्याम पतयो रयीणाम्॥ ३३॥**

विश्वदेवदेवत्या त्रिष्टुप् प्रजापतिदृष्टा ऋगियम्। अस्या अपि विनियोगस्त्वापोहिष्ठेत्यत्रोक्तः। वैश्वदेवी विश्वेभ्योदेवेभ्यो हिता वैश्वदेवी सर्वदेवहितकारिणी देवी अपामधिष्ठात्री देवता पुनती अमेध्यस्यापि प्रदेशस्य पवित्रं कुर्वती आगात् अस्माकं स्नानपानार्थमिहागता। यस्यां देव्यां वीतपृष्ठाः वीतम् इष्टं पृष्ठं स्वरूपं यासां ता वीतपृष्ठाः काम्यस्वरूपाः बह्व्यः बहुसंख्यकाः तन्वः सर्वप्राणिनां शरीरहेतुत्वात् शरीरप्रायाः धाराः वर्त्तन्ते इति शेषः। सर्वप्राणिनां तृप्तौ अपां हेतुभूतत्वादेव तया अब्देवतया मदन्तः मादयन्तः (अत्र छान्दसत्वाण्णिलोपोऽनुसन्धेयः) तत्प्रसादात् तृप्ताः सन्त इत्यर्थः सधमादेषु सह माद्यन्ति येषु ते सधमादाः गृहा यज्ञप्रदेशा वा, तत्र हि—गृहस्थाः स्वगृहेषु स्वभार्यापुत्रादिभिः सह माद्यन्ति। याज्ञिकाः यज्ञप्रदेशे ऋत्विग्भिः सह माद्यन्ति तेषु (सधमादस्थयोच्छन्दसीति पाणिनीयसूत्रेण सहस्य सधादेशः) सधमादेषु सहमदनेषु स्वगृहेषु यज्ञस्थानेष्विति वा स्थिता वयं रयीणां धनानां पतयः स्याम भवेम। अस्माकमेतद्धनपतित्वं यद्भावि तदस्या अब्देवतायाः प्रसादेनैव सम्पत्स्यते इति मत्वा एतन्मन्त्रोच्चारणपूर्वकं ये स्नानं विदधते तेषां धनपतित्वमवश्यमेव भविष्यतीति समस्तवाक्यार्थः॥ ३३॥

**चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्॥ ३४॥**

प्रजापतिदृष्टमेकोनशाक्षरं चित्पत्यादिदैवतं यजुः। अस्यापि विनियोगस्त्वापोहिष्ठेत्यत्रोक्तः। मन्त्रार्थस्त्वेवम्। चितां ज्ञानानां पतिश्चित्पतिर्मनोऽभिमानी देवः अच्छिद्रेण पवि-

त्रेण "एष वै अच्छिद्रं पवित्रं योऽयं पवते" इति श्रुतेः, वायुरेव अच्छिद्रं पवित्रं शुद्धिहेतुत्वात् छिद्ररहितत्वाच्च तेन तथा सूर्य्यस्य रश्मिभिश्च मा मां पुनातु शोधयतु "मनो वै चित्पतिरि"ति तित्तिरवचनात् चित्पतिशब्देन मन उक्तम्। चित्पतिशब्देन प्रजापतिर्वानुसन्धेयः। "प्रजापतिर्वा चित्पति"रितिश्रुतेः। तत्पक्षे चित्पतिः प्रजापतिः प्रजानां पतिः पालकः हिरण्यगर्भः अच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिश्च मा मां पुनातु शोधयत्वित्यर्थः। तथा वाक्पतिः वाचां पतिः पालको बृहस्पतिः अच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिश्च मा मां पुनातु पवित्रीकरोतु। तथा सविता देवः सुवति स्वस्वकर्म्मणि जगत्प्रेरयतीति सविता सूर्य्यः दीव्यतीति देवः द्युतिस्तुतिक्रीड़ादियुक्तः सर्वान्तर्य्यामी सूर्य्यदेवः अच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिश्च मा मां पुनातु शोधयतु। एवं परोक्षमुक्त्वा प्रत्यक्षमुच्यते। हे पवित्रपते, पवित्रान् शुद्धान् पाति रक्षतीति पवित्रपतिस्तत्सम्बुद्धौ हे पवित्रपते, शुद्धपालक, आदित्य, यस्य ते तव रश्मयो जगत्पावयन्तीतिशेषः। तस्य ते तव प्रसादात् पवित्रपूतस्य पूर्वोक्तपवित्रेण पवित्रीकृतस्य मम एतदभिलषितं भवत्विति शेषः। किन्तदित्यपेक्षायामुच्यते। यत्कामोऽहं पुने यः कामो यस्य स यत्कामः यदभिलषितं कामयन् अहम् आत्मानं पुने पावयामि तत् शकेयं कर्त्तुं शक्नुयां तत्कर्म्म कृत्वा तत्फलमहं प्राप्नुयामित्याशयः। तच्च त्वत्कृपाधीनं तस्मादेवं प्रार्थयामि। "आदित्याज्जायते वृष्टिरि"ति स्मृतेरपां कारणभूत आदित्य एव एवं स्तूयते स्नानकर्त्रा। स्तुत्या च तस्मिन् परितुष्टे स्नानकर्त्तुरभिलषितकर्मफलसिद्धिर्भवतीत्यभिप्रायः ॥३४॥

ऋतञ्चेति सन्ध्यायां व्याख्यास्यते। ऋतञ्चेत्यस्य विनियोगस्त्वन्तर्जले त्रिरावर्त्तने कात्यायनेनोक्तः स्नानसूत्रे यथा "अन्तर्जलेऽघमर्षणं त्रिरावर्तयेत्" इति ॥

आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरञ्च प्रयन्त्स्वः ॥३५॥

अग्निर्देवत्या गायत्री सर्प्पराज्ञीकद्रूदृष्टा ऋगियम्। अस्या अपि विनियोगोऽन्तर्जलावर्त्तने वैकल्पिकेनोक्तः कात्यायनेन "आयङ्गौरिति वा" इति। आ इत्युपसर्गः अक्रमीदिति क्रिया—पदेन सह सम्बध्यते, व्यवहिताश्चेति पाणिनीयसूत्रात्। अयमग्निः आ अक्रमीत् आसमन्ताद्भावेन स्वीयविभूत्याऽऽक्रान्तवान् जगदिति शेषः। किम्भूतोऽग्निः गच्छतीति गौः (गमेर्डोरिति उणादिसूत्रेण गमेर्डोप्रत्ययः) दाहपाकप्रकाशैः सर्वाननुगृह्णन् तत्तत्क्रियासु गन्ता गमनशीलः। पुनः किम्भूतः पृश्निः चित्रवर्णः नानारूपः लोहितशुक्लादिबहुविधज्वालोपेतः तथा एवम्भूतोऽग्निरेव पुरः प्राच्यां दिशि मातरम् इमां पृथिवीम् असदत् आसीदत् प्रातरादित्यरूपेण प्राप्तवान् अर्थादिमं लोकमादित्यात्मना प्रकाशी कुर्वन् स्थित इत्यर्थः। न केवलं मातरं पृथिवीमेव असदत् किन्तु स्वः सूर्य्यः आदित्यो भूत्वा पितरं द्युलोकञ्च प्रयन् आदित्यरूपेण गच्छन् स्वर्गे सञ्चरन् असदत् आसीदत् सूर्य्यरूपेण स्वर्गलोकञ्च प्राप्तवान् द्युलोकभूलोकयोर्मातापितृत्वमन्यत्रापि श्रूयते। "द्यौः पिता पृथिवीमाते"ति। एवमत्राग्निः पारावररूपेण स्तुतः। "अग्नेरापः" इति श्रुतेरपामुत्पत्तिकारणभूतोऽग्निः स्नानकर्त्रा स्तूयते। स्तुत्या च तस्मिन्परितुष्टे तदुत्पन्नानामपां प्रसादात्स्नानकर्त्तुरभीष्टफलावाप्तिर्भविष्यतीति कारणमनुसृत्य—कात्यायनेनाऽप्यस्या ऋचः स्नानप्रकरणे विनियोगः प्रदर्शितः। तदनुसारेणैव मयाऽप्यस्या ऋचो व्याख्या कृतेत्यवगन्तव्यम् ॥ ३५ ॥

इति श्रीदामोदरशर्म्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये चतुर्थोऽयं स्नानपरिच्छेदः समाप्तः ॥

॥ इति स्नानमन्त्रव्याख्या समाप्ता ॥

# पंचमपरिच्छेदः।

## अथ सन्ध्यामन्त्रारम्भः।

ॐ ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत ततो रात्र्यजायत ततः समुद्रोऽर्णवः समुद्रादर्णवादधि सम्वत्सरो अजायत अहोरात्राणि विदधद्विश्वस्य मिषतो वशी सूर्य्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् दिवञ्च पृथिवीञ्चान्तरिक्ष मथो स्वः॥

## अथ सन्ध्यामन्त्रव्याख्या।

"अहरहः सन्ध्यामुपासीते"ति श्रुतेर्द्विजातिभिः सन्ध्या नित्यत्वेनोपास्येत्यवगम्यते। तथा च षड्विंशब्राह्मणे "सज्योतिष्या ज्योतिषो दर्शनात्सोऽस्याः कालः सा सन्ध्या तत्सन्ध्यायाः सन्ध्यात्वमि"ति। "यावन्तोऽस्यां पृथिव्यां हि विकर्म्मस्था द्विजातयः। तेषां वै पावनार्थाय सन्ध्या सृष्टा स्वयम्भुवे"ति स्मृतेश्च। "जपन्नासीत्ससावित्रीम्प्रत्यगातारकोदयात्। सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्य्यदर्शनात्॥" इति याज्ञवल्क्यस्मृत्यादौ नित्यत्वेन सन्ध्याया विहितत्वात्। "उत्तमा तारकोपेता मध्यमा लुप्ततारका। अधमा सूर्य्यसहिता प्रातःसन्ध्या त्रिधा मते"ति याज्ञवल्क्यस्मृतेः प्रातःसन्ध्यायास्त्रैविध्यं दृश्यते। तस्या एव "बहिः सन्ध्या दशगुणा गोष्ठप्रस्रवणादिषु। खाततीर्थे शतगुणा साहस्री जाह्नवीजले" इति व्यासवचनात्स्थानविशेषत्वेन फलविशेषत्वं ज्ञायते। "अथ य इमां सन्ध्यां नोपास्ते नाचष्टे न स जयति ये तूपासते श्रोत्रिया भवन्तीत्युपनीताश्छेदनभेदनभोजनमैथुनस्वपनस्वाध्यायानाचरन्ति ये सन्ध्याकाले ते श्वसूकरशृगालगर्दभसर्पयोनिष्वभिसम्पद्यमानास्तमोभिः सम्पद्यन्ते तस्मात्सायं प्रातः सन्ध्यामुपासीते"ति गोभिलवचनात्सन्ध्यायाः करणाऽकरणयोर्गुणदोषश्रवणाच्च सन्ध्याया नित्यत्वेनोपासनमवबुध्यते। छन्दोगपरिशिष्टे च सन्ध्याहीनस्य दोषत्वं परिदृश्यते। "अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः स्मृतः॥" इति। सम्यग् ध्यायन्ति सम्यग् ध्यायते वा ब्रह्म यस्यां सा सन्ध्येति सन्ध्याशब्दार्थः। तत्र "यथाऽश्वमेधः क्रतुराट् सर्वपापापनोदनः। तथाऽघमर्षणं सूक्तं सर्वपापप्रणाशनमि"ति मनूक्तेरघमर्षणसूक्तस्य पापप्रणाशनत्वञ्च ज्ञायते। तत्र ऋतञ्च सत्यञ्चेत्यादि मन्त्रत्रयात्मकमघमर्षणसूक्तं तस्य अघमर्षणसूक्तस्याघमर्षणऋषिरनुष्टुप्छन्दो भाववृत्तो[1] देवताऽश्वमेधावभृथे विनियोगः। अवाचीनानि पात्राणि भ्रियन्ते यस्मिन्यज्ञविशेषे सोऽवभृथो यज्ञः, अश्वमेधस्यावभृथः अश्वमेधावभृथः, तत्र च स्नानाचमनमार्जनानि क्रियन्ते। तस्मादिहाऽपि सन्ध्योपासनकर्म्मणि ऋतञ्च सत्यञ्चेतिमन्त्रेणाचमनं क्रियते। केषाञ्चित्सम्प्रदायेऽनेन मार्जनं क्रियते। तत्राऽस्मत्सम्प्रदाये त्वनेनाचमनमेव कुर्वते सर्वेऽपि जनास्तदेव युक्तं मन्यामहे यतश्च सर्वकर्म्मादौ प्रथमत आचमनमेव श्रुत्या प्रति·

१ भावेषु पदार्थेषु वृत्तः स्थितो भाववृत्तः परमात्मा सोऽस्य सूक्तस्य देवतेति वेदभाष्यकारेणोक्तं तस्माद्द भाववृत्तोदेवतेति प्रामादिकः पाठः।

पाचते। "अप उपस्पृशति यद्यप उपस्पृशत्यमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो भवति मेध्या वा आपो मेध्यो भूत्वा व्रतमुपायानीति पवित्रं वा आपः पवित्रपूतो व्रतमुपायानीति तस्माद्वाऽअपऽउपस्पृशती"ति। (श० ब्रा० १।१।१।२) उपस्पर्शनमिहाचमनमेव तेन पूतिरन्तरतो भवतीति वाक्यशेषात्। अन्यथा च उपस्पर्शनमात्रेण नान्तरतः पूतिः सम्भवति तस्मादिहाचमनमेव ये कुर्वन्ति तदेव साधु कुर्व्वन्ति। ऋतञ्च सत्यञ्चेत्ययं मन्त्र ऋग्वेदीयः, अपरञ्च तैत्तिरीयः, तत्र रात्रिरजायतेतिपाठः, समुद्रोऽर्णव इति अकल्पयद्दिवमिति च संहितं दृश्यते, स च मन्त्रो माध्यन्दिनीयैर्न पठनीयः, याज्ञवल्क्योद्गीर्णत्वात्। अतिरिक्तमितिकारिकया हीनपदमध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तत्र ऋतं सत्यमिति ब्रह्मणो नामनी तथा च श्रुतिः "ऋतमेकाक्षरं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मे"ति। न केवलं श्रुतिः किन्तु स्मृतिश्च "ऋतं सत्यं परं ब्रह्म तदासीत्केवलं विभु।" इति॥ एवं श्रुतिस्मृतिभ्यामृतं सत्यमित्येतद्द्वयं ब्रह्मणो नामेति सुस्पष्टमायाति। अत्र ऋतमित्यनेन ब्रह्मणो नामग्रहणसिद्धेः सत्यमिति पौनरुक्त्यमतिशयार्थद्योतनार्थम्। "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः॥

अनेन च मन्त्रेण सृष्टिस्थितिप्रलया उच्यन्ते। तथा हि ऋतञ्च सत्यञ्चातिष्ठदितिशेषः अर्थात्सृष्टिपूर्वकाले केवलं ब्रह्मैवासीदित्यर्थः। तथा च श्रुतिः। "ब्रह्म वा इदमेवाग्र आसीन्नान्यत्किञ्चनमिषदि"ति। तत इति सप्तम्यर्थे तसिल् तस्यां प्रलयावस्थायामेव रात्री अजायत तदानीमेव रात्रिरासीत्। रात्रिशब्देनात्र अन्धकार उच्यते महानन्धकारोऽभूदित्यर्थः। तेजोऽभावस्यैवान्धकारत्वाद्रात्रेश्चन्द्राधीनत्वेन अह्नः सूर्य्याधीनत्वेन च तयोस्तदानीमसम्भवाच्च सकलमन्धकारमयमासीदितिभावः। तथा च श्रुतिः। "तम आसीत्तमसा गूढमग्रे" इति। स्मृतिश्च "आसीदिदं तमोभूतमविज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः" इति ततस्तदनन्तरं प्रलयावसानानन्तरं सृष्ट्यारम्भसमये इत्यर्थः। अभीद्धात् अभि सर्वतोभावेन ईद्धात् दीप्तात् सर्वतोलब्धवृत्तेः तपसः अदृष्टात् "स तपो अतप्यत तपस्तप्त्वा इद ठँ सर्वमसृजते"ति श्रुतेः पूर्वकल्पकालिकब्रह्मादिस्तम्बपर्य्यन्तसमस्तजीवजातसम्बन्धिशुभाशुभकर्म्मबीजपृथक्करणरूपात्तपसस्तपश्चर्य्यातः अर्णवः अर्णः पानीयं तदस्यास्तीति अर्णवः पानीयमयः (अर्णस् शब्दात् अर्णसो लोपश्चेति व प्रत्ययः सकारलोपश्च बोध्यः।) समुद्रः अध्यजायत "अधीत्युपरिभावमैश्वर्य्यं वे"ति यास्कोक्तेः ऐश्वर्य्यातिशयरूपेण बभूव प्रथमतः संसारसृष्टिनिमित्तभूतो जलराशिरुत्पन्न इत्यर्थः। तदुक्तं श्रुत्या "अग्रे सलिलं सर्वमा इदमि"ति (ऋ० सं० ८।७।१७।३।) "आपो ह वा इदमग्रे सलिलमेवास" (श० ब्रा० ११।१।६।१) एवमुक्तञ्च मनुना "सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु बीजमवासृजत्॥" इति। ततश्च अर्णवात्समुद्रात् पानीयमयात् समुद्रात् जलराशेः पश्चात् मिषतो वशी मिषतोऽप्रकटीभवतो विश्वस्योत्पादने इति शेषः वशी समर्थः महाप्रलये विलुप्तस्याऽस्य जगतो निर्माणे प्रभुः धाता अब्जयोनिः हिरण्यगर्भः अध्यजायत ऐश्वर्य्यातिशयेन उत्पन्नोऽभूत्। तथा च श्रुतिः। "हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीदि"ति (शु० य० वे० १३।४।)। महाप्रलये विलीनस्य त्रिलोकस्य निर्म्माणे समर्थो ब्रह्मा समुत्पन्नोऽभूदित्यभिप्रायः। स च धाता ब्रह्मा अहोरात्राणि विदधत् 'सुपां सुलुगि'ति विभक्तिलोपो बोध्यः "सुपां सुपो भवन्ती"ति द्विवचने एकवचनं वेत्यनुसन्धेयम्।) विदधतौ

कुर्वाणौ सूर्य्याचन्द्रमसौ यथापूर्वं यथाक्रमम् पूर्वकल्पक्रमेणेत्यर्थः अकल्पयत् कल्पितवान् निर्म्मितवानित्यर्थः । सूर्य्य एवाहः करोति चन्द्र एव रात्रिं करोतीत्यभिप्रायेण अहोरात्राणि विदधताविन्युक्तम् । ततस्तदनन्तरं सूर्य्यचन्द्रयोरुत्पत्यनन्तरमित्यर्थः सम्वत्सरो अध्यजायत समुत्पन्नोऽभूत् । सूर्य्यचन्द्रोत्पत्त्यनन्तरमेव रात्रिदिवसविभागे सति सम्वत्सरव्यवस्था भवतीति प्रसिद्धमेवास्ति सम्वत्सरस्याहोरात्रघटितत्वादित्यभिप्रायः । 'अथो' इत्ययं निपातः अथेत्यर्थे अथो अथानन्तरं सम्वत्सरोत्पत्त्यनन्तरमित्यर्थः स एव धाता दिवं द्युलोकं पृथिवीं भूलोकम् अन्तरिक्षम् अन्तरिक्षलोकम् तथा स्वः स्वःशब्देन स्वर्गलोकोपरि महर्ल्लोकादिचतुष्टयमुच्यते अन्तरिक्षस्वर्गलोकयोः पृथगेवोपादानात् तेन महर्ल्लोकजनलोकतपोलोकसत्यलोकानित्यर्थः एवं सप्तलोकान् यथापूर्वं यथाक्रमं पूर्वकल्पानुसारेणेत्यर्थः अकल्पयत् सृष्टवान् । ब्रह्मादिस्तम्बपर्य्यन्तं चराचरात्मकसकललोकान् स एव धाता असृजदित्यभिप्रायः । एवमनेन मन्त्रेण सृष्टिस्थितिप्रलयाः प्रतिपादिताः ॥ १ ॥

ॐ आपो मामभिरक्षन्तु ॥ २ ॥

अब्देवताकोऽयं मन्त्रः । हे आपः जलानि जलाधिष्ठातृदेवताः माम् अभिरक्षन्तु भवत्य इतिशेषः । अभि सर्वतोभावेन माम् पालयन्त्वित्यभिप्रायः । अस्य मन्त्रस्याछान्दसत्वान्न ऋष्यादिकमित्यनुसन्धेयम् ॥ २ ॥

ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो योनः प्रचोदयात् ॐ आपो ज्योति रसो मृतं ब्रह्म भूर्भुवः स्वरोम् ॥ ३ ॥

अयञ्च प्राणायाममन्त्रः । प्राणायामलक्षणञ्चोक्तं शौनकेन "प्रणवं व्याहृतीः सप्त गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥" इति । तत्प्राणायामफलञ्च बृहस्पतिनोक्तं "धम्यमानं यथा दह्येद्धातूनां सकलं मलम् । तथेन्द्रियकृतो दोषः प्राणायामेन दह्यते ॥" इति । प्राणायामं प्रकृत्य मनुनाप्युक्तं—"प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत्कृताः । व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः॥ दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः। तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥ प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषम् । प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥" इति । तत्प्राणायामस्य पूरकादिभेदेन त्रैविध्यं तल्लक्षणञ्च योगियाज्ञवल्क्येनोक्तं यथा—"नासिकोत्कृष्ट उच्छासो ध्मातः पूरक उच्यते । कुम्भको निश्चलश्वासो मुच्यमानस्तु रेचकः ॥" इति । तत्र पूरकप्राणायामे हरिं चिन्तयेदित्युक्तं शौनकेन "नीलोत्पलदलश्यामं नाभिमध्ये प्रतिष्ठितम् । चतुर्भुजं महात्मानं पूरके चिन्तयेद्धरिम्" इति ॥ कुम्भके ब्रह्माणं ध्यायेदिति नागदेवेनोक्तं "कुम्भके तु हृदिस्थाने ध्यायेत्तं कमलासनम् । ब्रह्माणं रक्तगौराभं चतुर्वक्त्रं पितामहम् ॥" इति रेचके शङ्करं ध्यायेदिति नागदेवेनोक्तं यथा—"रेचके शङ्करं ध्यायेज्जलाधःस्थं महेश्वरम् । शुद्धस्फटिकसङ्काशं निर्मलं पापनाशनम् ॥" इति । तत्र "ब्रह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वदा । क्षरत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्य्यते ॥" इति मनुवचनाद्गायत्र्या आदावन्ते

च प्रणवः कार्य्यः। तथा 'भूरितिभूर्लोकमसृजत्, भुवइत्यन्तरिक्षलोकमसृजत्, स्वरिति स्वर्गलोकमसृजत्, त्रिभिरेव व्याहृतिभिः सर्वलोकमसृजत्प्रजापतिरितिवैदिकप्रसिद्धया कर्म्ममात्रे व्याहृतित्रयं प्रयुज्यते। इतिहेतोरेव गायत्र्या सह पुनर्व्याहृतित्रयं पठितव्यमितिकेचिदाहुः। प्राणायामलक्षणे गायत्र्या सह प्रणवादीनामपुनर्विधानान्नेत्यपरे समामनन्ति। तस्मान्मूले तथैव प्रयोगः प्रदर्शितः। यथाचारं विधेयमिति राद्धान्तः। सप्तव्याहृतिषु प्रत्येकं प्रणवप्रयोगस्तु प्रतिव्याहृतिब्रह्मसम्बन्धत्वद्योतनार्थम्। भूः प्रभृतयः सप्तव्याहृतयः, प्रणवः ॐ कारः, तदिति गायत्री, आपोज्योतिरिति शिरः। तत्र ॐ कारस्य ब्रह्मऋषिर्गायत्रीछन्दोऽग्निर्देवता शुक्लो वर्णः सर्वकर्म्मारम्भे विनियोगः। सप्तव्याहृतीनां प्रजापतिऋषिर्गायत्र्युष्णिगनुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांस्यग्निवाय्वादित्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः प्राणयामे विनियोगः।

गायत्र्या विश्वामित्र ऋषिर्गायत्रीछन्दः सविता देवतोपनयने प्राणायामे विनियोगः। शिरसः प्रजापति ऋषिर्गायत्री छन्दो (आसुरी पञ्चदशेति पिंगलोक्तेः) ब्रह्माग्निवायुसूर्य्या देवता यजुः प्राणायामे विनियोगः। इत्यवगन्तव्यम्॥

ननु चतुर्विंशत्यक्षरा गायत्री, अष्टाविंशत्यक्षरोष्णिक्, द्वात्रिंशदक्षराऽनुष्टुप्, इत्यादि छन्दसां लक्षणं श्रूयते कथं तर्हि एकाक्षरप्रभृतीनां प्रणवादीनां गायत्र्यादीनि छन्दांसि सम्पद्यन्ते, इत्याशङ्क्योच्यते कात्यायनप्रणीतसर्वानुक्रमसूत्रे पिङ्गलप्रणीतछन्दःसूत्रे च वैदिकछन्दांस्यनेकानि सन्ति तेषां लक्षणं नामधेयञ्च तत्रैव विस्तृतमस्ति तदिह विस्तरभिया नोच्यते किन्तु पूर्वोक्तछन्दोग्रन्थद्वयमनुसृत्य सकलसाधारणज्ञानार्थं तावदिह गायत्र्यादीनां लक्षणं प्रदर्श्यते तथाहि दैव्येकमिति लक्षणात् "ॐ" इतिप्रणवस्य भूरिति व्याहृतेश्च दैवी गायत्रीनामकं छन्दः। द्व्यक्षरं दैव्युष्णिगिति लक्षणात् "भुवः" इति दैव्युष्णिक्। त्र्यक्षरं दैव्यनुष्टुबितिलक्षणात् "ऊनाधिकैकेन निचृद्भूरिजौ, द्वाभ्यां विराट्स्वराजौ" इतिसूत्रद्वयात् "स्वरित्यत्र अक्षरद्वयोनत्वात्स्वरितिव्याहृतेः विराड्दैव्यनुष्टुप्छन्दः। चतुरक्षरं दैवीबृहतीति लक्षणात् पूर्ववदक्षरद्वयोनत्वाच्च मह इत्यस्य विराड्दैवीबृहतीनामकं छन्दः। पञ्चाक्षरं दैवीपङ्क्तिरितिलक्षणात् पूर्ववदक्षरद्वयोनत्वाच्च दैवीपङ्क्तिनामकं छन्दः कृत्वा तत्राऽप्येकोनत्वात् "जनः" इत्यस्य निचृद्दैवीपङ्क्तिनामकं छन्दः। षडक्षरं दैवीत्रिष्टुबिति लक्षणात् पूर्ववदक्षरद्वयोनत्वाच्च विराड्दैवी त्रिष्टुब् नामकं छन्दो विधाय तत्राऽप्यक्षरद्वयोनत्वात् "तपः" इत्यस्य महाविराड्दैवी त्रिष्टुब्नामकं छन्दः। सप्ताक्षरं दैवीजगतीति लक्षणात् पूर्ववदक्षरद्वयोनत्वाच्च विराड्दैवी जगतीनामकं छन्दो विधाय तत्राऽप्यक्षरद्वयोनत्वात् महाविराड्दैवी जगतीनामकं छन्दः कल्पयित्वा तत्राऽप्येकोनत्वात् "सत्यम्" इत्यस्य निचृन्महाविराड्दैवीजगतीनामकं छन्दः। अत्र गायत्र्यादिछन्दसामक्षरभेदतो नामभेदसत्त्वेऽपि गायत्र्यादिछन्दसां गायत्र्यादिप्रसिद्धनाम्नैव व्यवहारः क्रियते छन्दसि तथैवाऽऽम्नातत्वात्। अत एव ॐ कारस्य ब्रह्मऋषिर्गायत्री छन्दः सप्तव्याहृतीनां गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि, इति चोच्यते। विशेषणपदानुपदेशान्न काचित्क्षतिरित्यनुसन्धेयम्॥ तत्र प्रथमं गायत्री व्याख्यायते तदन्वितया पश्चाद् व्याहृतयश्च व्याख्यास्यन्ते। तथा हि तदिति विश्वामित्रदृष्टा सावित्री गायत्री अन्यत्र जपे इह तु प्रकरणवशात्प्राणायामे विनियुक्ता ऋगियम्। तत्र वरेण्यमित्यत्र वरणियमिति व्यूहेन पादपूरणं तदुक्तं पिङ्गलेन पाद इत्यधिकृत्य 'इयादि

पूरण'इति। अथ मन्त्रार्थः। तदित्यत्र सुपां सुलुगिति षष्ठ्या लुक्। तत् तस्य देवस्य दिव्यतीति देवः तस्य देवस्य द्युतिस्तुतिक्रीड़ादियुक्तस्य सवितुः सुवति स्वस्वव्यापारे स्वस्वकर्म्मणि वा जगत्प्रेरयतीति सविता तस्य सवितुः सर्वप्रेरकस्य सर्वान्तर्यामिणो विज्ञानानन्दस्वभावस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य वा आदित्यान्तरपुरुषस्य वा ब्रह्मणः वरेण्यं वरणीयं सर्वैः प्रार्थनीयं भर्गः वयं धीमहि ध्यायामः। तमेव भर्गशब्दार्थं स्पष्टीकरोमि। तथा हि 'भ्रस्ज पाके' इत्यस्मात्सर्वधातुभ्योऽसुन्नित्यसुन्प्रत्ययः। तस्य छन्दस्युभयथेति पाणिनीयसूत्रेण सार्वधातुकार्धधातुकोभयसंज्ञाकत्वेन इह सार्वधातुकत्वं तस्याऽपित्वाङ्कित्वञ्च ङित्वाद्ग्रहिज्येत्यादिना सम्प्रसारणम्। आर्धधातुकत्वाल्लघूपधगुणश्च। तथा "उभयसंज्ञान्यपीति वक्तव्यम्" इत्युभयसंज्ञाविधेयत्वादिह पदत्वात्स्कोः संयोगाद्योरन्ते चेति संयोगादिसकारलोपश्चात्र बोध्यः। भ्राजतेर्वाऽसुन्प्रत्ययो छान्दसो ह्रस्वश्च। अत्र वचिस्वपीत्यादिना सम्प्रसारणमिति विशेषः। पुगन्तेति लघूपधगुणश्च पूर्ववदिहाऽप्यनुसन्धेयः। 'भृजि भर्जने' इत्यस्माद्वाऽसुन्प्रत्ययः पुगन्तेति लघूपधगुणश्च पूर्ववदत्राऽपि ज्ञेयः। सर्वत्र जश्त्वेन जस्य गः, इत्यप्यनुसन्धेयम्। एवं हि धातुत्रयादसुनि भर्ग इति पदं सिद्ध्यति। ततोऽयमर्थः। भर्गः शरीरान्तर्गतसर्वपापानां सर्वसंसारस्य च भर्जनसमर्थं तेजः सत्यज्ञानानन्दादिवेदान्तप्रतिपाद्यं सर्वपदार्थप्रकाशकं स्वयं चातीवप्रकाशमानं वा परमं तेजः "वरुणाद्धवा अभिषिषिचानाद्भर्गोऽपचक्राम तद्वीर्य्यं वै भर्गः" इति श्रुतेर्भर्गः सर्वजगत्कारणं वा ब्राह्मं तेजः वयं धीमहि ध्यायामः चिन्तयाम इत्यर्थः। 'ध्यै चिन्तायाम्' इत्यस्माल्लङुत्तमबहुवचने छान्दसत्वात्सम्प्रसारणे पूर्वरूपे च कृते हल इति दीर्घे धीमहीति रूपं भवति। तस्य कस्य भर्ग इत्यपेक्षायामुच्यते। यः सविता सर्वप्रेरकः सर्वान्तर्यामी सर्वसाक्षी आदित्यमण्डलान्तर्गतः पुरुषः परमात्मा नोऽस्माकं धियः बुद्धीः प्रचोदयात् प्रकर्षेण चोदयति स्वस्वव्यापारे प्रेरयतीत्यर्थः। 'चुद प्रेरणे' इत्यस्माल्लडर्थे लेटि 'लेटोऽडाटावि'त्यडागमे 'इतश्च-लोपः परस्मैपदेष्वि'ति तिप इकारलोपे च प्रचोदयादिति पदं सिध्यति। तस्य सवितुर्देवस्य भर्गः तेजो वयं धीमहि ध्यायामः। सोऽस्माकं सर्वपापानि भर्जयित्वाऽस्मभ्यं मोक्षं ददात्विति त्याशंसावाक्यार्थः। इति गायत्रीमन्त्रार्थः॥ यद्वा वाक्यभेदेन योजना—सवितुर्देवस्य तत् वरेण्यं वरणीयं सर्वैः प्रार्थनीयं भर्गः वेदादिप्रसिद्धं वेदान्तप्रतिपाद्यं ब्राह्मं तेजो वयं धीमहि ध्यायामः। यश्च सविता नोऽस्माकं धियः ("धीरिति कर्मनामे"ति निघण्टुः) कर्म्माणि प्रचोदयात् प्रकर्षेण चोदयति प्रेरयतीत्यर्थः। यत्तदोर्नित्यसम्बन्धात्तच्छब्दोऽध्याहर्त्तव्यः। तं सवितारं च आदित्यमण्डलाधिष्ठातृपुरुषमपि धीमहि ध्यायाम इत्यभिप्रायः। अथवा लिङ्गव्यत्ययेन योजना तथाहि तदिति भर्ग इत्येतस्य विशेषणं तस्मात् 'यः' इत्यत्र सुप्तिङुपग्रहलिङ्गनराणामिति कारिकया लिङ्गव्यत्ययो बोध्यः। तेन 'यत्' इति बोद्धव्यं ततश्चायमर्थः। सवितुः सर्वान्तर्यामिणो देवस्य परमेश्वरस्य वरेण्यं वरणीयं सर्वैः प्रार्थनीयं तत् भर्गः पूर्वोक्तगुणविशिष्टं तेजो वयं धीमहि ध्यायामः चिन्तयाम इतियावत्। यो यत् भर्गः पूर्वोक्तगुणविशिष्टं तेजः नोऽस्माकं धियः बुद्धीः प्रचोदयात् प्रकर्षेण चोदयति प्रेरयति सत्कर्म्मानुष्ठानायेतिशेषः। सूर्य्योदये सत्येव सन्ध्यातर्पणदेवपूजनपञ्चमहायज्ञादेः प्रवर्तमानत्वादस्माकं बुद्धिप्रेरकं तदेव भर्गः ब्राह्मं तेजो वर्त्तते। तस्माद्वयं तदेव भर्गः ब्राह्मं तेजो धीमहि ध्यायाम इति भावः। ब्राह्मं तेजो रविमण्डलेऽस्तीत्यत्र श्रुतिरेव प्रमाणं तथाहि "यऽएषऽएतस्मिन्मण्डले पुरुषो यश्चैष हिरण्मयः पुरुषोऽयमेव, इतिमण्डलब्राह्मणम् (७)। 'तदेवाग्निस्तदादित्यस्तद्वायुस्तद-

चन्द्रमाः' इत्यादि ( शु० य० वे० ३२।१ ) ब्रह्मोपासनाप्रसङ्गे "योऽसावादित्ये पुरुषः सोऽसावहम्" ( शु० य० वे० ४०।१७ ) ॥ "यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥" इतिभगवद्वाक्यञ्च। अथवा अर्शादित्वादच्प्रत्ययान्तः पुंलिङ्ग एव भर्गशब्दः कल्पनीयः। तत्पक्षे 'तत्' इत्यत्र सुपां सुलुगिति द्वितीयाविभक्तेर्लुगनुसन्धेयः। ततोऽयमर्थः। सवितुः सर्वप्रेरकस्य देवस्य द्योतनात्मकस्य भगवतः सूर्य्यस्य वरेण्यं वरणीयं सर्वैः प्रार्थनीयं तत् तं भर्गं सर्वपापभर्जनसमर्थं भर्गाख्यं तेजो वयं धीमहि ध्यायामः चिन्तयाम इत्यर्थः। तत् तं कं भर्गमित्यपेक्षायामुच्यते। यः भर्गः भर्गाख्यः तेजोविशेषः नोऽस्माकं धियः बुद्धीः बुद्धीन्द्रियाणीति यावत् प्रचोदयात् प्रकर्षेण चोदयति धर्मार्थकाममोक्षेषु योजयतीत्यर्थः। तं भर्गं जन्ममृत्युदुःखनाशाय ध्यानेन वयं समुपास्महे' इति भावः। अर्थान्तरक्रमेण व्याख्याचतुष्टयेऽपि वस्तुतस्तु पार्थक्यं न वर्त्तते। किन्तु शब्दविन्यासमात्रेण यत्किञ्चित्किञ्चित्पार्थक्यमिह प्रदर्शितं तच्च सुगमरीत्यार्थबोधनार्थमेव न तु भेदार्थज्ञानार्थमित्यनुसन्धेयम्। यद्यप्यत्र सवितुर्भर्ग इति सवितृभर्गयोर्भिन्नता गायत्रीमन्त्रे प्रतीयते तथाऽपि परमार्थचिन्तायां सवितृभर्गयोर्भेदो न विद्यते। य एव सविता स एव भर्गः सवितृभर्गयोरद्वैतमेवास्ति तस्मात्सवितुर्भर्ग इत्यत्र राहोः शिर इतिवत्षष्ठी नच भेदसाधिकेत्यवगन्तव्यम्। उक्तार्थेषु यथोपयुक्ता इमे श्लोका द्रष्टव्याः। ते च याज्ञवल्क्येनोक्तास्तथाहि—

तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः।
उदाहृते तु यच्छब्दे तच्छब्दः स्यादुदाहृतः॥ १॥
सविता सर्वभूतानां सर्वभावान् प्रसूयते।
सवनात्पावनाच्चैव सविता तेन चोच्यते॥ २॥
दीव्यते क्रीडते यस्मात् द्योतते रोचते दिवि।
तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः॥ ३॥
चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात्।
धर्म्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनः पुनः॥ ४॥
भ्रस्जपाके भवेद्धातुर्यस्मात्पाचयते ह्यसौ।
भ्राजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि॥ ५॥
कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः।
भ्राजते यत्स्वरूपेण तस्माद्भर्गः स उच्यते॥ ६॥
भेति भीषयते लोकान् रेति रञ्जयते प्रजाः।
गत्या गच्छत्यजस्रं यो भगवान् भर्ग उच्यते॥ ७॥
वरेण्यं वरणीयश्च संसारभयभीरुभिः।
आदित्यान्तर्गतं यच्च भर्गाख्यं वा मुमुक्षुभिः॥ ८॥

जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च ।
ध्यानेन पुरुषो यस्तु द्रष्टव्यः स सूर्य्यमण्डले ॥ ९ ॥ इति ।

एवमनेन गायत्रीमन्त्रेण भर्गशब्दस्य बहुविधमाहात्म्यमुक्तम् । इदानीञ्च तस्यैव माहात्म्यं सप्तव्याहृतिभिरुच्यते । सवितुः देवस्य तत् वरेण्यं भर्गो धीमहीत्युक्तं तञ्च भर्गं कीदृशमित्यपेक्षायामभिधीयते । भूः पृथिवी भूलोक इत्यर्थः, तथा भुवः भुवर्लोकः अन्तरिक्षलोक इत्यर्थः, तथा स्वः स्वर्लोकः स्वर्गलोक इत्यर्थः, तथा महः महर्लोकः, तथा जनः जनलोकः, तथा तपः तपोलोकः, तथा सत्यं सत्यलोकः, एवं क्रमेण तत्तल्लोकस्वरूपं भर्ग इत्यर्थः । यदेतल्लोकरूपं जगत् देवभर्गाख्यस्य ब्रह्मतेजसोरूपम् अतस्तत्तल्लोकरूपं भर्ग इति भावः । यद्वा एवमुपर्य्युपरिक्रमेण अवस्थितानिमान् भूरादीन् सप्त लोकानभिव्याप्य अवस्थितं भर्ग इत्यर्थः । यदिदं भर्गाख्यं तेजस्तदिमान् भूरादीन् सप्त लोकान् स्वदीप्त्या प्रदीपवत्प्रकाशयतीतिभावः । पुनश्च किम्भूतं भर्गः आपः नरसूनवः जलानि तद्रूपमित्यर्थः । "तदेव शुक्रं तद्ब्रह्म ताऽआपः" इतिश्रुतेः । समस्तब्रह्माण्डसाधनभूतानां पञ्चमहाभूतानां मध्ये यज्जलतत्त्वं तदपि तदेव भर्गाख्यं तेज इतिभावः । तथा ज्योतिः अग्निः तद्रूपमित्यर्थः । "अग्निर्ज्योतिर्ज्योतिरग्निः" इतिश्रुतेः । तेजोरूपं यद्वह्नितत्त्वं तदपि तदेव भर्गाख्यं तेज एवेति भावः । तथा रसः वायुः तद्रूपमित्यर्थः । "एष वै रसो योऽयं पवते" इतिश्रुतेरिह रसशब्देन वायुरेवोच्यते । यद्वायुतत्त्वं तदपि भर्गाख्यं तेज एवेतिभावः । तथा अमृतं मरणधर्म्मरहितं महाप्रलयेऽपि विद्यमानमित्यर्थः । तथा ब्रह्म "बृंहणाद्ब्रह्मेतियास्कः" ब्रह्म व्यापकं परमात्माख्यं तेजस्तत्स्वरूपं भर्ग इत्यर्थः । "खं ब्रह्मे"ति श्रुतेः यदाकाशतत्त्वं तदपि तदेव भर्गाख्यं तेज एवेतिभावः । तथा भूः भूमिः "भूरसि भूमिरस्यदितिरसि विश्वधाया" इतिश्रुतेः, तद्रूपमित्यर्थः । पृथिवीतत्त्वं यत्तदपि भर्गाख्यं तेज एवेतिभावः । तथा भुवः उपरि अन्तरिक्षस्थं यच्चन्द्राख्यं तेज इति शेषस्तद्रूपं भर्ग इत्यर्थः । "सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वः" इतिश्रुतेः । तथा स्वः "स्वरादित्यो भवति सु अरणः सु ईरणः स्वृतो रसान् स्वृतो भासं ज्योतिषां स्वृतो भासेति वा" इति यास्कोक्तेरिह स्वःशब्देनादित्य एवोच्यते । तद्रूपं भर्ग इत्यर्थः । अत्र सवितृभर्गयोरभेददर्शनाय स्वरित्युक्तं तेन आदित्यरूपं यत्तेजस्तदपि भर्गाख्यं तेज एवेतिभावः । तथा ओम् ओमिति यत्पदं तच्च सोपाधिकब्रह्मप्रतिपादकं तत्र अकारोकारमकाराणां सम्मेलनेन ओमिति पदं भवति । तच्च ब्रह्मविष्णुमहेश्वरवाचकम् । अतोऽत्र ओमिति भर्गविशेषणम् अर्थात् ब्रह्मविष्णुमहेश्वरात्मकं यत्सोपाधिकं ब्रह्म तदपि भर्गाख्यं तेज एवेतिभावः । सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चनेति श्रुतेः ब्रह्मभिन्नं किमपि न अत एकं तदेव कारणं कार्य्यञ्च "स अकामयत एकोऽहं बहुस्यां प्रजायेयं स तपो अतप्यत तपस्तप्त्वा इदꣳ सर्वमसृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशदि"ति श्रुतेः । अतः श्रुत्याप्युक्तम् "तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त पूर्वे" इति । "मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहमि"ति भगवद्वाक्याच्च भर्गव्यतिरिक्तं न किमपि सर्वं यत् कार्य्यजातं कारणजातं च तद्भर्गः ब्राह्मं तेज एवेत्यर्थः । अतो वयं तदेव धीमहि ध्यायामः ध्यानेनोपास्महे । तत्प्रसादादस्माकं धर्म्मार्थकाममोक्षसिद्धिर्भवत्वित्याशंसावाक्यार्थः । एवमत्र भर्गशब्दस्य माहात्म्योपवर्णनप्रसङ्गेन

भूरादिसप्तलोकरूपं कार्य्यस्वरूपं सप्तव्याहृतिभिर्व्याख्याय तदीयकारणत्वेन आपो ज्योतिरिति शिरोमन्त्रेण पञ्चभूतरूपं कारणस्वरूपमपि व्याख्यातम्॥ ३॥

**ॐ सूर्य्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत्किञ्चिद्दुरितं मयि इदमहममृतयोनौ सूर्य्ये ज्योतिषि जुहोमि स्वाहा॥ ४॥**

सूर्य्यश्चमेत्यस्य ब्रह्मऋषिःप्रकृतिश्छन्दः सूर्य्यो देवता प्रातराचमने विनियोगः। अथ मन्त्रार्थः। सूर्य्यः आदित्यः, मन्युः यज्ञः, मन्युपतयः यज्ञपतयः, इन्द्रादयो देवाः, मन्युकृतेभ्यः असाङ्गयज्ञकृतेभ्यः पापेभ्यः मा मां रक्षन्तां पालयन्त्वित्यर्थः। चकाराः सर्वे समुच्चयार्थाः। यद्वा "मन्युर्यज्ञःक्रतौक्रुधी" त्यमरसिंहोक्तेः मन्युशब्दः क्रतुवाचकः क्रोधवाचकश्च तत्र क्रतुशब्देन सङ्कल्प एवाभिप्रेतो न तु यज्ञः तस्येह पृथगेवाभिधानात् अतोऽर्थान्तरं यथा सूर्य्यः आदित्यः प्रसिद्ध एव तथा मन्युः क्रतुः सङ्कल्पः, मन्युपतयः क्रतुपतयः सङ्कल्पपतयो देवाः, मन्युकृतेभ्यः सङ्कल्पकृतेभ्यः पापेभ्यो मा मां रक्षन्तां पालयन्तु अनिष्टसङ्कल्पानुत्पादनेनेति शेषः। ममैतादृशः सङ्कल्पः कदापि मा भवतु येनाहं केषाञ्चिदनिष्टं स्वस्य वाऽनिष्टजनकं किमपि कर्म्म कुर्य्यामित्याशयः। अथवा सूर्य्यः आदित्यः, मन्युः क्रोधः, मन्युपतयः क्रोधपतयः इन्द्रियाणि, मन्युकृतेभ्यः क्रोधकृतेभ्यः पापेभ्यो मा मां रक्षन्तां क्रोधानुत्पादनेन पालयन्त्वित्यर्थः। ममैतादृशः क्रोधः कदाचिदपि मा भूयाद्येनाहं किमप्यकार्य्यं कुर्य्यामित्यभिप्रायः। किञ्च मनसा मानसेन परस्यानिष्टचिन्तनरूपं वाचा वचनेन मिथ्याभाषणरूपं क्रोधेन कमप्युद्दिश्य दुर्वचनोच्चारणरूपं वा हस्ताभ्यां पाणिभ्यां परस्त्रीपरद्रव्यादिस्पर्शरूपं दुःप्रतिग्रहग्रहणरूपं वा पद्भ्यां चरणाभ्यामन्धकारे पिपीलिकादीनां हननरूपं तथा उदरेण जठरेण अनदनीयान्नभक्षणरूपं शिश्ना शिश्नेनेतिप्राप्ते-बाहुलकादिनादेशाभावे दीर्घे सति शिश्ना इति "सुपां सुलुगि" तिविभक्तेर्डाऽऽदेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे वा शिश्ना इति तृतीयैकवचने रूपम्। शिश्ना लिङ्गेन अगम्यागमनरूपंशास्त्रप्रतिषिद्धससामयिकं वा स्वस्त्रीसम्भोगरूपमपि तत्कृतमन्यद्रूपं वा यत्पापं रात्र्या सुपां सुपो भवन्तीति सप्तम्येकवचनस्थाने तृतीयैकवचने सुपां सुलुगिति सप्तमी विभक्तेराकाराऽऽदेशे वा रात्रेरिकारस्थाने यणादेशे च 'रात्र्या' इति रूपं सिध्यति। तेन रात्र्या अर्थात् रात्रौ अहमकार्षं कृतवानस्मि तत्पापं रात्रिः रात्र्यधिष्ठात्रीदेवता अवलुम्पतु नाशयत्वित्यर्थः। तथा यत्किञ्चिदन्यदपि दुरितं पापं मयि मदाश्रितं 'वर्त्तते' इति शेषः। हे आपः जलानि अर्थात् जलाधिष्ठात्र्यो-देव्यः तद्दुरितं पापम् अहम् इदं प्रत्यक्षं यथा स्यात्तथा मनसा अभिभाव्य अमृतयोनौ मोक्षकारणे ज्योतिषि हृदयमध्यस्थितप्रकाशरूपे सूर्य्ये जुहोमि। स्वाहा मया हुतं तत्पापं सुहुतमस्तु। अथवा स्वाहाकारेण जुहोमि जुहोतीनां स्वाहाकारप्रदानत्वादितिभावः। जुहोतीनां लक्षणञ्चोक्तं कात्यायनेन "उपविष्टहोमाः स्वाहाकारप्रदानाः जुहोतयः"इति। सर्वेषां हृदि यज्ज्योतिस्तदेव सूर्य्यः स एवायमात्मा तस्मिन्नेव सूर्य्याख्ये आत्मज्योतिषि पापरूपस्य हविषो होमं करोमीत्याशयः। कतम आत्मेत्युपक्रम्य "सोऽयं विज्ञानमयः पुरुषः प्राणिषु हृदयं ज्योतिः" इतिश्रुतेस्तत्र पापहविषो होमो युक्त एव तस्मादनेन मन्त्रेण आचमने कृते सति आचमनकर्त्तुः पुरुषस्य सर्वपापराहित्यं भवति। पापराहित्ये सति निष्पापत्वात्सुतरां सुखं च भवतीत्या-

शयेन अहमप्यनेन मन्त्रेणाचामनं करोमि। तन्ममापि पापराहित्यं पापराहित्ये च सुखमपि भवत्वित्याशंसावाक्यार्थः ॥ ४ ॥

**ॐ आपः पुनन्तु पृथिवीं पृथ्वीपूता पुनातु मां पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम्। यदुच्छिष्टमभोज्यञ्च यद्वा दुश्चरितं मम सर्वं पुनन्तु मामापोऽसताञ्च प्रतिग्रहꣳस्वाहा ॥ ५ ॥**

आपः पुनन्त्वित्यस्य विष्णुर्ऋषिरनुष्टुप्छन्द आपो देवता मध्याह्नाचमने विनियोगः। अथ मन्त्रार्थः। आपः जलानि अर्थाज्जलाधिष्ठात्र्यो देवताः पृथिवीं पृथिवीशब्देनात्र पार्थिवदेहो विवक्षितः। तेन पृथिवीम् अर्थात् पृथिवीमयं मदीयं पार्थिवं देहं पुनन्तु पवित्रीकुर्वन्तु। पृथिवीपूता सती मां क्षेत्रज्ञमात्मानं पुनातु पवित्रीकरोतु। ब्रह्मणस्पतिः वेदस्याश्रयो ब्रह्मा पूता पूतं ब्रह्माश्रयत्वात्परमात्मनः सकाशान्निःश्वसितत्वाच्च स्वतः पवित्रमपि ब्रह्म मदीयं वेदं पुनातु यातयामत्वादिदोषपरिहारेण पवित्रीकरोतु मां वेदस्याऽध्येतारञ्च पुनातु वेदतत्त्वार्थज्ञानेन पवित्रीकरोतु। पूतमिति प्राप्ते "सुपां सुलुगि"ति विभक्तेर्डादेशे पूता इति भवति पूतमिति ब्रह्मविशेषणम्। ब्रह्म चेह वेदोपलक्षकम् अतएव मनुनाप्येवमुक्तं "ब्रह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वदा ॥" इत्यादि। तच्छ्लोकस्य टीकायां ब्रह्मणः वेदस्य आदावन्ते च प्रणवं कुर्य्यादित्यादि कुल्लूकभट्टेन प्रतिपादितम्। किञ्च मम यत् उच्छिष्टम् अपावनं यच्च अभोज्यं निन्दितभोज्यम् तथा यद्वा वेति निपातश्चार्थे अर्थात् यच्च दुश्चरितम् असदाचरणं तथा असताम् अप्रतिग्राह्याणां प्रतिग्रहं (विभक्तिव्यत्ययः) यः प्रतिग्रहः तत्सर्वम् आपः जलानि अर्थाज्जलाधिष्ठात्र्यो देवताः पुनन्तु। माम् उच्छिष्टादिदूषितम् अनुष्ठातारञ्च पुनन्तु मदीयशरीरलग्नसर्वपापापनोदनेन पवित्री कुर्व्वन्तु। ममेत्यत्र विभक्तिव्यत्ययो वा सुपां सुपो भवन्तीतिवचनात्सप्तम्येकवचनस्थाने षष्ठ्यैकवचनमिति यावत्। ततोऽयमर्थः। मम मयि यदुच्छिष्टादि प्रतिग्रहान्तं मदाश्रितं पापमस्तीति शेषः। तत्सर्वमपि पापमापो मत्तोऽपनीय मां पुनन्त्विति भावः। इत्थमाशास्य या आपः आचम्यन्ते मया, ताः स्वाहा सुहुता भवन्तु। स्वीयसर्वपापापनुत्यै ताः अभिमन्त्रिता अपः स्वाहाकारेण स्वात्मनि जुहोमीति समस्तार्थः। प्रतिग्रहमित्यत्र पुनन्त्विति पावनक्रियायाः कर्म्माभिप्रायेण वा कर्म्मणि द्वितीया। यद्वा सर्वमित्यत्र सर्वशब्दस्य नपुंसके सप्तम्येकवचनस्थाने प्रथमैकवचनं बोद्धव्यं "सुपां सुपो भवन्ती"ति वचनात्। तेनायमर्थः। उच्छिष्टादिप्रतिग्रहान्तं यद्यत्पापनिमित्तं सञ्जातं सम्भावि वा तत्र तत्र सर्वत्र माम् आपः पुनन्तु। अपामधिष्ठात्र्यो देवताः तत्र तत्र पापनिमित्ते सति तत्तत्पापराहित्येन मां पवित्रीकुर्वन्त्विति भावः। शेषं स्पष्टं पूर्ववत्समानमेव ॥ ५ ॥

**ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु यत्किञ्चिद्दुरितं मयि इदमहममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥ ६ ॥**

अग्निश्चमेत्यस्य ब्रह्मऋषिः प्रकृतिश्छन्दोऽग्निर्देवता सायमाचमने विनियोगः। अथमन्त्रार्थः। सत्ये ज्योतिषि ब्रह्मतेजसि अग्नौ अर्थाज्जाठराग्नौ स्वाहा स्वाहाकारेण जुहोमि।

"यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्।" इति भगवद्वाक्यादिह सत्यं ज्योतिरग्निः तत्रैष होमः। शेषञ्च सूर्य्यश्चमेति मन्त्रवद्बोद्धव्यम्॥ अनेन मन्त्रेण अभिमन्त्रिता या आप आचम्यन्ते ता आपः सुहुता भवन्तु॥ ६॥

आपो हिष्ठा मयो भुवस्ता नऽऊर्ज्जे दधातन। महे रणाय चक्षसे॥ ७॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः॥८॥
तस्माऽअरङ्ग माम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः॥९॥

आपोहिष्ठेत्यादितृचस्य सिन्धुद्वीपऋषिः गायत्रीछन्दः आपो देवता मार्ज्जने विनियोगः।

अथ मन्त्रार्थः। यत्तदोर्नित्यसम्बन्धादिह प्रथममन्त्रस्य द्वितीयचरणे तच्छब्दोपादानाद्यच्छब्दोऽध्याहार्य्यः। तथा हि शब्दः एवार्थः प्रसिद्धार्थो यस्मादर्थो वा स चाग्रे व्याख्यायां द्रष्टव्यः। ततश्चायमर्थः। हे आपः, या हिं या यूयमेव मयो भुवःस्थ सुखभावयित्र्यो भवथ। "मय इति सुखनामे"ति निघण्टुः। मयः सुखं भवति याभ्योऽद्भ्यस्ता मयोभुवः पृथिव्यां यानि द्रव्याणि सन्ति तानि सर्वाण्यपि जिह्वोपस्थादीन्द्रियसुखकराण्येव तेषां जलाधीनोत्पन्नत्वात्सृष्ट्यादौ परमेश्वरः अप एव सृष्टवान्। न ह्युदकं विना केषाञ्चित्सृष्टिर्भवितुमर्हति। अतः सुखकरसर्वपदार्थानां जलाधीनत्वसत्त्वादपां मयोभूत्वं सुस्पष्टमायातम्। यद्वा हे आपः, या हि याः प्रसिद्धा यूयं मयोभुवस्थ सुखभावयित्र्यो भवथेत्यर्थः। ता यूयं नः अस्मान् ऊर्ज्जे अन्नाय दधातन स्थापयत। यथा वयं सर्वस्याऽन्नादेः अर्थात्सर्वभोग्यपदार्थस्य भोक्तारो भवेम तथाऽस्मान् कुरुतेत्यर्थः। यद्वायमर्थः। हि यस्मात् यूयं मयोभुवस्थ मयः सुखं भावयन्ति प्रापयन्ति ता मयोभुवः सुखप्रापयित्र्यः स्थ तस्मादस्मान् ऊर्ज्जे "ऊर्ज्ज बलप्राणनयोः" ऊर्ज्जति सर्वान्मनुष्यपश्वादीन्बलयति पानादिना दृढशरीरान्करोतीति ऊर्ज्जः। यद्वा ऊर्ज्जति प्राणयति प्रकर्षेण चेष्टयतीति ऊर्ज्जः इति व्युत्पत्तिद्वयेन जलगतो रससार एवोर्ज्जशब्देनोच्यते। तस्मिन् ऊर्ज्जे रसे दधातन दधात स्थापयतेत्यर्थः। यद्वा ऊर्ज्जे इति क्विप्प्रत्ययान्तस्य चतुर्थ्येकवचने रूपम्। ऊर्ज्जति बलयति प्राणयति चेष्टयतीति वा ऊर्क् रसः तस्मै उर्ज्जे रसाय स्वकीयरसानुभवाय दधातन स्थापयतेत्यर्थः "इह संसारे" इति शेषः। स्नानपानादिहेतुत्वेन सुखोत्पादकत्वमपां प्रसिद्धमेव। अतो मयोभुवः स्थेत्युच्यते। किञ्च हे आपः, ता यूयं नः अस्मान् महे महते रणाय रमणीयाय चक्षसे दर्शनाय च दधातनेत्यनुवर्त्तते। "इहलोके" इतिशेषः। महद्रमणीयं दर्शनं ब्रह्मसाक्षात्कारलक्षणं तदस्माकं कुरुत। इह संसारे अस्मान्ब्रह्मसाक्षात्कारयोग्यान्कुरुतेति भावः। ऐहिकपारलौकिकसुखं ददतेत्यृचो भावः। "मह पूजायाम्" मह्यते पूज्यते इति मट् (अत्र महेः क्विप्प्रत्ययो बोध्यः) तस्मै महे इति चतुर्थ्येकवचने रूपम्। "रण शब्दे" रण्यते स्तूयते सर्वैरिति रणम् तस्मै रणायेति चतुर्थ्येकवचने रूपम्। चष्टे पश्यति सर्वं येनेति चक्षुः तच्चेह ज्ञानमयमभिप्रेतम् (अत्र चक्षेरसुन्प्रत्ययो बोध्यः) तस्मै चक्षसे इति चतुर्थ्येकवचने रूपम्। यस्मिन् ज्ञाते सर्वं विज्ञातं स्यादितिछान्दोग्यश्रुतेः। दधातेर्लोण्मध्यमबहुवचनस्य "तप्तनप्तनथनाश्चे"ति तनबादेशे दधातनेति रूपम्॥ ७॥

योव इति । हे आपः, वः युष्माकं शिवतमः कल्याणतमः सुखैकहेतुः यो रसोऽस्तीति शेषः । युष्मदीयो बलकरो यः सारभागोऽस्ति तस्य रसस्य नः अस्मान् इह भाजयत इह मर्त्यलोके भागिनः कुरुत ( तस्येत्यत्र कर्म्मणि षष्ठी बोद्धव्या । ) तं रसं प्रापयतेत्यर्थः । तत्र दृष्टान्तः का इव उशतीः मातर इव उशन्तीति उशत्य इति प्राप्ते वा छन्दसीति पूर्वसवर्णदीर्घः "वश कान्तौ" 'कान्तिरिहेच्छा' इत्यस्माच्छतृप्रत्ययान्तात् "उगितश्च" इति ङीप्रत्ययः) उशत्यः पुत्रस्य कल्याणं कामयमाना मातरो यथा स्वकीयस्तन्यरसं पुत्रं पाययन्ति तद्वत्स्वीयं रसमस्मान्पाययतेत्यर्थः । प्रीतियुक्ता मातरः स्वैः स्तन्यरसैर्यथा स्वीयपुत्रान् भावयन्ति तथा मातृस्थाना यूयमपि स्वरसप्रदानेनास्मान् भावयतेति भावः ॥ ८ ॥

तस्माऽअरमिति । तस्मै इति षष्ठ्यर्थे चतुर्थी । अलमिति प्राप्ते लकारस्य रेफश्छान्दसः रलयोर्डलयोस्तथेति रलयोरेकत्वस्मरणात् । तथा हि हे आपः, वः युष्माकं संबन्धिनस्तस्य पूर्वोक्तस्य रसस्य अरम् अलम् पर्य्याप्तिं गमाम गच्छेम पर्य्याप्तिर्नामरसविषये वैतृष्ण्यं सदा तृप्तिर्वेति तदुभयं वयं प्राप्नुयाम इत्याशास्महे इति भावः । गच्छतेर्लोडर्थे "छन्दसिलुङ्लङ्लिटः" इति पाणिनिवचनाल्लुङि उत्तमबहुवचने छान्दसत्वादडागमाभावे गमामेति रूपम् । बहुलं छन्दसीति शपिलुप्ते छादेशाभावे लोडुत्तमबहुवचने वा रूपम् । किञ्च हे आपः, यूयं यस्य क्षयाय जिन्वथ "क्षयो निवासे" इत्याद्युदात्तत्वात् क्षयशब्देन निवासः । तत्र क्षयायेति चतुर्थी षष्ठ्यर्थे यस्येत्यनेन सामानाधिकरण्यात् । यस्य क्षयस्य निवासस्य जगतामाधारभूतस्य यस्याहुतिपरिणामभूतस्य रसस्यैकदेशेन ब्रह्मादिस्तम्बपर्य्यन्तं जगत् जिन्वथ तर्प्पयथ । जिन्वतिः प्रीतिकर्म्मेति यास्कोक्तेः । सर्वप्राणिनस्तृप्तिं गमयथेत्यर्थः । तत्र हे आपः, नः अस्मान् जनयथ भोक्तृत्वेनेति शेषः । यथा अन्येषां पुण्यकर्म्मणां तृप्तिं कुरुथ तथाऽस्माकमपि तृप्तिं कुरुतेत्यर्थः । "जनी प्रादुर्भावे" इत्यस्माण्णिजन्तादाशिषि लोट्, तत्र "तस्थस्थमिपामि"ति थस्य तादेशो न भवति "बहुलं छन्दसी"ति सर्वविधीनां छन्दसि वैकल्पिकत्वात् । जनयत उत्पादयत तद्रसभोक्तॄनस्मान्कुरुतेत्याजानदेवत्वमाशास्यतेऽनेनेति भावः । "अन्येषामपि दृश्यते" इति संहितायां दीर्घे जनयथा इति ॥९॥

ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ।
पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥ १० ॥

द्रुपदादिवेत्यस्य कोकिलो राजपुत्र ऋषिरनुष्टुप्छन्द आपो देवता सौत्रामण्यवभृथे विनियोगः। अथ मन्त्रार्थः। आपः जलानि जलाधिष्ठात्र्यो देवता मा माम् एनसः पापात् शुन्धन्तु ( अंन्तर्भावितो ण्यर्थः । ) शोधयन्तु पवित्रीकुर्वन्तु मां पापात्पृथक्कुर्वन्त्विति भावः । तत्र दृष्टान्तत्रयं द्रुपदादिवेत्यादि तद्यथा एनसः पापात्कथं शोधयन्तु द्रुपदान्मुचान इव 'पलाशीद्रुद्रुमागमाः' इत्यभिधानोक्तेः ( अम० २।४।५। ) द्रुस्तरुस्तन्मयं पदं द्रुपदं तस्मात् द्रुपदात्काष्ठपादुकायाः सकाशादित्यर्थः मुमुचानः पृथग्भवन् कश्चित्पुरुषो यथा पादुकादोषैर्न पुनः सम्बद्धो भवति । ( मुचेर्विकरणव्यत्ययेन शानचि जुहोत्यादित्वाद्द्वित्वे मुमुचान इति रूपम् ।) किञ्च स्विन्नः स्नातो मलादिव, यथा च स्विन्नः स्वेदवान् कश्चित्पुरुषः स्नातः सन् मलात् शरीरसँल्लग्नमलात् पृथग्भूत्वा पुनस्तेन मलेन सह न संबध्यते । अपि च पवित्रेण पूतमाज्य-

मिव, यथा पवित्रेण कम्बलादिमयेन पूतं गालितम् आज्यं घृतं कीटेभ्यः पृथग्भूत्वा न पुनस्तैः सह सम्बध्यते। तथाहमपि एनसः सकाशान्मुक्तः सन् पुनस्तेन सह यथा न सम्बद्धो भवेयं तथाऽऽपः एनसः पापान्मां शोधयन्तु मां पापात्पृथक्कृत्य पवित्रीकुर्वन्त्वित्यभिप्रायः॥ १०॥

यद्वाऽयमर्थः। आपः जलानि जलाधिष्ठात्र्यो देवताः एनसः पापान्मा मां शुन्धन्तु शोधयन्तु पवित्रीकुर्वन्त्विति पूर्ववदिहाऽपि बोध्यम्। तत्र दृष्टान्तत्रयं तद्यथा एनसः पापात्कथं शोधयन्त्वित्यपेक्षायामुच्यते। द्रुपदात् मुमुचानः स्विन्न इव, द्रुपदात् द्रुमपदाद्वृक्षात् मुमुचानः वहिर्भवन् स्विन्नः स्वेदवान् आतप इव स च द्रुपदाद्वृक्षाद्बहिर्भवन् यथा पुनर्वृक्षं न स्पृशति तथा एनसः पापात्पृथग्भवन्नहमपि पुनः पापं न स्पृशेयं तथा माम् आपः शोधयन्त्वित्यर्थः। किञ्च स्नातः मलादिव, स्नातः कश्चिज्जनः मलात् शरीरसँलग्नमलान्मुक्तोभूत्वा यथा पुनर्मलं न स्पृशति। अपि च पवित्रेण पूतमाज्यमिव, आज्यं घृतं पवित्रेण पूतं पवित्रीकृतं सत् यथा पुनः अमेध्यं न भवति। अहमपि अद्भिः पूतः सन् पुनरपि अमेध्यो न भवेयं तथा माम् आपः शुन्धन्तु शोधयन्तु पापान्मां पृथक्कृत्य पवित्रीकुर्वन्त्वित्यर्थः। अपां प्रसादात्पापान्मुक्तं मां पुनः पापं मा स्पृशत्वित्याशंसावाक्यार्थः॥ १०॥

ॐ ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत ततो रात्र्यजायत ततः समुद्रोऽर्णवः समुद्रादर्णवादधिसम्वत्सरो अजायत अहोरात्राणि विदधद्विश्वस्य मिषतो वशी सूर्य्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः॥ ११॥

ऋतञ्च सत्यञ्चेति ऋष्यादिप्रदर्शनपूर्वकं व्याख्यातम्॥ ११॥

ॐ अन्तश्चरसि भूतेषु गुहायां विश्वतो मुखः।
त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम्॥ १२॥

अन्तश्चरसीत्यस्य तिरश्चीन ऋषिरनुष्टुप्छन्द आपो देवता अपामुपस्पर्शने विनियोगः। एवमस्य मन्त्रस्य ऋष्यादिकं प्रदर्श्यार्थं विवृणोमि तथाहि हे जलपदार्थ, त्वं भूतेषु प्राणिषु अन्तश्चरसि मध्ये भ्रमसि तथा गुहायां गिरिकन्दरायां विश्वतोमुखस्त्वमसि विश्वतः सर्वतो मुखानि यस्य स विश्वतोमुखः। धारा एव अपां मुखानि, निर्झरप्रदेशे ताः सर्वतः पतन्तीति प्रसिद्धमेव। अतो विश्वतोमुखः अर्थात्सर्वतो मुखो जलपदार्थः। किञ्च हे जलपदार्थ, त्वं यज्ञः यज्ञसाधनत्वात् यज्ञः अर्थात् यज्ञस्वरूपस्त्वमसि इह कारणे कार्य्योपचारः। तथा हे जलपदार्थ, त्वं वषट्कारः अर्थाद्वषट्कारस्वरूपस्त्वमसि। तथा ईदृशस्त्वमसि। कीदृश आपः जलस्वरूपः। तथा ज्योतिः ज्योतिःस्वरूपः। तथा रसः अपां सारभागः। तथा अमृतं सुधारूपस्त्वमसि। हे जलपदार्थ, यतस्त्वमेवं भूतोऽसि अतो मां सुखं गमयेत्याशंसावाक्यार्थः॥१२॥

यद्वा आपो ज्योतीरसोऽमृतमित्यस्यायमर्थः। हे जलपदार्थ, त्वमेवम्भूतोऽसीति वाक्यशेषः। किम्भूतः आपः आप्नुवन्ति सर्वमित्यापः सर्वप्राणिनां सृष्टिहेतुभूतत्वाज्जीवनहेतुत्वाच्च सर्वव्यापनशीलः 'आपो अग्रे विश्वमायन् (अथ० सं० ४।२।६।) इत्याथर्वणिकश्रुतेः "आपो ह यद्बृहतीर्विश्वमायन्" (शु० य० वा० सं० २७।२५) इति माध्यन्दिनीयश्रुतेश्च।

'तद्ब्रह्म ता आपः (शु० य० वा० सं० ३२,१) इति माध्यन्दिनीयश्रुतेरपां ब्रह्मरूपत्वाद्वा सर्वव्यापनशीलः। तथा ज्योतिः द्योतते दीप्यते इति द्योतिः 'द्युत दीप्तौ (भू० आ०) तस्यादिव्यापत्या ज्योतिः "यदपो वज्रो वाऽआपो वज्रो हि वाऽआपस्तस्माद्येनैता यान्ति निम्नं कुर्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति (श० ब्रा० १।१।१७।)" इति श्रुतेरपां वज्ररूपत्वाद्वज्रस्य च ज्योतिःस्वरूपत्वात् हे जलपदार्थ, त्वं तद्रूपोऽसि। अपां वैद्युतानलसंबन्धत्वाद्वा ज्योतिष्ट्वं स्वच्छत्वाद्वा दीप्तिमत्त्वं जलपदार्थस्य सुप्रसिद्धं हे जलपदार्थ, त्वं तथा भूतोऽसीत्यर्थः। तथा रसः रस्यते आस्वाद्यते इति रसः आस्वादनार्हस्तादृशस्त्वमसि। तथा अमृतमसि आत्मा वा इदमग्र आसीदिति प्रकृत्य 'आपो ह्वा इदमग्रे सलिलमेवास' (श० ब्रा० ११।१।६।१।) इति श्रुतेः "तद्ब्रह्म ता आपः" इति श्रुत्यन्तराच्च अपां ब्रह्मरूपत्वेन महाप्रलयेऽपि विद्यमानत्वादेवैवमुच्यते हे जलपदार्थ, त्वं मरणधर्म्मरहितोऽसि। हे जलपदार्थ, यतस्त्वमेवम्भूतोऽसि अतोऽनेनाचमनेन मां सुखं गमयेत्याशंसावाक्यार्थः ॥ १२ ॥

ॐ भूर्भुव॒ स्व॑÷तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि।

धियो॒ यो नः॑÷प्रचो॒दया॑त् ॥ १३ ॥

ऋष्यादिप्रदर्शनपूर्वकं प्राणायामप्रकरणे व्याख्यातोऽयं मन्त्रः ॥ १३ ॥

ॐ उद्व॒यं तम॑स॒स्परि॒ स्व॒÷पश्य॑न्त॒ऽउत्त॑रम्।

दे॒वं दे॑व॒त्रा सूर्य॒मग॑न्म॒ ज्योति॑ रुत्त॒मम् ॥ १४ ॥

उद्वयमित्यस्य हिरण्यस्तूप ऋषिरनुष्टुप्छन्दः सूर्य्यो देवता सूर्य्योपस्थाने विनियोगः। "उत्" इत्युपसर्गः अगन्मेति क्रियापदेन सह सम्बध्यते, "छन्दसि परे,व्यवहिताश्च" इति पाणिनिवचनात्। वयं सूर्य्योपस्थानकर्त्तारः तमसः तमःप्राचुर्यात् भूलोकात् उत्तरम् ऊर्ध्वंस्थितं स्वः सूर्य्यस्य तत्र स्थितत्वात्सूर्य्यावलोकनेनैव स्वर्गलोकं परिपश्यन्तः सर्वतोभावेनावलोकयन्तः अत एव देवत्रा (देवेष्वितिदेवत्र सप्तम्यर्थे त्रल्प्रत्ययः, छान्दसोदीर्घश्चानुसन्धेयः।) देवत्रा देवेषु उत्तमं देवानां मध्ये श्रेष्ठम् "देवत्वमाजानमग्रे" इति श्रुतेः आजानदेवत्वादेव कर्म्मदेवापेक्षया श्रेष्ठमित्यर्थः। यद्वा देवत्रा देवेषु अर्थाद्देवलोकेषु अग्नि, चन्द्र, नक्षत्राऽपेक्षया उत्कृष्टम् एवम्भूतं ज्योतिः ज्योतिःस्वरूपं सूर्य्यदेवम् उदगन्म उद्गच्छाम, अनेन सूर्य्योपस्थानकर्म्मणा वयं सूर्य्यं प्राप्नुवाम वयं भूलोकस्योपरिस्थितं स्वर्गलोकं पश्यन्तः सूर्य्यप्रसादात्तमतिक्रम्य परंज्योतिःस्वरूपे सूर्य्ये सङ्गता भवामेत्याशंसावाक्यार्थः। गमेर्लोडर्थेलङि शपिलुप्ते मस्य नकारे उत्तमपुरुषबहुवचने अडागमे अगन्मेतिरूपम् ॥ १४ ॥

ॐ उदु॒त्यं जा॒तवे॑दसं दे॒वं व॑हन्ति के॒तव॑÷।

दृ॒शे विश्वा॑य॒ सूर्य॑म् ॥ १५ ॥

उदुत्यमित्यस्य प्रस्कण्वऋषिर्गायत्री छन्दः सूर्य्यो देवता सूर्य्योपस्थाने विनियोगः। उत् इत्युपसर्गः वहन्तीत्यत्रान्वेति पूर्ववत् "छन्दसि परे, व्यवहिताश्चे" त्युक्तत्वात्। उ इति शोभार्थः। त्यमिति त्यच्छब्दस्य प्रयोगः। ततश्चायमर्थः। केतवः प्रज्ञाहेतवः सूर्य्यरश्मयः

विश्वाय षष्ठ्यर्थे चतुर्थी विश्वस्य जगतः दृशे दर्शनाय अर्थात् विश्वं द्रष्टुं जातवेदसम् अग्नितेजोमयं जातम् उत्पन्नं कर्म्मफलं यस्मादसौ जातवेदास्तं जातवेदसं सूर्य्योदये सति कर्म्ममात्रस्य प्रवर्त्तनात्तत्तत्कर्म्मफलोत्पादकं त्यं तं प्रसिद्धं सूर्य्यं देवम् उद्वहन्ति उत् ऊर्ध्वंयथास्यात्तथा कृत्वा उदयाचलादस्ताचलं प्रापयन्तीत्यर्थः। विश्वप्रकाशनार्थं रश्मयः सूर्य्यमुद्वहन्तीत्यादित्यस्योत्कीर्त्तनमनेन मन्त्रेण प्रतिपाद्यते। 'दृशे विख्ये चे'ति तुमर्थे दृशेः के प्रत्यये कित्वाद्गुणाभावे द्रष्टुमित्यर्थे दृशे इति निपातः॥ १५॥

ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।
आप्रा द्यावा पृथिवीऽअन्तरिक्ष॰ सूर्य्यऽआत्माजगतस्तस्थुषश्च॥ १६॥

चित्रमित्यस्य कौत्स ऋषिस्त्रिष्टुप्छन्दः सूर्य्यो देवता सूर्य्योपस्थाने विनियोगः। अथ मन्त्रार्थः।

मित्रस्य वरुणस्य अग्नेः चक्षुः अक्षिभूतः नेत्ररूपः देवानाम् मित्रादिव्यतिरिक्तानामन्येषां देवानाम् अनीकं समूहः देवानाम् द्योतमानानां रश्मीनां समूहः तेजः समूह इतिवा जगतः जङ्गमस्य तस्थुषः स्थावरस्य च सकलप्राणिजातस्य आत्मा सकलसंसारमयः सूर्य्यः चित्रम् आश्चर्य्यं यथा स्यात्तथा उदगात् प्राच्यां दिशि उद्गच्छतीत्यर्थः। अत्र लडर्थे लुङ्, 'छन्दसि लुङ्लङ्लिटः' इतिपाणिन्युक्तेः। सच उदितः सन्नेव स्वकिरणपुञ्जेन द्यावापृथिवी (पूर्वसवर्णदीर्घश्छान्दसः) द्यावापृथिव्यौ द्युलोकभूलोकौ अन्तरिक्षम् आकाशञ्च आप्राः आपूरयतीत्यर्थः। अयमेवाश्चर्य्यहेतुः। नान्यः सद्योत्पन्नः कश्चिदेवंकर्त्तुं शक्नुयादित्यर्थः। अयन्तु उद्यन्नेव स्वभासा लोकत्रयं व्याप्नोतीतिभावः। आप्रा इति आङ् पूर्वात् प्रापूरणे इत्यस्माद्धातोर्लडर्थे लङि प्रथमपुरुषैकवचनस्थाने 'तिङां तिङो भवन्ती'ति वचनान्मध्यमपुरुषैकवचनम्॥ इयन्तु प्रातःसन्ध्यायां सूर्य्योपस्थानपक्षे व्याख्या। मध्याह्नसन्ध्यायां सायंसन्ध्यायां च सूर्य्योपस्थानपक्षे 'उदगात् आप्राः' एतत्क्रियापदद्वयं यथास्थितं लुङि लङेव व्याख्येयं तद्यथा सूर्य्यः चित्रम् आश्चर्य्यं यथा स्यात्तथा उदगात् उदयं प्राप्तः उदितो बभूवेत्यर्थः। स च उदितः सन्नेव द्यावापृथिवी अन्तरिक्षं च आप्राः आपूरितवान् स्वतेजसेतिशेषः। अन्यत्सर्वं पूर्ववत्समानम्॥ १६॥

ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शत॰ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्॥१७॥

तच्चक्षुरित्यस्य दध्यङ्ङाथर्वण ऋषिरक्षरातीतपुरउष्णिक्छन्दः सूर्य्यो देवता सूर्य्योपस्थाने विनियोगः। इह लोके यावन्तः प्राणिनः चक्षुर्भ्यामवलोकयन्ति तावतां सर्वप्राणिनां यच्चाक्षुषं तेजस्तत्सर्वं सूर्य्यस्यैव तेजस्त्वमिति तच्चक्षुरितिमन्त्रेण प्रतिपाद्यते। तद्यथा तच्चक्षुः सर्वप्राणिनां चक्षुःस्वरूपं तथा सूर्य्योदये सति यज्ञादेः प्रवर्त्तमानत्वात् देवहितं देवानामिन्द्रादीनां हितकरं शुक्रं शुक्लं शुद्धं स्वच्छं निर्म्मलं सूर्य्याख्यं तेजः पुरस्तात् प्राच्यांदिशि उच्चरत् उच्चरति उदेतीत्यर्थः। अत्र लटः स्थाने लेडादेशः "तिङां तिङः" इति वचनात् "इतश्च लोपः परस्मैपदेषु" इतीकारलोपः। अन्यल्लेट्कार्य्यमिह न भवति छन्दसि सर्वविधीनां वैकल्पिक-

त्वात्। एतादृशस्य सूर्य्यस्योपस्थानं कृत्वा वयं शतं शरदः शतसङ्ख्यकानि वर्षाणि पश्येम अर्थात् शतवर्षपर्य्यन्तं सूर्य्यप्रसादाद्वयमप्यव्याहतचक्षुरिन्द्रिया भवेमेत्यर्थः। अत्राशंसायां लिङ्,एवमग्रेऽपि सर्वत्र बोध्यम्।तथा वयं शतं शरदः शतसङ्ख्यकानि वर्षाणि जीवेम अर्थात् शतवर्षपर्य्यन्तं वयमपराधीनजीवना भवेमेत्यर्थः। तथा वयं शतं शरदः शतवर्षाणि शृणुयाम अर्थात् शतवर्षपर्य्यन्तं वयं स्पष्टश्रोत्रेन्द्रिया भवेमेत्यर्थः। तथा शतंशरदः शतवर्षाणि वयं प्रब्रवाम अर्थात् शतवर्षपर्य्यन्तं वयम् अस्खलितवागिन्द्रिया भवेमेत्यर्थः। तथा शतं शरदः शतवर्षाणि वयम् अदीनाः स्याम अर्थात् शतवर्षपर्य्यन्तं दैन्यरहिताः भवेम न कस्याप्यग्रे दैन्यं कुर्य्यामेत्यर्थः। दैन्यञ्च चक्षुरादीन्द्रियपाटवराहित्येन अर्थादिवैकल्येन च भवति तदस्माकं कदापि मा भूयादित्याशयः। नकेवलं शतंशरद एव किन्तु शरदः शतादपि शतवर्षोपर्य्यपि भूयश्च पुनरपि बहुकालपर्य्यन्तं वयं पश्येम, जीवेम, शृणुयाम, प्रब्रवाम, अदीनाश्च स्याम भवेमेत्यर्थः। मन्त्रेणानेन सूर्य्योपस्थानकर्त्तुर्दीर्घजीवनं चक्षुरादीन्द्रियपाटवमर्थवैकल्यराहित्यञ्च भवतीत्याशयः॥ मध्याह्नसन्ध्यापक्षे सायंसन्ध्यापक्षे च "उच्चरत्" इत्येतत्क्रियापदं लङ्लकारस्य प्रथमपुरुषैकवचने व्याख्येयं तत्र अडभावश्छान्दसः "बहुलं छन्दस्य माङ्योगेऽपि" इति पाणिनिवचनात्। ततोऽयमर्थः। तच्चक्षुः सर्वेषां नेत्रभूतं शुक्रं शुक्लं निर्म्मलं सूर्य्याख्यं तेजः पुरस्तात् प्राच्यां दिशि उच्चरत् उद्चरत् उदगच्छत् उदितं बभूवेत्यर्थः। शेषं स्पष्टं पूर्ववत्समानमेव॥ १७॥

ॐ तेजो॑ऽसि शुक्रम॑स्यमृत॑मसि धाम॒नामा॑सि।
प्रि॒यं दे॒वाना॒मना॑धृष्टं देव॒यज॑नमसि॥ १८॥

तेजोऽसीत्यस्य देवा ऋषयो गायत्रीछन्दः शुक्रंदैवतं गायत्र्यावाहने विनियोगः। अथ मन्त्रार्थः। हे गायत्र्याख्यज्योतिः, त्वं तेजः असि तेजःस्वरूपत्वात्तेजः प्रकाशरूपमसि। अत एव शुक्रं शुक्लं शुद्धं निर्म्मलम् असि। तथा त्वम् अमृतमसि तेजसोऽविनाशित्वादमरणधर्म्मासि तथा धाम असि "धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोरि"ति हेमचन्द्रोक्तत्वात् तथा त्वं गृहमसि स्वोपासकानां गृहवदाश्रयस्थानमसीत्यर्थः। तथा त्वं नाम असि स्वोपासकान् प्रति फलं दातुं नम्रीभूतमसि नाम अभिधानमिति वा तच्च स्वोपासकानामेव महदुत्कर्षप्रकाशनमभिधानं भवसि। देवानाम् इन्द्रादीनां प्रियं वल्लभम् असि पक्षिरूपं विधाय त्वया सोमवल्याहृतत्वात्। तदुक्तं श्रुत्या–"गायत्री पक्षिरूपं धृत्वा दिवः सोममाहरत्" इति। अतो देवानां त्वं प्रियमसि। तथात्वम्-अनाधृष्टमसि सोमाहरणार्थं पक्षिरूपत्वेऽपि केनचिदसुरादिना तिरस्कर्तुमशक्यं तेजःस्वरूपत्वाद्वा अनाधृष्टमनाधृष्यं कैश्चिदपि तिरस्कर्त्तुमयोग्यम् एतादृशं त्वमसि। तथा त्वं देवयजनमसि देवा इज्यन्ते अनेन इति देवयजनं सर्ववैदिकमन्त्राणां त्वन्मूलत्वाद् देवानां यज्ञहेतुकं विशिष्टसाधनं सर्वमन्त्रमयमित्यर्थः। न गायत्र्याः परोमन्त्रो न मातुः पददैवतमित्याद्युक्तेः॥ १८॥

ॐ गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसी नहि पद्यसे नमस्ते तुरीयाय दर्शनाय पदाय परो रजसेऽसावदो मा प्रापत्॥ १९॥

परो रजस इत्यस्य विमल ऋषिरनुष्टुप्छन्दः परमात्मा देवता गायत्र्युपस्थाने विनियोगः। अथ मन्त्रार्थः । तत्र "गायत्री वा इदठं. सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदठं. सर्वं भूतं गायति च त्रायते च ( छा० ३।१२।१। )" इतिश्रुत्या यदभ्युक्तं तदेवाऽनेन मन्त्रेणापि प्रतिपाद्यते । तत्र अतिरिक्तमितिकारिकया हीनपदाध्याहारेण वाक्ययोजनावगन्तव्या तथाहि—हे गायत्र्यधिष्ठातृदेवते, शक्तिरूपे, त्वं गायत्र्यसि गायन्तं त्रायते इति गायत्री स्वोपासकत्राणकर्त्री भवसि । तथा त्वम् एकपदी असि एकं पदं यस्याः सा एकपदी त्रैलोक्यपादेनैकपदी असि । पदशब्दस्तुरीयांशवाची पादशब्दवत्, त्रैलोक्यं त्वदीयतेजस एकांश इति भावः । तथा त्वं द्विपदी असि द्वे पदे यस्याः सा द्विपदी त्रयीविद्यारूपेण द्वितीयेन द्विपदी असि । त्रयीविद्येति त्वदीयतेजसो द्वितीयांश इति भावः । तथा त्वं त्रिपदी असि त्रीणि पदानि यस्याः सा त्रिपदी प्राणादिना तृतीयेन त्रिपद्यसि । प्राणादिस्त्वदीयतेजसस्तृतीयांश इति भावः । तथा त्वं चतुष्पद्यसि चत्वारि पदानि यस्याः सा चतुष्पदी व्यवहाररूपेण चतुर्थेन चतुष्पद्यसि । व्यवहारविषयस्त्वदीयतेजसश्चतुर्थांश इतिभावः । यतस्त्वत्तेजसः सकाशादेव त्रैलोक्यत्रयीविद्याप्राणव्यवहारविषयाः सर्वेऽपि सञ्जाताः । अतस्त्वं त्रैलोक्यादिव्यष्टिसमष्टिपादैर्यथाक्रमम् एकपदी द्विपदी त्रिपदी चतुष्पद्यसीत्यभिप्रायः । एतत्तु केवलं त्वत्स्वरूपकथनमात्रमेवास्ति । अर्थात् एवं हि त्वं चतुर्भिः पादैरुपासकैः पद्यसे ज्ञायसे इति भावः । इत्थमेकपदीत्यादि त्वत्स्वरूपकथनेनोपासकानामुपासनासौकर्य्यं स्यात् । अन्यथा रूपादिशून्यस्य त्वत्तेजस उपासनाऽसम्भवात्त्वत्तेजः उपासितुं कः शक्नुयात् । अत उपासकानामुपासनासौकर्य्यार्थमेकपदीत्यादि त्वत्स्वरूपकथनमुपासनाभिप्रायेण प्रतिपाद्यते । वस्तुतस्तु त्वम् अपदसि अतः परेण निरुपाधिकेन स्वेनात्मनाऽपदसि अविद्यमानं पदं यस्याः सा त्वमपदसि । हि यतस्त्वं न पद्यसे न ज्ञायसे नेति नेत्यात्मत्वात् । अतस्ते तव परोरजसे, रज इति तमोऽप्युपलक्षणकम् । अत्र परस् शब्दः सान्तः सच परशब्दवाची रजसः पर इति परोरजस्तस्मै परोरजसे, अत्र आहिताग्न्यादित्वाद्रजः शब्दस्य परनिपातः । रजस्तमोऽतीताय विशुद्धसत्त्वाय विज्ञानानन्दघनस्वरूपाय, रज इति तमःसत्त्वोपलक्षणकमिति वा तेन गुणत्रयहीनाय विराट् हिरण्यगर्भादिकारणोपाधित्रयहीनाय दर्शनाय ध्यानेन दर्शनीयाय तुरीयाय पदाय ब्रह्मविष्णुशिवभिन्नाय ब्रह्मस्वरूपाय नमः इतिशेषः । नमस्कारोऽस्त्वित्यर्थः । यद्वा वाग्वै गायत्रीतिश्रुतेर्गायत्र्या वाग्रूपत्वात् तुरीयाय वैखरीरूपाय पदाय नमः नमस्कारोऽस्त्वित्यर्थः । असौ शत्रुः पाप्मा त्वत्प्राप्तिविघ्नकरः अदः तदात्मनः कार्य्यं यत् त्वत्प्राप्तिविघ्नकर्तृत्वं मा प्रापत् न प्राप्नोतु । त्वत्प्रसादान्मदीयपाप्मा त्वत्प्राप्तिप्रतिबन्धको माभूयादित्यर्थः । त्वत्तेजसोऽरूपत्वात्तदुपासनाऽसम्भवात् तदर्थं नमस्कारमात्रं समर्प्यते । सत्यवसरे कदाचिदपि तदुपासनायोग्यतालाभे तत्साक्षात्कारे तत्सायुज्यमपि भविष्यत्येवेत्याशास्य त्वदुपस्थानं करोमीति भावः ॥ १९ ॥

इति श्रीदामोदरशर्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये

पञ्चमोऽयं सन्ध्यापरिच्छेदः समाप्तः ॥

॥ इति सन्ध्यामन्त्रव्याख्या समाप्ता ॥

---

# षष्ठपरिच्छेदः ।

## अथ तर्पणमन्त्रारम्भः ।

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्तेनोऽवन्तु पितरो हवेषु ॥ १ ॥

## ॥ अथ तर्प्पणमन्त्रव्याख्या ॥

पितृदेवत्या जगती शङ्खदृष्टा पितृतर्पणे प्रथमाञ्जलिप्रदाने विनियुक्ता ऋगियम् । यद्यपि पितृशब्दः सामान्यतया जीवितपित्रादिवाचकोऽप्यस्ति तथाऽपि मृतपितृकस्यैव तर्पणादिपितृकार्य्येऽधिकारश्रवणादिह मृतपित्रादिग्रहणमेव साधीयस्त्वमित्यभिप्रेत्य व्याख्यायते ऋगियम् । तथा हि–अवरे एतल्लोकवासिनः पितर उदीरताम् "ईर गतौ" (अदादिरात्मने पदी ।) ततो लोट् । उत् ऊर्ध्वं क्रमन्तां गच्छन्तु स्वर्गं यान्तु मत्कृततर्पणेन सन्तुष्टाः सन्त इति शेषः । पित्रेकत्वे पितरि गुरुत्वाद्बहुवचनं तदीयभृत्याद्यपेक्षया वा बहुवचनम् । यदा पुत्रादयः स्नानार्थं जलाशयं गच्छन्ति तदा मृतास्तत्पित्रादयोऽपि तद्दत्तोदकप्राप्तिकामनयाताननुगच्छन्ति गत्वा च वस्त्रनिष्पीडनपर्य्यन्तं तत्प्रतीक्षमाणास्तत्र तिष्ठन्ति । तद्दत्तोदकं लब्ध्वाऽतीव सन्तुष्टाः सन्तस्तदर्थमाशिषं दत्त्वा उत्क्रमन्ते ऊर्ध्वं गच्छन्ति स्वर्गं यान्तीति भावः । एतदभिप्रायेणैव तर्प्पणकर्त्रा एवमुच्यते मदीयाः पितरो मद्दत्तेनाम्बुना सन्तुष्टाः सन्त उदीरतामिति । यद्वा सुकृतिनस्तु सुकृतकर्म्मणा स्वर्यान्ति दुष्कृतिनस्तु अगतिकाः सन्त इहैव तिष्ठन्ति तदभिप्रायेण वा अवरे एतल्लोकवर्त्तिनः पितर उदीरतामित्युक्तं भवति । तथा परासः परा एव परासः (आज्जसेरसुगित्यसुगागमः)। उत्कृष्टलोकेऽवस्थिताः पितरः उदीरतामुद्गच्छन्तु मद्दत्तेनाम्बुना परितुष्टाः सन्तः ऊर्ध्वं क्रमन्तां स्वीयमुत्कृष्टस्थानं प्रतिगच्छन्तु अथवा स्वर्गस्थानां पितॄणां स्वतस्तृप्तत्वात्तदुद्देशेन मत्कृततर्प्पणकर्म्मणः परमापूर्वेण स्वर्गादपि उत्कृष्टतरं स्थानं ब्रह्मलोकं गच्छन्त्वित्यर्थः । उदित्युपसर्गाभ्यासात्क्रियापदाभ्यासो बोध्यः कर्त्तृसापेक्षत्वात्क्रियापदस्य । तथा मध्यमाः मध्ये भवा मध्यमाः मध्यलोकनिवासिनः आर्ष्टिषेणादिना सहचरत्वं प्राप्तास्तेषां तत्र निवासत्वादर्थादन्तरिक्षलोकस्थाः पितरः उदीरतां मद्दत्तेनाम्बुना परितुष्टाः सन्तः तदुद्देशतया मत्कृततर्प्पणकर्म्मणः परमापूर्वेण मध्यलोकस्थानादप्युत्कृष्टं स्थानमर्थात्स्वर्गलोकं गच्छन्त्वित्यर्थः । तत्र गत्वा सोम्यासः सोम्या एव सोम्यासः स्वर्गे देवैः सह स्थितत्वाद्देववत्सोमरसपायिनः पितॄणां सोमदेवताकत्वात्सोमसाहचर्य्यं प्राप्ता इति वा तादृशास्ते पितरो भवन्त्विति शेषः । सोम्याः पितॄणां गणविशेषास्तैः सादृश्यं प्राप्ता अपि सोम्या उच्यन्ते तथा भवन्त्वितिभावः । तथा ये: पितरः असुं प्राणं वायुमीयुः अनुगताः वातात्मना स्थिता इत्यर्थः । अथवा असुं प्राणमन्वीयुः प्राणभावं प्राप्ता जन्मग्राहिणोऽभूवन्नित्यर्थः । तेऽपि पितरो मद्दत्तेनाम्बुना सन्तुष्टाः सन्तः

उदीरतां तस्मादपि प्राणभावाज्जन्मनः उत्कृष्टं प्राणभावमुत्कृष्टं जन्म प्राप्नुवन्त्वित्यर्थः। तथा अवृकाः वृकोऽनमित्रः स च नास्ति येषां ते अवृका अनमित्रा माध्यस्थं प्राप्ताः पितरस्तेऽपि उदीरतां मद्दत्तेनाम्बुना परितुष्टाः सन्त उत्कृष्टं स्थानं गच्छन्त्वित्यर्थः। ऋतज्ञाः सत्यज्ञा यज्ञनिष्ठा वा ये पितरस्तेऽपि उदीरतामुत्कृष्टं स्थानं प्राप्नुवन्त्वित्यर्थः। यत्तदोर्नित्यसम्बन्धात्ते इति तच्छब्दश्रवणात् ये इति यच्छब्दोऽध्याहार्य्यः एवम्भूता ये पितरस्ते तादृशा अपि पितरः मद्दत्तेनाम्बुना सन्तुष्टाः सन्तः हवेषु आह्वानेषु नः अस्मान् अवन्तु पालयन्तु रक्षन्त्वित्यर्थः ॥

श्राद्धपक्षे मद्दत्तेनानेन श्राद्धीयेन अन्नेन सन्तुष्टा इत्येवं योज्यमन्यत्समानं श्राद्धपक्षेऽप्यवगन्तव्यम् ॥ १ ॥

अङ्गिरसो नः पितरो नवग्वाऽअथर्वाणो भृगवः सोम्यासः । 
तेषां वय ठं० सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥२॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् पितृतर्प्पणे द्वितीयाञ्जलिप्रदाने विनियुक्ता ऋगियम्। अस्या ऋचः उत्तरार्द्धे तेषामिति तच्छब्दश्रवणात्पूर्वार्द्धे ये इति यच्छब्दोऽध्याहार्य्यः यत्तदोर्नित्यसम्बन्धत्वात्। नः अस्माकं ये पितरः अङ्गिरसः अङ्गिरा नामकः कश्चिदृषिस्तस्यापत्यानि ये च नवग्वाः नवगतयः तर्प्पणादिपितृकार्य्ये पुनः पुनरागत्य ये गच्छन्ति, नवग्वा नवनीया स्तोतव्या गतिर्येषां ते नवग्वाः देवयानमार्गगामित्वात्स्तोतव्यगतिका इति वा ये च अथर्वाणः अथर्वणोऽपत्यानि, ये च भृगवः भृगोरपत्यानि, ये च सोम्यासः सोम्या एव सोम्यासः (आज्जसेरसुगित्यसुगागमः) सोमसम्पादिनः सोमपायिनः देवैः सह सञ्चरणशीलत्वाद्देवत्वं प्राप्ताः स्वर्गवासिन इत्यर्थः। एवम्भूता ये अस्माकं पितरः, सन्तीतिशेषः। तेषां पूर्वोक्तानां यज्ञियानां यज्ञार्हाणां स्वर्गस्थितानां पितॄणां सुमतौ शोभना मतिः सुमतिस्तस्यां सुमतौ कल्याणमतौ भद्रे मङ्गले सौमनसेऽपि सौमनस्यभावे च वयं स्याम भवेम। अस्माकं कल्याणकरणे मद्दत्तेनाम्बुना तृप्तानां श्राद्धपक्षे मद्दत्तेन श्राद्धान्नेन पुत्रादिभिः श्रद्धया दत्तेन स्वधारूपेण पित्रन्नेन तृप्तानां पितॄणां सुमतिः परस्परमैकमत्यं च भवतीत्याशंसा वाक्यार्थः। पितर इति पितुरेकत्वेऽपि पूजार्थं गुरुत्वाद्बहुवचनं तदीयसहचरभृत्याद्यपेक्षया वा बहुवचनमिति पूर्ववदिहाऽपि बोद्धव्यम्। तथाङ्गिरःप्रभृतीनामृषीणां प्रथमोत्पन्नत्वात्तत्कालतोऽद्यपर्य्यन्तं परम्परासम्बन्धेन यजुर्वेदिनां सर्वाणि गोत्राणि तदीयापत्यभूतान्येव वर्त्तन्ते। तस्मात्तदन्तः पातित्वेन स्वस्वपितुरप्यत्र सत्वादेव सर्वैरपि यजुर्वेदिभिर्द्विजातिभिरनूह एव पठनीयोऽयं मन्त्र इत्यनुसन्धेयम् ॥ २ ॥

आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । 
अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ ३ ॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप्पितृतर्पणे तृतीयाञ्जलिप्रदाने विनियुक्ता ऋगियम्। अथ मन्त्रार्थः। नोऽस्माकं पितरः आयन्तु आगच्छन्तु अस्मद्दत्तोदकपानार्थमितिशेषः। श्राद्धपक्षे तु अस्मदत्तस्य श्राद्धीयान्नस्य भक्षणार्थमितिशेषः। किम्भूताः पितरः सोम्यासः सोम्या एव

सोम्यासः ( आज्जसेरसुगित्यसुगागमः ) सोमसम्पादिनः सोमरसपायिनः । सोमे अर्थात्सोमलोके भवाः सोम्याः पितृलोकस्य सोममण्डलान्तःपातित्वात्सोम्याः सोममण्डलान्तर्वर्त्तिपितृलोकनिवासिन इति वा । पुनः किम्भूताः अग्निष्वात्ताः अग्निना सुष्ठु यथास्यात्तथा आत्ताः आसमन्ताद्भावेन भक्षिताः श्रौतस्मार्त्ताग्निदग्धा इत्यर्थः केवलं लौकिकाग्निनाऽपि सुष्ठु आत्ताः अग्निष्वात्ताः लौकिकाग्निदग्धा इति वा । अग्निदग्धा एव श्राद्धार्हाः सन्तस्तर्पण योग्या एकोद्दिष्टपार्वणादिश्राद्धयोग्या अपि भवन्तीति सकलश्रुतिस्मृतिलोकप्रसिद्धिः । पितरः आयन्त्वित्युक्तं किन्तु कैः आयन्त्विति नोक्तं तदिदानीमुच्यते । देवयानैः देवानां यानं गमनं यत्र तैस्तथोक्तैः देवगमनयोग्यैः पथिभिर्मार्गैः आयन्तु आगच्छन्त्वित्यर्थः । देवैः सह सञ्चरणशीलत्वात्पितॄणां देवैः सहागमनमाशास्यते । देवैः सह यायिनस्ते पितरो भवन्ति येषां पुत्रपौत्रप्रपौत्रैरेतत्तर्पणादि एकोद्दिष्टपार्वणश्राद्धादिकं वा पितृकर्म्म क्रियते इति भावः । तदुक्तं "पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति लोकताम्" इति । आगत्य च ते पितरः अस्मिन् यज्ञे पितृयजनात्मकेऽस्मिन् तर्पणकर्म्मणि स्वधया मदन्तः "स्वधा इत्युदकनामेतिनिघण्टुः" स्वशब्द उपपदे "डुधाञ् धारणपोषणयोः (जु० उ०) इत्यस्मात् "आतोऽनुपसर्गेकः" इति कप्रत्यये स्त्रीत्वाट्टापि स्वधेति सिध्यति । स्वमात्मानं सर्वान्तर्यामिणं भगवन्तं नारायणं दधाति धारयतीति स्वधा "आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणस्मृतः ॥ ( म० स्मृ० १ अ. १० श्लो० ) इति मनूक्तेः" स्वं धनं दधाति ददातीति वा शस्योत्पत्तिहेतुत्वादिति स्वधा उदकं तया स्वधया उदकेन प्रकरणवशादस्मद्दत्तेनाम्बुना मदन्तः स्वात्मानं तर्पयन्तः परितुष्टाः सन्तः अस्मान् अधिब्रुवन्तु एते मत्पुत्रा अतीव श्लाघ्याः भक्तिश्रद्धोपेताः पितृकर्मकारिणः सन्ति, एभिः श्रद्धया पितृकार्य्यं तर्प्पणं कृतम् एतद्दत्तेनाम्बुना सन्तुष्टाः सञ्जाता वयम्, एते च मत्पुत्रा धनपुत्रादिभिरधिका भवन्त्वित्यधिकं ब्रुवन्तु । तथा ते पूर्वोक्ताः पितरः अस्मान् अवन्तु रक्षन्तु अनिष्टनिरसनेन इष्टप्रापणेन च पालयन्त्वित्यर्थः॥ श्राद्धपक्षे तु अस्मिन् यज्ञे पितृयजनात्मकेऽस्मिन् पितृश्राद्धकर्मणि स्वधया मदन्तः "स्वधा इत्यन्ननामेति निघण्टुः" स्वशब्दे उपपदे दधातेः ( जु० उ० ) 'गेहे कः' इति बाहुलकात्कप्रत्यये "आतो लोप" इत्याकारलोपे स्वधशब्दाट्टापि स्वधेतिसिध्यति । स्वेभ्यो दीयते स्वस्मिन् धीयते वा स्वेन धनेन धीयते वा इति स्वधा अन्नं तच्च साधारणत्वेन अन्नमात्राभिधायकत्वेऽपि सति "स्वधा वै पितॄणामन्नम्" इतिश्रुतेर्विशिष्टतया पित्रन्नपरमिहोपलक्षयति । तस्मात्-स्वधया अस्माभिः श्रद्धया दत्तेन श्राद्धीयेन पित्रन्नेन मदन्तः स्वात्मानं तर्प्पयन्तः तेन परितुष्टाः सन्तः अस्मान् अधिब्रुवन्तु अवन्तु चेति पूर्ववत्समानमिहाप्यनुसन्धेयम् । पितुरेकत्वेऽपि सति पितर इत्यादिषु सर्वत्र पूजार्थं गुरुत्वाद्बहुवचनं तदीयसहचरभृत्याद्यपेक्षया वा बहुवचनमिति पूर्ववद्बोद्धव्यम् । तथाऽस्मानित्यत्राऽपि आत्मनो गुरुत्वात्पूजार्थं बहुवचनं स्वभार्य्यापुत्राद्यपेक्षया वा बहुवचनमित्यनुसन्धेयं च । एकोद्दिष्टेऽप्यनूह एव पठनीयोऽयं मन्त्रः । तत्राऽपि पित्रेकत्वे बहुवचनं पूजार्थं बोध्यम् । एवं मातुरेकोद्दिष्टेऽप्यविकृत एव पाठो युक्तस्तत्र पितृपदस्य मृतमात्रपरत्वात्पितृपदेन मातुरपि ग्रहणं निःशङ्कमेवेत्यवगन्तव्यम् । एवमन्यस्याप्येकोद्दिष्टे बोद्धव्यम् ॥३॥

---

१—तायदस्यायनं पूर्वमित्यपि पाठान्तरं बहुषु पुस्तकेषु दृश्यते ।

ॐ ऊर्ज्जं व्वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ॥
स्वधास्थ तर्प्पयत मे पितॄन् ॥ ४ ॥

लिङ्गोक्तदेवत्याप्रजापतिदृष्टा एकोना त्रिपदा विराट् पितामहतर्प्पणे प्रथमाञ्जलिप्रदाने विनियुक्ता ऋगियम्। आप्नुवन्ति प्राप्नुवन्ति सर्वमिति आपः, तत्सम्बुद्धौ हे आपः, यूयं स्वधास्थ स्वधाशब्दस्य अव्यये पठितत्वात् "अव्ययादाप्सुपः" इति सुपो लुग्द्रष्टव्यः। स चायं स्वधाशब्दः पित्रादिकमुद्दिश्य त्यागार्थे वर्त्तते "स्वधाकारं पितरः" इति श्रुतेः। तेनायमर्थः। पितॄनुद्दिश्य मया त्यक्ताः भवथेत्यर्थः। यद्वा "स्वधा इत्यन्ननामेति निघण्टुः" "स्वधावै पितॄणामन्नम्" इति श्रुतेश्च स्वधाशब्दोऽन्नवाची तेनायमर्थः। हे आपः, यूयं स्वधास्थ पितॄणामन्नरूपा भवथेत्यर्थः। यद्वा स्वधाशब्दस्य उदकनामसु निघण्टौ पठितत्वात् स्वधाशब्द उदकवाची तेनायमर्थः। हे आपः, यूयं स्वधास्थ पितॄणामुदकरूपाभवथेत्यर्थः। ("स्वधाशब्दस्य अन्नार्थपक्षे उदकार्थपक्षेच "सुपांसुलुगिति" जस्विभक्तेर्लुकि जसः स्थाने सु इत्यादेशे वा तस्य हल्ङ्याादिना लोपे स्वधेति प्रथमाबहुवचनस्थाने रूपं बोध्यम्।) अत एव हे आपः, जलानि, यूयं मे मम पितॄन् तर्प्पयत तृप्तान् कुरुत पितृशब्दस्य श्राद्धार्हमृतपुरुषमात्रपरत्वादिह पितृशब्दः पितामहपरस्तत्र पितामहैकत्वेऽपि गुरुत्वाद्बहुवचनं तदीयसहचरभृत्याद्यपेक्षया वा बहुवचनम्। हे आपः, अबधिष्ठात्र्यो देवताः, यूयं मद्दत्तेनाम्बुना मत्पितामहानतीव तृप्तान्कुरुतेति भावः। तथा हे आपः, अबधिष्ठात्र्यो देवताः, यूयं किम्भूताः ऊर्ज्जं "ऊर्ज्ज बलप्राणनयोः (चु० प०)" इत्यस्मात्क्विप् उर्ज्जयति सर्वान्मनुष्यपश्वादीन् बलयति पानादिना दृढशरीरान्करोतीति ऊर्क् उर्ज्जयति पानादिना प्रणयति प्रकर्षेण चेष्टयतीति वा ऊर्क् एतद्व्युत्पत्तिद्वयेन वृष्टिगतो जलात्मकरस एव ऊर्ज्जशब्देनोच्यते "योवृष्टादूर्ग्रसो जायते" इतिश्रुतेः। एतद्वृष्टिगतजलात्मकरसोत्पन्नखानपानादिपदार्थभक्षणेनैव मनुष्यपश्वादिस्त्रीजातिषु क्षीरोत्पत्तिरिति सकललोकवेदप्रसिद्धिः। तम्-ऊर्ज्जं पूर्वोक्तं रसविशेषम् अमृतं "पीयूषममृतं सुधे"ति कोषादौ दर्शनादमृतं पीयूषं देवानां भक्ष्यपदार्थविशेषस्तत्तुल्यम् अमृतस्वादोपेतम् अतीव मधुरं घृतं "घृ क्षरणदीप्त्योः,, एतन्निष्ठान्तस्य रूपं जिघर्त्तीति घृतं क्षरणशीलं दीप्तं स्वच्छं वा कीलालं "कील बन्धने" कीलनं कीलः बन्धः तमलतीति कीलालम् "अलं पर्य्याप्तनिवारणयोः" इह तु निवारणार्थः बन्धनस्यनिवारणमेव बन्धनाभावत्वं द्योतयति तच्च स्रोतस्योदके प्रसिद्धमेव नहि स्रोतस्योदकं सेतुबन्धनादिना कश्चिन्निरोद्धुं शक्नुयात् एवम्भूतं परिस्रुतं द्रवत्वात्परिस्रवणशीलं पयः जलं वहन्तीः वहन्त्यः स्रवन्त्यः। यतो यूयं एवं विधाः स्थ अतो मत्पितॄन्तर्प्पयतेतिभावः ॥

अथवा ऊर्ज्जमित्यन्ननामसु पठितत्वादूर्ज्जम् अन्नम्, अमृतं देवानामन्नं, घृतं प्रसिद्धं, पयः क्षीरं दुग्धं, कीलालं पशुं, कीलं बन्धनयोग्यमस्यास्तीति कीलालः पशुस्तं तथोक्तम् अर्थात्खाद्यपशुमांसमयं द्रवीभावपदार्थं रसविशेषं परिस्रुतं परिस्रवणशीलं सुस्वादु जलं च वहन्त्यः स्रवन्त्यः (अत्र कीलशब्दादस्त्यर्थे रप्रत्ययस्तस्य छान्दसत्वाल्लत्वं कीलशब्दस्य दीर्घत्वं चेत्यनुसन्धेयम्।) एतन्नानाविधः स्वादुविशेषः सर्वपदार्थेषु अब्देवताप्रसादत एव भवतीत्यपि आगोपालाङ्गनादिप्रसिद्धिः ॥

अथवा ऊर्ज्जमन्नम्, अमृतं देवान्नं, घृतं प्रसिद्धं, पयः दुग्धं, कीलालं पशुं, परिस्रुतं

परिस्रवणशीलमन्यद्द्रव्यादिकं, वहन्त्यः प्रापयन्त्यः। अब्देवताप्रसादादन्नादिसर्वपदार्थप्राप्तिर्भवति। अपां वैषम्यादचिकित्स्यनानारोगाद्युत्पत्तौ अन्नादिप्राप्तिरपि अप्राप्तिरिव रोगिणां कृते प्रतिभाति। अतोऽन्नादिप्रापयित्र्यः आप एव वर्त्तन्ते। एतदभिप्रायेणैव 'ऊर्ज्जं वहन्त्यः प्रापयन्त्यः' इत्युक्तं, वहन्तीरिति "वाछन्दसी"ति पूर्वसवर्णदीर्घे वहन्तीरिति रूपं भवतीत्यनुसन्धेयम्॥ यतो यूयमेवं विधाः स्थ अतो मत्पितॄनर्थान्मत्पितामहान्मद्दत्तेनाम्बुना यूयं तर्प्पयतेति समस्तार्थः॥ पार्वणादिश्राद्धपक्षे हे आपः यूयं स्वधास्थ पितॄणामन्नरूपा भवथ। अतो यूयं मे मम पितॄन् पितृपितामहप्रपितामहान्मातामहप्रमातामहवृद्धप्रमातामहाँश्च तर्प्पयत तृप्तान्कुरुतेत्यर्थः। शेषं पूर्ववत्समानम्। एकोद्दिष्टश्राद्धेऽप्यविकृत एव पठितव्यो ऽयंमन्त्रः। तत्र पित्रेकत्वे गुरुत्वात्पूजार्थं बहुवचनं, व्यत्ययेन वा एकवचनस्थाने बहुवचनं सुपां सुपो भवन्तीति वचनात्। एवं मातुरेकोद्दिष्टपक्षेऽपि पितृशब्दस्य मृतमात्रपरत्वात् पितृपदेनैव मातुरपि ग्रहणं सुस्पष्टमेव। तत्राऽपि बहुवचनं पूजार्थमार्षत्वाद्व्यत्ययेन वा एवमन्यस्याप्येकोद्दिष्टपक्षे बोद्धव्यम्। वेदस्य रूपान्तरं कर्त्तुं न शक्यते अपौरुषेयत्वादूहे मानाभावाच्च। कात्यायनपारस्करजैमिनीप्रभृतीनामपि ग्रन्थेषु मन्त्रोहप्रसङ्गे एवं विधस्थलेषु ऊहस्यानभिहितत्वादनूह एव पठनीय इति सिद्धान्तः। एकोद्दिष्टपद्धतौ प्रमाणमन्तरैव यदूहं कृत्वा "तर्पयत पितॄन्" इत्यत्र "तर्पयत पितरम्" मातृपक्षे "तर्पयत मातरम्" इत्येवं व्यलेखि तदयुक्तमेवेत्यवगन्तव्यम्॥ ४॥

**पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः। अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम्॥ ५॥**

पितृदेवत्यो यजुर्मन्त्रोऽयम्। स च पितामहतर्प्पणे द्वितीयाञ्जलिप्रदाने विनियुक्तः कात्यायनेन। "स्वधा इत्युदकनामे"ति निघण्टुः। स्वधामुदकमर्थात्तर्पणोदकं प्रति यन्ति गच्छन्तीत्येवंशीलाः स्वधायिनः। "इण गतौ" इति धातोः "सुप्यजातौणिनिस्ताच्छील्ये" इति णिनिप्रत्ययो बोध्यः। तेभ्यः स्वधायिभ्यः स्वधां प्रति गमनशीलेभ्यः पितृभ्यः जनकेभ्यः स्वधानमः स्वधाशब्दस्य नमः शब्दस्य च अन्ननामसु पठितत्वात् स्वधासंज्ञकम् अन्नम् अन्नमित्युदकनामसु निघण्टौ पठितं तस्मात् अन्नमिह प्रकरणवशात्तर्पणोदकमुपलक्षयतितन्मया पितामहतर्प्पणात्प्रागेव मन्त्रत्रयेण अञ्जलित्रयं दत्तमिति शेषः। यद्वा नमः अन्नम् अर्थात्तदिह तर्पणोदकं स्वधा स्वधाशब्देन मया परित्यक्तं "स्वधाकारं पितरः" इति श्रुतेः। किञ्च इदानीं स्वधायिभ्यः स्वधां प्रति गमनशीलेभ्यः पितामहेभ्यः स्वधानमः स्वधासंज्ञकमन्नम् अर्थात्तर्पणोदकं मया दीयते इति शेषः। यद्वा नमः अन्नं तदिह प्रकरणवशात् तर्पणोदकं स्वधा स्वधाशब्देन मया परित्यज्यते इतिशेषः। पितामहेभ्यः स्वधाकारेण दीयत इतिभावः। यद्वा स्वधायिभ्यः पितामहेभ्योनमः नमस्कारोऽस्त्वितिशेषः। तथा स्वधा स्वधासंज्ञकमन्नमर्थात्तर्पणोदकं तदपि नमस्कारपूर्वकमस्त्वितिशेषः। पितृभ्यः स्वधायिभ्यः पितामहेभ्यः स्वधायिभ्य इति सर्वत्र पित्रेकत्वे पितामहैकत्वे च गुरुत्वात्पूजार्थं बहुवचनं तदीयसहचरभृत्याद्यपेक्षया वा बहुवचनमित्यनुसन्धेयम्। अतः परञ्च स्वधायिभ्यः स्वधां प्रति गमनशीलेभ्यः

प्रपितामहेभ्यः स्वधानमः स्वधासंज्ञकमन्नमर्थात्तर्पणोदकं मयाग्रे दास्यते इति शेषः। इदन्तु प्रपितामहानां प्रत्ययार्थमिह अभिहितं वस्तुतस्तु तदीयतर्प्पणन्तु पितामहतर्प्पणानन्तरमग्रे भविष्यति। तदीयमर्नास वैषग्यं नैराश्यं च मास्तु एतदर्थमिह प्रतिज्ञातमित्याशयो ध्वन्यते अनेनाप्रस्तुतप्रसङ्गेन। अक्षन्पितर इति। पितृशब्दोऽत्र पितामहपरः प्रकरणसाहचर्यात् पितृशब्दस्य मृतमात्रपरत्वाच्च। ततोऽयमर्थः पितरः पितृशब्दाभिधेयाः पितामहाः अक्षन् "अद भक्षणे" "घस्लृ अदने" इत्यन्यतराद्धातोर्लोडर्थे लुङ् "छन्दसि लुङ्लङ्लिटः" इतिपाणिनिवचनात्। अदन्तु भक्षयन्त्वित्यर्थः। स्वधावै पितॄणामन्नमिति श्रुत्याऽभिहितं तत्साहचर्य्यादेव अक्षन्नित्युक्तं भवति श्राद्धप्रकरणे तु तदेव सत् किन्त्विह अन्नस्याप्युदकनामसु पठितत्वात् तर्प्पणप्रसङ्गे पानमेवादनम्। अन्नस्य अदनं जलस्यपानमित्येव प्रसिद्धं यत्र चैतदनुपपन्नं तत्रौपलक्षणिकं तदुपचर्य्यते अतो मन्त्रवाक्ये न कश्चिद्विरोधः। तथा पितरः पितृशब्दाभिधेयाः पितामहाः अमीमदन्त मद्दत्तेनाम्बुना तृप्ता भवन्त्वित्यर्थः। तथा पितरः पितृशब्दाभिधेयाः पितामहाः अतीतृपन्त मद्दत्तेनाम्बुना तर्प्पिताः सन्तोऽभीष्टदानेन मामपि तर्प्पयन्त्वित्यर्थः। एतदेव पितॄणां पितृत्वं यदभीष्टदानेन पुत्रादीन् पान्ति रक्षन्तीति पितर इति पितृशब्दनिर्वचनमनुसन्धेयम्। पितॄन्प्रति एवं परोक्षमुक्त्वा इदानीं प्रत्यक्षं यथास्यात्तथाऽऽह। हे पितरः पितृशब्दाभिधेयाः पितामहाः यूयं शुन्धध्वं भास्वन्मूर्त्तित्वात्स्वयं शुद्धा अपि मद्दत्तेनाम्बुना स्नानपानादिद्वारा शुद्धाः भवत। शुन्धध्वमित्यत्र अन्तर्भावितण्यर्थो वा ततश्च मामपि शोधयत पापप्रक्षालनेन पवित्रीकुरुतेत्यर्थः। अमीमदन्तेति 'मद तृप्तियोगे चुरादिरात्मनेपदी' इत्यस्माल्लोडर्थे लुङि चङि णिलोपादौ रूपम्। अतीतृपन्तेति 'तृप तृप्तौ चुरादिः परस्मैपदी' ततो लोडर्थे लुङि व्यत्ययेनात्मनेपदे णिलोपादौ रूपम्। शुन्धध्वमिति 'शुन्ध शुद्धौ भ्वादिः परस्मैपदी' ततो व्यत्ययेनात्मनेपदे लोण्मध्यमपुरुषबहुवचने रूपम्॥ ५॥

ये चे॒ह पि॒तरो॒ ये च॒ नेह॒ याँश्च॑ वि॒द्म याँ२॥ऽ उ॑ च॒ न प्र॑वि॒द्म।

त्वं वे॑त्थ॒ यति॒ ते जा॑तवेदः स्व॒धाभि॑र्य॒ज्ञꣳ सुकृ॑तं जुषस्व॥ ६॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् पितामहतर्प्पणे तृतीयाञ्जलिप्रदाने विनियुक्ता ऋगियम्। "अग्नये कव्यवाहनाय स्वाहे"तिश्रुतेः कव्यवाहनोऽग्निरेव कव्यनामकस्य पित्रन्नस्य वोढेत्यवगम्यते। अतोऽग्निं प्रार्थयते तथाहि हे जातवेदः जातप्रज्ञ, अथवा हे जातवेदः जातधान पितॄणां हविः प्रापकाग्ने, ये पितरः पितृसंज्ञाभिधेयाः अस्मत्पितामहा इह लोके सन्तीतिशेषः। आतिवाहिकशरीरं परित्यज्य कारणशरीरद्वारा अर्थाच्चान्द्रमार्गेण तत्कलया भूलोकं प्राप्य पार्थिवखानपानादिभक्ष्यपदार्थेषु कारणत्वमुपेत्य मातृपितृभक्षिततत्तत्पदार्थजनितमातृपितृगतशुक्रशोणितरूपाश्रयत्वेन स्थूलशरीरं प्राप्य कुत्रचिज्जन्मग्रहणं लभन्ते स्मेत्यभिप्रायः। तथा ये च इह लोके न सन्तीतिशेषः। अर्थादिदानीम् आतिवाहिकशरीरादितो मुक्ता अभूवन्निति भावः। ये अस्मत्पितरः इदानीं स्वर्गे वर्त्तन्ते ब्रह्मसायुज्यं वा प्राप्ता इत्यभिप्रायः। तथा उ याँश्च पितॄन् वयं विद्म केवलं हि भूतपूर्वस्थूलशरीरगतनामगोत्रप्रथितान् नाम गोत्रतो जानीमः। 'उकारः पादपूरणे, किन्तु वास्तविकतया याँश्च न प्रविद्म प्रकर्षेण न जानीमः अर्थादातिवाहिकशरीरप्राप्त्यनन्तरमिदानीं कासते मरणानन्तरं कुत्र गताः कुत्र च जन्मग्रहणं कृतवन्तो न वा कृतवन्त इत्यादि विशेषरूपेण न जानीमो वयमज्ञानापिहि-

तत्त्वाच्चर्मचक्षुष्मत्त्वाच्चेत्यभिप्रायः । हे जातवेदः, देवपितृषु हव्यकव्यवाहकत्वेन तद्व्यतिरिक्तेषु समस्तभूतग्रामेषु जाठराग्निरूपत्वेन च सर्वत्र त्वदवस्थानात्त्वं ते तान् पूर्वोक्तान्पितॄन् पितृशब्दत्वेन प्रथितानस्मत्पितामहान् वेत्थ जानासि कुत्र गताः सन्त इदानीं वर्त्तन्तेऽस्मत्पितर इति त्वदन्यैर्नज्ञातुं शक्यते। देवेभ्यो हविः प्रदानार्थं देवलोके पितृभ्यः कव्यप्रदानार्थं पितृलोके सर्वप्राणिगतभुक्तान्नपानादिपाचनार्थमिह भूलोके च सर्वत्र अप्रतिहतगतित्वात्तवैव एतादृशी शक्तिरस्ति नान्यस्य । अतोऽस्माभिरेवं प्रार्थ्यते यत् यत्र कुत्रचिदपि गतान् तान् पितॄन्त्वं वेत्थेति, यत्राऽस्मत्पितरः पितृशब्दाभिधेयाः पितामहास्तिष्ठन्ति तत्र अस्मद्दत्तं तर्प्पणोदकं प्रापयेत्याशयः । तान् कथं भूतान् यति यतीन् शुचीन् नित्यनैमित्तिककर्म्मानुष्ठानैर्निष्पापानित्यर्थः । यतीत्यत्र "सुपां सुलुगिति" द्वितीया बहुवचनस्य शसो लुक्" ते इत्यत्र "सुपां सुपोभवन्ती"ति द्वितीया बहुवचनस्थाने प्रथमा बहुवचनं बोध्यम्। ये चेह पितर इत्यादिषु सर्वत्र पितामहैकत्वे गुरुत्वाद्बहुवचनं तदीयसहचरभृत्याद्यपेक्षया वा बहुवचनमित्यनुसन्धेयम् । हे जातवेदः, यत एतादृशान्पूर्वोक्तान्पितॄन्त्वं वेत्थ अतस्तदर्थं स्वधाभिः सुकृतं स्वधाकारैः सुसंस्कृतं स्वधारूपैः पितॄणामन्नैर्वा सुष्ठु यथास्यात्तथा कृतं सम्पादितं यज्ञं पितृपदोपादितपितामहतर्प्पणरूपं पितृयजनाख्यं कर्म्म जुषस्व सेवस्व संसेव्यच तान्पितॄन्प्रति प्रापय अस्मद्दत्तेनाम्बुना पितॄँस्तर्प्पयेत्यर्थः । एवमेतन्मन्त्रार्थस्मरणपूर्वकमनेन मन्त्रेण पितामहतर्प्पणे तृतीयाञ्जलिः प्रदातव्यः । पार्वणश्राद्धपक्षे पितृपदेन पित्रादित्रिकं मातामहादित्रिकञ्चानुसन्धेयम् । एकोद्दिष्टे तु पितुरेकत्वेऽपि गुरुत्वाद्बहुवचनं स्वधाभिर्यज्ञमित्यत्र स्वधापदेन पितॄणामन्नं यज्ञपदेन च तत्तच्छ्राद्धरूपं पितृयज्ञमित्यनुसन्धेयम्, अन्यत्सर्वं समानमेव ॥ ६ ॥

ॐ मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः ।

माध्वीर्नः सन्त्वोषधीः ॥ ७ ॥

गौतमदृष्टा विश्वदेवदेवत्या पितृदेवत्या वा गायत्री प्रपितामहतर्पणे प्रथमाञ्जलिप्रदाने विनियुक्ता ऋगियम् । अतिरिक्तमिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । "मदीहर्षे (दि० प०)" अस्माद्बाहुलकादुप्रत्ययोधान्तादेशश्च। माद्यन्ति हि तेन पीतेन प्राणिन इति मधु। अथवा "मन ज्ञाने (दि० आ०)" इत्यस्मात् निदिति (उ. १,९) वर्त्तमाने "फलिपाटिनभिमनिजनां०-(उ. १, १८)" इत्युप्रत्ययो धान्तादेशश्च । मन्यते अतिशयेन जनैरिति मधु। यद्वा मनेर्विहितो बाहुलकान्मादयतेरप्यौणादिक उप्रत्ययस्तथा णिलोपो धान्तादेशश्च बोद्धव्यः। मादयति पीतं सदिति मधु । ततो मधुशब्दादस्त्यर्थे मतुप्प्रत्ययश्च । तस्य मधुमच्छन्दस्य प्रथमाबहुवचने मधुमन्त इति प्राप्ते इष्ठेयसोरविद्यमानेऽपि बहुलं छन्दसीति सर्वविधीनां बाहुलकाद्विन्मतोर्लुगिति मतुपो लोपे सुपां सुलुगिति विभक्तिलोपे "मधु" इति रूपं भवति । "ऋतमित्युदकनामे"ति निघण्टुः । ऋतमुदकमर्थात्तर्पणोदकमिच्छतीति ऋतयति, ऋतयतीत्यत्र ऋतशब्दात्क्यचि 'क्यचि चे'ति प्राप्तस्येत्वस्य 'न छन्दस्यपुत्रस्ये'त्यभावः । 'अश्वाघस्यात्' इत्यश्वाघयोरेव क्यच्यात्वविधानात् 'अकृत्सार्वधातुकयोः' इत्यात्वमपि न संहितायां तु छान्दसो दीर्घः । तथाहि 'सनाद्यन्ता धातवः' इति धातुत्वे ऋतयतेः शतरि ऋतयतीति ऋतयन् तस्मै ऋतयते इति प्राप्ते ऋतशब्दस्य संहितायां दीर्घे चतुर्थ्येकवचने ऋतायते इति

रूपं भवति। तथा सत्ययं मन्त्रार्थः। ऋतायते ऋतमुदकमर्थादस्मद्दत्तं तर्पणोदकमिच्छते नोऽस्माकं प्रपितामहायेति शेषः वाता वायवः मधु मधुमन्तः तृप्तिकरसुगन्धोपेतास्त्वगिन्द्रिय-सुखकराः सन्तो वान्विति शेषः। "बाहुलकादिह मतुपो लुग्द्रष्टव्यः मधुमानित्यग्रे मतुप्प्रत्ययदर्शनादेव सर्वत्र मधुशब्दाग्रे मतुब् ज्ञेयः" तथा ऋतायते ऋतयते अस्मद्दत्तोदकमिच्छते नोऽस्माकं प्रपितामहाय सिन्धवः स्यन्दमाना नद्यः समुद्रा वा मधु क्षरन्ति क्षरन्त्वित्यर्थः। इह क्षरतेर्लोडर्थे लडिति बोद्धव्यम् 'तिङां तिङः ( पा० ७।१।३९ )' इति वचनात्। मधु इत्युदकनामेति निघण्टुः, शब्दव्युत्पत्तिस्त्वादावेवोक्ता मधुमन्मधुरसोपेतं सुस्वादु शीतलजलं नद्यः स्रवन्त्वित्याशयो ध्वन्यतेऽनेन मन्त्रांशेनेतिभावः। इह तर्पणकर्मणि अस्मत्प्रदत्तं यदुदकं तत्तु स्वादुरसोपेतं सत् अस्मत्प्रपितामहस्य तृप्तिकरं सुतरामस्तु किन्तु नद्यादिस्थमपि यदुदकं तदपि तदर्थं मधुमदस्त्वित्यभिप्रायः। जलवाय्वोरेव शोभनत्वे सति सर्वेषां सुखं तयोः प्रतिकूलत्वे च नानारोगाद्युत्पत्तौ सत्यां सर्वेषामेव दुःखं च बोभवीतीत्यवगम्यते "येषां वर्षमिषवः, येषां वात इषवः" इति श्रुतेः। अतश्च यत्र कुत्रापि जन्मग्रहं प्राप्तवतोऽस्मत्प्रपितामहस्य सर्वतो भावेन सुखमस्त्वित्यभिप्रायेण मन्त्रेणानेन तर्प्पणं मया क्रियते इति भावः। तथा ऋतायते अस्मद्दत्तोदकमिच्छते नोऽस्माकं प्रपितामहाय ओषधीः माध्वीः सन्तु ( वा छन्दसीति जसि पूर्वसवर्णदीर्घः ) ओषधयः व्रीह्यादयः माध्व्यः मधुमत्यः मधुररसोपेताः भवन्तु। पार्वणश्राद्धे व्रीह्याद्योषधीनां कव्याख्यहविष्ट्वेन सद्भावादिह ओषधीनामपि मधुमयत्वमाशास्यते इति भावः। माध्वीरित्यत्र तु "ऋत्व्यवास्त्व्यवास्त्वमाध्वी०" इत्यादिना मधुशब्दादणि स्त्रियां यणादेशो निपात्यते। अन्यदुक्तमेव ॥ ७ ॥

मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः।
मधुद्यौरस्तु नः पिता ॥ ८ ॥

गौतमदृष्टा विश्वदेवदेवत्या पितृदेवत्या वा गायत्री प्रपितामहतर्पणे द्वितीयाञ्जलिप्रदाने विनियुक्ता ऋगियम्। पूर्ववदतिरिक्तमिति कारिकया हीनपदमध्याहृत्य व्याख्यायते। नः अस्माकं प्रपितामहाय नक्तं मधु मधुमत् अस्त्विति शेषः। "नक्तमिति रात्रिनामेति" निघण्टुः रात्रिः मधुमती भवत्वित्यर्थः। ननु रात्रौ पितृकार्य्यस्यासद्भावात् प्रपितामहस्य कृते रात्रेर्मधुमतीत्वं कथमाशास्यत इति चेत्तत्राह "पित्रे रात्र्यहनी मासः प्रविभागस्तु पक्षयोः। कर्म्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्वरी"ति ( म० १।६६ ) स्मृतेः। पितृरात्रिः शुक्लपक्षरूपा तत्राऽपि दैनिकतर्प्पणनित्यश्राद्धादिपितृकार्य्यस्य सद्भावादिह तर्प्पणप्रसङ्गे प्रपितामहस्य कृते रात्रेर्मधुमतीत्वाशंसनं युक्तं प्रत्यहं तर्प्पणादिकर्म्मणि तर्पणादिकर्त्तृप्रदत्तमधुस्वादोपेतसुधासमस्वधान्नरूपतर्पणोदकादिप्राप्तिद्वारैव शुक्लपक्षरूपायाः पितृरात्रेर्मधुमतीत्वं प्रपितामहतृप्तावुपकरोतीत्यभिप्रायेणैव मधुनक्तमित्याशास्यते, इत्यभिप्रायः। तथा उषस उत उतशब्दोऽप्यर्थे नोऽस्माकं प्रपितामहस्य कृते उषसोऽपि मधुमत्यः मधुररसोपेताः सन्त्विति शेषः। प्रपितामहस्य तृप्त्यर्थं प्रातःकाला अपि तर्प्पणादिप्रवर्त्तकत्वेन मधुमन्तो भवन्त्विति भावः। प्रातः स्नानोत्तरमेव पितृतर्प्पणस्य सद्भावात्। तथा पार्थिवं रजः मधुमत् अस्त्विति शेषः रज इति लोकनामसु पठितं "लोका रजाँस्युच्यन्ते" इति यास्कः। पृथिव्या इदं पार्थिवं पृथिवीशब्दा-

दणि एतावद्रूपं भवति। अस्मत्प्रपितामहस्य कृते पार्थिवं रजः पृथिवीलोकः मधुररसोपेततया तृप्तिकारको भवत्विति भावः। तथा नोऽस्माकं प्रपितामहाय पिता पितृवत्पालकः द्यौः द्युलोकः मधु मधुमानस्तु। "असौ वै पितेयं माता" (१२।८।१।२१) इति श्रुतेर्मातृरूपा पृथिवी पितृरूपश्च द्युलोकस्तयोर्मध्ये यावन्तो भोग्यपदार्थाः सन्ति तत्सर्वभोग्यपदार्थप्रदानेन भूलोकद्युलोकौ मातापितराविव तृप्तिकारकौ भवतामित्यर्थः। अस्मत्पितामहो यत्र कुत्रचिदस्ति तत्र तत्तृप्त्यर्थं नक्तं रात्रिः उषसः प्रातःकालाः पार्थिवं रजः भूलोकः पितृवत्पालको द्युलोकश्चैते नक्तादयो द्युलोकान्ताः प्रत्येकमपि मधुमन्तः सन्तो मधुमत्त्वीयांशद्वारा अस्मत्प्रपितामहं तर्प्पयन्त्विति समस्तार्थः॥ ८॥

मधुमान्नो व्वनस्पतिर्मधुमाँ २॥ऽअस्तु सूर्य्यः।
माध्वीर्गावो भवन्तु नः॥ ९॥

गौतमदृष्टा विश्वदेवदेवत्या पितृदेवत्या वा गायत्री प्रपितामहतर्प्पणे तृतीयाञ्जलिप्रदाने विनियुक्ता-ऋगियं पूर्ववदेव अतिरिक्तमिति कारिकया हीनपदाध्याहारेण व्याख्यायते। "द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानामि" तिश्रुतेर्देवयानपितृयानमार्गद्वयस्य सद्भावत्वावगमात्तत्राऽपि "स एष देवयानो वा पितृयाणो वा पन्थास्तत्रैकस्य सोमोऽन्यतरस्य सूर्य्यः पतिरि" तिश्रुत्या चन्द्रस्य पितृयाणाधिपत्यं सूर्य्यस्य देवयानाधिपत्यञ्चावगम्यते तत्र आयन्तु नः पितर इत्यादिषु कुत्रचित्पथिभिर्देवयानैः, पथिभिः पितृयाणैरित्यादि श्रुतिवाक्यतस्तदुभयत्र पितृगमनस्य सद्भावात्पित्राद्यर्थं सोमसूर्य्ययोर्मधुमत्त्वं तत्पुत्रादिभिराशास्यते। तथा हि नोऽस्माकं प्रपितामहाय वनस्पतिः सोमः मधुमानस्त्विति शेषः। स्वीययाऽमृतकलया मत्प्रपितामहस्य तृप्तिकारको भवत्वित्यर्थः। तथाऽस्माकं प्रपितामहाय सूर्य्यः मधुमानस्तु मधुमत्त्वीयविशिष्टभागप्रदानेन मत्प्रपितामहस्य तृप्तिकारको भवत्वित्यभिप्रायः। तथा गावः माध्वीः सन्त्विति शेषः। माध्वीरित्यत्र "वा छन्दसी" ति पूर्वसवर्णदीर्घश्छान्दसः गावः धेनवः माध्व्यः मधुमत्यो रसवत्यो भवन्त्वित्याशयः। एवमाशास्यानेन मन्त्रेण प्रपितामहतर्प्पणं क्रियतेऽस्माभिः। सोमादीनां मधुमत्त्वे सति सुतरां पितृतृप्तिर्भविष्यतीति नात्रकश्चित्सन्देहः। एवं नवभिर्मन्त्रैः पितृपितामहप्रपितामहाँस्तर्प्पयेत्तत्राऽयं क्रमः। प्रथममुदीरतामङ्गिरसोन आयन्तु न इति त्रिभिर्मन्त्रैरञ्जलित्रयं पित्रे दत्वा ऊर्जं वहन्तीः पितृभ्यः स्वधायिभ्यः ये चे हेति त्रिभिर्मन्त्रैरञ्जलित्रयंपितामहाय दत्वा मधुव्वाता इति तृचेन प्रत्यृचमेकैकमञ्जलिं प्रपितामहाय दद्यात्। तर्पणसूत्रे तदुक्तं कात्यायनेन "उदीरतामङ्गिरस आयन्तुन उर्ज्जवहन्ती पितृभ्यो येचेह मधुव्वाता इति तृचञ्जपन् प्रसिञ्चेत्तृप्यध्वमिति"॥ ९॥

नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै-नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मैतद्वः पितरो व्वास ऽआधत्त॥१०॥

पितृदेवत्यः प्रजापतिदृष्टो यजुर्मयोऽयं मन्त्र इह मातामहादितर्प्पणे विनियुक्तः।

"त्रिर्नमो व इत्युक्त्वा मातामहानां चैवमि"ति कात्यायनवचनात्। एतद्वै पितॄणां पितृत्वं यदभीष्टदानेन पुत्रादीन्पान्तीति पितर इति पितृशब्दनिर्वचनसामान्यात्पित्रादीनां मातामहादीनां च पितृत्वं सममेव। तथाऽपि मातृपक्षीयाणां मातामहादीनां वसन्तादिषड्तुरूपेण रसादिप्रदानपूर्वकपालनकर्त्तृत्वात् पितृत्ववैशिष्ट्यं द्योतयति एतन्मन्त्रसमुदायः। तथा हि हे पितरः, पितृशब्दाभिधेया मातामहाः, वः युष्माकं सम्बन्धिने रसाय रसरूपाय वसन्ताय तन्नामकाय ऋतवे नमः नमस्कारोऽस्त्वितिशेषः। यतो वसन्ते मध्वादयो रसा वृक्षेषु जायन्ते अतो रसशब्देन वसन्त एवोच्यते। "षड्वा ऋतवः पितरः" इति श्रुतेर्वसन्तादयः पितॄणां स्वरूपभूता एव। अतो हे पितरः, पितृशब्दाभिधेयाः मातामहाः, एतद्रूपेभ्यो युष्मभ्यं नमः, नमः शब्दो नमस्कारार्थोऽन्नार्थश्च, इह तर्प्पणप्रसङ्गानुरोधेन नम इत्यन्नमपि सत् अस्मद्दत्तं तर्प्पणोदकमेवोपलक्षयति तद्युष्मभ्यमस्त्वित्यर्थः। अस्मद्दत्तेनाम्बुना युष्मत्तृप्तौ युष्मद्रूपो वसन्तश्च मध्वादिप्रचुररसप्रदानेन अस्मानपि तर्प्पयिष्यतीत्यभिप्रायः। मातामहैकत्वेऽपि बहुवचनं पूजार्थं तदीयसहचरभृत्याद्यपेक्षया वा। एवमग्रेतनेष्वपि मन्त्रेषु बोद्धव्यम्। तथा हे पितरः, पितृशब्दाभिधेयाः मातामहाः, वः युष्माकं सम्बन्धिने शोषाय शुष्यन्त्योषधयो यत्र सहि शोषो ग्रीष्मस्तस्मैनमः तद्रूपेभ्यो युष्मभ्यं नमः नमस्कारोऽस्तु अस्मद्दत्तोदकंवास्त्वितिशेषः। अस्मद्दत्तेनाम्बुना युष्मत्तृप्तौ युष्मद्रूपो ग्रीष्मश्चाऽस्माकं कृते यवादिव्यतिरिक्ता ओषधीर्न शोषयिष्यति, यवाद्योषधीस्तु शोषयित्वा झटिति परिपाकेन छेदनार्हाः सम्पाद्य अस्मानप्युपकरिष्यतीत्याशयः। तथा हे पितरः, पितृशब्दाभिधेयाः मातामहाः, वः युष्माकं सम्बन्धिने जीवाय जीवन्ति भूतानि प्राणिनो यस्मादिति जीवः जीवनहेतुर्जलपदार्थः, अत एव "जीवनं भुवनं वनमि"ति जलाभिधानमुक्तम्। तज्जीवनहेतुकजलप्रदानकर्त्तृत्वाज्जीवो वर्षर्त्तुस्तस्मै नमः तद्रूपेभ्यो युष्मभ्यं नमस्कारोऽस्तु नमोऽन्नमस्मद्दत्तोदकं वास्त्वितिशेषः। युष्मत्तृप्तौ जीवनहेतुजलप्रदो वर्षर्त्तुश्च अस्मभ्यमपि जलं दास्यतीत्यभिप्रायः। तथा हे पितरः, पितृशब्दाभिधेया मातामहाः, वो युष्माकं सम्बन्धिन्यै स्वधायै स्वमात्मानं दधातीति स्वधा "आतोऽनुपसर्गे कः" ('पा० ३।२।३)' इति कप्रत्ययः। अथवा स्वेभ्यो दीयते स्वस्मिन्धीयते वा स्वेन धनेन धीयते वा इति स्वधा तस्यै स्वधायै नमः। "स्वधेत्यन्ननामे"ति निघण्टुः। स्वशब्दोपपदाद्धधातेः (जु. उ.) गेहे क इति कप्रत्ययो बाहुलकाद्भवति। स्वधाशब्देन अन्यत्राप्यन्नमुच्यते यथा ऋग्वेदे "विश्वाहि माया अवसि स्वधा वः ४।८।२४।१। स्वधाऽन्नं भवति यत्र सापि स्वधा। अतः स्वधाशब्देनात्र शरदभिधीयते "स्वधा वै शरदि"ति श्रुतेः। तद्रूपेभ्यो युष्मभ्यं नमः नमस्कारोऽस्तु अस्मद्दत्तोदकं वास्त्विति शेषः। युष्मत्तृप्तौ अन्नाविर्भावकः शरदृतुरपि अस्मदर्थमन्नमाविर्भावयिष्यति। यतो हि शरद्येव प्रायशोऽन्नानि भवन्ति तान्यस्मभ्यं दास्यतीत्यभिप्रायः। तथा हे पितरः पितृशब्दाभिधेयाः मातामहाः, वः युष्माकं सम्बन्धिने घोराय नमः घुरतिर्हिंसार्थः। शीतप्राचुर्य्यत्वेन दुःखदत्वाद्धोरः हेमन्त उच्यते तस्मै नमः तद्रूपेभ्यो युष्मभ्यं नमस्कारोऽस्तु नमोऽन्नमस्मद्दत्तोदकं वाऽस्त्वितिशेषः। युष्मत्तृप्तौ हेमन्तः शीतप्राचुर्य्यत्वेन नास्मानभिभविष्यतीत्याशयः। तथा हे पितरः, पितृशब्दाभिधेयाः मातामहाः, वः युष्माकं सम्बन्धिने मन्यवे नमः ("मन्युर्यज्ञे क्रतौ क्रुधी"त्यमरः) इह मन्युः क्रोधः शिशिरो हि अतिशीतपातेन ओषधीर्दहति अतो मन्युः शिशिर उच्यते तस्मै नमः तद्रूपेभ्यो युष्मभ्यं नमस्कारोऽस्तु नमोऽन्नमस्मद्दत्तोदकं वास्त्विति शेषः। युष्मत्तृप्तौ शिशिरोऽस्मान्न हनिष्यतीत्य-

भिप्रायः । तथा हे पितरः पितृशब्दाभिधेया मातामहाः, एवमृतुरूपेभ्यो वः युष्मभ्यं नमः नमस्कारोऽस्त्वित्यर्थः । तथा वः युष्मभ्यं नमः "नम इत्यन्ननामेति" निघण्टुः । अन्नञ्चोदकमिति यास्कः । तस्मान्नमोऽन्नमर्थादस्मद्दत्तोदकं युष्मभ्यमस्त्विति शेषः । तथा हे पितरः, पितृशब्दाभिधेयाः मातामहाः, नः अस्मभ्यं गृहान् दत्त "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इत्यभिधानादिह गृहशब्देन भार्य्यापुत्रादय उपलक्ष्यन्ते । पुंस्त्वमार्षमन्यत्राऽपि गृहा मा बिभीत मा वेपध्वमिति श्रुतिनिदर्शनादवगन्तव्यम् । यूयमस्मभ्यं भार्य्यापुत्रादीन्दत्त नः इति स्वीयपरिजनाद्यपेक्षयाऽऽत्मनि गुरुत्वाऽभिप्रायेण वा बहुवचनम् । तथा हे पितरः पितृशब्दाभिधेयाः मातामहाः, सतः विद्यमानाद्धनाद्धः युष्मभ्यं देष्मः ददामः श्राद्धीयमन्नं दक्षिणाद्रव्यञ्चेति शेषः । अतो ददतामस्माकं कदाचिदपि धनादिक्षयो मा भवत्वित्यभिप्रायः । तथा हे पितरः पितृशब्दाभिधेया मातामहाः, एतद्वासः "वास उपसेवायां ( चुरादिः परस्मैपदी )" इत्यस्मादसुन्प्रत्ययः वास्यते उपसेव्यते सर्वैः प्राणिभिरिति वासः पिपासाशान्त्यर्थं सर्वैरुपसेवनीयं जलमस्मद्दत्तोदकं युष्मभ्यमस्त्विति शेषः । तर्प्पणप्रसङ्गानुरोधेनैव व्याख्यातोऽयं मन्त्रः । पार्वणादिश्राद्धे सूत्राभिमन्त्रणे सूत्रदाने च विनियुक्तत्वादस्य मन्त्रस्य व्याख्यान्तरं संक्षेपतोऽग्रे श्राद्धप्रकरणे स्फुटीभविष्यति तच्च तत्र द्रष्टव्यम् अनेनैव मन्त्रेण प्रमातामहवृद्धप्रमातामहयोरपि तर्प्पणं क्रियते । तत्र हे पितरः, इति पितृशब्दाभिधेयाः प्रमातामहा वृद्धप्रमातामहाश्चेति बोद्धव्यं बहुवचनञ्च तदेकत्वे पूजार्थं व्यत्ययेन वाऽऽर्षत्वादिति चानुसन्धेयम् ॥ १० ॥

॥ इति श्री दामोदरशर्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये
षष्ठोऽयं तर्प्पणपरिच्छेदः समाप्तः ॥

॥ ❀ ॥ इति तर्प्पणमन्त्रव्याख्या समाप्ता ॥ ❀ ॥

---

# सप्तमपरिच्छेदः।

## तर्प्पणोत्तरपठनीयमन्त्रारम्भः।

तदुक्तं कात्यायनेन "ब्राह्मवैष्णवरौद्रसावित्रवारुणैस्तल्लिङ्गैरर्चयेदद्द० इत्यादि। स इत्युपस्थाये"त्यादि।

ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेनऽआवः।
सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः॥

## अथ तर्प्पणोत्तरपठनीयमन्त्रव्याख्या।

ब्रह्मरूपादित्यदेवत्या प्रजापतिदृष्टा त्रिष्टुप् तर्प्पणोत्तरब्रह्मार्चने तदीयमन्त्रजपे वा विनियुक्ता ऋगियम्।

"तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः" इति श्रुतेः "यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धिमामकमि"तिभगवद्वाक्याच्च ब्रह्मादित्ययोरभेदत्वप्रतिपादनादस्मिन्मन्त्रे ब्रह्मैवादित्यरूपेण स्तूयते। तत्र वीत्युपसर्ग आव इति क्रियापदेन सह सम्बध्यते व्यवहिताश्चेति पाणिनिवचनात्। "बृहि वृद्धौ (भ्वा० प०)" इत्यस्मात् "बृंहेर्नलोपश्चे"त्यौणादिको मनिन्प्रत्ययो नलोपश्च बोध्यः। बृंहतीति ब्रह्म सर्वतो भावेन महत् सर्वजगत्कारणं सत्यज्ञानानन्देत्यादिवेदान्तप्रतिपाद्यं विज्ञानघनानन्दस्वभावमादित्यरूपं तेजः पुरस्तात्पूर्वस्यां दिशि प्रथममादौ जज्ञानं जायमानं सत् सीमतः सुरुचो व्यावः स्वप्रकाशेनेतिशेषः (सीममिति परिग्रहार्थीयः पादपूरणो वा सीमतः सीमातः मर्य्यादातः सीमा मर्य्यादा सीव्यति देशाविति यास्कोक्तेः सीमशब्दो मर्य्यादार्थस्ततः सार्वविभक्तिकस्तसिल्) सीमं सीमानं मर्य्यादां भूगोलमध्यभागमारभ्य सुरुचः सुष्ठु रोचन्ते शोभन्ते इति सुरुचस्तान् रोचमानानिमान् भूरादिलोकान् स्वप्रकाशेन वि आवः विवृतानकरोदिति भावः। स इति तच्छब्दस्य प्रथमैकवचने रूपं तच्छब्दस्य पूर्वपरामर्शकत्वादिह पुंस्त्वमार्षं ब्रह्मेतिलिङ्गात्। तच्छब्दः प्रसिद्धार्थकश्च कुत्रचित्। इह तु पूर्वपरामर्शपक्षे, यत्तदोर्नित्यसम्बन्धत्वादिह यच्छब्दाध्याहारेण इत्थं योज्यं यत् ब्रह्म प्राच्यां जायमानं सत् स्वभासा लोकान् व्यावृणोत्तद्ब्रह्मेत्यर्थः। प्रसिद्धार्थपक्षे तु तत्प्रसिद्धं ब्रह्म इति वा योज्यम्। तद्यथा तत् पूर्वोक्तं तत्प्रसिद्धं वा ब्रह्म बुध्न्याः "बुध्नमन्तरिक्षनामे"तियास्कः। बुध्नशब्दात्तत्र भव इति यत्प्रत्ययः। बुध्ने अन्तरिक्षे भवा बुध्न्याः "बुध्न्या इति दिङ्नामे"तिनिघण्टुः। बुध्न्याः दिशो विदिशश्च सतो विद्यमानस्य मूर्त्तस्य घटपटादिपदार्थस्य असतोऽविद्यमानस्य अमूर्त्तस्य वाय्वादेश्च योनिं प्रभावं च विवः विवृणोत् अप्रकाशयदित्यर्थः। कीदृशीर्बुध्न्या इत्यपेक्षायामुच्यते। उपमाः उप समीपे मान्ति भूतानि यासु ता उपमाः

सावकाशा इत्यर्थः। अत एवास्य जगतो विष्ठाः विविधं तिष्ठन्ति यासु तास्तथोक्ताः विविधस्थानभूता इत्यर्थः। बुध्न्या दिशो विदिशश्च स्वभासाऽप्रकाशयदित्यर्थः। वेनः मेधावी पण्डितोऽहमेवं भूतं पूर्वोक्तं ब्रह्म उपासे इति शेषः। जपयज्ञविधिना तदुपासनां करोमीत्यर्थः। "वेन इति मेधाविनामे"ति निघण्टुः। वेनो वेनतेः कान्तिकर्म्मणो गतिकर्म्मणो वेतियास्कः। वेन इति ब्रह्मविशेषणं वा तस्मिन्पक्षे वेनशब्दस्य पुंस्त्वमार्षं विशेष्यस्य ब्रह्मशब्दस्य नपुंसकत्वात्। किम्भूतं ब्रह्म वेनः वेनं कमनीयं मेधादिनानाशक्तिमदिति वा। यदेवम्भूतं ब्रह्म तद्वयमुपास्महे इति वाक्यशेषः। इति वा योज्यं। जनेः शानचि शपः श्लौ सति जज्ञानमिति रूपं भवति। वृणोतेर्लङि शपि लुप्ते गुणे च कृते व इति रूपं भवति अडभावश्चात्र छान्दसो बोध्यः बहुलं छन्दस्यमाङ्योगेऽपीति पाणिनिवचनात्। विष्ठा इत्यत्र 'अम्बाम्बगोभूमि' इत्यादिना षत्वं षत्वे सति 'ष्टुना ष्टुः' इतिष्टुत्वञ्चेतिसंक्षेपः॥ १॥

इदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदम्॥
समूढमस्य पाꣳसुरे॥ २॥

स्नानप्रकरणे व्याख्यातेयमृग्। तथापि विनियोगभेदेन इह पुनर्व्याख्यायते। तथाहि ब्रह्मरूपविष्णुदेवत्या मेधातिथिदृष्टा गायत्री तर्प्पणोत्तरं विष्णवर्चने तदीयमन्त्रजपे वा विनियुक्ता ऋगियम्। इह ब्रह्मैव व्यापकत्वाद्विष्णुरूपेण स्तूयते। 'विष्लृ व्याप्तौ' जुहोत्यादिरुभयपदी। ततो विषेः किच्चेत्यौणादिको नुप्रत्ययः, वेवेष्टि व्याप्नोति चराचरं सर्वं जगदितिविष्णुः। अथवा एकोऽहं बहुस्यां प्रजायेयं स तपो अतप्यत तपस्तप्त्वा इद ठं. सर्वमसृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः सर्वप्राणिनामपि भूतेन्द्रियमनोऽन्तर्य्यामिभावेन सर्वप्राणिषु प्रविशतीति विष्णुः। विषेः किच्चेति विषेर्विहितो नुप्रत्ययो बहुलकाद्विशेरपि बोद्धव्यः। ततोऽयमर्थः विष्णुः व्यापकः परमेश्वरः सर्वान्तर्य्यामी सर्वसाक्षी ब्रह्मरूपो विष्णुः त्रिविक्रमावतारं कृत्वा इदं विश्वं सर्वं स्थावरजङ्गमात्मकं ब्रह्माण्डमण्डलं विचक्रमे विभज्य क्रमते स्म आक्रान्तवानित्यर्थः। कथमाक्रान्तवानित्यभिप्रेत्य तदेवोच्यते त्रेधा प्रकारवचने धाप्रत्ययः, त्रिप्रकारेण अग्निवायुसूर्य्यरूपेण भूम्यन्तरिक्षस्वर्गलोकेषु पदं निदधे निहितवान्। भूमावग्निरूपेण एकं पदं निहितवान्, अन्तरिक्षे वायुरूपेण एकं पदं निहितवान्, दिवि सूर्य्यरूपेण एकं पदं निहितवान्। अतस्तिस्रो देवता अग्निवायुसूर्य्याख्याः प्रधानभूता उक्ता अन्यासान्तु देवतानामेतास्वेवान्तर्भाव इत्यन्यत्राप्युक्तम्॥ पदमिति सुपां सुपो भवन्तीतिपाणिनिवचनात्सप्तम्येकवचनस्थाने प्रथमैकवचनं विभक्तिव्यत्ययेनेत्यवगन्तव्यं ततोऽयमर्थः। अस्य विष्णोः पदम् अर्थात्पदे समूढं सम्यगन्तर्हितं विश्वमिति शेषः। अथवा अस्य विष्णोः पदं पद्यते गम्यते ज्ञायते मुमुक्षुभिरिति पदम् अद्वैताख्यं स्वरूपं विज्ञानघनानन्दमयमक्षरमेवं लक्षणं पदं समूढं सम्यगविज्ञातमकृतात्मभिरित्यर्थः। कस्मिन्निव 'पांसुरे, लुप्तोपमानमेतत् पांसुरे इव रलयोर्डलयोस्तथेति स्मरणात्पांसुरे अर्थात्पांसुले रजस्वले प्रदेशे प्रक्षिप्तं द्रव्यमिव पांसुलप्रदेशे निक्षिप्तं द्रव्यं यथा अन्तर्हितं दर्शनायोग्यं भवति तद्वदस्य विष्णोस्तत्पूर्वोक्तं पदमकृतात्मभिरज्ञेयं भवतीत्यभिप्रायः। तदुक्तं श्रुत्या "तद्विष्णोः परमं पद ठं. सदा पश्यन्ति सूरयः। दिवीव चक्षुराततमि"ति। पाꣳसुरे इत्यत्र अनुस्वारस्यꣳछन्दसि शषसहरेफेषु परत इत्यनुस्वारस्यꣳकारादेशो बोद्धव्यः। यदेवं ब्रह्म तदुपास्महे इति वाक्यशेषः॥ २॥

नम॑स्ते रुद्र म॒न्यव॑ऽउ॒तोत॒ऽइष॑वे॒ नम॑ः । बा॒हुभ्या॑मु॒तते॒ नम॑ः ॥ ३ ॥

ऋगियमग्रे देवपूजायां व्याख्यास्यते तत्रास्या ऋचो व्याख्या द्रष्टव्या ॥ ३ ॥

आकृ॒ष्णेन॒ रज॑सा॒ वर्त्त॑मानो निवे॒शय॑न्न॒मृतं॒ मर्त्यं॑ञ्च ।
हि॒र॒ण्यये॑न सवि॒ता रथे॒ना दे॒वो या॑ति॒ भुव॑नानि॒ पश्य॑न् ॥ ४ ॥

इयमपि ऋगग्रे देवपूजायामेव व्याख्यास्यते तत्रैवास्या अपि ऋचो व्याख्या द्रष्टव्या ।

मि॒त्रस्य॑ चर्षणीधृतोऽवो॑ दे॒वस्य॑ सान॒सि । द्यु॒म्नं चि॒त्रश्र॑वस्तमम् ॥ ५ ॥

मित्रदेवत्या विश्वामित्रदृष्टा गायत्री तर्प्पणोत्तरं मित्रार्चने तदीयमन्त्रजपे वा विनियुक्ता ऋगियम् । ब्रह्मरूपो य आदित्यस्तस्यैव मित्र इत्यपि नाम । "द्युमणिस्तरणिर्मित्रः" इति कोशादौ दर्शनात् । आदित्योदये सति सर्वप्राणिनां स्वस्वव्यापारे सुप्रवर्त्तमानत्वादयमादित्यः सर्वप्राणिनां मित्रवदुपकरोति । चर्षणयो मनुष्यास्तान् धरतीति चर्षणिधृत् तस्य चर्षणिधृत इति प्राप्ते छान्दसत्वात्संहितायां दीर्घे चर्षणीधृतः चर्षणीनां मनुष्याणां धारणेऽधिकृतस्य दीव्यतीति देवस्तस्य द्योतमानस्य मित्रस्य आदित्यस्य तद्रूपस्य ब्रह्मणः सानसि 'सानसीति पुराणनामेतिनिघण्टुः, सानसि पुराणं पुरातनं सनातनम् अवः अवनं रक्षणं पालनं तथा द्युम्नं धनं यशोऽन्नं च स्तुम इति शेषः । याचेमहीति वा वाक्यशेषः । ब्रह्म एव स्तुत्या प्रसन्नं सत् विष्णुरूपेण आदित्यरूपेण वा वृष्टिप्रदानद्वारा समस्तं जगत्पालयति अतएव "आदित्याज्जायते वृष्टिरिति ( ३।७६ )" मनुनाप्युक्तम् । परलोके च तदेव ब्रह्म विष्णुरूपेण आदित्यरूपेण वा निष्कामकर्म्मद्वारा निष्पापान् मनुष्यान् संसारमृत्युतश्च पालयति । अत उक्तं श्रुत्या "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तपसः परस्तात् । तमेवव्विदित्वातिमृत्युमेति नान्यः पन्थाव्विद्यतेऽयनाये"ति । "यस्त्वेवं ब्राह्मणो व्विद्यात्तस्य देवाऽअसन्वशे" इति च । इह लोके च तदेव ब्रह्म अन्नादि सर्वभोग्यपदार्थं सुकृतिनां कृते नित्यं क्षरति । एतदभिप्रायेणैव श्रुत्याभिहितम् " अपहतपाप्मा स्वाध्यायादेव पवित्रं वा एतदि"त्यादि प्रकृत्य "घृतकुल्या मधुकुल्या दधिकुल्या ह वै सततं क्षरती"ति । अतो मनुनाप्युक्तं "यः स्वाध्यायमधीतेऽब्दं विधिना नियतः शुचिः । तस्य नित्यं क्षरत्येष पयोदधिघृतं मधु ॥" इति (म० २।१०७) । कीदृशं द्युम्नं धनं यशोऽन्नं च स्तुमः, याचेमहीति वा तदुच्यते चित्रश्रवस्तमम् चित्रं विचित्रमनेकैः श्रूयते तच्चित्रश्रवः अतिशयेन चित्रश्रव इति चित्रश्रवस्तमम् अत्यन्तं श्रवणीयमित्यर्थः । ईदृशं ब्रह्मणोऽवनं धनं यशोऽन्नञ्च यथाऽस्माकं भवेत्तथा वयं स्तुम इत्यभिप्रायः । अवतेरसुन्नित्यसुनि विभक्तिकार्य्ये च कृते अव इति रूपं भवति । "द्युम्नमितिधननाम, द्युम्नमिति यशोनाम, द्युम्नमित्यन्ननामे" तिच निघण्टुः । "द्युत दीप्तौ भ्वादिरात्मनेपदी" ततो द्युम्नसुम्ननिम्नेत्यादिना नप्रत्ययो मकारश्चान्तादेशो निपात्यते । द्योतते इति द्युम्नम् , यशो वाऽन्नं वा धनं वेत्यर्थः। श्रु श्रवणे इत्यस्मात्कर्मण्यसुन् । चित्रं श्रूयते सर्वैरितिचित्रश्रवः, ततोऽतिशयार्थे तमप् , अतिशयेन चित्रश्रव इति चित्रश्रवस्तमम् ॥ ५ ॥

इमं मे वरुणश्रुधीहवमद्या च मृडय । त्वामवस्युराचके ॥६॥

स्नानप्रकरणे ऋगियं व्याख्याता तत्रास्या ऋचो व्याख्या द्रष्टव्या ॥ ६ ॥

अदृश्रमस्य केतवो विरश्मयो जनाँ २॥ ऽअनु । भ्राजन्तो २॥ ऽअग्नयो यथा ॥७॥

सूर्य्यदेवत्या गायत्री प्रस्कण्वदृष्टा यजुरन्ता तर्प्पणोत्तरकालिकब्रह्माद्यर्चनोत्तरोपस्थाने विनियुक्ता ऋगियम् ॥ वि इत्ययमुपसर्गोऽदृश्रमिति क्रियापदेन सह सम्बध्यते "छन्दसि परे, व्यवहिताश्चे"ति पाणिनिवचनात् । अस्य ब्रह्ममूर्तेः सूर्य्यस्य केतवः ( केतुरिति प्रज्ञानामेति निघण्टुः) प्रज्ञाहेतवः सर्वपदार्थज्ञानकृतो रश्मयः किरणाः जनाननु सर्वप्राणिनोऽनुगताः व्यदृश्रम् विशेषेणादृश्यन्त ( इह लड़र्थे लुङ्, कर्म्मणि प्रत्ययः । ) सूर्य्यकराः सर्वजनानुगता व्यापका दृश्यन्ते सर्वैरिति शेषः । तत्र दृष्टान्तः भ्राजन्तो ज्वलन्तो देदीप्यमाना अग्नयो वह्नयो यथा जनानुगता दृश्यन्ते तद्वदेते सूर्य्यकिरणा अपि जनानुगताः सर्वैर्विशेषतया दृश्यन्ते, इत्यर्थः । दृशेर्लुङि "इरितो वे"ति च्लेरङादेशे "ऋदृशोऽङि गुणः" इतिगुणे सति- उत्तमैकवचने अदर्शमिति प्राप्ते "शीङो रुड्वेतेर्विभाषा बहुलं छन्दसी"ति दृशेरुत्तरस्य मिबादेशस्यामो रुडागमो धातोर्गुणाऽभावश्च छान्दसस्तथासति अदृश्रमितिरूपं भवति, तच्च कर्म्मणि लुङि प्रथमपुरुषबहुवचनस्थाने द्रष्टव्यं 'दृश्यन्ते' इत्यर्थे "तिङां तिङः" इति वचनात् । यस्यास्य सूर्य्याख्यब्रह्मणः किरणा जनानुगता विशेषेण सर्वैर्दृश्यन्ते तद्ब्रह्म वयमुपास्महे इति भावः ॥ ७ ॥

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजा ऽऋतं बृहत् ॥ ८ ॥

सूर्य्यदेवत्याऽतिजगती वामदेवदृष्टा तर्प्पणोत्तरकालिकब्रह्माद्यर्चनोत्तरोपस्थाने विनियुक्ता सप्रपञ्चब्रह्माभिधायिनी ऋगियम् । अनया ऋचा सूर्य्याख्यं ब्रह्म ब्रह्मयज्ञजपकर्त्ता स्तौति। तद्यथा हन्त्यहङ्कारमिति हंसः, हन्त्यन्धकारं नैशं तम इति वा हंसः य एतादृशो भगवानादित्योऽस्तीतिशेषः । स एव हि मुमुक्षूणामहङ्कारमज्ञानं तमो नाशयति, स एव रात्रिसम्बन्ध्यन्धकारञ्च तमो नाशयतीतिभावः । "तं सूर्य्याख्यं ब्रह्म वयमुपास्महे" इति शेषः । तमेव ब्रह्मरूपं सूर्य्यं कतिपयविशेषणैर्मन्त्रदृगृषिर्विशिनष्टि । तथाहि किं भूतो हंसः इत्यपेक्षायामाह शुचिषत् शुचौ दीप्तौ सीदतीति शुचिषत् आदित्यमण्डलान्तर्वर्त्तिपुरुषः, तथा च श्रुतिः । "य एषऽएतन्मण्डले पुरुषो यश्चैष हिरण्मयः पुरुषोऽयमेवे"त्यादि । तथा वसुः वासयति वृष्ट्या- जगन्निवासयतीतिवसुः सर्वस्यास्य जगतो वासयिता "आदित्याज्जायते वृष्टिरि"तिस्मृतेः । यद्वा वासयति स्वरश्मिजालेन जगदाच्छादयतीतिवसुः स्वभासा जगदाच्छादक इत्यर्थः । तथा अन्तरिक्षसत् अन्तरिक्षे सीदतीति अन्तरिक्षसत् वायुरूपः । तथा होता देवानामाह्वाता आह्वानकर्त्ता अग्निरूपः, "अग्निर्वै देवानामाह्वाते"ति श्रुतेः । "अग्ने पावकरोचिषा मन्द्रया देवजिह्वया । आदेवान्वक्षि यक्षि च ॥ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥" आभ्याञ्च वेदमन्त्राभ्यामग्नेर्देवाह्वानकर्तृत्वं देवदूतत्वञ्चावगम्यते । ह्वयतेर्जुहोतेर्वा तृच्प्रत्यये होतेति पदं, ततश्चायमर्थः होता देवानां कृते होमकर्त्ता "अग्निर्वै देवानां होते"तिश्रुतेः

"आदेवान्वक्षि यक्षि चे"त्यपरश्रुतिनिदर्शनाच्च। एतदभिप्रायेणैव अर्जुनं प्रति भगवताप्युक्तं "अहमग्निरहं यज्ञः स्वधाहमहमौषधमि"ति। "यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमि"ति च। सर्वथाऽग्निरूपेण ब्रह्मरूप इति भावः। तथा वेदिषत् वेद्यामैष्टिकवेदौ सीदतीति वेदिषत् होमीयवह्निरूपः। तथा अतिथिः अतिथिवत्पूज्यः सोऽग्निरेवाग्निहोत्रिभिरतिथिवत्पूज्यते। लोकेऽपि यथा कस्यचिद्गृहस्थस्य गृहे यदा कश्चिदायाति तदा तदर्थं गृहपतिर्जलपूर्णमुदकपात्रमानयति तथा गृहदाहव्याजेन यदाग्निर्गृहं प्रत्यायाति तदा गृहपतिस्तदीयकुटुम्बवर्गश्च अग्निसत्कारार्थमुदकपूर्णकुम्भमानयति अतोऽग्निरतिथिवत्पूज्य इत्युच्यते। तथा दुरोणसत् "दुरोणमिति गृहनामे"ति निघण्टुः। दुरोणे यज्ञगृहे सीदतीति दुरोणसत् आहवनीयगार्हपत्यदक्षिणाग्निरूपः। सभ्यावसथ्याग्निरूपश्च। अथवा दुरोणे सर्वेषां पाकगृहे महानसादौ पाकसम्पादनार्थं लौकिकाग्निरूपेण सीदतीति दुरोणसत् अस्मिन्पक्षे वेदिसदित्यत्रैवाहवनीयाद्यग्निरूपो बोध्यः। तथा नृषत् नृषु मनुष्येषु प्राणभावेन जाठराग्निरूपेण वा सीदतीति नृषत्। प्राणाग्निहोत्रकृतां प्राणाग्निरूपोऽन्येषांकृते जाठराग्निरूपश्चेत्यर्थः। तथा वरसत् वरः श्रेष्ठ उच्यते तत्र सीदतीति वरसत् इह लोके परत्र स्वर्गादौ च उत्कृष्टं स्थावरजङ्गमात्मकं यत्किञ्चित्पदार्थजातं स्थानञ्च तत्र सर्वत्र अयमेव ब्रह्माख्यः परमेश्वरोऽस्तीत्यर्थः। तथा ऋतसत् ऋते यज्ञे कर्म्मरूपेण अवश्यम्भाविफलत्वात्कर्म्मणां परमापूर्वरूपेण वा सीदतीति ऋतसत्। तथा व्योमसत् व्योम्नि आकाशे मण्डलरूपेण शब्दरूपेण च सीदतीति व्योमसत् घटादिसर्वपदार्थेषु अवकाशस्य सद्भावत्वात् घटाकाशमठाकाशेत्यादिपरिछिन्नसंज्ञातोऽपरिछिन्नाकाशे बहुविस्तृतं यन्मण्डलं दरीदृश्यते तद्ब्रह्मैवास्तीत्यभिप्रायः। शब्दस्तु आकाश एव वर्त्तते। अतो न्यायदर्शने शब्दगुणमाकाशं तद्विदो वदन्ति। इदानीमपि पाश्चात्यशिक्षाविदो यूरोपियनशब्दाभिधेया वङ्गीयाश्च तद्द्वारैव ट्रेनीफोनेति नामकशब्दयन्त्रमाविष्कृतवन्त इति श्रूयते। आकाशे यच्छक्तिमत्तेजः यतश्च शब्दः प्रभवति तद्ब्रह्मैवास्तीतिभावः। तथा अब्जाः अप्सु उदकेषु मत्स्यादिरूपेण जायते इत्यब्जाः। जलजं स्थावरजङ्गमात्मकं यत्किञ्चिद्वस्तु तत्सर्वं ब्रह्मैव मन्तव्यमित्याशयः। तथा गोजाः गवि पृथिव्यां जायते इति गोजाः योऽयं जरायुजाण्डजस्वेदजोद्भिज्जेतिचतुर्विधभूतग्रामः स परमात्मैव नहि तद्भिन्नं किञ्चिदस्तीत्यर्थः॥ तथा ऋतजाः "ऋतमेकाक्षरं ब्रह्मे"ति श्रुतेः ऋतमिति ब्रह्मनाम, तत्र ऋते ब्रह्मणि एकोऽहं बहुस्यामिति सङ्कल्परूपेण जायते इति ऋतजाः हिरण्यगर्भाद्युपाधिपरिछिन्नः सगुणः स एव परमेश्वर इत्यर्थः। तथा अद्रिजाः अद्रौ पाषाणे अग्निरूपेण जायते इत्यद्रिजाः। अथवा अद्रौ पाषाणे देवतादिप्रतिमारूपेण जायते इति अद्रिजाः पाषाणमयीदेवताप्रतिमारूपः सोऽपि स एवेत्यभिप्रायः। एवं पूर्वोक्तविशेषणविशिष्टो ब्रह्माख्यो यो भगवानादित्यः स एव ऋतं सत्यं हिरण्यभर्गाद्युपाधिपरिछिन्नरहितं निर्गुणं तदेव ब्रह्मेति भावः। तद्ब्रह्म किम्भूतमित्याशङ्क्योच्यते बृहत् बृहदिति निघण्टौ महन्नामसु पठितं बृहत् महत् ब्रह्मादिस्तम्बपर्य्यन्तं सप्रपञ्चं तदेव ब्रह्मेत्याशयः। एवं भूतं ब्रह्म वयमुपास्महे इति शेषः। ब्रह्मादिस्तम्बपर्य्यन्तं यत्किञ्चिदस्ति तत्सर्वं ब्रह्मैव नहि तस्मात्परं किञ्चिदन्यदस्ति अतः श्रुत्याऽभिहितं "सर्वं खल्विदं ब्रह्मे"ति तथा "यस्माज्जातं न पुरा किञ्चनैव यऽआबभूव भुवनानि विश्वा। प्रजापतिः प्रजया स ठं. रराणस्त्रीणि ज्योतींꣳषि सचते सषोडशी"त्यपि निगमो भवति। एवमृचं व्याख्याय मन्त्रगतशब्दसाधनप्रणाली इह प्रदर्श्यते। हन्ते "वृतृवदिहनिकमिकषिभ्यः

सः"इत्यौणादिके सप्रत्यये धातुस्थनकारस्यानुस्वारे च कृते प्रथमैकवचने हंस इति रूपं भवति। तत्र "अनुस्वारस्यꣳइत्यादेशः शषसहरेफेषु तस्य त्रैविध्यमाख्यातम्। ह्रस्वदीर्घगुरुभेदैर्दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः" इतिप्रतिज्ञासूत्रस्थकात्यायनोक्तवचनस्वरसादनुस्वारस्यꣳ० इत्यादेशे हꣳसः इति संहितायां भवति। शुचिपूर्वात्सीदते"रन्येभ्योऽपि दृश्यते" इति क्विप्प्रत्यये क्विपः सर्वापहारलोपे प्रथमैकवचने शुचिषदिति रूपं भवति। वसेः "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च"त्यौणादिकउप्रत्यये प्रथमैकवचने रूपम्। वसेर्विहितउप्रत्ययो बाहुलकादिह ण्यन्तादपि बोद्धव्यस्तत्र णिलोपे वासयतीति वसुरित्येवं भवति। ह्वयतेर्जुहोतेर्वा तृचिप्रथमैकवचने होतेति रूपम्। अन्तरिक्षसत्, वेदिषत्, दुरोणसत्, नृषत् वरसत्, ऋतसत्, व्योमसत्, एतत्सर्वं पदजातं तत्तत्पूर्वात्सदेः क्विपि प्रथमैकवचने सिद्ध्यतीतिबोद्धव्यम्। अप्पूर्वाज्जने"र्जनसनखनक्रमगमो विडि"ति विटि विटः सर्वापहारलोपे "विड्वनोरि"त्यात्वे पकारस्य जश्त्वे च प्रथमैकवचने अब्जा इति रूपम्। एवं गोजाःऋतजाः अद्रिजाः इत्यत्राऽपि बोद्धव्यम्। "ऋ गतौ (भ्वा. प.)" ततश्च क्तप्रत्यये प्रथमैकवचने ऋतमिति रूपम्। "बृह वृद्धौ ( भ्वा. प. )" ततः शतरि प्रथमैकवचने बृहदितिरूपम्॥८॥

सँव्वर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन।
त्वष्टा सुदत्रो व्विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम्॥ ९॥

त्वष्टृदेवत्या त्रिष्टुप्प्रजापतिदृष्टा मुखस्पर्शने विनियुक्ता ऋगियम्। "संवर्चसेति मुखं विमृष्टे" इति कात्यायनोक्तेः। समित्युपसर्गोऽगन्महि इत्यनेन क्रियापदेन सह प्रत्येकमभिसंबध्यते। तत्र व्यवहिताश्चेति पाणिनिवचनादुपसर्गक्रियापदयोर्व्यवहितयोः संबन्धो बोध्यः। समित्युपसर्गावृत्त्या क्रियापदाभ्यावृत्तिश्चानुसन्धेया। तथाहि वयं देवदत्तादिनामानःवर्चसा ब्रह्मवर्चसेन वेदाध्ययनजनिततेजसा समगन्महि संगता भवामेत्यर्थः (। गच्छतेर्लङि "व्यत्ययो-बहुलम् (पा० ३।१।८५ )" सुप्तिङुपग्रह० (का०) इत्युपग्रहव्यत्ययेन इह आत्मनेपदे अदादित्वाच्छपो लुकि उत्तमबहुवचने "मोनोधातोः" इति मस्य नकारे कृते "लुङ्लङ्लृङ्क्ष्वडुदात्तः"इति अडागमे च अगन्महीतिरूपं बोध्यम्। लङ्लकारश्चात्र लोडर्थेऽनुसन्धेयः "तिङां तिङः" "छन्दसि लुङ्लङ्लिटः"इति पाणिन्युक्तेः।) तथा पयसा क्षीरादिरसेन च समगन्महि सङ्गता भवामेत्यर्थः। तथा वयं तनूभिः अनुष्ठानक्षमैः शरीरावयवैः समगन्महि संगता भवामेत्यर्थः। यद्वा तनूभिः। भार्य्यापुत्रादिभिः समगन्महि सङ्गता भवामेत्यर्थः। तथा वयंशिवेन शान्तेन कर्म्मश्रद्धादियुक्तेन मनसा च समगन्महि सङ्गता भवामेत्यर्थः। नित्यकर्मानुष्ठानं कुर्वतामस्माकं परिश्रमात् यद्ब्रह्मवर्चसाद्यपगतं तदनेन मन्त्रजपेन पुनराप्यायितं भवत्वित्याशास्य मन्त्रोऽयमस्माभिर्जप्यते इति भावः। किञ्च सुदत्रः सुष्ठु ददातीति सुदत्रः शोभनदानः त्वष्टा त्वष्टृनामको देवः रायः धनानि विदधातु करोतु अस्माकं कृते इति शेषः। तथा तन्वः मदीयशरीरस्य यद्विलिष्टं विशेषेण न्यूनमङ्गं तत् त्वष्टादेवः अनुमार्ष्टु न्यूनत्वपरिहारेण अनुकूलं कृत्वा शोधयत्वित्यर्थः। त्वष्टादेवः धनस्य शरीरस्य च पुष्टिं करोत्वभिप्रायः। सुदत्र इत्यत्र "सर्वधातुभ्यः ष्ट्रन्"इति सुपूर्वाद्ददातेः ष्ट्रन्प्रत्ययोबाहुलकाद्ध्रस्वश्च बोध्यः। 'लिश अल्पीभावे' तस्माद्विपूर्वात् क्तप्रत्यये विलिष्टमिति पदं सिद्ध्यति॥ ९॥

"देवागातुविदः" इत्यग्रे होममन्त्रप्रकरणे व्याख्यास्यते तत्रास्य व्याख्या द्रष्टव्या॥ अनेन च ब्रह्मादीन्विसर्जयेत् "देवागातुविद इति विसर्जयेत्" इति कात्यायनोक्तेः॥ १०॥

॥ इति तर्प्पणोत्तरपठनीयमन्त्रव्याख्या॥

---

अथैतत्प्रसङ्गेनैव ब्रह्मयज्ञमन्त्रा अपि व्याख्यायन्ते। तत्र केचिच्चतुर्णामपि वेदानामादिमन्त्रैर्ब्रह्मयज्ञं कुर्वन्ति। केचन ब्रह्मप्रतिपादकवेदमन्त्रैरेव कुर्वन्ति। तदत्र ब्रह्मप्रतिपादकमन्त्रक्रमेणैव ब्रह्मयज्ञमन्त्राः प्रदर्श्यन्ते। तथाहि—

ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत्।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥ १॥

हिरण्यगर्भदेवत्या त्रिष्टुप्प्रजापतिदृष्टा ब्रह्मयज्ञजपे विनियुक्ता ऋगियम्। हिरण्ये हिरण्यपुरुषरूपे ब्रह्माण्डे गर्भरूपेण अवस्थितः प्रजापतिर्ब्रह्मा हिरण्यगर्भ उच्यते। अत उक्तममरसिंहेन "हिरण्यगर्भो लोकेशः स्वयम्भूश्चतुराननः"इति। उत्तरार्द्धे तच्छब्दश्रवणात्पूर्वार्द्धे यच्छब्दोऽध्याहर्त्तव्यः, यत्तदोर्नित्यसम्बन्धत्वात्। ततोऽयमर्थः। यः हिरण्यगर्भः ब्रह्माण्डदेही प्रजापतिः भूतस्य जरायुजाण्डजस्वेदजोद्भिज्जेति चतुर्विधभूतग्रामस्य प्राणिजातस्य अग्रे तस्मात्प्रथममेव समवर्त्तत संबभूवेत्यर्थः। चतुर्दशभुवनकोशवर्त्तिप्राणिजातस्योत्पत्तेः पुरा स्वयं शरीरधारी बभूवेति भावः। स च जातः उत्पन्नमात्रः सन् एक एव उत्पत्स्यमानस्य सर्वस्य जगतः पतिः ईश्वरः आसीत् पुरा सम्बभूवेत्यर्थः॥

स एव हिरण्यगर्भः प्रजापतिः पृथिवीम् उत अपि च द्याम् इमां भूमिं च दाधार दधार। पृथिवीत्यन्तरिक्षनामसु पठितत्वात्पृथिवीशब्देन इह अन्तरिक्षमुच्यते। द्यामिति द्युशब्देन द्युलोकः स्वर्गलोकः। इमामिति इदं शब्देन भूमिरुच्यते। अतोऽयमर्थः। पृथिवीमन्तरिक्षलोकम् उत (उत शब्दोऽप्यर्थे) अपि च द्यां द्युलोकं स्वर्गलोकमिति यावत् इमां भूमिं भूलोकं च स एव हिरण्यगर्भः प्रजापतिर्दधार लोकत्रयं स एव धृतवानित्यर्थः। तादृशाय कस्मै काय प्रजापतये देवाय वयं हविषा विधेम हविर्दद्मः। हविषेति विभक्तिव्यत्ययेन द्वितीयाविभक्तिस्थाने तृतीयाविभक्तिर्ज्ञेया। दाधारेत्यत्र "तुजादीनां दीर्घोऽभ्यासस्ये"त्यभ्यासदीर्घः। "कः प्रजापतिरुद्दिष्टः" इत्येकाक्षरीकोशादौ दर्शनात्कः प्रजापतिस्तस्य चतुर्थ्येकवचने काय इति प्राप्ते प्रजापतिवाचकस्यापि कशब्दस्य छान्दसत्वेन सर्वादौ पाठात् कस्मै इति रूपमवगन्तव्यम्॥ १॥

यः प्राणतो निमिषतो महित्वैकऽइद्राजा जगतो बभूव॥
यऽईशेऽअस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम॥२॥

हिरण्यगर्भदृष्टा कदेवत्या त्रिष्टुप् ब्रह्मयज्ञजपे विनियुक्ता ऋगियम् । पूर्वार्धे यच्छब्द-श्रवणादुत्तरार्धेऽपि तच्छब्दोऽध्याहर्त्तव्यः यत्तदोर्नित्यसम्बन्धत्वात् । तथा हि यः प्रजापतिः प्राणतः प्राणनं जीवनं कुर्वतः निमिषतः निमिषणं कुर्वतः उपलक्षणमेतत् दृगादीन्द्रियव्यापारं कुर्वतः सचेतनस्यास्य जगतो विश्वस्य एक इत् (इत् इत्ययं निपात एवार्थे) एक एव राजा बभूव पालकः सञ्जात इत्यर्थः । स्थावरादीनुपक्रम्य, "अन्तःसंज्ञा भवन्त्येते" इति मनूक्तेः 'प्राणतः' इत्यनेन स्थावरस्य ग्रहणं 'निमिषतः' इत्यनेन जङ्गमस्य ग्रहणमिह विवक्षितम् । तेन स्थावर-जङ्गमात्मकस्य सर्वस्यास्य जगतः संसारस्य य एक एव राजा संबभूव इति भावः । केन हेतुना स्थावरजङ्गमात्मकस्य सर्वस्यास्य जगत एक एव राजा बभूवेत्यपेक्षायामुच्यते । महित्वा महेः ( महिम्नो ) भावो महित्वं तेन महित्वेन महिम्ना स्वमहाभाग्यत्वहेतुनेत्यर्थः । तथा यश्च प्रजापतिः अस्य द्विपदः द्वौ पादौ यस्य स द्विपात् तस्य द्विपदः पादद्वयोपेतस्य मनुष्यपक्ष्यादेः, चतुष्पदः चत्वारः पादाः यस्य स चतुष्पात् तस्य चतुष्पदः पादचतुष्टयोपेतस्य हस्तिगवादेः प्राणिजातस्य ईशे ईष्टे ऐश्वर्य्यं करोतीत्यर्थः । यः प्रजापतिर्द्विपदां चतुष्पदां च अधिपतिरितिभावः । तस्मै तादृशाय कस्मै काय प्रजापतये देवाय वयं हविषा विधेम हविर्दद्मः । हविषेत्यत्र विभक्तिव्यत्ययेन द्वितीयाविभक्तिस्थाने तृतीयाविभक्तिर्बोद्धव्या "सुपां सुपो भवन्ती"ति वचनात् । तथा महित्वेत्यत्र "सुपां सुलुगि"ति पूर्वसवर्णदीर्घोऽवगन्तव्यः । द्विपदश्चतुष्पद इत्युभयत्रापि "पादः पदि"ति पदादेशो ज्ञेयः "अधीगर्थदयेशां कर्मणि" इति कर्मणि षष्ठी च बोद्धव्या । 'ईश ऐश्वर्य्ये' इत्यस्माल्लटि प्रथमपुरुषैकवचने ईष्टे इति प्राप्ते "लोपस्त आत्मनेपदेषु" इति तकारलोपे ईशे इति रूपं भवति । प्रजापतिवाचकस्य कशब्दस्य सर्वादौ छान्दसत्वेन पाठात्कायेत्यत्र कस्मै इति रूपं भवति ॥ २ ॥

**यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳरसया सहाहुः ।**

**यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ ३ ॥**

हिरण्यगर्भदृष्टा कदेवत्या त्रिष्टुप् ब्रह्मयज्ञजपे विनियुक्ता ऋगियम् । यस्येति यच्छब्द-श्रवणात्तस्मै इति तच्छब्दोऽध्याहार्य्यः, यत्तदोर्नित्यसम्बन्धत्वात् । तथा इमे, हिमवन्त इत्युभयत्रापि "सुपां सुपो भवन्ती"तिवचनादिह प्रथमा द्वितीयार्थेऽवगन्तव्या । तथाहि इमे हिमवन्तः बहुवचनोपदेशादन्येऽपि पर्वता ज्ञातव्यास्तान् इमान् हिमवतः हिमालयप्रभृतिपर्वतान् यस्य कस्य प्रजापतेः महित्वा महित्वं महिमानमाहुः बुधा वदन्तीत्यर्थः । तथा रसया नद्या सह समुद्रं यस्य कस्य प्रजापतेः महित्वा महित्वं महिमानमाहुः बुधा वदन्तीत्यर्थः । तथा इमाः प्रदिशः पूर्वाद्याः प्रकृष्टा आशाः यस्य कस्य प्रजापतेः महित्वा महित्वं महिमानमाहुः बुधा वदन्तीत्यर्थः । तथा यस्य कस्य प्रजापतेः बाहू भुजौ जगद्रक्षणौ वर्त्तेते इति शेषः । यस्य प्रजापतेः भुजच्छायायां सर्वमिदं जगदस्तीत्यर्थः । तस्मै कस्मै काय प्रजापतये देवाय हविषा विधेम हविर्दद्म इत्यर्थः । महित्वेति सुपां सुलुगित्यादिना विभक्तेराकारादेशे रूपं भवति । रसयेति "रसा नदी रसतेः शब्दकर्म्मणः" इति यास्कः । रसाशब्दस्य तृतीयैकवचने रसयेति रूपं स्पष्टम् । शेषञ्च पूर्वमन्त्रवद्बोध्यम् ।

यऽआत्मदा बलदा यस्य विश्वऽउपासते प्रशिषं यस्य देवाः ।
यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥४॥

हिरण्यगर्भदृष्टा कदेवत्या त्रिष्टुप् ब्रह्मयज्ञजपे विनियुक्ता ऋगियम् । मन्त्रेऽस्मिन्सर्वत्र यच्छब्दश्रवणात्तस्मै इति तच्छब्दाध्याहारेणायमर्थः यः कः प्रजापतिः आत्मदा आत्मानं ददातीत्यात्मदा ब्रह्मोपासकानां सायुज्यप्रद इत्यर्थः । तथा यश्च कः प्रजापतिः बलदाः बलं ददातीति बलदाः ब्रह्मोपासकानां भुक्तिमुक्तिप्रद इत्यर्थः । विश्वे सर्वे मनुष्याः यस्य कस्य प्रजापतेः प्रशिषं शासनमुपासते । तथा यस्य च कस्य प्रजापतेः प्रशिषं शासनं देवाश्च उपासते । तदुक्तञ्च । "यस्यज्ञेयावधिज्ञानं शिक्षावधि च शासनम् । कार्य्यावधि च कर्त्तृत्वं स स्वयम्भूः पुनातु वः"इति । किञ्च यस्य कस्य प्रजापतेः छाया आश्रयो ज्ञानपूर्वकमुपासनम् अमृतं मुक्तिहेतुर्भवतीति शेषः । तथा यस्य कस्य प्रजापतेः अविज्ञानमितिशेषः मृत्युः संसारहेतुर्भवति जनानामित्यर्थः । तदुक्तं च श्रुत्या "य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ती"ति । तस्मै कस्मै काय प्रजापतये देवाय हविषा विधेम हविर्दद्मः इत्यर्थः । हविषेति विभक्तिव्यत्ययेन द्वितीयाविभक्तिस्थाने तृतीयावगन्तव्या कशब्दस्य सर्वनामत्वञ्चार्षं तेन कायेति प्राप्ते कस्मै इति रूपं भवतीत्यवगन्तव्यम् । यस्य छाया इत्यत्र 'छेच' इति तुगागमो न भवति 'यस्यातिहायसह०' इत्यादि प्रातिशाख्यसूत्रेण तुगागमस्य प्रतिषेधात् ॥ ४ ॥

मा मा हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्म्मा व्यानट् ।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥ ५ ॥

हिरण्यगर्भदृष्टा कदेवत्या त्रिष्टुप् इह ब्रह्मयज्ञजपे विनियुक्ता ऋगियम् । इह मन्त्रे य इति यच्छब्दश्रवणात्तच्छब्दोऽध्याहर्त्तव्यः यत्तदोर्नित्यसम्बन्धत्वात् । तथा हि यः कः प्रजापतिः पृथिव्याः भूमेर्जनिता जनयिता उत्पादकोऽस्तीति शेषः । "जनिता मन्त्रे" इति पाणिनीयसूत्रेण णिचो लोपः । वेति निपातश्चार्थे । यो वा यश्च कः प्रजापतिः दिवं व्यानट् द्युलोकमसृजदित्यर्थः । व्यानट् इति व्याप्तिकर्म्मा । श्रुतौ तु सृजतेरर्थे व्याख्यातः । "यो वा दिवꣳ० सत्यधर्म्मा सृजते" इति श्रुतेः । यः कः प्रजापतिः चन्द्राः "चदि आह्लादे ( भ्वा० प० )" इत्यस्माद्रप्रत्यये चन्दन्तीति चन्द्राः आह्लादिकाः जगत्कारणभूताः अपः जलानि जजान ससर्ज सृष्ट्यादौ प्रथमतस्त्वप एव सृष्टवानित्यर्थः । तदुक्तञ्च "अप एव ससर्जादौ तासु बीजमवासृजत् । तदण्डमभवद्धैमं कोटिसूर्य्यसमप्रभमि"ति । तद्द्वारा मनुष्यानुत्पादितवानिति भावः । यतश्च श्रुतौ आपश्चन्द्रा इति मनुष्या व्याख्याताः । पितृमार्गानुसारिणो मनुष्या एव हि यज्ञेनाप्नुवन्ति चन्द्रलोकं, 'मनुष्या वा आपश्चन्द्राः' इतिश्रुतेः । तत्र कारणे कार्य्योपचारो बोद्धव्यः । यथा सोमयागे यज्ञसाधनभूते कारणे हविर्द्धानमण्डपे विष्णुत्वोपचारः विष्णुश्च तत्र यज्ञ एवाचक्षते "यज्ञो वै विष्णुरि"ति श्रुतेः । यथा तत्र यज्ञसाधनभूते कारणे कार्य्योपचार अर्थाद्यज्ञोपचारस्तथाऽत्रापि मनुष्योत्पत्तिकारणभूतास्वप्सु मनुष्योपचारेण आपश्चन्द्रा मनुष्या इति श्रुत्यभिप्रायोऽवगन्तव्यः । य एवम्भूतः प्रजापतिः स प्रथमः प्रथमत एव शरीरधारी अतो मुख्यः जगदादिभूतः सत्यधर्म्मा सत्यं धरतीति सत्यधर्म्मा सत्यस्य धारयिता कः प्रजापतिर्म्मा मां माहिंसीन्माहन्तु यतो वयं कस्मै काय प्रजापतये हविषा विधेम हविर्दद्मः

हविर्दानान्मा हन्त्विति भावः। विधेमेत्युत्तमबहुवचनश्रवणान्मेति व्यत्ययेन द्वितीयाबहुवचनस्थाने द्वितीयैकवचने मादेशे बोध्यम्, अस्मान्माहन्त्वित्यभिप्रायः । प्रजापतिवाचकस्य कशब्दस्य सर्वनामत्वाभावात्स्मै आदेशश्छान्दसः। तेन कशब्दस्य चतुर्थ्येकवचने कायेति प्राप्ते स्मै आदेशे कस्मै इति रूपमवगन्तव्यम्। हविषेतिपूर्ववत्। विधतिर्धातुर्दानार्थः। माङ्पूर्वात् हिंसतेर्लुङि प्रथमपुरुषैकवचने मा हिंसीदिति प्राप्ते अनुस्वारस्य छन्दसीत्यनुस्वारस्यठं. कारादेशे मा हिठं.सीदित्येवं भवति ॥ ५ ॥

यस्मान्न जातः परो ऽअन्यो ऽअस्ति यऽआविवेश भुवनानि विश्वा ।
प्रजापतिः प्रजया सठं. रराणस्त्रीणिज्ज्योतीᳬंषि सचते स षोडशी ॥६॥

प्रजापतिर्देवत्या त्रिष्टुप् विवस्वदृष्टा ब्रह्मयज्ञजपे विनियुक्ता ऋगियम्। अथमन्त्रार्थः। यस्मात् पुरुषात् अन्यः भिन्नः तद्व्यतिरिक्तः परः उत्कृष्टः कश्चिद्देवादिर्जातः उत्पन्नः न अस्ति न विद्यते। यश्च पुरुषः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आविवेश अन्तर्य्यामिरूपेण प्रविष्टः सन् प्रजापतिः स्वोत्पन्नप्रजापालको भूत्वा त्रीणि ज्योतींषि अग्निवायुसूर्य्यरूपाणि तेजांसि विषयज्ञापकानि सचते सेवते । तेजसा तज्ज्योतिषामुज्जीवनं करोतीत्यभिप्रायः । तथा च श्रुतिः "येन सूर्य्यस्तपति तेजसेद्धः" इति । "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यश्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥" इति भगवद्वाक्यञ्च । षोडशी षोडशकलात्मकलिङ्गशरीरोपेतः स प्रजापतिः प्रजया संरराणः प्रजारूपेण सम्यग्रममाणः सर्वाश्रयो भूत्वा एकोऽहं बहुस्यां प्रजायेयमित्यभिकाङ्क्ष्य प्रकृतिधर्मेण गर्भमाश्रित्य बहुधा विजायते इति शेषः । तथा च श्रुतिः "एकोऽहं बहुस्यां प्रजायेयं स तपो अतप्यत तपस्तप्त्वा इद ठं. सर्वमसृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशत्" इति । "प्रजापतिश्चरति गर्भेऽअन्तर जायमानो बहुधा व्विजायते । तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्हतस्थुर्भुवनानि व्विश्वा।" इत्यपरा च श्रुतिः । अतः श्रुत्याऽन्यत्राप्युक्तं "व्विश्वतश्चक्षुरुत व्विश्वतोमुखो व्विश्वतो बाहुरुत व्विश्वतस्पात् । सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन्देवऽ एकः ॥" इति । य एवं भूतः प्रजापतिस्तं वयं ब्रह्मयज्ञजपेन उपास्महे इति शेषः। व्विश्वेति विश्वशब्दस्य द्वितीयाबहुवचने जश्शसोः शिरिति श्यादेशे शेश्छन्दसि बहुलमिति शेर्लोपे कृते प्रत्ययलक्षणेन नपुंसकस्य झलच इति नुमागमे सर्वनामस्थाने चेतिदीर्घे न लोपः प्रातिपदिकान्तस्येति न लोपे विश्वेति रूपं भवति तत्र "वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः। आदौ गुरुर्लघुर्मध्ये पदान्ते तु लघूतरः॥" इति शिक्षावचनाद्वकारस्य गुरुत्वे व्विश्वेत्येवं भवति ॥६॥

इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्रऽएतम् ।
तयोरहमनु भक्षं भक्षयामि व्वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहा ॥७॥

इन्द्रवरुणदेवत्या षोडशकलोपेतलिङ्गशरीरोपेतब्रह्मदेवत्या वा त्रिष्टुप् यजुरन्ता विवस्वदृष्टा इह ब्रह्मयज्ञजपे विनियुक्ता इयमृक् सह प्राणेन स्वाहेति यजुः। हे षोडशिन्, षोडशकलात्मकलिङ्गशरीरोपेत प्रजापते, ते तव सम्बन्धिनम् एतममुं भक्षं ब्रह्मयज्ञजपसम्पादनरूपं भक्षणं सम्राट् 'सम्राड्वाजपेयेने'ति श्रुतेर्वाजपेययाजी इन्द्रः परमैश्वर्य्ययुक्तः शतक्रतुः, राजा-

च वरुणः 'राजा वै राजसूयेनेष्ट्वा भवती'ति श्रुतेः राजसूययाजी वरुणः यादसां पतिश्च तौ इन्द्रावरुणौ देवौ अग्र एव चक्रतुः । ब्रह्मयज्ञजपं सम्पादितवन्तावित्यर्थः । चकारौ समुच्चयार्थौ बोध्यौ । तयोः इन्द्रावरुणयोः अनुपश्चादहं ब्रह्मयज्ञजपकर्त्ता भक्षं ब्रह्मयज्ञजपसम्पादनरूपं भक्षणं भक्षयामि ब्रह्मयज्ञजपं सम्पादयामीत्यर्थः । भक्षतिर्यद्यपि भक्षणार्थस्तथाऽप्यत्र सम्पादनार्थं एवावगन्तव्यः धातूनामनेकार्थत्वात् । ननु हविषा विधेम हविर्द्भः इत्युक्त्वाद्धुतशेषस्य हविषो भक्षणमभिलक्ष्य भक्षयामीत्ययं भक्षतिर्भक्षणार्थ एव कथं न व्याख्यायते इति चेन्न ब्रह्मयज्ञे होमाभावात् । तदुक्तं मनुना "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥"इति अध्यापनशब्देनाध्ययनमपि गृह्यते जपोऽहुत इति वक्ष्माणत्वादिति कुल्लूकभट्टः । तथाहि "अहुतञ्च हुतञ्चैव तथा प्रहुतमेव च । ब्राह्म्यं हुतं प्राशितञ्च पञ्चयज्ञान् प्रचक्षते ॥"इति । एवं,"जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः । ब्राह्म्यं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम् ॥"इति । इमौ श्लोकौ मनुस्मृतौ तृतीयाध्याये द्रष्टव्यौ । तस्मादिह ब्रह्मयज्ञजपे भक्षतिः सम्पादनार्थं एवेति राद्धान्तः । जुषाणः मदीयेन भक्षणेन सेवमाना वाग्देवी सरस्वती प्राणेन प्राणदेवतया सह सोमस्य तृप्यतु सोमेन तृप्ता भवतु । सोमगता याऽमृतमयी कला तया चान्द्र्या कलया अन्नाद्युत्पत्तिः क्षीरादिरसोत्पत्तिश्च तदुभयञ्च ब्रह्मयज्ञजपकर्त्तुर्नित्यं स्वाध्यायं कुर्वतः पुरुषस्य भवति तदुक्तं श्रुत्या "घृतकुल्या मधुकुल्या दधिकुल्या हवै सततं क्षरती"ति । तथैव मनुनाप्युक्तं "यः स्वाध्यायमधीतेऽब्दं विधिना नियतः शुचिः । तस्य नित्यं क्षरत्येष पयो दधि घृतं मधु ॥" इति । स्वाहा तस्यै वाग्देवतायै एतद्ब्रह्मरूपं हविः सुहुतमस्तु । ब्रह्मैव हविरिति श्रुतिस्मृत्युक्ताभिप्रायेण "यज्ञेन यज्ञमयजन्त देवाः"इत्यादि श्रुतेः "ब्रह्मार्पणं ब्रह्महविरि"त्यादि स्मृतेश्च ॥ ७ ॥ हिरण्यगर्भ इत्याद्या इन्द्रश्चेत्यन्ताः श्रुत्युक्ताः प्रतीकचोदिताः सप्त ऋचो ब्रह्मयज्ञजपेऽधीयन्ते । "हिरण्यगर्भ इत्येष मा मा हिꣳसीदित्येषा यस्मान्न जात इत्येषः"इति श्रुतेः । ताश्चेह यथाप्रकरणं व्याख्याताः ॥७॥

येन॒ द्यौरु॒ग्रा पृ॑थि॒वी च॑ दृ॒ढा येन॒ स्वः॑ स्तभि॒तं येन॒ नाकः॑ ।

योऽ अ॒न्तरि॑क्षे॒ रज॑सो वि॒मानः॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ८ ॥

हिरण्यगर्भदृष्टा त्रिष्टुप् प्रजापतिदेवत्या ब्रह्मयज्ञजपे विनियुक्ता ऋगियम् । येन पुरुषेण द्यौः उग्रा उद्गूर्णा सर्वप्राणिनां जीवनधारणार्था वृष्टिदा कृतेतिशेषः । तथा येन पुरुषेण पृथिवी च दृढा स्थिरा कृतेतिशेषः । समष्टिसृष्टिसन्धारणार्थं भूमिः स्थिरीकृतेत्याशयः । भूमेर्दार्ढ्यं च त्रिविधं सर्वप्राणिधारणं वृष्टिग्रहणं शस्यनिष्पादनं चेति तत्रितयं भूमेर्दार्ढ्यं च येन निष्पादितमितिभावः । तथा येन पुरुषेण स्वः स्तभितं "स्वरादित्यो भवति सु अरणः सु ईरणः स्वृतो रसान् स्वृतो भासं ज्योतिषां स्वृतो भासे"ति यास्कोक्तेः स्वः आदित्यः तेनैव तन्मण्डलमप्युपलक्षितं तस्मात्स्वः पदमादित्यमण्डलवाचकं ततोऽयमर्थः । येन पुरुषेण स्वः आदित्यमण्डलं स्तभितं स्तम्भितमित्यर्थः । तथा येन पुरुषेण नाकः नास्ति अकं दुःखं यस्मिन्नसौ नाकः स्वर्गः सोऽपि स्तभितः स्तम्भितः । तथा यश्च अन्तरिक्षे नभसि आकाशे रजसो विमानोऽप्यभूदिति शेषः । "रज इत्युदकनामे"ति निघण्टुः । रजसो जलस्य वृष्टेरित्यर्थः विमानः विमिमीते इति विमानः निर्मातेत्यर्थः । तं देवं विहाय कस्मै देवाय हविषा विधेम न कस्मैचिदि-

त्यर्थः। अर्थात् योहि भूम्यादिस्तम्भनेन अस्मानुपकरोति तस्मै एव कस्मै काय प्रजापतये देवाय हविर्दद्मः इत्यभिप्रायः। 'स्वस्तभितम्' इत्यत्र संहितायां विसर्गलोपश्छान्दसः॥ ८॥

**यं क्रन्दसीऽअवसा तस्तभानेऽअभ्यैक्षेतां मनसा रेजमाने।**
**यत्राधि सूरऽउदितो विभाति कस्मै देवाय हविषा विधेम॥ ९॥**

प्रजापतिदेवत्या त्रिष्टुप् हिरण्यगर्भदृष्टा ब्रह्मयज्ञजपे विनियुक्ता ऋगियम्। "क्रन्दसीति द्यावापृथिव्योर्नामे"ति निघण्टुः। ईदृश्यौ क्रन्दसी द्यावापृथिव्यौ यं पुरुषं मनसा अभ्यैक्षेताम् साधुकृतमिति अपश्यतामित्यर्थः। ईदृश्यावित्युक्तं तत्र कीदृश्यावित्यपेक्षायामुच्यते। अवसा "अव इत्यन्ननामे"ति निघण्टुः। अवसा हविर्लक्षणेनान्नेन वृष्टिजनकेन तस्तभाने समस्तप्राणिजातं स्तम्भयन्त्यावित्यर्थः। इह व्यत्ययेन स्तम्भेर्ह्वादित्वं बोध्यम्। पुनः किंभूते रेजमाने शोभमाने इत्यर्थः किञ्च सूरः "सूरसूर्य्यार्यमादित्यद्वादशात्मदिवाकराः"इत्यमरसिंहोक्तेः सूरः सूर्य्यः यत्र द्यावापृथिव्योर्मध्ये उदितः सन् अधिविभाति अधिकं शोभते इत्यर्थः। तं विहाय कस्मै देवाय हविषा विधेम हविर्दद्मः न कस्मैचिदित्यर्थः। तस्मै कस्मै काय प्रजापतये देवाय हविषा विधेम हविर्दद्मः। अत्र ब्रह्मयज्ञे 'आपोह यद्बृहतीर्यश्चिदापः' इति प्रतीकोक्ते द्वे ऋचौ अध्येतव्ये इत्यर्थः॥

**आपो ह यद्बृहतीर्व्विश्वमायन्गर्ब्भन्दधाना जनयन्तीरग्निम्।**
**ततो देवानाᳬंसमवर्त्ततासुरेकः कस्मै देवाय हविषा विधेम॥१०॥**

प्रजापतिदेवत्या व्यधिका त्रिष्टुप् हिरण्यगर्भदृष्टा ब्रह्मयज्ञजपे विनियुक्ता ऋगियम्। बृहतीरित्यत्र "वा छन्दसी"ति पूर्वसवर्णदीर्घः॥ बृहती बृहत्यः महत्यः गर्भं हिरण्यगर्भलक्षणं दधानाः धारयन्त्यः, अत एव अग्निं हिरण्यगर्भलक्षणं तेजः जनयन्तीः (अत्राऽपि पूर्वसवर्णदीर्घो बोद्धव्यः।) जनयन्तीः जनयन्त्यः उत्पादयिष्यन्त्यः एवम्भूताः आपः जलानि जलाधिष्ठात्र्यो देवताः यत् यदा पुरा पूर्वस्मिन् समये विश्वमायन् प्रापुः ह प्रसिद्धौ तेन आप एव प्रथमं सर्वं जगदिदं प्रापुरिति श्रुतिस्मृतिप्रसिद्धिरस्तीत्यर्थः। मन्त्रेऽस्मिन् यच्छब्दश्रवणात्तच्छब्दोऽध्याहर्त्तव्यः यत्तदोर्नित्यसम्बन्धत्वात्। तत् तदा तस्मिन्काले ततो गर्भात्संवत्सरोषितात् देवानामसुः प्राणरूप आत्मा लिङ्गशरीररूपो हिरण्यगर्भः समवर्त्तत सम्यगुत्पन्नोऽभूदित्यर्थः। "तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्व मा इदम्। तुच्छेयनाभ्यपिहितं यदासीत्तपसस्तन्महिना जायतैकम्॥ ऋ० वे० सं० ८।७।१७।३।" इत्यादिश्रुतेः। "अप एव ससर्जादौ तासु बीजमवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥" इति स्मृतेश्च। दीव्यतीतिदेवस्तस्मै देवाय द्युतिस्तुतिक्रीडादियुक्ताय कस्मै काय प्रजापतये हविषा विधेम हविर्दद्मः। अन्यत्सर्वं पूर्ववत्समानम्॥१०॥

**यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम्।**
**यो देवेष्वधिदेवऽएकऽआसीत्कस्मै देवाय हविषा विधेम॥ ११॥**

प्रजापतिदेवत्या त्रिष्टुप् हिरण्यगर्भदृष्टा ब्रह्मयज्ञजपे विनियुक्ता ऋगियम्॥ "चिच्छन्दोऽनेककर्मे"ति यास्कोक्तेरिह चिच्छब्दोऽप्यर्थे। यश्चित् योऽपि देवः सर्वान्तर्यामी पुरुषः महिना महिम्ना (आपः विभक्तिव्यत्ययो द्रष्टव्यः सुपां सुपो भवन्तीति वचनात्।) अपः पर्य्यपश्यत् सर्वतो ददर्शेत्यर्थः। कीदृशी अपः पर्य्यपश्यदित्यपेक्षायामुच्यते। दक्षं जगन्निर्माणे कुशलमेतादृशं प्रजापतिं दधानाः धारयन्तीः पुनः कीदृशीः यज्ञं जनयन्तीः यज्ञशब्देन इह यज्ञकर्त्रीप्रजा विवक्षिता सृष्टिकर्त्रीप्रजां प्रजनयन्तीः उत्पादयित्रीः एतादृशीः अपः पर्य्यपश्यदित्यर्थः। किञ्च यश्च देवः देवेष्वधिदेवानां मध्ये एक एव अधिको मुख्य आसीत् सम्बभूवेत्यर्थः। तस्मै कस्मै काय प्रजापतये देवाय हविषा विधेम हविर्दद्मः॥११॥

इति श्रीदामोदरशर्म्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये तर्प्पणोत्तरपठनीयमन्त्रादि-ब्रह्मयज्ञीयमन्त्रान्तात्मकः सप्तमः परिच्छेदः समाप्तः॥

---

# अष्टमपरिच्छेदः ।

## ॥ अथ देवपूजनमन्त्रारम्भः ॥

ॐ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ १ ॥

## अथ देवपूजनमन्त्रव्याख्या ।

हिरण्यस्तूपदृष्टा त्रिष्टुप् सूर्य्यदेवत्या मन्त्रलिङ्गात्सूर्य्यपूजने तदीयजपहोमादौ च विनियुक्ता ऋगियम् । अतो मन्त्रलिङ्गादेव सूर्य्यपूजाप्रकरणे पराशरेणाप्युक्तम्, "आकृष्णेनेति मन्त्रेण सूर्य्यमाराधयेत्सुधीः" इति । "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । सूर्य्यः आयाति आगच्छति अत्र व्यवहितेनापि क्रियापदेन सहोपसर्गस्य सम्बन्धोबोद्धव्यः, "व्यवहिताश्चे"ति पाणिनिवचनात् । केन आयाति रथेन आयाति । किम्भूतेन रथेन हिरण्ययेन हिरण्मयेनेत्यर्थः । हिरण्ययेनेत्यत्र हिरण्यशब्दाद्विहितस्य मयटो मस्य "ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसी"ति पाणिनीयसूत्रेणलोपो निपात्यते । अतो हिरण्यय इति हिरण्मयार्थे निपातइतिबोद्धव्यम् । किंभूतः सूर्य्यः सविता सुवति स्वस्वव्यापारे जगत् प्रेरयतीतिसविता सर्वप्रेरकः सति सूर्योदय एव यथाकार्य्यं सर्वव्यापारेषु सर्वप्राणिनां प्रवर्त्तमानत्वात् । उक्तञ्च योगियाज्ञवल्क्येन "सविता सर्वभूतानां सर्वभावान्प्रसूयते । सवनात्पावनाच्चैव सविता तेन चोच्यते ॥"इति । पुनः किम्भूतः सूर्य्यः देवः दीव्यतीति देवः द्युतिस्तुतिदीप्तिक्रीडादियुक्तः । उक्तञ्च तेनैव "दीव्यते क्रीडते यस्माद्द्योतते रोचते दिवि । तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः ॥"इति । किङ्कुर्वन् सन्नायाति भुवनानि पश्यन् भुवनवर्त्तिनो लोकान् पुण्यपापकर्त्तॄन् साक्षिवन्निरीक्षमाणः सन्नायातीत्यर्थः । तथा अमृतं देवं मर्त्यं मनुष्यञ्च निवेशयन् स्वस्वव्यापारे प्रवर्त्तयन्नितिभावः । पुनः किम्भूतः सूर्य्यः कृष्णेन मलिनेन रजसा रात्रिकालेन सह आवर्त्तमानः ( अत्रापि पूर्ववद्व्यवहितेन क्रियापदेन सहोपसर्गस्य सम्बन्धो ज्ञेयः ) पुनः पुनस्तमेव देशमागच्छन्नित्यर्थः । अस्ताचलादुदयाचलमागच्छन्निति भावः । प्रायो रात्रौ रजोगुणबाहुल्येन रजःशब्देन रात्रिरुच्यते । तत्र च प्रायो रात्रिकाले पुण्यकर्म्मणामनुत्पादनाद्रात्रेः कृष्णत्वमुक्तम् । य एवङ्गुणविशिष्टः सविता आयाति तमहमनेन मन्त्रेण पूजयामि । हवनपक्षे तदर्थमहं जुहोमि च । स च मत्सपर्य्यया होमपक्षे मत्कृतहोमेन च तुष्टः सन्मां सुखं गमयत्वित्याशंसावाक्यार्थः । अनेन मन्त्रेण पञ्चदेवतापूजने नवग्रहपूजने च सूर्य्यपूजां कुर्व्वन्ति सम्प्रदायविदस्तदुभयत्र मन्त्रार्थोऽयं बोद्धव्यः ॥ १ ॥

ॐ गणानान्त्वा गणपतिर्ठ. हवामहे प्रियाणान्त्वा प्रियपतिर्ठ. हवामहे निधीनान्त्वा निधिपतिर्ठ. हवामहे वसो मम । आहमजानि गर्भधमात्वमजासि गर्भधम् ॥ २ ॥

गणपतिदेवत्यः "गणानान्त्वेति मन्त्रेण गणेशमर्चयेत्सुधीरि"तिपराशरोक्तेः गणपति-पूजने तदीयजपहोमादौ च विनियुक्तोऽयं यजुर्मन्त्रः। मीमांसकमतेनापि गणानान्त्वेति मन्त्रे गणपतिलिङ्गश्रवणादस्य मन्त्रस्य गणपतिपूजने तदीयजपहोमादौ च विनियोगः। लिङ्गञ्चार्थप्रकाशनं शब्दसामर्थ्यमेव। तच्च मीमांसायां सुप्रसिद्धम् "अर्थप्रकाशनं शब्दसामर्थ्यं लिङ्गमिति" अतिरिक्तमिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे गणपते, त्वा त्वां हवामहे आह्वयामः वयं यजमानाः अस्मिन् पूजनकर्म्मणि अस्मिन्हवनकर्मणि अस्मिन्यात्राकाले चेति शेषः। यजमानस्य भार्य्यापुत्राद्यपेक्षया हवामहे इति बहुवचनम्। "अस्मदो द्वयोश्चे"तिपाणिनिवचनाद्वा बहुवचनम्। किम्भूतं त्वां गणानां मध्ये गणपतिं गणपालकमित्यर्थः। यद्वा "पतिः श्रेष्ठे च पालके" इतिरभसाभिधानात्पतिशब्दः श्रेष्ठवाचकोऽपि क्वचिच्छ्रूयते। ततोऽयमर्थः गणानां मध्ये गणपतिं गणत्वेन अर्थात्प्रमुखत्वेनैव श्रेष्ठमित्यर्थः। गणः प्रमुख इति क्षीरस्वामी। गणास्त्वादित्यप्रभृतयः। तथाहि "आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृताः। वसवश्चाष्ट सङ्ख्याताः षट्त्रिंशत्तुषिता मताः। आभास्वराश्चतुःषष्टिर्वाताः पञ्चाशदूनकाः। महाराजिकनामानो द्वेशते विंशतिस्तथा।" इति, तेषां देवगणानां मध्ये तत्तद्गणपालकं गणत्वेन श्रेष्ठं वेति भावः। अथवा "सेनामुखं गुल्मगणौ वाहिनी पृतना चमूरि"त्यमरसिंहोक्तेः सेनाविशेषा एव गणाः अत्र बोद्धव्याः। तेषां मध्ये तत्तद्गणपालकमित्यर्थः। यो हि देवगणानां पालकः सेनाविशेषाणां च नायकस्तस्य तव मादृशानामकिञ्चनानां पालने कतमः श्रमः, न कोऽपीत्यर्थः।

अतोऽस्माकं सर्वविघ्नोपद्रवमपहायास्मद्रक्षणार्थं त्वया यतितव्यमिति भावः। तथा च हे गणपते, त्वा त्वां हवामहे आह्वयामः वयं यजमाना अस्मिन्कर्म्मणीति शेषः पूर्ववत्। किं भूतं त्वां प्रियाणां मध्ये प्रियपतिं प्रियास्तु भक्ता एव भवन्ति। तथैव भगवद्वाक्यं श्रूयते "यो मे भक्तः स मे प्रियः" इति प्रियपालकानां मध्ये प्रियपतिं भक्तजनपालकं त्वामाह्वयामः। वयं त्वद्भक्ताः स्मः अतोऽस्मिन्निरुपद्रवे त्वया तथा यतितव्यं यथा वयं सुखिनः स्यामेति भावः। अथवा दयितं वल्लभं प्रियमिति कोशादौ दर्शनात्प्रियाणां वल्लभानां मध्ये प्रियपतिं वल्लभपालकं त्वामाह्वयाम इति भावः। तथा च हे गणपते, त्वा त्वां हवामहे आह्वयामः वयं यजमाना अस्मिन्कर्मणीति शेषः पूर्ववत्। किम्भूतं त्वां निधीनां मध्ये निधिपतिं निधयो महापद्मादयः "महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्व्वश्च निधयो नव॥" इति निधीनां मध्ये नवनिधिपालकमित्यर्थः। नहि द्रव्यं विना किमपि कार्य्यं सम्पत्स्यतेऽकिञ्चनानामतो भक्तार्थं द्रव्यलाभेऽपि यत्नशीलमितिभावः। अथवा विद्या हवै ब्राह्मणमाजगाम गोपाय माꣳ शेवधिष्टेऽहमस्मीति श्रुतेः। शेवधयो निधयो ब्रह्मविद्यारूपावेदविद्या इति यावत् तत्पालकमित्यर्थः। वेदविद्या यथा भक्तानां यातयामत्वादिदोषतः सुरक्षिताः स्युस्तथा यत्नशीलमित्यर्थः। वेदचतुष्टयाभिप्रायेण बहुवचनम्। नहि वेदमन्तरा किमपि श्रेयः साधनं भवितुमर्हति। तस्मात्तद्रक्षणेऽपि यत्नशीलमिति भावः। हे वसो, धनभूतगणपते, मम पतिर्भूया इति शेषः। ममेत्यत्र वचनव्यत्ययः अस्माकं यजमानानां पतिः पातीति पतिः रक्षको भवेत्यभिप्रायः। आहमजानीति "सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङाञ्च व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेने"तिकारिकया अहमित्यत्र सुपः अजानीत्यत्र तिङश्च व्यत्ययो बोद्धव्यः। तेन वयमजामेति योज्यम्। "अज गतिक्षेपणयोरि"

त्यस्मादिह लडथ लोट्। अजतिरिह गत्यर्थः। यश्च गत्यर्थः स ज्ञानार्थोऽपि ये ये गत्यर्थास्ते ते ज्ञानार्था इत्युक्तत्वात्। गर्भं दधातीति गर्भधं गर्भोपपदाद्धधातेः "आतोऽनुपसर्गे कः" इति कप्रत्यये अनुबन्धलोपे "आतो लोप इटि च" त्याकारलोपे गर्भधमिति पदं सिद्ध्यति। गर्भ शब्दश्चात्र "गर्भोऽपकारके ह्यग्नौ सुखेपनसकण्टके" इति यादवीयकोशात्सुखवाचकः। ततोऽयमर्थः। हे गणपते, वयं यजमाना गर्भधं सुखधारकं सुखपोषकं सुखप्रदं च "डुधाञ् धारणपोषणयोः, दानेऽप्येके" इत्युक्तेः, एतादृशं त्रिविधं त्वदीयं विघ्नोपशमनसामर्थ्यम् आ अजाम आसमन्ताद्भावेन जानीम इत्यर्थः। त्वञ्च गर्भधं सुखधारकं सुखपोषकं सुखप्रदं च स्वीयं विघ्नोपशमनसामर्थ्यम् आ अजासि अत्र लोडर्थ एव लेट् आ अज आसमन्ताद्भावेन जानीहीत्यर्थः। स्वीयसामर्थ्यं ज्ञात्वाऽस्मिन्निरुपद्रवार्थं त्वया तथा यतितव्यं यथा वयं सुखिनः स्यामेति भावः। अतस्त्वां वयं पूजयामो हवनपक्षे त्वदर्थञ्च जुहुमस्त्वञ्चास्माकं सर्वोपद्रवमपहाय सुखं गमयेत्याशंसावाक्यार्थः॥ २॥

ॐ अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन।
ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्॥ ३॥

शक्तिर्देवत्याऽनुष्टुप् प्रजापतिदृष्टा "शक्तिमात्रार्चनं कुर्य्यादम्बेऽम्बिकेऽनया ऋचा" इति पराशरवचनादेव शक्तिमात्रपूजने तदीयजपहोमादौ च विनियुक्ता ऋगियम्। यथा लोके मातृसाहाय्यं विना पितृसान्निध्यं न लभते तद्वत्परलोकेऽपि मातृरूपायाः शक्तेः साहाय्यं विना पितृरूपस्य परब्रह्मः सान्निध्यं न लभते इत्यभिप्रायेण एव मुच्यते।

हे अम्बे, हे अम्बिके, हे अम्बालिके, मातर्दुर्गे, कश्चन "चनशब्दोऽप्यर्थे" कोऽपि त्वदन्यो देवः मा मां न नयति न प्रापयति पितृसान्निध्यमिति शेषः। पिता च स एव परमेश्वरः "यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वे" ति शुक्लयजुर्वेदीय (१७।२७) श्रुतेः। तत्सान्निध्यं त्वदन्यः कश्चिदपि मां न प्रापयतीत्यर्थः। अत एव अश्वकः ससस्ति "अशू व्याप्तौ" स्वादिरात्मनेपदी, इत्यस्मात् "अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्" ति क्वन्प्रत्ययः। अश्नुते सर्वं जगदित्यश्वः "तत्सृष्ट्वा तदेवानुप्राविशद्" ति तैत्तिरीयश्रुतेः अश्वः सर्वव्यापकः परमेश्वरः। ततोऽश्वशब्दात्कुत्सार्थे विहितः कन्प्रत्ययो बाहुलकादिह क्रुद्धार्थे सञ्जातः। क्रुद्धोऽश्वः अश्वकः ससस्ति शेते मद्विषये निमीलितलोचनोऽस्तीत्यर्थः। "षस स्वप्ने" यद्यप्ययं धातुः पाणिनीयधातुपाठेऽदादौ पठितस्तथाऽपि बहुलमेतन्निदर्शनमिति गणसूत्रेण दशगणीपाठबाहुल्याभिधानाज्जुहोत्यादौ बोध्यः। ननु कथं परमेश्वरः क्रुद्धः सन् शेते इत्यपेक्षायां क्रोधकारणमुच्यते। तथाहि अ० वे०, गर्भोप० ४ "अथ नवमे मासि सर्वलक्षणसम्पूर्णो भवति पूर्वजातीः स्मरति कृताकृतं च कर्म्म भवति शुभाशुभञ्च कर्म्म विन्दति[1] "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः। नानायोनिसहस्राणि मयोषितानि यानि वै॥ आहारा विविधा भुक्ताः पीताश्च विविधाः स्तनाः। मातरो विविधा दृष्टाः पितरः सुहृदस्तथा॥ जातस्यैव मृतस्यैव जन्म चैव पुनःपुनः। अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम्॥ यन्मया परिजनस्यार्थे कृतं कर्म्म शुभाशुभम्। एकाकी तेन दह्येऽहं गतास्ते फलभोगिनः॥ यदि योन्याः प्रमुञ्चामि

1 कृताकृतं च कर्म्म स्मरतीत्यपि पाठान्तरं क्वचिद्दृश्यते।

साङ्ख्यं योगं समभ्यसे। अशुभक्षयकर्त्तारं भुक्तिमुक्तिप्रदायिनम्। यदि योन्याः प्रमुञ्चामि तं प्रपद्ये महेश्वरम्। अशुभक्षयकर्त्तारं भुक्तिमुक्तिप्रदायिनम्॥ यदि योन्याः प्रमुञ्चामि ध्याये ब्रह्म-सनातनम्। अशुभक्षयकर्त्तारं भुक्तिमुक्तिप्रदायिनम्॥ यदि योन्याः प्रमुञ्चामि प्रपद्येऽहं सदाशिवम्। अशुभक्षयकर्त्तारं भुक्तिमुक्तिप्रदायिनम्॥ पुनर्नैवं करिष्येऽहं कर्म्म यद्बन्धनं नृणाम्। येनाहमीदृशं दुःखं प्राप्नोमीह निरन्तरम्। गर्भवाससमं दुःखं न भूतं न भविष्यति॥" इत्यादि यत्प्रार्थितवानहं तदिदानीं विस्मृत्य विषयवासनाऽऽसक्तोऽस्मि, न स्वपितरं परमेश्वरं भजामीति। एतत्कारणेनैवाक्रुद्धोऽपि परमेश्वरः क्रुद्धः सन् शेते मद्विषये निमीलितलोचनोऽस्ति। अहं च त्वत्साहाय्यं विना न तत्र गन्तुं शक्नोमि। अन्यश्च त्वदन्यः कश्चिन्मां तत्सान्निध्यं न प्रापयति। अतो हे मातर्दुर्गे, त्वामहं प्रार्थये इति शेषः। यन्मां पितृसान्निध्यं परमेश्वरसामी-प्यं गमयेत्यभिप्रायः। किंभूतां त्वामहं प्रार्थये सुभद्रिकां "अति सु इत्यभिपूजितार्थे" इति यास्कोक्तेः 'सु' इत्यभिपूजितार्थेवर्त्तते। अतोऽयमर्थः। सु—अर्थात् शोभनं भद्रं कल्याणं यस्याः सा सुभद्रा "ततः प्राशस्त्यर्थे कन्" प्रशस्ता सुभद्रा सुभद्रिका तां सुभद्रिकां प्रशस्तकल्याणवतीं षड्विधैश्वर्य्ययुतामित्यर्थः। पुनः किंभूतां काम्पीलवासिनीं "कमु कान्तौ" कान्तिरिच्छा काम्यते इति कामः इच्छा वासनेत्यर्थः। तत्राकारलोपश्च छान्दसः। "पील प्रतिष्टम्भे" प्रति-ष्टम्भो रोधनम्। काम् अर्थात्कामः पील्यते प्रतिष्टभ्यते प्रतिरुध्यते यत्र, यत्र गतानां साधकानां कामो न जायते इति भावः। तत्काम्पीलं मणिद्वीपाख्यं स्थानं तत्र वसतीतिकाम्पीलवासिनी तां काम्पीलवासिनीं मणिद्वीपस्थामित्यर्थः। हे अम्बे, हे अम्बिके, हे अम्बालिके, मातर्जग-दम्बिके, एवंभूतां त्वामहं पूजयामि हवनपक्षे त्वदर्थं च जुहोमि मत्सपर्य्यया मत्कृतजपहोमा-दिना च परितुष्टा सती मां पितृसान्निध्यं प्रापय तथैहिकमामुष्मिकञ्च सुखं मां गमयेत्याशं-सावाक्यार्थः। इह लोकेऽपि केनचिद्दुःखेन रुदन्तं बालकं माता यथा स्वक्रोडे कृत्वा पितृसा-न्निध्यं नयति तथा मातृस्वरूपा भगवती अपि सांसारिकदुःखाक्रान्तं स्वसुतस्वरूपं मां पितृ-भूतं श्रीपरमेश्वरं प्रापयिष्यतीत्यभिप्रायेण अनेन मन्त्रेण भगवत्यर्चनं तदीयजपहोमादिकञ्च क्रियते। अतो विनियोगानुसारेण मन्त्रार्थोऽयं प्रदर्शितः। अम्बे अम्बिके अम्बालिके इत्यत्र "आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे" इति प्रकृतिभावोऽवगन्तव्यः॥ ३॥

ॐ नमः॑ शम्भ॒वाय॑ च मयोभ॒वाय॑ च॒ नमः॑ शङ्क॒राय॑ च।
मयस्क॒राय॑ च॒ नमः॑ शि॒वाय॑ च शि॒वत॑राय च॥ ४॥

रुद्रदेवत्यः रुद्रपूजने तदीयजपहोमादौ च विनियुक्तो यजुर्मन्त्रोऽयम्। "विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति" इति तैत्तिरीयश्रुतिवाक्येन शिवः मङ्गलमयः सुखरूपः शिवाख्यः परमेश्वरः प्रतीयते। स च ब्रह्म एव "अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्। तथादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम्। स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराड् (अ० वे० १।६।८)" इतिश्रुतेः शमिति सुखनामेति निघण्टुः। शाम्यते क्लेशवृन्दं येन तत् शं (शाम्यतेर्विन्) शामयितृ क्लेशानामि-

१ भुक्तिमुक्तिप्रदायकमित्यपि क्वचित्पुस्तके पाठो दृश्यते।

त्यर्थः। शं सुखम् अर्थात्सुखस्वरूपं ब्रह्मेतिभावः। भवत्यस्मिन् जीव इति भवः संसारः। शं चासौ भवश्च इति शम्भवः मुक्तिरूपः संसाररूपश्चेत्यर्थस्तस्मै शम्भवाय निर्गुणाय गुणात्मने च शिवाय नमः नमस्कारोऽस्त्वित्यर्थः। यद्वा शम् ऐहिकं सुखं भवत्यस्मादसौ शम्भवस्तस्मै शम्भवाय भक्तानां लौकिकसुखोद्भावकाय शिवाय नमोऽस्त्वित्यर्थः। तथा मयोभवाय नमः। "मय इत्यपि सुखनामेतिनिघण्टुः"। "मिञ् हिंसायां स्वादिरुभयपदी" तत औणादिकोऽसुन्। मिनोति हिनस्ति दुःखमितिमयः सुखं तद्भवति यस्मादसौ मयोभवस्तस्मै मयोभवाय भक्तानां पारलौकिकसुखोद्भावकाय अर्थात् संसारदुःखनाशकाय शिवाय नमः नमस्कारोऽस्त्वित्यर्थः। शमैहिकं सुखं स्रक्चन्दनवनिताविलासादिकं करोतीति शङ्करस्तस्मै शङ्कराय भक्तानां लौकिकसुखकारकाय शिवाय नमः नमस्कारोऽस्त्विविशेषः। मयः आमुष्मिकं सुखं मोक्षरूपं सुखं करोतीति मयस्करस्तस्मै मयस्कराय भक्तानां पारलौकिकसुखकारकाय अर्थादत्यन्तदुःखनिवृत्तिकारकाय मोक्षप्रदाय शिवाय नमः नमस्कारोऽस्त्वित्यर्थः। शम्भवाय च मयोभवाय च शङ्कराय च मयस्कराय चेति पदचतुष्टयेन स्रक्चन्दनादिरूपेण साक्षात्सुखकारित्वं शास्त्रादिरूपेण ज्ञानप्रदत्वात्तद्वारा मोक्षसुखकारित्वञ्च प्रतिपादितम्। तस्यैव पुनः शब्दान्तरेण प्रतिपादनं तद्यथा शिवः कल्याणरूपो निष्पापस्तस्मै शिवाय स्वतः कल्याणरूपाय निष्पापाय रुद्राय नमः नमस्कारोऽस्त्विविशेषः। अत्यन्तं शिवः शिवतरः भक्तानामपि निष्पापकर्त्ता तस्मै शिवतराय महादेवाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। यः कश्चिदुपासकोऽनेन मन्त्रेण शिवपूजनं तदीयजपहोमादिकञ्च करोति तस्मै सदाशिवो लौकिकसुखं दत्वा पारलौकिकमोक्षसुखञ्च ददात्येवेत्यभिप्रायेण अनेन मन्त्रेण शिवपूजनं तदीयजपहोमादिकञ्च सर्वैः क्रियते इति तात्पर्य्यार्थः॥ ४॥

ॐ विष्णो॑र्र॒राट॑मसि॒ विष्णोः॒ श्नप्त्रे॑ स्थो॒ विष्णोः॒ स्यूर॑सि॒ विष्णो॑र्ध्रु॒वो॑ऽसि। वै॒ष्ण॒वम॑सि॒ विष्ण॑वे त्वा॥ ५॥

विष्णुदेवत्यो विष्णुलिङ्गादिह विष्णुपूजने तदीयजपहोमादौ च विनियुक्तो यजुर्मन्त्रोऽयम्। 'अस्ति, स्तः' इति प्राप्ते "तिङां तिङो भवन्ती"तिवचनात् सुप्तिङुपग्रहलिङ्गनराणामिति कारिकया च पुरुषव्यत्ययेन प्रथमपुरुषस्थाने मध्यमपुरुषः। अतो मन्त्रे असि, स्थः, इति दृश्यते। किन्तु विष्णुपूजनतदीयजपहोमादिविनियोगविषयतया मन्त्रार्थविचारदशायामस्ति स्त इत्येवावगन्तव्यम्। पाणिनिनाऽपि तथैव सूत्रं कृतं "व्यत्ययो बहुलं", "बहुलं छन्दसि" इत्यादि च। "सुपां सुपो भवन्ति", "तिङां तिङो भवन्ती"ति च श्रूयते। तस्माच्छन्दसि दृष्टानुविधयो भवन्ति। नहि वेदस्य रूपान्तरं कर्त्तुं शक्नुयादपौरुषेयत्वात्। पूजनादिप्रयोगावसरे यथादृष्ट एव मन्त्रः पठनीयः। मन्त्रार्थविवेचनावसरे व्यत्ययाद्यनुसन्धेयम्। अतिरिक्तमिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे विष्णो, विष्णोः ("विष्लृ व्याप्तौ जुहोत्यादिरुभयपदी" तस्माद्विषेः किचेत्यौणादिको नु प्रत्ययः।) वेवेष्टि व्याप्नोति सर्वं जगदिति विष्णुः सर्वव्यापकः परमेश्वरः "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्म्माध्यक्षः सर्वभूताऽधिवासः साक्षी चेता केवलो निर्गुणश्च। (कृ० य० तै०)" इति श्रुतेः। "स एव विष्णुः स एव प्राणः स कालाग्निः स चन्द्रमाः। स एव सर्वं यद्भूतं यच्च

भाव्यं सनातनम् (अ० वे०)" इतिश्रुतेश्च। तस्य विष्णोः व्यापकस्य विराड्देहिनस्तव रराटमसि द्युलोकस्थानमिति शेषः। रलयोर्डलयोस्तथेति रलयोरैक्यस्मरणात् रराटमर्थाल्ललाटमस्तीत्यर्थः। द्युलोकस्थानं तव ललाटभूतं वर्त्तते इति भावः। तथा हे भगवन्, विष्णोः व्यापकस्य विराड्देहिनस्तव श्नप्त्रे स्तः "द्यावापृथिव्यौ" इति शेषः। ओष्ठरूपे स्त इत्यर्थः। ब्रह्माण्डदेहिनस्तव द्यावापृथिव्यौ ओष्ठभूते वर्त्तेते इत्यभिप्रायः। "नक्षत्राणि रूपमश्विनौ व्यात्तमि"ति (शु० य० वा० सं० ३१।२१) श्रुतेः। "अश्विनौ" द्यावापृथिव्याविति यास्कः। तथा हे भगवन्, विष्णोः व्यापकस्य ब्रह्माण्डदेहिनस्तव सम्बन्धिनी स्यूरस्ति मायेति शेषः। सीव्यतिरत्र नह्यर्थे धातूनामनेकार्थत्वात् आर्षत्वेन बाहुलकाद्वा। सीव्यते नह्यते जीवो यया सा स्यूः संसारबन्धनहेतुभूताऽविद्यारूपा माया इत्यर्थः। लोके या इयमविद्या सा तवैव वैष्णवी मायेत्यभिप्रायः। अतो भगवता स्वेनैवोक्तं गीतायां "मम माया दुरत्यये"ति। तथा हे भगवन्, विष्णोः व्यापकस्य विराड्देहिनस्तव सम्बन्धी ध्रुवोऽस्ति ध्रुवो जीव एवोच्यतेऽविनाशित्वात्। "अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" इत्यादि भगवदुक्तेः। अत एव भगवता स्वेनैवोक्तं "ममैवांशो जीवलोके जीवभूतः सनातनः"इति। "तत्सृष्ट्वा तदेवानुप्राविशत्स प्राणः स आत्मा स जीवः"इति श्रुतेः। अत एव वैष्णवमसि लोकत्रयमिति शेषः। चराचरसृष्टौ हिरण्यगर्भाद्युपाधिपरिछिन्नेन औपाधिकभेदेन त्वमेवजीवरूपोऽसि अतः सर्वमिदं जगद्वैष्णवमस्तीत्यभिप्रायः। हे भगवन्, विष्णवे व्यापकाय पूर्वोक्तप्रकारेण ब्रह्मादिस्तम्बपर्य्यन्ताय ब्रह्माण्डदेहधारिणे विराट्पुरुषाय तुभ्यं नम इति शेषः। त्वदर्थं नमस्करोमीत्यर्थः। तथा हे भगवन्, त्वा त्वां यथाशक्त्युपचारैः पूजयामिति शेषः। होमपक्षे त्वा त्वां ध्यात्वा विष्णवे व्यापकाय तुभ्यं हविर्दद्म इति वाक्ययोजनेत्येतावानेव वाक्योहः। अन्यत्सर्वं समानमेव। एवं मत्सपर्य्यया मत्कृतजपहोमादिना च परितुष्टस्त्वं मामैहिकमामुष्मिकञ्च सुखं गमयेति प्रार्थनावाक्यार्थः। य एवं विराड्रूपिणं विष्णुं स्मृत्वा अनेन मन्त्रेण विष्णुपूजाजपहोमादिकं करोति तस्य सर्वावाप्तिर्भवतीत्यभिप्रायेण अनेन मन्त्रेण विष्णुपूजा तदीयजपहोमादिकञ्च क्रियते इति भावः॥ ५॥

ओ३म् अ॒ग्निं दू॒तं पु॒रो द॑धे हव्य॒वाह॒मुप॑ब्रुवे।
दे॒वाँ२॥ऽआसा॑दयादि॒ह॥ ६॥

अग्निदेवत्या गायत्री विश्वरूपदृष्टा अग्निपूजने तदीयजपहोमादौ च विनियुक्ता ऋगियम्। "शिवं भास्करमग्निञ्च केशवं कौशिकीमपि। मनसा चाप्यनर्चयन्याति देवलोकादधोगतिम्। ब्रह्माणं शङ्करं सूर्य्यं तथैव मधुसूदनम्। पूजयेत्कौशिकीं नित्यमग्निं ब्रह्माणमेव च॥" इति स्मृत्युक्तवचनाभ्यामग्निपूजनं नित्यत्वेन प्रतीयते। "आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात्। महागणपतेः कर्म्मसिद्धिं प्राप्नोति मानवः॥" इत्यादि स्मृत्युक्तवचनेन तदीयपूजाफलमप्यवगम्यते। अतोऽग्निलिङ्गादेव "अग्निन्दूतम्" इति मन्त्रेण अग्निपूजा तदीयजपहोमादिकञ्च क्रियते। अतो विनियोगानुसारेण इह व्याख्यायतेऽयं मन्त्रः। धनमिच्छेद्धुताशनादित्युक्तत्वादग्नितो धनमिच्छन्नहमुपासकः हव्यवाहं हव्यं वहतीति हव्यवाट् तं हव्यवाहं हविषां वोढारं दूतम् "अग्निर्वै देवानां दूतः" इति श्रुतेर्देवानां दूतकर्मकारिणम् अग्निं पुरो दधे अग्रे स्थापयामि। स्थाप्य च तमहमिदमुपब्रुवे तदुपसमीपे कथयामि। यत्किल हे अग्ने, इह मम-

गृहे मह्यं धनं दातुं देवान् द्युतिस्तुतिक्रीडादियुक्तान् "आनन्दः कर्दमः श्रीदश्चिक्लीद इति विश्रुताः। ऋषयश्च श्रियः पुत्रा मयि श्रीर्देवदेवते"ति श्रुतेः आनन्दकर्दमश्रीदचिक्लीतनामकान् श्रियः पुत्रान् आसादयात् आसादय मम गृहे स्थापय। तेषां मद्गृहावस्थानेन स्वपुत्रान्वेषणार्थं श्रियोऽप्यागमनसद्भावान्मम निश्चितमेव धनं स्यादितिभावः। होमपक्षे हे अग्ने, इह यज्ञे हविर्भोक्तुं पश्चान्मह्यं धनं च प्रदातुं देवान् इन्द्रादीन् आसादयात् आसादय स्थापयेत्येवं योजनामात्रविशेषः। अन्यत्सर्वमेव समानम्। "वह प्रापणे" इत्यस्मात् "वहश्चे"ति ण्विप्रत्यये सर्वापहारलोपे हव्यवाडितिपदं सिद्ध्यति। आङ्पूर्वाण्णिजन्तात्सदतेर्लोडर्थे लेट्। "इतश्च लोपः परस्मैपदेष्वि"तीकारलोपे "लेटोऽडाटौ"इत्याडागमे बाहुलकाद्व्यत्ययेन मध्यमपुरुषस्थाने प्रथमपुरुषैकवचने आसादयादिति रूपमवगन्तव्यम्॥ ६॥

ॐ ब्रह्म॑ ज॒ज्ञानं॑ प्र॑थ॒मं पु॒रस्ता॒द्वि सी॑म॒तः सु॒रुचो॑ वे॒न आ॑वः।
स बु॒ध्न्या॑ उप॒मा अ॑स्य वि॒ष्ठाः स॒तश्च॒ योनि॒मस॑तश्च॒ वि व॑ः॥ ७॥

ब्रह्मदेवत्या प्रजापतिदृष्टा त्रिष्टुप् इह ब्रह्मपूजने तदीयजपहोमादौ च विनियुक्ता ऋगियम्॥ अग्निं ब्रह्माणमेव चेत्यादि पूर्वोक्तकतिपयस्मृतिवचनद्वारा नित्यत्वेनैव ब्रह्मपूजाऽप्यवगम्यते। किन्तु यदिमेऽस्ति तपस्तप्तमित्यादि सावित्रीशापाद्ब्रह्मपूजानिषिद्धा। तथाऽपि "पूजयिष्यन्ति ब्रह्माणं नरा भक्तिसमन्विताः" इत्यादि सावित्रीकृतशापोद्धारात्स्कन्दपुराणादौ च "अद्यप्रभृति यः पूजां मन्त्रयुक्तां करिष्यती"त्यादि समन्त्रकब्रह्मपूजाप्रतिषेधविधानाद्ब्राह्मे च "यदन्यदेवपूजायां तव पूजा भविष्यती"ति सर्वपूजान्ते ब्रह्मपूजाविधानाच्च नित्यकर्मणि अमन्त्रकमेव ब्रह्मपूजनं कर्त्तव्यम्। काम्यकर्म्मणि तु नित्यपूजाप्रसङ्गे समन्त्रकब्रह्मपूजाप्रतिषेधवचनस्य नित्यपूजाप्रतिषेधपरत्वात् ब्रह्म जज्ञानमितिमन्त्रेण समन्त्रकब्रह्मपूजनमवश्यमेव कर्त्तव्यम्। तत्पक्षे ब्रह्मपूजने विनियुक्तोऽयं मन्त्रः। अत्र तु केवलं देवपूजाप्रसङ्गत्वेन ब्रह्मपूजने मन्त्रोऽयं प्रदर्शितः। प्रयोजनं तु ग्रहाधिदेवताप्रत्यधिदेवतापूजनेऽग्रे भविष्यति॥ व्याख्यातश्च ब्रह्मयज्ञजपप्रकरणे। तत्रास्य मन्त्रस्य व्याख्या द्रष्टव्या॥ ७॥

देवपूजनमन्त्राणामिमे येऽर्थाः प्रदर्शिताः।
श्रुतिस्मृतिप्रमाणेन प्रीयन्तां तैश्च देवताः॥

॥ इति श्री दामोदरशर्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्येऽष्टमोऽयं देवपूजनपरिच्छेदः समाप्तः शुभमस्तु॥

---

# अथ नवमपरिच्छेदः।



## अथ षोडशोपचारादिपूजनमन्त्रारम्भः।

ॐ गणानान्त्वा गणपतिꣳहवामहे प्प्रियाणान्त्वा प्प्रियपतिꣳहवामहे निधीनान्त्वा निधिपतिꣳहवामहे व्वसो मम ॥ आहमजानि गब्भधमात्वमजासि गब्भधम् ॥ १ ॥

### अथ मन्त्रव्याख्या।

तत्र यद्यपि षोडशोपचारपूजायां देवताभेदेन मन्त्रभेदोऽप्यस्ति। यथा "नमस्ते" इत्यादिषोडशर्चेन रुद्रसूक्तेन रुद्रस्य षोडशोपचारपूजा विहिता। सहस्रशीर्षेति षोडशर्चेन पुरुषसूक्तेन विष्णोः षोडशोपचारपूजा विहिता। तथा हिरण्यवर्णामिति षोडशर्चेन श्रीसूक्तेन देव्याः षोडशोपचारपूजाविहिता। ते च मन्त्रा यथाप्रकरणं षडङ्गशतरुद्रियप्रकरणादावग्रे द्रष्टव्याः। तथाऽपीह गणपतिप्रसङ्गेन देवतामात्रस्य षोडशोपचारपूजनमन्त्राः क्रमेणोच्यन्ते। तत्रादौ गणपतेरावाहनमन्त्रो गणानान्त्वेति देवपूजाप्रकरणे व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या। तथा "नमस्ते" इति "नमः शम्भवाय" इति वा रुद्रस्यावाहनमन्त्रः। "सहस्रशीर्षा" इति "विष्णोरराटम्" इति वा विष्णोरावाहनमन्त्रः। एवं "हिरण्यवर्णाम्" इति "अम्बेऽअम्बिके" इति वा देव्या आवाहनमन्त्रः। ते च यथाप्रकरणमग्रेव्याख्यास्यन्ते तत्र द्रष्टव्याः ॥ १ ॥

ॐ पुरुषऽएवेदꣳ सर्व्वय्यद्भूतं यच्च भाव्व्यम्।

उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥

पुरुषदेवत्याऽनुष्टुप् नारायणदृष्टा पुरुषदेवतामात्रस्य षोडशोपचारादिपूजने आसनदाने विनियुक्ता ऋगियम्। अतिरिक्तमिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। "तद्यदिदमाहुरमुं जयामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेषऽउह्येव सर्वेदेवाः" (छा० ८।१२।६) इति श्रुतेः सर्वेषां देवानां तस्मात्पुरुषादेवोत्पन्नत्वात्तेषां सर्वेषामपि देवानां पुरुषत्वमिति प्रतीयते। तस्मात्सर्वेषामेव देवानां षोडशोपचारपूजनेऽनेन मन्त्रेण सर्वेभ्य एव देवेभ्य आसनं दीयते। "पॄ पालनपूरणयोः" (जु० प०) तस्मात् "पुरःकुषन्" इत्यौणादिके कुषन्प्रत्यये "उदोष्ठ्यपूर्वस्य" इति उत्वे तस्य च "उरण्रपरः" इति रपरत्वे "पुरुषः" इति पदं सिद्ध्यति। पिपर्ति पालयति सर्वमितिपुरुषः, पिपर्ति पूरयति सर्वान्कामानिति वा पुरुषः, पूर्णमनेन पुरुषेण सर्वमिदं जगदिति वा पुरुषः। तदुक्तं श्रुत्या "यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ इति (कृ० य० वे० तैत्ति० श्वे० ९)" अतोऽयमर्थः। योऽयं गणपतिरन्यो वाऽमुक-

देवः स पुरुष एव परमात्मस्वरूप एवेत्यर्थः। किञ्च यदिदं दृश्यमानं वर्त्तमानकालीनं जगत् यच्च भूतं भूतकालीनं जगत् तथा यच्च भाव्यं भविष्यत्कालीनं जगत् तत्सर्वं पुरुष एव अष्टाभिर्धातुभिः पूर्यते इति पूः शरीरं तत्र पुरि शेते इति पुरिशयः पुरुषः सर्वगतः सर्वाधिपः सर्वपालकः सर्वकामपूरकश्च मम पूज्योऽमुकदेवो योऽयं गणपत्यादिः स एवेत्याशयः। न ह्यस्मात्पुरुषाद्भिन्नं किमप्यस्तीति भावः। तथा च श्रुतिः—"स एव सर्वं यद्भूतं यच्च भाव्यठं० सनातनम्। ज्ञात्वा तं मृत्युमेति नान्यः पन्था विमुक्तये॥ इति (अ॰वे॰कै॰उ॰१।९)" उत शब्दोऽप्यर्थे। उत अपि च अमृतत्वस्य मोक्षस्य ईशानः मोक्षप्रदोऽपि स एव मम पूज्योऽमुकदेवो गणपत्यादिरेवेत्यर्थः। तथा यत् अन्नेन अदनीयेन कर्मफलेन अतिरोहति प्रादुर्भवति 'कर्मानुगो गच्छति जीव लोकः' इति व्यासोक्तेः, यद्वा यत् अन्नेन अतिरोहति अद्यते यत्तदन्नं भक्तादितृणपर्य्यन्तं यत्किञ्चिद्भक्ष्यपदार्थजातं तेन अन्नेन यन्मनुष्यादि तिर्य्यक्पर्य्यन्तं जीवजातमतिरोहति जायते जन्म लभते तत्सर्वं पुरुष एवेत्यर्थः। द्रव्यदेवतोभयरूपः स एव मम पूज्योऽमुकदेवो गणपत्यादिरितिभावः। तदुक्तं च श्रुत्या "अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति तत इह व्रीहियवा ओपधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु य्रो दुर्निष्प्रपतरं यो योह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति तस्मादेवमाह यदन्नेनातिरोहतीति।" (छा॰५।५।६।) य एवं पुरुषो मत्पूजनीयो देवस्तस्मै गणाधिपतये अन्यस्मै वा अमुकदेवाय अनेन मन्त्रेणासनं मया दीयते, इति शेषः। स च मद्दत्तमासनं प्रतिगृह्य स्वोपमं मां करोतु यथाऽहमपि सर्वमिदं भूयासम्। ऐहिकामुष्मिकसुखसम्पन्नो भवेयमित्यभिप्रायः। यदिदमासनं तदपि पुरुष एव यस्मै च दीयते सोऽपि पुरुष एव येन दीयते सोऽपि पुरुष एव सर्वं खल्विदं ब्रह्मेति श्रुतेः॥ एवं पूज्यपूजकोपचारेषु सर्वत्र ब्रह्मत्वभावनयाऽहमपि ब्रह्माऽस्मीति बोधे ब्रह्मवित्साक्षाद्ब्रह्मैव भवति। तथा च श्रुतिः "तदिदमप्येतर्हि यऽएवं वेदाऽहं ब्रह्मास्मीति स इद ठं० सर्वं भवति तस्य ह न देवाश्च ना भूत्या ईशते॥" इति (बृह॰ १।४।१०।) यतोऽनेन मन्त्रेणासनप्रदाने एवं फलं भवति अतः सम्प्रदायविद्भिरनेन मन्त्रेण षोडशोपचारपूजायामासनं दीयते इति तात्पर्य्यार्थः। आसनस्य द्रव्यरूपत्वात्पुरुषस्य देवताकत्वाद्द्रव्यदेवतास्मारको मन्त्र इति मन्त्रलक्षणमपि पुरुष एवेत्यस्याः ऋचः सङ्गच्छते॥ २॥

ॐ एतावानस्य महिमातो ज्यायांश्च पूरुषः।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि॥ ३॥

पुरुषदेवत्याऽनुष्टुप् नारायणदृष्टा इह पुरुषदेवतामात्रस्य षोडशोपचारादिपूजने पाद्यदाने विनियुक्ता इयमृक्। अतिरिक्तमितिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। अस्य पुरुषस्य मत्पूज्यस्य गणपतेः (अमुकदेवस्य) पूर्वमन्त्रोक्तः सर्वदेशसर्वकालव्यापित्वसर्वप्राणिगतत्वरूपः एतावान्महिमा महत्वं यदेक एव पुरुषः भूतभविष्यद्वर्त्तमानकालीनो भूत्वा सर्वदेवमनुष्यतिर्य्यगादिस्थावरजङ्गमात्मकब्रह्मादिस्तम्बपर्य्यन्तं रूपं कृत्वा सर्वप्राण्यात्मकत्वेन सर्वगतोऽपि सन् प्राकृतेन धर्म्मणा निर्लिप्त एव वर्त्तते इति एतावानस्य महिमेत्यभिप्रायः। अतोऽयं पूरुषः (पुरः कुषन्निति पृधातोः कुषन्प्रत्यये पूर्वसाधनप्रणाल्या पुरुषस्तस्यैव अन्येषामपीति दीर्घे पूरुषः इति।) पिपर्त्ति पालयति सर्वं पूरयति सर्वकामानिति वा पुरुषः सर्वपालकः सर्वकामपूरकश्च गणपतिः (अमुकदेवः) ज्यायान् अतिशयेन ज्येष्ठः श्रेष्ठः सर्वतो महानि-

त्यर्थः। तदेव स्पष्टीक्रियते। अस्य पुरुषस्य मत्पूज्यस्य गणपतेः (अमुकदेवस्य) विश्वा विश्वानि सर्वाणि भूतानि भूतभविष्यद्वर्त्तमानकालीनानि ब्रह्मादिस्तम्बपर्य्यन्तानि प्राणिजातानि पादश्चतुर्थांशः। अस्य पुरुषस्य एकांश एव कालत्रयवर्त्तीनि चतुर्दशभुवनान्तर्गतसमस्तप्राणिजातानि सन्तीत्यभिप्रायः। अस्मादेव सर्वाणि भूतानि जायन्ते, अनेनैव च पाल्यन्ते, अस्मिन्नेव च स्थीयन्ते, अन्तेऽस्मिन्नेव विलीयन्ते चेति भावः। तथा च श्रुतयः–"आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्तीति। ( तैत्ति० ३।६ ) स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानांᳫ राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्व्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्प्पिता" इति। (बृह०।२।५) स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय ऽ आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्म्ममयोऽधर्म्ममयः सर्वमयस्तद्यदेतदिदंमयोऽदोमय इति। (बृह० २५।५।) स यथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टं. हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि भूतान्यस्यैवैतानि सर्वाणि निःश्वसितानीति। ( बृह० ११।४।५। )" आभिः श्रुतिभिः स्पष्टतया प्रतीयते यत्पादोऽस्य विश्वा भूतानीति। तथाऽस्य पुरुषस्य अर्चनीयस्य गणपतेः (अमुकदेवस्य) अमृतं विनाशरहितं त्रिपात् पादत्रयं चतुर्थांशत्रितयं विज्ञानानन्दघनस्वभावं योगिध्येयमवशिष्टं दिवि द्योतनात्मके सत्यज्ञानानन्देत्यादिवेदान्तप्रतिपाद्ये स्वप्रकाशे चिन्मय एव स्थितमिति शेषः। अतः श्रुत्याऽभिहितम्—"यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचनेति। ( तैत्ति० २।४। ) न यत्र सूर्य्यस्तपति न यत्र वायुर्वाति न यत्र चन्द्रमा भाति न यत्र नक्षत्राणि भान्ति यत्र नाग्निर्दहति यत्र न मृत्युः प्रविशति यत्र न दुःखानि प्रविशन्ति सदानन्दं परमानन्दं शान्तं शाश्वतं सदाशिवं ब्रह्मादिवन्दितं योगिध्येयं परमं पदं तत्रिपादस्यामृतन्दिवीति। ( अ० वे० बृ० जा० )" यतोऽनेन मन्त्रेणास्य पुरुषस्य विश्वरूपत्वेन पादः स्तूयते। अतोऽनेन मन्त्रेण पादं स्तुत्वा पादार्थमुदकं पाद्यमस्मै देवाय दीयते स च मद्दत्तं पाद्यं प्रतिगृह्य ऐहिकमामुष्मिकञ्च सुखं मां गमयत्वित्याशंसावाक्यार्थः। विश्वेति विश्वशब्दस्य प्रथमाबहुवचने "जश्शसो शिरि"तिश्यादेशे "शेश्छन्दसि बहुलमि"ति शेर्लोपे कृते प्रत्ययलक्षणेन "नपुंसकस्य झलचः" इति नुमागमे "सर्वनामस्थाने चे"ति दीर्घे "न लोपः प्रातिपदिकान्तस्ये"ति नलोपे विश्वेतिरूपं भवति। तत्र "वकारस्त्रिविधः प्रोक्तोगुरुर्लघुर्लघूतरः। आदौ गुरुर्लघुर्मध्ये पदान्ते तु लघूतरः" इति शिक्षावचनाद्वकारस्य गुरुत्वे विश्वेत्यवगन्तव्यम्॥ ३॥

ॐ त्रिपादूर्द्ध्वऽउदैत्पुरुषः पादोऽस्येहाभवत्पुनः।

ततो विष्वङ्व्यक्रामत्साशनानशनेऽअभि॥ ४॥

पुरुषदेवत्याऽनुष्टुप् नारायणदृष्टा इह पुरुषमात्रस्य षोडशोपचारादिपूजनेऽर्घ्यदाने विनियुक्ता इयमृक्। अतिरिक्तमिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः।

योऽयं पुरुषः पिपर्त्ति पालयति सर्वम् पूरयति सर्वकामान्, इति पुरुषः सर्वपालकः सर्वकामपूरकश्च गणपतिः (अमुकदेवः) अस्तीतिशेषः। अस्य पुरुषस्य त्रिपात् पादत्रयलक्षणः चतुर्थांशत्रितयोपलक्षितः सत्यज्ञानानन्देत्यादि वेदान्तप्रतिपाद्यः संसारस्पर्शरहितस्वरूपविशेषः, ऊर्द्ध्व एव उदैत् अस्मादज्ञानकार्य्यात्संसाराद्बहिर्भूतोऽत्रत्यैर्गुणदोषैरस्पृष्टः उत्कर्षेण स्थितवानित्यर्थः। अपि च यश्चास्य पुरुषस्य पादः एकांशः स पुनः इहाभवत् जगद्रूपेण इह मायायां सञ्जातः। अनादिकालतः सृष्टिसंहाराभ्यां मायायां पुनः पुनरागच्छतीत्यर्थः। अस्य पुरुषस्यैकांशमात्रे ब्रह्मादिस्तम्बपर्य्यन्तं स्थावरजङ्गमात्मकं सर्वमिदं जगदस्तीत्यभिप्रायः। तथा च श्रुतयः—"विज्ञानमानन्दं ब्रह्म (बृह० ३।९।२८।) एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन, वासुदेवः परब्रह्मेत्यादि। (तैत्ति० २।६।) स अकामयत एकोऽहं बहुस्यां प्रजायेयं स तपोऽतप्यत, तपस्तप्त्वा इदꣳ सर्वमसृजत, यदिदं किञ्चन तत्सृष्ट्वा तदेवानुप्राविशत्। (बृह० श्रु०) स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः। स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किञ्चनेति। (बृह० १।४।२।)" अतो भगवता श्रीकृष्णचन्द्रेणाप्युक्तम्। 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदि"ति। ततोमायायामागत्यानन्तरंविष्वङ् विषु सर्वत्राञ्चतीति विष्वङ् देवतिर्य्यगादिरूपेण ब्रह्मादिस्तम्बपर्य्यन्तं रूपं कृत्वा नानाविधः सन् व्यक्रामत् विशेषेण आक्रान्तवान् सर्वप्राणिषु साक्षिचैतन्यरूपेण स्थित इत्यर्थः। तथा च श्रुतिः-प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा व्विजायते इति। (शु० य० वे० ३१।१९।)" तदेव स्पष्टीक्रियते साशनानशने अभि अश्यते भक्ष्यते यत्तदशनं तेन सह वर्त्तमानं साशनम् अशनादिव्यवहारोपेतं देवमनुष्यपशुतिर्य्यगादिकं चेतनप्राणिजातं तद्भिन्नम् अनशनं तद्रहितमचेतनं गिरिनद्यादिकं तदुभयमभिलक्ष्य स्वयमेव नानाविधो भूत्वा व्याप्तवान् एक एव स पुरुषः स्वतेजसा चराचरं सर्वमिदं जगत्सृष्ट्वा नानारूपेण तदनुप्राविशत् जीवरूपेण सच्चिदानन्दरूपेण च सर्वमिदं जगदभिव्याप्य स्थित इत्यर्थः। तथा च श्रुतिः "एकोऽहं बहुस्यां० तत्सृष्ट्वा तदेवानुप्राविशत्" (तैत्ति० २।६।) इति। "एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" (अ० वे० १२) इति। "एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति। तमात्मसंस्थं येऽनुपश्यन्ति धीरास्तेषां सुखꣳ शाश्वतं नेतरेषाम्" (कृ० य० २।५।१२।) इति। अतो भगवता श्रीकृष्णचन्द्रेणाप्युक्तं "ममैवांशो जीवलोके जीवभूतः सनातनः" इति। आभिः श्रुतिभिर्भगवद्वाक्येन च स्पष्टं प्रतीयते यदयमेक एव बहुधा भूत्वाऽऽस्ते, इत्यभिप्रायः। य एवम्भूतो गणपतिः (अमुकदेवः) परमेश्वरस्तस्मै पूर्वोक्तगुणविशिष्टाय अमुकदेवाय अर्घ्यं मया दीयते स च तदर्घ्यं स्वीकृत्य मामैहिकामुष्मिकं सुखं गमयत्वित्याशंसा वाक्यार्थः॥ विषु इत्युपसर्गद्वयं तस्य समाहारद्वन्द्वे "सुत्र" इति षत्वे "विषु" इत्थं भवति ततश्च ऋत्विगित्यादि सूत्रेणाञ्चतेः सुप्युपपदे किन्प्रत्यये किनः सर्वापहारलोपे कृत्तद्धितेति प्रातिपदिकत्वात्सूत्पत्तौ "अनिदितामि"ति नकारलोपे "उगिदचामि"ति नुमागमे "संयोगान्तस्ये"ति चकारलोपे "क्विन्प्रत्ययस्य कुरि"त्यस्यासिद्धत्वात् "चो कुरि"ति नुमो नकारस्य कुत्वेन ङकारे हल्ङ्यादिना विभक्तिलोपे विष्वङ् इति प्रथमैकवचने रूपं भवतीत्यवगन्तव्यम्॥ ४॥

ॐततो॑ वि॒राड॑जायत वि॒राजो॒ऽअधि॒ पूरु॑षः।
स जा॒तोऽअत्य॑रिच्यत प॒श्चाद्भूमि॒मथो॑ पु॒रः॥ ५॥

पुरुषदेवत्याऽनुष्टुप् नारायणदृष्टा इह पुरुषदेवतामात्रस्य षोडशोपचारादिपूजने आचमनप्रदाने विनियुक्ता ऋगियम्। विष्वङ्व्यक्रामदिति यदुक्तं तदेव प्रपञ्चयते। अतिरिक्तमिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तत्र तच्छब्दश्रवणाद्यच्छब्दोऽध्याह्रियते यत्तदोर्नित्यसम्बन्धत्वात्। ततोऽयमर्थः। यस्मै पुरुषाय सर्वाधिपाय सर्वकामपूरकाय गणपतये (अमुकदेवाय) मयाऽनेन मन्त्रेण आचमनीयं समर्प्यते, इति शेषः। ततस्तस्मात् पुरुषात् ब्रह्मस्वरूपात् विराट् अजायत विविधं राजन्ते शोभन्ते वस्तूनि यत्र असौ विराट् ब्रह्माण्डदेहः समुत्पन्न इत्यर्थः। विराजः अधि विराड्देहोपरि पूरुषः अन्येषामिति दीर्घः पुरुषः पिपर्त्ति पालयति सर्वम्, पूरयति सर्वकामान् इति पुरुषः सर्वाधिपः सर्वकामपूरकः स देवो यस्मै आचमनं दीयते स एव गणपतिः (अमुकदेवः) अजायत तमेव विराजं ब्रह्मदेहमधिकरणं कृत्वा तद्देहाभिमानी एक एव पुमान् समुत्पन्नोऽभूदित्यर्थः। सर्ववेदान्तवेद्यः परमात्मा स्वेच्छया एकोऽहं बहुस्यां प्रजायेयमिति सङ्कल्प्य स्वमायया विराड्देहं समस्तब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी सर्वदेवतात्मा जीवोऽभूदित्यभिप्रायः। तथा च श्रुतिः "स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वाऽत्र प्रविष्ट इव विहरती"ति। (अ० वे० उ० ता० २।९।) "एकोऽहं बहुस्यां प्रजायेयं स तपो अतप्यत तपस्तप्त्वा इद ठं. सर्वमसृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशदि"ति च। स विराट्पुरुषः जातः उत्पन्नः सन् अत्यरिच्यत अतिरिक्तोऽभूत्, देवतिर्यङ्मनुष्यादिरूपेण पृथगभूदित्यर्थः। निरुपाधिकब्रह्मसत्तातः सोपाधिकजीवसत्तां प्राप्त इत्याशयः। स एव पुरुषः पश्चात् देवतिर्यङ्मनुष्यादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः। भूमिग्रहणं पञ्चभूतोपलक्षकं तेन क्षित्यप्तेजोवाय्वाकाशरूपाणि पञ्चभूतानि सृष्टवानित्यर्थः। "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी॥ (अ० वे० मु० २।१।३।" इति श्रुतेः। अथो भूमिसृष्टेरनन्तरं पञ्चभूतसृष्टेरूर्ध्वमित्यर्थः पुरः पूर्यन्ते धातुभिरिति पुरः शरीराणि त्रैलोक्योदरवर्त्तिनां जीवानां ससर्जेति वाक्यशेषः। प्राणिनां पञ्चकोशात्मकान्देहान्सृष्ट्वा तत्र नाना जीवरूपेण प्रविष्टवानित्याशयः। पञ्चभूतसृष्ट्यभावे पाञ्चभौतिकजीवशरीरसृष्टेरप्यसम्भवादिह "भूमिमथो पुरः" इति साधूक्तम्। य एवम्भूतः पुरुष इति शेषः, तस्मै सर्वदेवरूपाय अमुकदेवायानेन मन्त्रेणाचमनं मया दीयते, स च मद्दत्तमाचमनीयं स्वीकृत्य मामैहिकाऽऽमुष्मिकसुखं गमयत्वित्याशंसावाक्यार्थः। इह चतुर्दशभुवनात्मके जगति यो योऽन्योऽपि देवः स सर्वोऽपि पुरुष एव, इति हेतोः पुरुषदेवतामात्रस्य षोडशोपचारपूजायामनेनैव मन्त्रेणाचमनं प्रदीयते, इति सम्प्रदायविदां मतमनुसृत्य विनियोगानुसारेण मया व्याख्यातोऽयं मन्त्रः। एतन्मन्त्रेण रुद्रशिरोजपस्नपनहोमेषु सत्सु रुद्रमभिषिञ्चामि, रुद्रमुद्दिश्य सूक्तमिदं जपामि, रुद्रार्थं जुहोमि, इत्येवं वाक्योहेन आशंसावाक्यार्थोऽनुसन्धेयः। पुरुषसूक्तेन केवलं ब्रह्मोपासनायामित्थमवगन्तव्यं, यतः स जातोऽत्यरिच्यत ब्रह्मसत्तातो जीवसत्तामवाप जीवोऽभूदित्यर्थः। अतश्च जीवेश्वरयोरेकाधिकरणत्वेऽपि सति तयोर्महदन्तरं श्रुत्याभिहितं "न तं विदाथ यऽइमा जजानान्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्या चासुतृपऽउक्थशासश्चरन्ति (शु० य० वे० १७।३१)" इति तस्मात्तदुपासका योगिन आत्मज्ञानोपलब्धये यतन्ते। ऋते ज्ञानान्मुक्तिरित्युक्तत्वात्तथा च श्रुतिः "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय (शु० य० वे० ३१।१८)" इति। सोऽतिरिक्तो

जीवभावत्वमापन्नः परमेश्वरो यथा पश्चाद्देवादिजीवभावादूर्ध्वं भूमिं भूमिमिति पञ्चभूतोपलक्षणं पञ्चभूतानि सृष्ट्वा अथो पुरः ससर्जेत्यर्थः। तथा तदुपासका योगिनोऽपि प्रथमं भूतशुद्धिं विधाय तदनन्तरं च पूरकादिप्राणायामविधानेन ब्रह्म सम्यगनुस्मरेयुरित्याशंसावाक्यार्थः। शेषमन्यत्समानमेव॥

यद्वाऽस्या ऋचोऽर्थान्तरं तद्यथा ततः तस्मात्परमात्मनः हिरण्यगर्भात् विराट् पुरुषः अजायत। विराजो विराट्पुरुषाद्ब्रह्मणः सकाशात् अधिपुरुषो मनुरजायत। स मनुर्जातः सन् पुरः अग्रे ससर्ज मरीच्यादीन् दश ऋषीनितिशेषः। पश्चाद्भूमिमत्यरिच्यत भूमावसक्तोऽभूदित्यर्थः। भूमिपदं देशोपलक्षकं पुरः पश्चादिति जीवभावादूर्ध्वकालोपस्थापकं तेन यथा क्वचिदपि देशे काले वा तस्य मनोः पुत्रपौत्रप्रपौत्रादिसम्बन्धिभिः सदृशःकोऽपि नाभूत्तथा ममापि वंशभवादिविस्तारो भवतु, इत्याशास्यानेन मन्त्रेण ( अमुकदेवाय ) मया आचमनीयं दीयते, इति भावः॥ ५॥

ॐ पय॑ः पृथि॒व्यां पय॒ऽओष॑धीषु पयो॑ दि॒व्य॒न्तरि॑क्षे॒ पयो॑धाः।
पय॑स्वतीः प्र॒दिश॑ः सन्तु॒ मह्य॑म् ॥ ६॥

बार्हस्पत्यं स्मृतं वासः सौम्यान्यथ रसानि चेति विष्णुधर्म्मोत्तरीयवचनेन पयसो रसत्वात्सोमदेवताकत्वं तत्सोमदेवताकत्वस्य पयसोऽत्राभिधानादस्या अपि ऋचः सोमदेवताकत्वं नित्यत्वेनैव सिद्धं पञ्चामृतस्नानान्तर्गतपयःस्नाने विनियुक्तत्वादस्या ऋचस्तत्पूजनीयदेवदेवताकत्वञ्चास्ति। अत इयमृक् सोमदेवत्या पूज्यदेवदेवत्या च विराट्छन्दस्का प्रजापतिदृष्टा इह देवतामात्रस्य षोडशोपचारादिपूजने पयःस्नाने विनियुक्ता इयमृक्। "यद्वै तत्सुकृतम्? रसो वै सः? रस ँ ह्येवायं लब्ध्वाऽऽनन्दी भवतीति" तैत्तिरीय (२।७) श्रुतेरानन्दप्राप्तये पूजकः पयोद्रव्येण पयः पृथिव्यामिति मन्त्रेण स्वाभिमतपूजनीयांयां कामपि देवतां स्नापयन् तत आनन्दं कामयते सोम्यरसप्राप्तस्यैवानन्दसम्भवात्। अपि च विना गोरसं भोजनं किं नरस्येत्युक्तेः प्राकृतगोरसस्य च प्राप्तये पूजकः पयोद्रव्येण पयः पृथिव्यामिति मन्त्रेण स्वाभिमतपूजनीयां यां कामपि देवतां स्नापयन् ततः पयः प्राकृतगोरसञ्च कामयते। एवं पयःस्नापने श्रुत्युक्तयुक्तिं प्रदर्श्येदानीं विनियोगकारणमुच्यते। विनियोगश्च कुत्रचिद्देवतालिङ्गेन भवति कुत्रचिच्च द्रव्यलिङ्गेन। यथा गणानान्त्वेत्यत्र गणपतिलिङ्गश्रवणात्तस्य मन्त्रस्य गणपतिपूजने तदीयजपहोमादौ च विनियोगः प्रदर्शितः साम्प्रदायिकैः। तथैवात्रापि पयोद्रव्यलिङ्गश्रवणादस्य मन्त्रस्यापि देवतामात्रस्य पयःस्नाने विनियोगो याज्ञिकैः कृतः। अतो विनियोगानुसारेण अतिरिक्तमिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते। पय इति कर्म्मपदावृत्त्या धा इति क्रियापदाभ्यावृत्तिश्च कर्त्तव्या कर्म्मणः क्रियासापेक्षत्वात्। तत्र मह्यमिति प्रत्येकमभिसम्बध्यते। तत्र चतुर्थी च तादर्थ्ये बोद्धव्या। तत्र "धाः" इति मध्यमपुरुषयोगात्प्रत्यक्षलिङ्गमनुमाय सम्बुद्ध्यादिपदाध्याहारेणायमर्थः। हे अमुकदेवते! ( हे गणपते! हे विष्णो! हे रुद्र! हे दुर्गे! इत्यादिप्रकारेण ) त्वामनेन पयसा स्नापयामीति वाक्यशेषः। त्वं च मह्यं मदर्थं पयोधाः धेहि स्थापयेत्यर्थः। गोमहिष्यादिष्वितिशेषः।

यद्वा "डुधाञ् धारणपोषणयोः, दानेऽप्येके" इति स्मरणाद्धातेर्दानार्थकत्वाद्वा सम्प्रदान एव चतुर्थी बोद्धव्या ततोऽयमर्थः। मह्यं पयोधाः मह्यं पयो देहीत्यर्थः। पयः पीयते इति पयः सोम्यं रसः अमृतमिति यत्कथ्यते। यच्च सर्ववेदवेदान्तप्रतिपाद्यं ब्रह्म च कथ्यते। तथा च श्रुतिः "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् (छा० ६।१)" इति। तन्मम यथास्यात्तथा सम्पादयेत्यर्थः। अमृतं पिबन्नहं यथा ब्रह्मलोकं गच्छेयं तथा सम्पादयेति भावः। तत्प्रकार उच्यते। पृथिव्यां भूमौ मह्यं पयोधाः, अर्थविप्रतिपत्तौ ताद्धितेनार्थप्रतिपत्तिदर्शनात्पार्थिव्यां गवि मदर्थं पयो धेहि स्थापयेत्यर्थः। भूलोकस्थायां मदीयगव्यां दुग्धं यथास्यात्तथा कुर्वित्यभिप्रायः। तथा सति पयःपानेन ममाहारशुद्धौ सत्त्वशुद्धिः स्यात्सत्त्वशुद्धौ च सात्त्विकभावोदयात्सात्त्विकज्ञानं सात्त्विकज्ञानाच्च मम मुक्तिर्भविष्यतीत्यभिप्रायेण पृथिव्यां पयोधा इत्युक्तमित्याशयः। तत्प्रतिपादिका श्रुतिश्च यथा "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः। स्मृतिलाभे सर्वग्रन्थीनां विप्रमोक्षः (छा० ७।२८।)" इति। पयसो बुद्धिकरत्वमन्यत्राप्युक्तं "सद्यो बुद्धिहरी कुद्री सद्यो बुद्धिकरं पयः" इति। तत्प्रकार एव पुनः स्पष्टीक्रियते। ओषधीषु मह्यं पयोधाः। पय इत्युदकनामेति निघण्टुः। "पयः कीलालममृतं जीवनं भुवनं वनमि"ति जलनामस्वन्यत्राप्युक्तम्। मदर्थं तत्पयः उदकमोषधीषु व्रीह्यादिषु धेहि स्थापयेत्यर्थः। धान्यादितृणपुञ्जेषु मदर्थं पयः उदकान्तर्गतं सारभूतं माधुर्य्योपेतं रसं स्थापयेत्यभिप्रायः। यथा धान्यतृणसमृद्धिस्तत्र रसवृद्धिश्च सम्पद्येत तथा सुवृष्टिं कुर्वित्याशयः। तद्वृष्टिप्रकार उच्यते दिवि द्युलोके मञ्चाः क्रोशन्तीत्यत्र मञ्चस्थाः पुरुषाः क्रोशन्तीतिवल्लक्षणया द्युलोकस्थे रविमण्डले मह्यं पयोधाः मदर्थं पयो धेहि स्थापयेत्यर्थः। आदित्यादेव वृष्टिर्भवतीत्यभिप्रायेण प्रथमतस्तु तत्रैव पयःस्थापनार्थं दिवि पयोधा इत्युक्तम् "आदित्याज्जायते वृष्टिरि"ति स्मृतेः। पुनस्तत्प्रकार एव विशदीक्रियते। अन्तरिक्षे मह्यं पयोधाः पूर्ववल्लक्षणया अन्तरिक्षस्थे मेघे मदर्थं जलं स्थापयेत्यर्थः। अथवा निघण्टौ अन्तरिक्षस्य तमो नामसु पठितत्वादन्तरिक्षे तमसि, मेघस्यापि तमःसाम्यात्तमोभूते मेघे, अन्तरिक्षस्याकाशनामसु निघण्टौ पाठादन्तरिक्षे मेघोदराकाशे पयोधा इति वा योज्यम्। आदित्यमण्डलान्निःसृतं सद्यथाऽन्तरिक्षस्थे मेघे पयः सम्पद्येत तथा कुर्वित्यर्थः। पयः आदित्यमण्डलान्निःसृतं सदन्तरिक्षस्थे मेघे निष्पत्य मेघोदरादिह भूमौ वृष्टिद्वारा धान्यादितृणपुञ्जेषु निपतति। तत्तृणधान्यादिभक्षणेन गवादिषु पयः क्षीरं भवति तन्मदर्थं सम्पादयेत्याशयः। तथा हे अमुकदेवते! (हे गणपते० इत्यादि) त्वत्प्रसादान्मह्यं मदर्थं प्रदिशः दिशो विदिशश्च पयस्वतीः सन्तु। पय आसामस्तीति पयस्वत्यः निघण्टौ अन्ननामसु उदकनामसु च पयःशब्दस्य पाठात्पयःशब्दोऽन्नवाचक उदकवाचकश्च। तथा पयःशब्दस्य दुग्धेऽपि लोकप्रसिद्धेः पयःशब्दो दुग्धवाचकश्च एवं पयःशब्दस्यार्थत्रयं सुस्पष्टतया प्रतीयते तेन पयस्वत्यः अर्थादन्नवत्यः, उदकवत्यः,दुग्धवत्यश्च भवन्तु। प्राच्यादिदिक्षु आग्नेय्यादिविदिक्षु च यत्र यत्राहं गच्छेयं तत्र तत्राहमन्नमुदकं दुग्धञ्च निश्चितरूपेण प्राप्नुयामित्यभिप्रायेण पयस्वतीः प्रदिशः सन्तु मह्यमित्युच्यते॥ एवं पूर्वोक्ताभिप्रायेण देवतामात्रस्य षोडशोपचारपूजान्तर्गतपञ्चामृतस्नानीयपयःस्नाने याज्ञिकैर्विनियुक्तोऽयं मन्त्रस्तथैव विनियोगानुसारेणेह मया व्याख्यातोऽपि॥ "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनाद्धातेर्लोडर्थे लुङि बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावे मध्यमैकवचने "धाः" इति

रूपम् । "पय गतौ ( भ्वा० आ० )" इत्यस्मादौणादिकोऽसुन्प्रत्ययः । पयतिरिह पानार्थे धातूनामनेकार्थत्वात्पय्यते पीयते, इति पयः अन्नं तच्च चतुर्विधं पेय–चोष्य–लेह्य–चर्व्य-भेदेन । अथवा "पा पाने (भ्वा० प०)" इत्यस्मात् "पिबतेरीचे" त्यौणादिकेऽसुनि धातोराकारस्य ईकारादेशे च गुणेऽयादेशे पय इति साधु । पीयते इति पयः उदकम् । तथा प्यायतेरसुनि "प्यायः पी" इति 'प्याय्' इत्यस्य पीभाव इहापि बाहुलकाद्भवति ततो गुणेऽयादेशे च पय इति पदं सिद्ध्यति । प्यायते वर्द्धतेऽनेन पीतेन प्राणिमात्रमिति पयः क्षीरं दुग्धमित्यर्थः । तद्वत्यः पयस्वत्यः "अस्मायामेधास्रजो विनिः" "बहुलं छन्दसी"त्युक्तेर्मतुपि वत्वे च, "उगितश्चे"ति ङीप् , "तसौ मत्वर्थे" इति भसंज्ञाविधानात् रुत्वं न भवति । एवं पयस्वतीशब्दनिष्पन्ने सति तस्य प्रथमाबहुवचने पयस्वत्यः इति प्राप्ते "वा छन्दसी"ति पूर्वसवर्णदीर्घे पयस्वतीरिति रूपं भवतीत्यवगन्तव्यम् ।। ६ ।।

ओ३म् दधिक्राव्णोऽ अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभिनो मुखा करत्प्रणऽआयूꣳषि तारिषत् ।।७।।

वामदेवात्मजदधिक्रावदृष्टा पूर्ववत्सोमदेवत्या पूज्यदेवदेवत्या चाऽनुष्टुप् देवतामात्रस्य पूजने पञ्चामृतस्नानान्तर्गतदधिस्नाने विनियुक्ता ऋगियम् । यतः पूर्ववदत्रापि दधीतिदधिलिङ्गश्रवणादस्या ऋचो दधिस्नाने विनियोगो याज्ञिकैः प्रदर्शितः । अतो मयाऽपि अतिरिक्तमिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते । अहमुपासको दधि अकारिषम् , अकार्षं पवित्रपूर्वकं सम्पादितवानित्यर्थः । किमर्थम् अश्वस्य स्नानार्थमितिशेषः । अश्नुते सर्वं जगदित्यश्वस्तस्य अश्वस्य सर्वव्यापकस्य परमेश्वरस्य मत्पूजनीयस्य ( अमुकदेवस्य ) स्नानार्थं पयसः आतञ्चनेन कठिनीभूतं यद्दधिनामकं द्रव्यं तदहं देवस्नानार्थमतिपवित्रतया निष्पादितवानित्यभिप्रायः । कीदृशस्य देवस्य स्नानार्थं दधि अकारिषमित्यपेक्षायामुच्यते । क्राव्णः क्रामतीति क्रावा तस्य क्राव्णः भक्तार्थं तदीयशत्रोराक्रमणार्थं पादविक्षेपं कुर्वत इत्यर्थः । तथा जिष्णोः जयतीत्येवं शीलो जिष्णुः ( जयतेरिष्णुच्प्रत्ययः ) तस्य जिष्णोः भक्तानां कृते कर्म्मविघातकस्य तदीयालस्याश्रद्धादेर्जेतुरित्यर्थः । तथा वाजिनः वाजशब्दस्य अन्ननामसु बलनामसु च पाठाद्वाजः अन्नं बलं वा अस्यास्तीति वाजी तस्य वाजिनः अन्नवतो बलवतो वा भक्तानां कृते आपत्तौ तद्रक्षणाय अन्नेन बलेन वा सह गच्छतः अन्नं बलं वा गृहीत्वाऽऽगतवत ईदृशस्य देवस्येत्यर्थः । तेन दध्ना देवं स्नापयामीति वाक्यशेषः । स च दधिस्नानेन तुष्टः सन् नः ( भार्य्यापुत्राद्यपेक्षयाऽऽत्मनोगुरुत्वाद्वा बहुवचनम् ) नोऽस्माकं मुखा मुखानि सुरभि सुरभीणि "सुरभिर्घ्राणतर्प्पणः"इत्युक्तेः सुगन्धीनि करत् करोत्वित्यर्थः । (करोतेर्लोडर्थे लेट् ) प्रत्यहमनृतभाषणेन यन्मुखदौर्गन्ध्यं सञ्जातं तदपनीय मुखानि सुगन्धीनि करोत्वित्यभिप्रायः । प्रत्यहमनृतवादिनामनृतभाषणेन मुखदौर्गन्ध्यं भवतीत्यागोपालाङ्गनादिप्रसिद्धिः । अनृतभाषिणो मुखदौर्गन्ध्यमन्यत्राप्युक्तं यथा च बृहत्कर्मविपाके "अनृतान्मुखदौर्गन्ध्यं प्राप्नोतीह सुनिश्चितम्"इति।। तदपनोदनार्थमेवमुक्तम् ।अपि च मद्दत्तेन दध्ना स्नातः सोऽयममुकदेवः परमेश्वरः नः ( पूर्ववदत्रापि बहुवचनम् "अस्मदो द्वयोश्चे"तिपाणिनिवचनाद्वा । ) नोऽस्माकं पूजकानाम् आयूंषि जीवनानि बाल्ययौवनवार्द्धक्यानि प्रतारिषत्

(लोडर्थे लेट्) प्रतारिषतु प्रवर्द्धयत्वित्यर्थः। एवम्प्रकारेण करत् प्रतारिषदिति प्रथमपुरुष-लिङ्गादिह परोक्षलिङ्गेनैवाऽभ्यर्थितः पूजनीयदेवः। यद्वा तिङां तिङो भवन्तीतिवचनान्मध्यम-पुरुषस्थाने प्रथमपुरुषोऽवगन्तव्यः। तत्पक्षे सम्बुद्धिपदाध्याहारेण युष्मच्छब्दाध्याहारेण च एवमर्थः। हे पूजनीय! (अमुकदेव) तव स्नानार्थं दधि अकारिषम् अकार्षम् अतिपवित्रतया सम्पादितवानहं तेन च दध्ना त्वामहं स्नापयामि। मद्दत्तेन दध्ना स्नातस्त्वं नोस्माकम् मुखा मुखानि सुरभि सुरभीणि सुगन्धीनि करत् कः कुर्वित्यर्थः तथा नोऽस्माकम् आयूँषि च प्रतारिषत् प्रतारिषः प्रतारिष प्रवर्द्धयेत्यर्थः। कीदृशस्य तव अश्वस्येत्यादि पूर्ववदनुसन्धेयम्। दधाति भक्षितं सत् धारयति नरमिति दधि "आदृगम०—"इति किप्रत्यये लिङ्वद्भावत्वाद्धित्वेऽभ्यास-कार्य्ये च कृते कृत्तद्धितेति प्रातिपदिकत्वात्सोरुत्पत्तौ "श्राद्धकुलिशदैवपीठकुण्डाङ्काङ्गदधी"-त्यादिना दधिशब्दस्य क्लीबत्वविधानात्स्वमोर्नपुंसकादिति सोर्लोपे"दधि"इति पदं सिद्ध्यति। "क्रमु पादविक्षेपे" भ्वादिरुभयपदी, इत्यस्मात् "अन्येभ्योऽपि दृश्यते" इति वनिप्प्रत्यये "विड्वनोरि"त्यात्वे कृत्तद्धितेति प्रातिपदिकत्वे षष्ठ्यैकवचने क्राव्ण इति रूपं भवति। यद्यपि सुप्युपपदे वनिप्प्रत्यये भूरिदावेत्यादिप्रयोगो दृश्यते। तथाऽप्यत्र "बहुलं छन्दसी"-त्युक्तेर्बाहुलकात्सुप्यनुपपदेऽपि इह वनिप्प्रत्ययोऽवगन्तव्यः। करोतेर्लुङि उत्तमैकवचने 'बहुलं छन्दसी"त्युक्तेर्बाहुलकात्सिच इडागमे अकारिषमिति रूपमवगन्तव्यम्। लोके तु अकार्षमित्येवं भवति। "अशू व्याप्तौ" स्वादिरुभयपदी, इत्यस्मात् "अशूप्रुषी"त्यादिना औणादिकक्वन्प्रत्यये ककारनकारलोपे "कृत्तद्धिते"ति प्रातिपदिकत्वे विभक्तिकार्य्ये च कृते षष्ठ्यैकवचने अश्वस्येति रूपं भवति। "सुरभि"इत्यत्र "सुपां सुलुगि"ति विभक्तिलोपो द्रष्टव्यः। मुखशब्दस्य प्रथमाबहुवचने "शेश्छन्दसि बहुलमि"ति शेर्लोपे प्रत्ययलक्षणेन नुमागमे तदुपधायाः दीर्घे न लोपे च "मुखानीत्यस्य स्थाने" "मुखा"इति रूपं भवति। करोतेर्लो-डर्थेलेटि प्रथमपुरुषैकवचने "इतश्च लोपः परस्मैपदेष्वि"ति तिप इकारलोपे "लेटोऽडा-टावि"त्यडागमे शपि गुणे रपरत्वे पूर्वरूपे च करदिति रूपं भवति। "तॄ प्लवनतरणयोरि"ति भ्वादिपरस्मैपदी, इत्यस्माल्लोडर्थे लेटि प्रथमपुरुषैकवचने शपि "सिब्बहुलं णिद्वक्तव्यः" इति सिपि सिप इकारपकारलोपे णित्त्वाद्वृद्धौ "आर्धधातुकस्येड्वलादेरि"ति इडागमे "आदेश-प्रत्यययोरि"ति सिपः सकारस्य षत्वे "इतश्च लोपः परस्मैपदेष्वि"ति तिप इकारलोपे "लेटोऽडाटावि"त्यडागमे तारिषदिति रूपं भवति। प्रतारिषदिति व्यवहितोपसर्गसम्बन्धः व्यवहिताश्चेति पाणिनिवचनात्॥ ७॥

**ॐ घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा। दिशः प्रदिशऽआदिशो विदिशऽउद्दिशो दिग्भ्यः स्वाहा॥ ८॥**

पूर्ववत्सोमदेवत्यः पूज्यदेवदेवत्यश्च इह देवतामात्रस्य पूजने घृतस्नाने विनियुक्तो यजु-र्मन्त्रोऽयं स च अतिरिक्तमिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते। तत्र घृतं घृतपा-वानः पिबतेति वाक्यस्य स्नानेऽनुपयुक्तत्वात्तत्र तदुपयोगाय यत्तच्छब्दावध्याहर्त्तव्यौ तथा पिबतेत्यत्र "बहुलं छन्दसी"ति पाणिनिवचनाच्छन्दसि सर्वविधीनां वैकल्पिकत्वेन पिबतेर्ल-डर्थे लोट्लकारश्च व्यत्ययेनावगन्तव्यः। तद्यथा हे घृतपावानः, घृतं पिबन्तीति घृतपावानः

(आतो मनिन्कनिब्वनिपश्चेति पिबतेर्वनिप्प्रत्ययः) हे घृतस्य पातारो देवाः, यद्घृतं पवित्रमाज्यं यूयं पिबत पिबथ तेन घृतेन युष्मानहं स्नापयामीति वाक्यशेषः। पवित्रेण घृतेन स्नापयामि न त्वपवित्रेणेत्यभिप्रायः। तेन घृतेन स्नाता यूयं मां सुखं गमयतेत्याशंसावाक्यार्थः। पूजनीयदेवस्यैकत्वेऽपि तत्र गुरुत्वाद्बहुवचनं तेन तस्य सम्मानातिशयत्वं द्योत्यते। तथा वसां वसापावानः पिबतेति वाक्यस्यापि स्नानेऽनुपयुक्तत्वात्तत्र तदुपयोगाय पूर्ववदिहापि यत्तच्छब्दाध्याहारेण पूर्ववल्लकारव्यत्ययेन चार्थोऽनुसन्धेयः। तत्र यद्यपि श्रौतकर्म्मकाण्डेऽग्नीषोमीयपशोर्वसाहोमे मांसपाकभाण्डे स्थितः स्नेहात्मको रसविशेषो वसेत्युच्यते। किन्त्विह देवतामात्रस्य षोडशोपचारपूजान्तर्गतपञ्चामृतस्नानीयघृतस्नानप्रसङ्गे तथाविधस्नेहात्मकरसविशेषस्य स्नानानुपयोगित्वेन तदसम्भवत्वाद्वसाशब्दस्य स्नानोपयोगित्वविधित्सया "घृतात्परं मण्डमिवातिसूक्ष्ममि"ति (कृ० य० वे० श्वे० ४।१६) श्रुतेर्घृतान्तर्गतातिसूक्ष्ममण्डमुपलक्षयति वसा शब्दः। वासयति स्नेहयति रूक्षमिति वसः, वासयति अपहरति दौर्बल्यमिति वा वसः, रसविशेषः अर्थाद्घृतगतस्नेहात्मको दौर्बल्यापहारकस्तेजोविशेषो मण्डाख्यसारपदार्थः। यस्य परिशुद्धस्य घृतस्य पानादिना दौर्बल्यमपसरति, स्नैग्ध्यं कान्तिमत्वञ्च भवति, तदेव घृतं वसाशब्देनोच्यते। तदेव घृतं शब्दान्तरेण तेज आयुश्च कथ्यते। तेजो वै घृतमायुर्वै घृतं तस्मादायुरसीत्यादिश्रुतेः। "वस स्नेहच्छेदनापहरणेषु" चुरादिपरस्मैपदी, इत्यस्मादच्प्रत्यये णिलोपे वासयतीतिवसः। तस्य स्त्रीत्वविवक्षायाम् "अजाद्यतष्टाबि"ति टाप्प्रत्यये प्रथमैकवचने वसेतिरूपं भवति। स्त्रीत्वं चेहार्षत्वादित्यवगन्तव्यम्। घृतं घृतपावानः पिबतेत्युक्ते सति पुनस्तदर्थप्रतिपादनार्थमेव वसां वसापावान इति पुनरुक्तिरादरातिशयार्थं द्योतयति "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः। ततोऽयमर्थः हे वसापावानः, वसां पिबन्तीति वसापावानः (आतो मनिन्नित्यादिना इहापि पिबतेर्वनिप्) हे वसायाः पातारो देवाः, ये यूयं वसाम् आज्यगतसारविशेषं पिबत (पूर्ववदत्रापि लडर्थे लोट्) पिबथेत्यर्थः। तेन मद्दत्तेन अनेन आज्यगतसारविशेषेण यूयं स्नातेति वाक्यशेषः। एतद्घृतस्नानञ्च स्नैग्ध्यसम्पादनार्थमेवेत्यभिप्रायेणैव घृतं घृतपावान इति मन्त्रेण सर्वदेवतानां कृते घृतस्नानं कारयतीत्यभिप्रायः। एवं देवान्प्रत्युक्त्वा इदानीं घृतं प्रति कथयति। हे घृत, त्वम् अन्तरिक्षस्य हविरसि अन्तरिक्षसम्बन्धि भूत्वा त्वं हविर्भवसि ("हु दानादनयोः" जुहोत्यादिपरस्मैपदी, इत्यस्मात् "अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्यः इसिः" इति इसिप्रत्ययः)। हूयते देवतोद्देशेन प्रक्षिप्यते वैश्वानरे जाठराग्नौ इति हविः। हविषोऽन्तरिक्षसम्बधित्वं च प्रदर्श्यते। अन्तरिक्षे पयोधाः इति श्रुतेरन्तरिक्षे मञ्चाः क्रोशन्तीत्यत्र मञ्चस्थाः पुरुषाः क्रोशन्तीतिवल्लक्षणया अन्तरिक्षस्थे मेघे पयस आधानार्थं देवं प्रति पूर्वमेवोक्तम्। ततोऽन्तरिक्षस्थान्मेघोदरान्निसृतं सदिह भूलोके धान्यादितृणपुञ्जेषु निपतति तद्भक्षणद्वारा गवादिषु दुग्धं जायते तद्दुग्धाद्दधि भवति तस्माद्दध्नो नवनीतं तस्मान्नवनीतात् घृतं भवतीत्यभिप्रायेणैव इह अन्तरिक्षस्य हविरसीति घृतं प्रत्युच्यते, यथाऽन्यत्रापि अग्नीषोमीययूपावयवस्वरुमुपलक्ष्य कथ्यते हे स्वरो ! त्वं दिवः द्युलोकस्य सूनुः पुत्रोऽसीति द्युलोकाद्वर्षति ततो यूपेत्त्जायते यूपात्स्वरुरिति प्रणालिकया दिवः सूनुः स्वरुः तथा च श्रुतिः "दिवः सूनुरसीति" (शु० य० वे० ६।६) एवं परम्परासम्बन्धेन अन्तरिक्षसम्बन्धि भूत्वा घृतं हविर्भवतीति सुस्पष्टं प्रतीयते। तदिदं घृतं स्वाहा हननं हा सुष्ठु आहा स्वाहा देवस्नानार्थं सुपरित्यक्तं दत्तं मयेत्यर्थः। देवस्नानसमये इतस्ततः सर्वासुदिक्षु विदिक्षु

च घृतविन्दवो निपतन्ति तदभिप्रायेण एवमुच्यते यत् हे दिशः, प्राच्याद्याः, हे प्रदिशः, एतद्देवयजनप्रदेशस्थाः समीपवर्तिन्यस्ता एव दिशः, हे विदिशः, आग्नेय्याद्याः, हे आदिशः, अधराच्यः हे उद्दिशः, ऊर्द्धदिशः, युष्मभ्यं सर्वाभ्यो दिग्भ्यः स्वाहा देवस्नानसमये तद्गात्रादितस्ततः पतिता घृतविन्दवो युष्मदर्थं मया सुपरित्यक्ता दत्ता इत्यर्थः । इह देवस्य पञ्चामृतस्नानप्रसङ्गे होमस्यासम्भवाद्देवतोद्देशेन होमव्यतिरिक्तेऽपि परित्यागे स्वाहाशब्दप्रयोगः "तस्या द्वौ स्तनौ देवाऽउपजीवन्ति स्वाहाकारञ्च वषट्कारञ्चे"ति (बृह०) श्रुतेः । यथा पयः पृथिव्यामित्यत्र पय इति पयोलिङ्गेन पयःस्नाने विनियोगस्तस्य मन्त्रस्य । एवं दधिक्राव्ण इत्यत्र दधीति दधिलिङ्गेन दधिस्नाने विनियोगस्तस्य मन्त्रस्य तथैव घृतं घृतपावान इत्यत्रापि घृतमिति घृतलिङ्गेन घृतस्नानेऽस्य मन्त्रस्यापि विनियोगः सम्प्रदायज्ञैर्याज्ञिकैः कृतः । अतस्तदनुसारेण व्याख्यातोऽयं मन्त्रः ॥ ८ ॥

ॐ मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्न्नः सन्त्वोषधीः ॥ ९ ॥
ॐ मधुनक्तमुतोषसो मधुमत्पार्थिवꣳ रजः ।
मधुद्यौरस्तु नः पिता ॥ १० ॥
ॐ मधुमान्नो व्वनस्पतिर्मधुमाँ २।।ऽअस्तु सूर्य्यः ।
माध्वीर्गावो भवन्तु नः ॥ ११ ॥

गोतमदृष्टाः पूर्ववत्सोमदेवत्याः पूजनीयदेवदेवत्याश्च गायत्र्य इह देवतामात्रस्य षोडशोपचारादिपूजने पञ्चामृतस्नानान्तर्गतमधुस्नाने विनियुक्ताः सन्ति एतास्तिस्र ऋचस्तर्पणे विशेषतो व्याख्याता अपि इह पुनर्विनियोगानुसारेण अतिरिक्तमितिकारिकया हीनपदान्यध्याहृत्य संक्षेपतो व्याख्यायन्ते । हे पूजनीय, (अमुकदेव) यतोऽहमनेन मधुना त्वां स्नापयामि अतस्त्वत्प्रसादान्मह्यमितिशेषः । ऋतायते "ऋतमिति सत्यनामे"ति निघण्टुः, ऋतं सत्यम् अवश्यम्भाविफलोपेतत्वाद्यज्ञं त्वदीययजनरूपं कर्म्म इच्छतीति ऋतयन् तस्मै ऋतयते ( संहितायां छान्दसो दीर्घः ) अर्थात्त्वदीयपूजनं कर्त्तुमिच्छते । मह्यं वाताः वायवः मधु मधुमन्तः मधुररसवन्तस्तृप्तिकरसुगन्धोपेतास्त्वगिन्द्रियसुखकराः सन्तो वान्त्वितिशेषः । मधुरवायौ वाति सति मधूत्पत्तिदर्शनादेवमाशास्यते यत्त्वत्प्रसादान्मदर्थं मधु यथास्यात्तथा वायवो मधु वहन्त्वित्यभिप्रायः । "मधु" इत्यत्र बाहुलकान्मतुपो लुग्द्रष्टव्यः मधुमानित्यग्रे मतुप्प्रत्ययदर्शनात् । एवं सर्वत्र मधुशब्दाग्रे मतुप् ज्ञेयः । तथा ऋतायते त्वदीयपूजनमिच्छते मह्यं सिन्धवः स्यन्दमानाः नद्यः समुद्रा वा मधु क्षरन्ति ( क्षरतेर्लोडर्थे लट् ) क्षरन्तु मधुमत् मधुररसोपेतं सुस्वादु शीतलं जलं स्रवन्त्वित्यर्थः । जलवाय्वोरेव शोभनत्वे सति सर्वेषां सुखं तयोः प्रतिकूलत्वे च नानारोगाद्युत्पत्तौ सत्यां सर्वेषामेव दुःखञ्च भवतीति सकललोकवेदप्रसिद्धिः येषां वात इषवः, येषां वर्षमिषव इत्यादि श्रुतेः । तथा हे पूजनीय, (अमुकदेव) त्वत्प्रसादान्नोऽस्माकं कृते ओषधीः माध्वीः सन्तु (वा छन्दसीति पूर्वसवर्णदीर्घः) ओषधयः व्रीह्याद्याः माध्व्यः मधुमत्यः मधुररसोपेता भवन्त्वित्यर्थः (नोऽस्माकमित्यत्र भार्य्यापुत्राद्यपेक्षायाऽऽत्मनो गुरु-

त्वाद्वा बहुवचनमित्यवगन्तव्यम् , एवं सर्वत्र) तथा हे पूज्य, (अमुकदेव) त्वत्प्रसादान्नोऽस्माकं कृते नक्तं मधु मधुमदस्त्विति शेषः। नक्तं मधुमदस्तु अस्मत्कृते रात्रिरपि मधुमती भवत्वित्यर्थः। तथा हे पूजनीय, (अमुकदेव) त्वत्प्रसादान्नोऽस्माकं कृते उषसः "उत" (उतशब्दोऽप्यर्थे) उषसोऽपि मधुमत्यः सन्त्विति शेषः। अस्मत्कृते त्वत्प्रसादात्प्रातःकाला अपि मधुमन्तो भवन्त्वित्यर्थः। तथा हे पूजनीय, (अमुकदेव) त्वत्प्रसादान्नोऽस्माकं कृते पार्थिवं रजः मधु मधुमदस्त्विति शेषः। "रज इति लोकनामे"ति निघण्टुः। लोका रजांस्युच्यन्ते, इति यास्कः। पृथिव्या इदं पार्थिवं रजः अर्थादयं भूलोकः मधुररसोपेतो भवत्वित्यर्थः। पृथिव्याः परमाणुतः सृष्टाः भूलोकस्थाः सर्वे प्राणिनोऽस्मान्दृष्ट्वा अस्मदर्थे मधुरायन्तामित्यभिप्रायः। पार्थिवं रजः पृथिवीसम्बन्धि धूलिजातं तदपि अस्मत्कृते मधुमदस्तु। तथा सति पार्थिवरजः सञ्जातकन्दमूलादीन्यपि अस्मत्कृते सुतरां मधुराणि भविष्यन्तीत्यभिप्रायेण वा एवमाशास्यते मधुमत्पार्थिवठं रज इति। तथा हे पूजनीय, (अमुकदेव) त्वत्प्रसादान्नोऽस्माकं कृते पिता पितृवत्पालकः द्यौः द्युलोकः मधुमानस्तु। "इयं वै माता पृथिवी द्यौः पिते"ति श्रुतेर्मातृरूपा पृथिवी पितृरूपो द्युलोकश्च तयोर्मध्ये यावन्तो भोग्यपदार्थाः सन्ति तत्सर्वभोग्यप्रदानेन भूलोकद्युलोकौ मातापितराविव मधुमत्स्वीयांशद्वाराऽस्माकं तृप्तिकारकौ भवेतामिति भावः। यत्र यत्र वयं गच्छेम तत्र तत्र वयं मधुमत्सर्वभोग्यपदार्थजातं प्राप्नुयाम द्यावापृथिव्योः सर्वत्र सद्भावात्सर्वभोग्यपदार्थानाञ्च तत्सञ्जातत्वाच्चैवं पृथिव्याः द्युलोकस्य च मधुमत्त्वमाशास्यते, इत्यभिप्रायः। अथवा यतः पृथिव्या एव अन्नरसादिसर्वभोग्यपदार्थानामुत्पत्तिर्भवति भूकम्पादिदोषेण सर्वपदार्थानां नाशश्च सम्भवति एवं द्युलोकादेव धान्यादिसमृद्ध्यर्थं सुवृष्टिः धान्यादिविनाशार्थं च कुवृष्टिरतिवृष्टिश्च भवति एवं करकापातवज्रपातादयोऽपि द्युलोकादेव भवन्ति। अतस्तत्तदुत्पातशान्त्यर्थमेव पृथिव्याः द्युलोकस्य च मधुमत्त्वमाशास्यते, इति "मधुमत्पार्थिवं ठं. रजः, मधुद्यौरस्तुनः पिते"त्यस्याभिप्रायः। तथा हे पूजनीय, (अमुकदेव) त्वत्प्रसादान्नोऽस्माकं कृते वनस्पतिश्चन्द्रः मधुमानस्त्विति शेषः। स्वीययाऽमृतकलयाऽस्माकं तृप्तिकारको भवत्वित्यर्थः। तथा हे पूजनीय, (अमुकदेव) त्वत्प्रसादान्नोऽस्माकं कृते सूर्य्यः मधुमानस्तु मधुमत्स्वीयविशिष्टभागप्रदानेन अस्माकं तृप्तिकारको भवत्वित्यर्थः। शीतांशुश्चन्द्रः, उष्णांशुश्च सूर्य्यः, तदुभयोर्मधुमत्त्वे सति रात्रावस्माकमतिशैत्यं दिवा चात्यौष्ण्यमपि कदाचिन्मा भवत्विति "मधुमान्नो व्वनस्पतिर्मधुमाँ २॥ऽ अस्तु सूर्य्यः" इत्यस्याभिप्रायः। तथा हे पूजनीय (अमुकदेव) त्वत्प्रसादान्नोऽस्माकं कृते गावः माध्वीः सन्त्विति शेषः। (माध्वीरित्यत्र वा छन्दसीति पूर्वसवर्णदीर्घश्छान्दसः) गावः धेनवः माध्व्यः मधुमत्यो रसवत्यो भवन्त्वित्यर्थः। "रसो वै मधु" इति श्रुतेः स्वस्य कृते वातादीनां रसवत्त्वमाशास्य अनेन मधुना पुष्परसेन क्षौद्रेण यः कश्चिद्देवं स्नापयति तस्य कृते पूजनीयदेवप्रसादाद्वातादयः सर्वेऽपि मधुमन्तो भवन्तीत्याशयः॥ ९।१०॥११॥

ॐ अपाठंरसमुद्द्वयसꣳ सूर्य्ये सन्तꣳ समाहितम् ।
अपाठंरसस्य योरसस्तंवो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्रायत्वा जुष्टङ्गृह्णाम्येषते योनिरिन्द्राय त्वा जुष्टतमम् ॥ १२ ॥

पूर्ववत्सोमदेवत्या पूजनीयदेवदेवत्या च उपयामगृहीतोऽसीत्यादियजुरन्ताऽनुष्टुप् बृहस्पतीन्द्रद्रष्टा इह देवतामात्रस्य षोडशोपचारपूजने पञ्चामृतस्नानीयशर्करास्नाने विनियुक्ता ऋगियम्। स्नानप्रकरणे व्याख्याताऽपि इह विनियोगानुसारेण "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य पुनर्व्याख्यायते। मन्त्रेऽस्मिन् वः इति षष्ठीबहुवचनान्तस्य युष्मच्छब्दस्य श्रवणाद्बहुवचनान्तं सम्बुद्धिपदमध्याहर्त्तव्यं, तत्र स्नानीयदेवताया एकत्वे सति तदीयसम्मानातिशयद्योतनार्थं गुरुत्वाद्बहुवचनमित्यवगन्तव्यम्। ततोऽयमर्थः। हे पूजनीयाः! (अमुकदेवताः), उत्तममुत्कृष्टं तं रसमहं गृह्णामि किमर्थं वः युष्माकं स्नानार्थमिति शेषः। तेनोत्कृष्टेन शर्कराख्यरसेन युष्मान् स्नापयामि यूयं च तेन स्नानेन सन्तुष्टाः सन्तो मां सुखं गमयतेति वाक्यशेषः। तं कं रसमहं युष्मत्स्नानार्थं गृह्णामीत्यपेक्षायामुच्यते अपांसम्बन्धिनो रसस्य अमृतीभावपदार्थस्य यः रसः रस्यते इति रसः आस्वादनीयो माधुर्य्योपेतः शर्कराख्यद्रव्यविशेषस्तं रसमहं गृह्णामीत्यर्थः। किम्भूतं तं रसम्, अपां रसं "रसो वै मधु" इति श्रुतेः जलान्तर्गतमाधुर्य्यस्य सारभूतमित्यर्थः। तथा उद्वयसम् "वय इत्यन्ननामे"ति निघण्टुः, उद्गतं वयः अन्नं यस्मात् स उद्वयास्तमुद्वयसम्, अद्यते यत्तदन्नं तदिह मधुरमात्रोपलक्षकं, दृश्यते च यदिह सीतादिकलाकन्दपर्य्यन्तं माधुर्य्यपदार्थजातं यच्च मिष्टान्नादि मधुरं तत्सर्वमपि अस्मात् शर्कराख्यद्रव्यविशेषादेव सम्भवति। शर्कराख्यद्रव्यस्यैवाग्निसंयोगे परिस्कारवैशिष्ट्यात्सीतादि सर्वमधुरद्रव्यमुद्गतं भवति तदभिप्रायेणैव उद्वयसमिति विशेषणेन शर्कराख्यरसस्य वैशिष्ट्यं द्योत्यते। तथा सूर्य्ये समाहितं तत्किरणद्वारा सूर्य्ये स्थापितम्, अतएव सूर्य्ये सन्तं वर्त्तमानम्, एवम्भूतमुत्कृष्टं शर्कराख्यं रसं युष्मत्स्नानार्थमहं गृह्णामीति भावः। सूर्य्य एव दशभिर्मासैः स्वकिरणद्वाराऽपां माधुर्य्यस्य सारभूतं रसाख्यं द्रव्यं सर्वतः समाकृष्य स्वस्मिन्स्थापयति ततो वर्षर्तौ स्वस्मिन्समाहितं स्थापितं सन्तं स्वस्मिन्वर्त्तमानं तमेव रसं वृष्टिद्वारा भूमौ निक्षिपति तत एवान्नं क्षीराद्युपसेचनद्रव्यम् इक्षुनामकं मधुरमात्रस्य माधुर्य्यव्यञ्जकं द्रव्यञ्च सम्भवति। अत उक्तं मनुना "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति। अपाममृतीभावपदार्थस्य सूर्य्यकिरणद्वारा सूर्य्ये स्थापितत्वेन तत्र विद्यमानत्वादिह "सूर्य्ये सन्तꣳ समाहितम्" इति श्रुत्या प्रतिपाद्यते। तमेवम्भूतं रसमहं युष्मत्स्नानार्थं गृह्णामीति पूजनीयदेवताः प्रत्युक्त्वा इदानीं शर्कराख्य रसं प्रत्युच्यते हे शर्कराख्यरस! यतस्त्वमुपयामगृहीतोऽसि पूर्वं सोमयज्ञे उपयामेन पात्रेण गृहीतोऽसि स्वीकृतोऽसि। सोमयज्ञे सोमरसग्रहणार्थं यत्पात्रं तेन पात्रेण देवतार्थं तत्र सोमगतमाधुर्य्यरसस्य गृहीतत्वात्तन्माधुर्य्यरसस्यात्रापि शर्कराख्यद्रव्ये दृश्यमानत्वाद्रसगतवैशिष्ट्यस्मारकत्वेन सोमयज्ञाधिकरणकपूर्वकालीनोपयामगृहीतत्वमिह माधुर्य्यस्यास्य रसस्य देवतोपयोगित्वं ध्वनयति। अत एव इहापि जुष्टं देवमनुष्याणां सर्वेषां प्रियं त्वा त्वामिन्द्राय गृह्णामि "इदि परमैश्वर्य्ये" भ्वादिपरस्मैपदी, इत्यस्मात् "ऋज्रेन्द्राग्रवज्रे"त्यादिना रन्प्रत्यये इन्दतीति इन्द्रः परमैश्वर्य्ययुक्तो मदीयपूजनीयामुकदेवस्तस्मै तथोक्ताय पूजनीयामुकदेवाय त्वामहं गृह्णामि। अनेन शर्कराख्यरसेन देवं स्नापयिष्यामि अतस्तदर्थं त्वां गृह्णामीति भावः। तथा हे शर्कराख्यरस, एषः मत्पूजनीयो देवः ते तव योनिः उत्पत्तिकारणं "यतो वा इमानि भूतानि जायन्ते" इति श्रुतेः। अत इन्द्राय परमैश्वर्य्ययुक्ताय पूजनीयामुकदेवाय जुष्टं प्रियं त्वा त्वां देवस्नानार्थं गृह्णामीतिशेषः। एवमिममर्थं ज्ञात्वाऽनेन मन्त्रेण यः कश्चिच्छर्कराख्यद्रव्येण

देवं स्नापयति तस्मै देवः श्रियं ददाति "श्रिया इक्षुरसेन चे"ति स्मृतिवचनात् । इन्द्रपदेनेह पूजनीयदेव उपलक्ष्यते । "रूपं रूपं प्रतिरूपं मघवा बोभवीती"ति ( ऋ० सं० ३।३।२०।३ ) श्रुतेः । महाभाग्यत्वाद्देवतानामेकत्वेऽपि बहुत्वं 'या च का च बलकृतिरिन्द्रकर्मैव तत्" (७।३।३) इतियास्कोक्तेश्च यद्यद्बलकृतं कर्म्म तत्तत्सर्वमैन्द्रमेवेत्यभिप्रायेण पूजनीयदेवतामात्रे भक्तपालन-कर्तृत्वबलस्य सद्भावत्वात्परमैश्वर्य्यमहाभाग्यत्वस्यसत्त्वाच्च इन्द्रपदं सर्वदेवतोपलक्षकम् । अतो यास्केनोक्तं "तिस्र एव देवताः"इति (निरु०७।२।१) तास्वेवान्येषां देवतानामन्तर्भावत्वात् । अतोऽत्र इन्द्रलिङ्गेन शर्करास्नाने नैन्द्री ऋगियम् "ऐन्द्या गार्हपत्यमुपतिष्ठते" इतिवत् , किन्तु पूजनीयदेवदेवत्यैव तथा रसमात्रस्य सोमदेवताकत्वात्सोमदेवदेवत्या च । अतोऽनेन मन्त्रेण सर्वदेवतानां कृते षोडशोपचारपूजान्तर्गतपञ्चामृतस्नानीयशर्करास्नानं भवतीति नात्र सन्देहलेशः । अतो विनियोगानुसारेण एवं व्याख्यातोऽयं मन्त्र इत्यवगन्तव्यम् ॥१२॥

**ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै ।**
**यजमानस्य परिधिरस्यग्निरिडऽईडितः ॥१३॥**

पूज्यदेवदेवत्यो देवतामात्रस्य षोडशोपचारपूजने उद्वर्त्तनस्नानेविनियुक्तो यजुर्मन्त्रोऽयम् "अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायते । हे उद्वर्त्तनीयपदार्थ, विश्वावसुर्नामगन्धर्वः परिदधातु पूजनीयस्य ( अमुकदेवस्य ) अङ्गेषु उद्वर्त्तनार्थं परितः सर्वतो दधातु स्थापयत्वित्यर्थः । किमर्थमिति चेत्तदुच्यते विश्वस्यारिष्ट्यै रिषतिर्हिंसार्थः रैषणं रिष्टिः हिंसा न रिष्टिः अरिष्टिः अहिंसा तस्यै, सर्वहिंसापरिहारार्थमित्यर्थः । कस्य हिंसापरिहारार्थमित्याकाङ्क्षायामेवमुच्यते यत् यजमानस्येति, यजमानस्य देवपूजनं कुर्वतो मम सर्वविघ्नशान्त्यर्थमित्यर्थः । कुत एवं यतस्त्वं परिधिरसि देवस्याङ्गेषु उद्वर्त्तनार्थं परितः स्थापितोऽसि । तथा हे उद्वर्त्तनीय पदार्थ, यतस्त्वम् अग्निः अग्रे नीयते इत्यग्निः उद्वर्त्तनार्थमग्रे नीयमानोऽसि । तथा यतश्च त्वम् इडः ईड्यते स्तूयते इति इडः स्तुतियोग्यश्चासि ( इड इत्यत्र छान्दसो ह्रस्वः ) अत एव ईडितः उद्वर्त्तनकर्म्मणि चिरन्तनैरपि महर्षिभिः स्तुतोऽसि यत एवं भूतोऽसि । अतः हे उद्वर्त्तनीयपदार्थ, देवपूजनं कुर्वतो मम सर्वविघ्नशान्त्यर्थं पूजनीयस्य ( अमुकदेवस्य ) अङ्गेषु विश्वावसुर्नाम गन्धर्वस्त्वां परिदधातु परितः स्थापयत्विति समस्तार्थः । अनेनोद्वर्त्तनस्नानेन देवस्य रूपलावण्यत्वे देवप्रसादान्ममापि रूपलावण्यं स्यादित्यभिप्रायेण अनेन मन्त्रेण देवस्योद्वर्त्तनस्नानं कारयतीत्यर्थः । यतो मीमांसकाः कुत्रचिल्लिङ्गेनापि विनियोगं विदधति । अतः पूर्वकालीनाः सम्प्रदायविदो याज्ञिका अपि मन्त्रेऽस्मिन् गन्धर्वलिङ्गश्रवणादस्य मन्त्रस्योद्वर्त्तनस्नाने विनियोगं कृतवन्तः उद्वर्त्तनस्य रूपलावण्यजनकत्वाद्रूपलावण्यस्य चगन्धर्वेष्वधिकतया परिदृश्यमानत्वात् । अतो मयाऽपि विनियोगानुसारेणैव "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यातोऽयं मन्त्रः ॥ १३ ॥

**ॐ आपोहि० ॥ १४ ॥ ॐ योवः ॥ १५ ॥ ॐ तस्माऽअर० ॥ १६ ॥**

अब्देवत्यं पूजनीयदेवदेवत्यं च सिन्धुद्वीपदृष्टं गायत्रमिह देवतामात्रस्य षोडशोपचारपूजने शुद्धोदकस्नाने विनियुक्तमेतदृक्त्रयम् । तच्च सन्ध्याप्रकरणे व्याख्यातं तत्र द्रष्टव्यम् ।

इह तु विशिष्टांशमात्रं प्रदर्श्यते। तद्यथा हे पूजनीय (अमुकदेव), आभिरद्भिस्त्वां स्नापयामि त्वञ्च स्नातः सन्मां सुखं गमयेति वाक्यशेषः ॥ १४ ॥ १५ ॥ १६ ॥

ॐ युवा सुवासाः परिवीत आगात्स उश्रेयान्भवति जायमानः। तं धीरासः कवयऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ १७ ॥

अयं मन्त्रोऽग्रे समावर्त्तनप्रकरणे व्याख्यास्यते। तत्रास्य मन्त्रस्यार्थो द्रष्टव्यः ॥ १७ ॥

ॐ ब्रह्म यज्ञानं० ॥ १८ ॥

ब्रह्मयज्ञजपे व्याख्यातोऽयं मन्त्रस्तत्रास्य व्याख्या द्रष्टव्या ॥ इह तु विशिष्टांशमात्रं विवृणोमि। प्रजापतेर्यत्सहजं पुरस्तादिति मन्त्रलिङ्गाद्यज्ञोपवीतस्य प्रजापतिना सह समुत्पन्नत्वात्प्रजापति( ब्रह्म )प्रतिपादकमन्त्रेणैव देवतामात्रस्य षोडशोपचारपूजने देवार्थं यज्ञोपवीतं दीयते। वाक्यवैशिष्ट्यञ्चात्रैवं "एवास्मिन्नात्मनि सर्वाणि भूतानि सर्वेदेवाः सर्वे लोकाः सर्वेप्राणाः सर्व एत आत्मानः समर्प्पिताः"इति ( बृह० २।५। ) श्रुतेः प्रजापतेः सर्वदेवमयत्वात्पूज्यदेवं प्रत्युच्यते यत् हे पूजनीय! ( अमुकदेव, ) यतः प्रजापति( ब्रह्म )रूपत्वेन त्वया सह समुत्पन्नमिदं यज्ञोपवीतम्। अतस्तुभ्यमनेन मन्त्रेण यज्ञोपवीतं समर्प्पयामि त्वञ्च यज्ञोपवीतं प्रतिगृह्य मां सुखं गमयेत्याशंसावाक्यार्थः ॥ १८ ॥

ॐ त्वां ग॒न्ध॒र्वाऽअ॑खन॒ꣳस्त्वामिन्द्र॒स्त्वां बृह॒स्पतिः॑। त्वामो॑षधे॒ सोमो॒राजा॑ वि॒द्वान्यक्ष्मा॑दमुच्यत ॥ १९ ॥

"ज्ञेयानि सर्वगन्धानि गान्धर्वाणि विचक्षणै"रिति विष्णुधर्म्मोत्तरीयवचनाच्चन्दनस्य गन्धत्वेन गन्धर्वदेवताकत्वं तद्देवताकत्वचन्दनप्रतिपादकत्वादस्य मन्त्रस्यापि गन्धर्वदेवताकत्वं नित्यत्वेन वर्त्तते पूज्यदेवताकत्वसम्बन्धत्वेन पूज्यदेवताकत्वञ्च नैमित्तिकम्। अतो गन्धर्वदेवत्यः पूज्यदेवदेवत्यश्चानुष्टुप्छन्दस्कः प्रजापतिदृष्टः, इह देवतामात्रस्य षोडशोपचारपूजने चन्दनदाने विनियुक्तोऽयं मन्त्रः। आयुर्वेदे भैषज्यार्णवे यक्ष्मरोगभैषज्यप्रकरणे "पञ्चाङ्गं चन्दनं देयं देयञ्च सरलं तथे"ति वचनात्काष्ठौषधीनां मध्ये चन्दनस्याप्योषधित्वेन विधीयमानत्वादिह चन्दनं प्रत्युच्यते। यत् हे ओषधे, ( चन्दन, ) गन्धर्वाः देवविशेषाः गन्धकामनया त्वामखनन् स्वकीयोपवने आरोपणार्थं खनितवन्तः। तथा हे ओषधे, (चन्दन,) इन्द्रः सर्वदेवाधिपतिः सहस्राक्षः बृहस्पतिः इन्द्रपुरोहितः सुरगुरुः, तावपि त्वामखनतामिति शेषः। गन्धकामनया स्वीयस्वीयोपवने आरोपरोपणार्थं खननं कृतवन्तौ। तथा हे ओषधे, ( चन्दन, ) सोमो राजा च त्वां विद्वान् त्वत्सामर्थ्यं जानन्सन् त्वामुपयुज्य यक्ष्मादमुच्यत महाव्याधेः सकाशान्मुक्तोऽभवत्। हे ओषधे, ( चन्दन, ) एवं तद्गुणवैशिष्ट्यं ज्ञात्वाऽहमपि सौगन्ध्यप्राशस्त्येन त्वां प्रतिगृह्य अनुलेपनार्थं ( अमुकदेवाय ) समर्प्पयामीति वाक्यशेषः। एवं चन्दनं प्रत्युक्त्वा देवं प्रत्युच्यते हे पूजनीय, ( अमुकदेव, ) एतच्चन्दनं त्वं गृहाण तेन चन्दनेनानुलिप्तः सन्मामपि सुखं गमयेत्याशंसावाक्यार्थः ॥ १९ ॥

ॐ अक्षन्नमीमदन्तह्यवप्रिया ऽअधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥ २० ॥

इह पूज्यदेवदेवत्या प्रजापतिदृष्टा पङ्क्तिः देवतामात्रस्य पूजने अक्षतदाने विनियुक्ता इयमृक्। अक्षतस्य व्रीहिसारमयत्वात् "व्रीहीन्यवान्वा हविषी"ति कात्यायनोक्तेर्यतो हविष्ट्वं वर्त्तते। अतोऽनेन मन्त्रेण देवपूजायामक्षतप्रदानं क्रियते। तत्र अक्षन्नमीमदन्तेत्यादि लुप्तोपमानं वर्त्तते। तदग्रे व्याख्यायां स्फुटीभविष्यति। इदानीं विनियोगानुसारेण "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते॥ "इदि परमैश्वर्ये" इन्दतीति इन्द्रः तत्सम्बुद्धौ हे इन्द्र, परमैश्वर्य्ययुक्त ! पूजनीय, (अमुकदेव,) ते तुभ्यमिदमक्षतं समर्प्पयामीति वाक्यशेषः। अतस्त्वं मद्दत्तमक्षतम् अत्त्वा भुक्त्वा मां सुखं गमयेत्याशंसावाक्यार्थः। तथा यावत्त्वां पूजयामि तावत् हरी हरिद्वर्णौ स्वकीयौ अश्वौ योजा योज योजय 'रथव्यतिरिक्तस्थाने' इति शेषः। अनु पश्चात्पूजासमाप्त्यनन्तरं गमनाय रथे हरी हरिद्वर्णौ अश्वौ योजयिष्यसीति शेषः। अक्षतं कथमहमद्मीति चेत्तदुच्यते। 'अक्षन्नमीमदन्तेति' हे पूजनीय! (अमुकदेव!) यथा अक्षन् देवा इति शेषः, यथा पूर्वं देवा अक्षतं भक्षितवन्तस्तथात्वमपि इदानीं मद्दत्तमक्षतं भक्षयेत्यभिप्रायः। अपि च यथा च अमीमदन्त, पूर्वं यथा देवाः तृप्ताः सन्तो हृष्टाः सञ्जाता इत्यर्थः। तथा त्वमपि इदानीमात्मानं तर्प्पयित्वा हृष्टो भवेत्यभिप्रायः। किञ्च यथा च अवप्रिया अधूषत, भक्तिभावमवगम्य अवप्रियाः "अवइत्यन्ननामे"ति निघण्टुः। अवः अन्नं प्रियं येषां ते तथोक्ताः अन्नं प्राप्य प्रीतियुक्ताः सन्तः स्वकीयं शिरः कम्पितवन्तस्तथा त्वमपि इदानीं मद्भक्तिभावमवगम्य मत्तोऽन्नं प्राप्य प्रीतियुक्तः सन् स्वकीयं शिरः कम्पयेत्यभिप्रायः। अपि च यथा स्वभानवः स्वयं दीप्तियुक्ताः विप्राः मेधाविनश्च भूत्वा नविष्ठया नवतमया मती मत्या बुद्ध्या युक्ताः सन्तः अस्तोषत स्तुतिं कृतवन्तः। अहो सुस्वाद्वन्नं बहुलमहो भक्तिश्रद्धादिकमित्यभिधानं स्तुतिः, तदुक्तवन्त इत्यर्थः, तथा त्वमपि इदानीं स्वयं दीप्तः सन् मेधावी च भूत्वा अतिनूतनया बुद्ध्या संयुक्तः सन् सुस्वादु शोभनञ्चैतदक्षतं त्वया दत्तमित्याद्यभिधानेन मां प्रमोदयेत्यभिप्रायः। अदेर्लुङि प्रथमपुरुषबहुवचने 'लुङ्सनोर्घस्लृ" इति घस्लादेशेऽनुबन्धलोपे "च्लिलुङी"ति च्ल्यागमे "मन्त्रे घस०" इत्यादिना च्लेर्लुकि "गमहने"त्युपधालोपे "खरि च"ेति चर्त्वे "शासिवसी"ति षत्वे कषसंयोगे क्ष इति क्षत्वे "लुङ्लङि"त्यडागमे "झोन्तः" इति झकारस्यान्तादेशे "इतश्चे"तीकारलोपे "संयोगान्तस्ये"ति तकारलोपे अक्षन्निति रूपं भवति। "मद तृप्तियोगे"चुरादिरात्मनेपदी, इत्यस्माल्लुङि प्रथमपुरुषबहुवचने "च्लिलुङी"ति च्ल्यागमे "णिश्री"ति च्लेश्चङादेशेऽनुबन्धलोपे "चङी"ति द्वित्वेऽभ्यासकार्य्ये कृते "सन्वल्लघुनी"ति सन्वद्भावा"त्सन्यतः" इत्यभ्यासस्येत्वे "दीर्घोलघो"रिति दीर्घे "लुङ्लङि"त्यडागमे "झोन्तः" इति झस्यान्तादेशे अमीमदन्तेति रूपं भवति। "धूञ् कम्पने" इत्यस्माल्लुङि प्रथमपुरुषबहुवचने "च्लिलुङी"ति च्ल्यागमे "च्लेःसिजि"ति च्लेःसिजादेशेऽनुबन्धलोपे "आदेशप्रत्यययोरि"ति षत्वे "लुङ्लङि"त्यडागमे "आत्मनेपदेष्वनतः" इति झकारस्यादादेशे व्यत्ययेन गुणाभावे अधूषतेतिरूपं भवति। मतिशब्दस्य तृतीयैकवचने "सुपां सुलुगि"ति पूर्वसवर्णदीर्घे मतीतिरूपं भवति। "युजिर् योगे"

इत्यस्माल्लोटि प्रथमपुरुषैकवचने "छन्दस्युभयथे"ति शप आर्धधातुकत्वा"ण्णेरनिटी"तिणिलोपे लघूपधत्वा"त्पुगन्तेति" गुणे "सेर्ह्यपिच्चे"ति सेर्ह्यादेशे "अतो हेरि"ति हेर्लोपे "द्व्यचोऽतस्तिङः" इति दीर्घे योजेति रूपं भवति ॥ २० ॥

ॐ काण्डात्काण्डात्प्ररोहन्ती परुषःपरुषस्परि।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥२१॥

अग्निर्द्रष्टा दूर्वादेवत्या पूज्यदेवदेवत्या चानुष्टुप् इह देवतामात्रस्य पूजने दूर्वाप्रदाने विनियुक्ता इयमृक्। मूलैर्भूसंबद्धं पर्व काण्डं, भूम्यसंबद्धं पर्व परुः तदुभयस्य 'नित्यवीप्सयोरि"ति वीप्सार्थे द्वित्वमित्यवगन्तव्यम्। मन्त्रार्थश्चैवम्। तद्यथा हे दूर्वे, काण्डात्काण्डात् प्रतिकाण्डात् प्रतिभूमिसंबद्धात्पर्वणः सकाशात् तथा परुषः परुषः प्रतिपरुषः प्रतिभूम्यसंबद्धात्पर्वणश्च सकाशात् यथा त्वं परिसमन्तात् प्ररोहन्ती अङ्कुरवती वर्त्तसे इति शेषः। एवा एवं हे दूर्वे, स्वाङ्कुरविस्तारवत्सहस्रेण शतेन च (सहस्रशतशब्दावसङ्ख्यार्थौ) असंख्यैः पुत्रपौत्रनप्त्रादिभिर्नोऽस्मान्प्रतनु विस्तारयेत्यर्थः। ( एवेत्यव्ययमेवमित्यर्थे तस्य "निपातस्य चे" ति संहितायां दीर्घोऽवगन्तव्यः ) एवं दूर्वा सम्प्रार्थ्य देवायार्प्पयति। हे देव, तुभ्यं दूर्वा समर्प्पयामि त्वत्प्रसादादियं दूर्वाऽस्मानपि प्रतनोत्वित्याशंसावाक्यार्थः॥ २१ ॥

ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखङ्किमस्यासीत्किं बाहू किमूरू पादाऽउच्येते ॥२२॥

नारायणपुरुषद्रष्टा पूज्यपुरुषदेवत्याऽनुष्टुप् इह पुरुषदेवतामात्रस्य पूजने पुष्पप्रदाने विनियुक्ताऋगियम्। यच्छब्दस्य 'त्यदादीनामः" इत्यत्वेऽमि यमिति पदं भवति तच्च वायुबीजं, वायोश्च-"आकाशात्मा सर्वकर्म्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्त ( छा० ३।१४।२ )" इति श्रुतेः "गन्धवाहानिलाशुगाः" इत्यभिधानाच्च सर्वगन्धवहत्वं स्पष्टतया प्रतीयते। अतो वैदिकसम्प्रदाये वैदिकाः वायुबीजस्य प्रकृत्यक्षरसामान्यविशिष्टेनानेन मन्त्रेण देवतामात्रस्य पूजने पूजनीयदेवतायै पुष्पं ददति। न हि पुष्पं विना फलं भवति। अतो जगदुत्पत्तिविषयकोत्तररूपफलं कामयमानः पूजको जगदुत्पत्तिविषयकप्रश्नरूपपुष्पं प्रकटीकुर्वन् स्वयमपि स्वाभीष्टफलं कामयन् पूजनीयदेवतायै अनेन मन्त्रेण पुष्पं निवेदयति। "अर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षर सामान्यान्निर्ब्रूयादि"ति यास्कोक्तेरिह यदिति "यं" इति वायुबीजाक्षरसामान्येन पुष्पार्थमुपलक्षयति। अतो मयाऽपि विनियोगानुसारेणैव "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि हे अमुकदेव, यत् अर्थात् "यं" इति वायुबीजोपलक्षितं सौगन्ध्यपुष्पं तुभ्यं समर्प्पयामीतिशेषः। त्वं च मां सुखं गमयेत्याशंसावाक्यार्थः। ( अस्य मन्त्रस्य प्रश्नार्थवाचकत्वादर्थविचारदशायां "हीनं वाक्ये निवेशयेदि"ति कारिकया यत्तच्छब्दद्वयाध्याहारेणायमर्थः ) हे अमुकदेव, प्रजापतेः प्राणरूपा देवा यत् यदा पुरुषं व्यदधुः आत्मयजनेच्छया यज्ञपुरुषत्वेन स्थापितवन्तस्तदा कतिधा व्यकल्पयन् ( प्रकारवचने धाप्रत्ययः ) कतिभिः प्रकारैर्विविधं कृतवन्तः। पुनरपि तदर्थमेव प्रश्नः, तत् तदा अस्य ब्रह्माण्डदेहिनो विराट्

पुरुषस्य मुखं किमासीत्, किं बाहू किं च ऊरू आस्तामिति शेषः। तथा किं च पादौ उच्येते पादावपि किमास्तामित्यर्थः। तदानीं सृष्ट्यारम्भसमये ब्राह्मणादीनामसद्भावादस्य पुरुषस्य कस्मादङ्गात्किं जातमिति विविदिषीयकोऽयं प्रश्नः। एतेनाऽऽत्मज्ञानोत्सुकत्वं ध्वन्यते। एवमात्मज्ञानेच्छयोत्तररूपफलं कामयन् प्रश्नरूपं पुष्पं प्रकटयन् यत् "यं" वायुबीजोपलक्षितं पुष्पं तुभ्यं निवेदयामि त्वञ्चैतदुत्तररूपविज्ञानफलप्रदानेन ऐहिकामुष्मिकसुखं मां गमयेति समस्तमन्त्रार्थाभिप्रायः। एतदभिप्रायेणैवानेन मन्त्रेण देवेभ्यः पुष्पं समर्प्यते इति भावः। यत्तु तान्त्रिकाः "यं" इति वायुबीजेन (यं वाय्वात्मने नमः धूपमाघ्रापयामीतिवाक्येन) देवताभ्यो धूपं निवेदयन्ति तन्निदानप्रश्ने त एव प्रष्टव्या नास्माकं तत्समालोचनावसरः। वयन्तु स्मृत्यनुयायिभिः साम्प्रदायिकैस्तत्तत्कर्म्मसु विनियुक्तानां मन्त्राणां व्याख्यातारस्तेषां पूर्वाचार्य्याणामाशयमनुसृत्य तदीयप्रयोगपद्धतीश्चानुसृत्य तत्तत्कर्म्मसु विनियुक्तानां मन्त्राणां श्रुतिस्मृतिप्रमाणतो व्याख्यां कृतवन्तोऽवशिष्टानाञ्च मन्त्राणां व्याख्यां करिष्याम इत्यवगन्तव्यम्॥ २२॥

ॐ अहि॑रिव भो॒गैः॑ पर्य्ये॑ति बा॒हुं ज्याया॑ हे॒तिं प॑रि॒बाध॑मानः।
ह॒स्त॒घ्नो वि॒श्वा॑ व॒युना॑नि वि॒द्वान्पुमा॒न्पुमा॑ᳪं सं परि॑ पातु वि॒श्वतः॑॥ २३॥

लिङ्गोक्तदेवत्या पूज्यदेवत्या च त्रिष्टुप्प्रजापतिदृष्टा इह देवतामात्रस्य पूजने कुङ्कुमदाने विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि हे पूजनीय, (अमुकदेव,) तुभ्यं कुङ्कुमं समर्प्पयामीति वाक्यशेषः। त्वत्प्रसादात् हस्तघ्नः हस्तं हन्ति प्राप्नोतीति हस्तघ्नः कुङ्कुमादिपदार्थः स हि स्वग्रहणावसरे गृहीतुः पुरुषस्य हस्ते परितः सँल्लगति न च तथाऽन्यपदार्थः स चायं हस्तघ्नः कुङ्कुमपदार्थः पुमांसं मां विश्वतः सर्वतः परिपातु परिरक्षतु। हस्तघ्नः किम्भूतः विश्वा "शेश्छन्दसि बहुलमि"ति शेर्लुकि प्रत्ययलक्षणेन नुमि उपधादीर्घे नलोपे च रूपं विश्वानि सर्वाणि वयुनानि ("वयुनं वेतेः कान्तिर्वा प्रज्ञा वे"ति यास्कोक्तेरिह वयुनशब्दः कान्तिवाचकस्तेन) प्रशस्यानि अर्थात्प्रशस्तानि कमनीयानीति यावत् शुभकार्य्याणीति भावः विद्वान् जानन् इदानीं शुभावसरः सम्प्राप्तः अतो मयाऽपि शोभनं कर्त्तव्यमित्यभिजानन्नित्यभिप्रायः। (यतो हि शुभकार्य्येष्वेव कुङ्कुमप्रदानं दृश्यते अत एवमुच्यते च) तथा पुमान् पुंस्त्वधर्म्मविशिष्टः। अतो विधवां प्रति अबीरदानव्यवहारो न दृश्यते "धव इति मनुष्यनाम तद्वियोगाद्विधवे"ति यास्कोक्तेः। यो हस्तघ्नः भोगैः स्वकीयावयवैः स्वपरमाणुभिरित्यर्थः, बाहुं पर्य्येति बाहुपदं मुखाद्युपलक्षकं सर्वमङ्गं शोभार्थं परि सर्वतोभावेन प्राप्नोति विवाहोपनयनादिशुभकार्य्येषु जनानां मुखाद्यवयवेषु तस्य कुङ्कुमादेः परस्परं पुरुषैः प्रक्षिप्यमाणत्वात्। क इव पर्य्येति अहिरिव यथाऽहिः सर्प्पो भोगैः फणावद्भिः स्वशिरोभिः शोभार्थं भगवतः सदाशिवस्य बाहुं ग्रीवाद्यङ्गञ्च पर्य्येति परिवेष्टयति तद्वदित्यर्थः। स चायं हस्तघ्नः किम्भूतः ज्यायाः हेतिं परिबाधमानः कामशत्रोर्वासनारूपायाः धनुर्ज्यायाः हेतिं स्रक्चन्दनवनिताविलासादिभोगरूपां हेतिमिषुं परिबाधमानः परितो निवारयन्नित्यर्थः। लोकेऽपि दृश्यते यथा परस्परसम्भोगेच्छावतोः स्त्रीपुरुषयोरपि परस्परं कुङ्कुमादिदानेन कामशान्तिः, तथैव परलोकचिन्तायामपि आत्मविजये कामशत्रोः पराजया-

र्थमिह देवपूजने देवाय कुङ्कुमादि द्रव्यं निवेद्यते। कुङ्कुमादिसमर्प्पणेन ऐहिकामुष्मिककामशान्तिर्भवतीति विनियोगकर्त्तुः पूर्वाचार्य्यस्य महर्षेरयमाशयः॥ २३॥

ॐ धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वामः।
देवानामसि वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्। २४॥

लिङ्गोक्तदेवत्यः इह देवतामात्रस्य पूजने धूपनिवेदने विनियुक्तोऽयं यजुर्मन्त्रः "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि तत्रादौ धूपगतोऽग्निः स्तूयते। हे धूपगताग्ने, त्वं धूरसि (धूर्वतिर्हिंसार्थस्ततः क्विप्प्रत्ययः) हिंसकोऽसीत्यर्थः। यतस्त्वं स्वभावत एव धूरसि अतः धूर्वन्तं हिंसन्तं पाप्मानं धूर्व विनाशयेत्यर्थः। किञ्च हे धूपगताग्ने, यश्च राक्षसादिः पूजनविघ्नेन अस्मान् धूर्वति हिंसितुं समुद्युक्तोऽस्ति तमपि धूर्व विनाशयेत्यर्थः। अथवा यश्चास्मद्विरोधी प्राकृतो मानुषः कश्चिच्छत्रुरस्मान् धूर्वति अस्मदभीष्टविषयेषु विघ्नकारकत्वेन हिंसितुं समुद्युक्तो भवति तमपि अस्मच्छत्रुं धूर्व विनाशयेत्यर्थः। अपि च हे धूपगताग्ने यं च आलस्यादिरूपिणं प्राकृतं मानुषं वा वैरिणं वयं पूजकाः धूर्वामः हिंसितुं समुद्यताः स्मस्तमपि त्वं धूर्व विनाशयेत्यर्थः। एवं धूपगतमग्निं स्तुत्वा इदानीं धूपद्रव्यं प्रति कथ्यते। हे धूपद्रव्य, त्वं देवानामसि देवसम्बन्धि भवसीत्यर्थः। किम्भूतं त्वं वह्नितमम् "वह प्रापणे"वहतीति वह्नि अतिशयेन वह्नि इति वह्नितमम् सौगन्ध्यसुखस्यातिशयेन प्रापकमित्यर्थः। तथा सस्नितमं 'ष्णा शौचे" स्नातीति सस्नि अतिशयेन सस्निइति सस्नितमम् अतिशयेन शुद्धमित्यर्थः। ( सस्नितममित्यत्र "आदृगमहने"त्यादिना किप्रत्यये लिड्वद्भावत्वाद्वित्वमभ्यासकार्यञ्च, तथा "धात्वादेः षः सः"इति षकारस्य सकारः, "निमित्तापायेन नैमित्तिकस्याप्यपायः" इति परिभाषया णकारस्य नकारश्च। ततोऽतिशयार्थे तमप्प्रत्ययोऽभूदिति बोद्धव्यम्। ) तथा पप्रितमं "प्रा पूरणे"पूरयतीति पप्रि अतिशयेन पप्रि इति पप्रितमम् अतिशयेन सुगन्धिपूरितमित्यर्थः। तथा जुष्टतमं "जुषी प्रीतिसेवनयोः" जुषते इति जुष्टम् अतिशयेन जुष्टमिति जुष्टतमं देवानामतिशयेन प्रियमित्यर्थः। तथा देवहूतमम् "ह्वेञ् स्पर्धायां शब्दे च" देवान् ह्वयतीति देवहू अतिशयेन देवहू इति देवहूतमं देवानामतिशयेनाह्वातृ, पूजकः पूजनात्पूर्वमेवाग्नौ धूपद्रव्यं प्रक्षिपति ततो धूपधूमं दृष्ट्वा धूपगन्धञ्चाघ्राय देवाः पूजनस्थानमागच्छन्तीत्यभिप्रायेणैवमुक्तम्। एवं धूपद्रव्यं प्रत्युक्त्वेदानीं देवं प्रत्युच्यते तत्र हीनपदाध्याहारेण वाक्ययोजनाऽनुसन्धेया। हे अमुकदेव, एवं पूर्वोक्तप्रकारेण स्तुताग्नौ स्थितं स्तुतं धूपद्रव्यं तुभ्यं निवेदयामीति वाक्यशेषः। तेन परितुष्टस्त्वं मां सुखं गमयेत्याशंसावाक्यार्थः॥ २४॥

ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽअजायत।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥२५॥

पुरुषदेवत्याऽनुष्टुप् नारायणदृष्टा इह पुरुषदेवतामात्रस्य पूजने दीपनिवेदने विनियुक्ता इयमृक् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि तत्र यद्दीपगतं ज्योतिस्तद्भगवतो ब्रह्मण एव तेज इति वक्तुमिच्छता पूजकेन एवमुच्यते। यत् चन्द्रमा

मनसो जातः ब्रह्माण्डदेहिनो विराट्पुरुषस्य मनसः सकाशाच्चन्द्रमाः जातः तथा चक्षोः चक्षुषः सकाशात्सूर्य्यः अजायत सूर्य्य उत्पन्नोऽभूदित्यर्थः । तथा वायुः प्राणश्च श्रोत्रात्कर्णाद्जायत । तथा मुखादग्निरजायत समुत्पन्नोऽभूदित्यर्थः। एतदभिप्रायेणैव भगवता श्रीकृष्णचन्द्रेणाप्युक्तं "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥" इति । न हि भगवत्तेजोव्यतिरिक्तं किञ्चिदन्यत्तेजो दृश्यते । अतो भवदीयं ज्योतिरेव दीपत्वेन भवते निवेदयामि तेन तुष्टः सर्वतेजोमयो भवान्मां दीपवत्प्रकाशयत्वित्याशंसावाक्यार्थः। अतोऽन्यत्राप्युक्तं "साज्यं च वर्त्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्य तिमिरापहम्" इति । यद्यपि दीपे त्रैलोक्यतिमिरापहत्वं न वर्तते तथाऽपि ब्रह्मतेजोमयेऽग्नौ त्रैलोक्यतिमिरापहत्वस्य सद्भावत्वादनेन मन्त्रेण दीपो दीयते इति विनियोगकृतां महर्षीणां साम्प्रदायिकानाम्नायमाशयः । अतो विनियोगानुसारेण मयैवं व्याख्याता इयमृक् ॥२५॥

ॐ नाभ्याऽआसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्त्तत ।
पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा लोकाँ२॥ऽअकल्पयन् ॥२६॥

पुरुषदेवत्याऽनुष्टुप् नारायणदृष्टा इह पुरुषदेवतामात्रस्य पूजने नैवेद्यनिवेदने विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि नाभ्याः अन्तरिक्षमासीत्,अस्यैव पुरुषस्येति शेषः । ब्रह्माण्डदेहस्य विराट्पुरुषस्य प्रजापतेः यज्ञपुरुषस्य नाभेः सकाशादन्तरिक्षम् आसीत् सम्बभूवेत्यर्थः। तथा शीर्ष्णः शिरस्तः सकाशात् द्यौः द्युलोकः समवर्त्तत जायतेस्म। तथा पद्भ्यां भूमिः समवर्त्ततेति शेषः परमेश्वरस्य पादाभ्यां पृथिवी समुत्पन्नेत्यर्थः । तथा श्रोत्रात्कर्णाद्दिशश्च अजायन्तेति शेषः समुत्पन्ना इत्यर्थः । तथा तेनोक्तेन विधिना लोकान् भूरादीन् प्रजापतेः सकाशादकल्पयन् कल्पितवन्तः फलदानोत्सुकाः काला इति शेषः । कालैरेव एतत्सर्वं सम्पादितमित्यर्थः। नक्षत्रलोकान्निसृतं सोम्यममृतं भूमौ निपतितं, तदेव आदित्यः स्वकिरणद्वारा गृह्णाति तदेवादित्याद्वृष्टिरूपेण भूमौ समायाति, ततोऽन्नं भवति तदन्नमिदं नैवेद्यं भगवते ( अमुकदेवाय ) मया निवेद्यते तन्नैवेद्यं भुक्त्वा स परमेश्वरो मां सुखं गमयत्वित्याशंसावाक्यार्थः ॥२६॥

ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वꣳहसः ॥ २७ ॥

ओषधिदेवत्या पूज्यदेवत्या च अथर्वपुत्रभिषग्दृष्टा इह देवतामात्रस्य पूजने कलशस्थापने च फलनिवेदने विनियुक्ता इयमृक् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि हे अमुकदेव ! एतत्पूगीफलं तुभ्यं मया निवेद्यते इति वाक्यशेषः । त्वत्प्रसादात् ताः सर्वा ओषधयो बृहस्पतिप्रसूताः बृहस्पतिना प्रेरिताः सत्यो नोऽस्मानंहसः पापाद्रोगरूपान्मुञ्चन्तु पृथक् कुर्व्वन्त्वित्यर्थः । ताः का इत्यपेक्षायामुच्यते । या ओषधयः फलिनीः फलिन्यः फलवत्यः फलयुक्ता इत्यर्थः । याश्च अफलाः फलरहिताः । याश्च अपुष्पाः पुष्परहिताः। याश्च पुष्पिणीः पुष्पिण्यः पुष्पसंयुक्ता इत्यर्थः । ताः सर्वा ओषधयस्त्वत्प्रसादादस्मात्रोगरूपात्पापात्पृथक् कुर्वन्त्वित्यभिप्रायः ॥२७॥

ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत्।
स दाधार पृथिवीन्द्यामुतेमां कस्मै देवाय हविषा विधेम ॥२८॥

इयमृक् ब्रह्मयज्ञजपे व्याख्याता तत्रास्या ऋचो व्याख्या द्रष्टव्या। यद्वैशिष्ट्यं तदत्र प्रतिपाद्यते। "अश्वस्य वाऽआलब्धस्य रेतऽउदक्रामत्तत्सुवर्णठं० हिरण्यमभवद्यत्सुवर्णठं० हिरण्यं ददात्यश्वमेव रेतसा समर्धयती"ति (बृह.) श्रुतेरिह देवपूजने देवाय प्रणामीयदक्षिणात्वेन हिरण्यमनेन मन्त्रेण निवेद्यते। हिरण्यं गर्भे (अर्थाद्गर्भमध्ये) यस्य स हिरण्यगर्भस्तल्लिङ्गश्रवणादस्या ऋचो हिरण्यनिवेदने विनियोगो याज्ञिकैः कृतः। अश्वमेव रेतसा समर्धयतीति—अश्नुते सर्वं जगदित्यश्वः सर्वव्यापकः परमेश्वरः, इह पूजनीय (अमुक) देवविशेषः, तं रेतसा हिरण्येन समर्धयति संवर्धयतीति श्रुत्यर्थः। देवतार्थञ्च दक्षिणादानं नित्यत्वेन श्रुत्याभिहितं "दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते"इति (शु० य० वे० १९।३०) एतद्वैशिष्ट्यमिह दर्शितं मन्त्रार्थस्तु ब्रह्मयज्ञजपे द्रष्टव्यः ॥२८॥

ॐ इदठं० हविः प्रजननम्मेऽअस्तु दशवीरठं० सर्वगणठंस्वस्तये।
आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि।
अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतोऽअस्मासु धत्त ॥ २९ ॥

पूज्यदेवत्या यजमानाशीर्देवत्या वा त्र्यवसाना अष्टिःप्रजापतिदृष्टा इह देवतामात्रस्य पूजने आरार्त्तिकनिवेदने विनियुक्ता इयमृक् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते। अत्र व्यूहेन पादपूर्त्तिरवगन्तव्या। हे अमुकदेव, इदमारार्त्तिकं तुभ्यं मया निवेद्यते इति वाक्यशेषः। त्वत्प्रसादाच्च इदं हविः "हु दानादानयोः" हूयते दीयते इति हविः दीयमानमिदमारार्त्तिकं मे मम स्वस्तये अविनाशायास्तु भवत्वित्यर्थः। कीदृशं हविरित्यपेक्षायामुच्यते। प्रजननं प्रजनयतीति प्रजननं प्रजोत्पादकमित्यर्थः। एतद्विशेषणेन देवार्थमारार्त्तिकनिवेदने निवेदयितुः प्रजोत्पत्तिः फलं ध्वन्यते। पुनः कीदृशं दशवीरं दशवीराः ज्वालारूपाः यत्र तद्दशवीरं बहुदीप्तिमत्त्वमनेन ध्वन्यते। पुनः कीदृशं सर्वगणं सर्वे गणा यस्मिन् तत्सर्वगणम्, एतदारार्त्तिकं कामयमानाः सर्वेऽपि देवगणा अत्र तिष्ठन्तीत्यभिप्रायेणैव आरार्त्तिकं दृष्ट्वा सर्वदेवगणागमनं बुध्वाऽऽरार्त्तिकसमये सर्वे जना उत्तिष्ठन्तीत्यवगन्तव्यम्। पुनः कीदृशम् आत्मसनि आत्मानं सनोति ददातीत्यात्मसनि आत्मदम्। पुनः कीदृशं प्रजासनि प्रजां सनोतीति प्रजासनि प्रजाप्रदं तथा पशुसनि पशून् सनोतीति पशुसनि पशुप्रदमित्यर्थः। तथा लोकसनि लोकं सनोतीति लोकसनि लोकदम् ऐहिकसुखप्रदमित्यर्थः। तथा अभयसनि अभयं स्वर्गं सनोति ददातीत्यभयसनि स्वर्गलोकप्रदमित्यर्थः। "स्वर्गो वै लोकोऽभयꣳ स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठती"ति श्रुतेः। एवं पूर्वोक्तैः सर्वैरेव विशेषणैः सर्वकामफलप्रदत्वमारार्त्तिकस्य सूचितं तत्सर्वफलं चारार्त्तिकनिवेदयितुः पूजकस्यानेनारार्त्तिकनिवेदनेन भवतीत्यपि प्रदर्शितम्। किञ्च हे अमुकदेव, त्वत्प्रसादादग्निः आरार्त्तिकस्थो वह्निः मे मम प्रजां पुत्रादिसन्ततिं बहुलां करोतु। पुत्रपौत्रप्रपौत्रनप्त्रादिभिर्धनसमृद्ध्या च प्रवृद्धां करोत्वित्यर्थः। किं बहुना हे अमुकदेव, अस्मासु अन्नं व्रीह्यादिकं पयः दुग्धं रेतो वीर्य्यं रेतःप्रवर्द्धकं घृतं वा धत्त (तिङांतिङोभव-

न्तीति पाणिनिवचनान्मध्यमपुरुषैकवचनस्थाने बहुवचनं ) धेहि स्थापयेत्यर्थः। सर्वकामफलप्राप्त्यभिप्रायेणैवानेनमन्त्रेणारात्तिकं निवेद्यते, इत्येव गन्तव्यम् ॥ २९ ॥

ॐ यज्ञेन यज्ञमिति पुष्पाञ्जलिः। मन्त्रार्थस्त्वग्रे पुरुषसूक्तव्याख्यायां द्रष्टव्यस्तत्रैवायं मन्त्रो व्याख्यास्यते ॥ ३० ॥

ॐ नमो गणेभ्य इति प्रदक्षिणा क्रियते। अयं च मन्त्रः शतरुद्रिये व्याख्यास्यते। तत्रास्य व्याख्या द्रष्टव्या ॥ ३१ ॥

इति श्री दामोदरशर्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये नवमोऽयं षोडशोपचारपूजापरिच्छेदः समाप्तः।

---

# अथ दशमपरिच्छेद प्रारम्भः।



## (अथ षडङ्गशतरुद्रियमन्त्रारम्भः)

### तत्रादौ शान्तिमन्त्राः।

ॐ गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह।
बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तु त्वा ॥ १ ॥

### अथ शान्तिमन्त्रव्याख्या

तत्रादौ शान्तिमन्त्रा व्याख्यायन्ते। गायत्रीति अश्वदेवत्या प्रजापतिदृष्टोष्णिक् इह रुद्राभिषेकीयशान्तिमन्त्रजपे विनियुक्ता ऋगियम्। "आत्मानꣳ रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयान्याहुर्विषयाꣳ स्तेषु गोचरानि"ति (कृ. य. वे. क. १।३।४।) श्रुतेरिहेन्द्रियगणस्य हयत्वं मत्वा तत्र "असङ्गशस्त्रेण दृढेन छित्वेति श्रीमद्भगवद्वाक्यादिहासङ्गरूपस्यासेः प्रवेशार्थं "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता" (कृ. य. वे. क. १।२।४) श्रुतेरिह विद्यारूपाभिः सूचीभिः रुद्राभिषेककर्म्मानुष्ठाता पुरुषः स्वेन्द्रियस्याश्वस्य विषयप्रवृत्तिराहित्यसंस्कारं कर्तुमिच्छन्निन्द्रियरूपमश्वं प्रत्येवं ब्रवीति यत् हे अश्व, हे मदीयेन्द्रियगण, गायत्री त्रिष्टुप् जगती अनुष्टुप् पङ्क्त्या सह बृहती उष्णिहा सह ककुप् एतानि छन्दांसि सूचीभिः त्वा त्वां शम्यन्तु शाम्यतिर्यद्यप्युपशमार्थस्तथापीह संस्करणार्थ एव धातूनामनेकार्थत्वात् "शमामष्टानां दीर्घः श्यनी' ति न दीर्घोऽत्र "बहुलं छन्दसी" त्यनेन छन्दसि सर्वविधीनां वैकल्पिकत्वादित्यवगन्तव्यम्। गायत्र्यादिछन्दोऽधिष्ठात्र्यो देवताः सूचीभिः विद्याभिः ज्ञानक्रियाभिर्विचारशक्तिभिरसङ्गशस्त्रासिपथार्थं विषयप्रवृत्तिराहित्येन संस्कारेण मदीयेन्द्रियरूपमश्वं संस्कुर्वन्त्वित्याशंसावाक्यार्थः ॥ १ ॥

ॐ द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदा।
विच्छन्दा याश्च सच्छन्दा सूचीभिः शम्यन्तु त्वा ॥ २ ॥

अश्वदेवत्याऽनुष्टुप्प्रजापतिदृष्टा इह रुद्राभिषेकीयशान्तिमन्त्रजपे विनियुक्ता ऋगियम्। हे अश्व, हे मदीयेन्द्रियगण, द्विपदाः द्वे पदे यासां ताः द्विपदाः, याश्चतुष्पदाः चत्वारि पदानि यासां ताश्चतुष्पदाः, त्रिपदाः त्रीणि पदानि यासां तास्त्रिपदाः, याश्च षट्पदाः षट् पदानि यासां ताः षट्पदाः, या विच्छन्दाः विगतं छन्दो याभ्यस्ता विच्छन्दाः छन्दोलक्षणरहिताः, याश्च सच्छन्दाः छन्दोभिः सहिताः सच्छन्दाः छन्दोलक्षणविशिष्टाः याश्छन्दो-

जातयः सन्तीतिशेषः । ताः सर्वाः छन्दोजातयः सूचीभिः त्वा त्वां शम्यन्तु संस्कुर्वन्तु। एतच्छन्दोजात्यधिष्ठात्र्यो देवताः सूचीभिर्विद्याभिर्ज्ञानक्रियाभिर्विचारशक्तिभिरसङ्गशस्त्रासिपथार्थं विषयप्रवृत्तिराहित्येन संस्कारेण मदीयेन्द्रियरूपमश्वं संस्कुर्वन्त्वित्याशंसावाक्यार्थः।।२।।

ॐ महानाम्न्यो रेवत्यो विश्वाऽआशाः प्रभूवरीः ।
मैघीर्विद्युतो वाचः सूचीभिः शम्यन्तु त्वा ॥ ३ ॥

अश्वदेवत्या प्रजापतिदृष्टा इह रुद्राभिषेकीयशान्तिमन्त्रजपे विनियुक्ता ऋगियम्। हे अश्व, हे मदीयेन्द्रियगण, महानाम्न्यः महन्नाम यासां ता महानाम्न्यः शक्वर्यः ऋचः, रेवत्यः ऋचः यासु ऋक्षु रैवतं साम गीयते ता एव रेवत्यः ऋचः, तथा प्रभूवरीः प्रभवन्ति सर्वभूतानि धारयितुं समर्था भवन्तीति प्रभूवर्य्यः सर्वप्राणिधारणसमर्थाः विश्वाः आशाः सर्वा दिशः, मेघे भवा मैघ्य इति प्राप्ते "वा छन्दसी"ति पूर्वसवर्णदीर्घत्वे मैघीः मैघ्यः मेघोत्था विद्युतः, वाचः वेदलक्षणाः अन्या अपि संस्कृताः देववाण्यश्च सूचीभिर्विद्याभिर्ज्ञानक्रियाभिर्विचारशक्तिभिरितियावत् त्वा त्वां शम्यन्तु विषयप्रवृत्तिराहित्यसंस्कारेण संस्कुर्वन्त्वित्यर्थः ।। आशंसावाक्यार्थस्तुपूर्ववदवगन्तव्यः। प्रभूवरीरित्यत्र प्रपूर्वाद्भवतेः "अन्येभ्योऽपि दृश्यन्ते" इतिवनिप् "ऋन्नेभ्योङीप्" इति ङीप् "वनोरचे"ति वनिपो नस्य रेफश्च बोध्यः। ततः प्रभूवरीशब्दात्प्रथमाबहुवचने "वाछन्दसी"ति पूर्वसवर्णदीर्घे प्रभूवरीरितिरूपमित्यनुसन्धेयम् ॥ ३ ॥

ॐ नार्यस्ते पत्न्यो लोम विचिन्वन्तु मनीषया ।
देवानां पत्न्यो दिशः सूचीभिः शम्यन्तु त्वा ॥४॥

अश्वदेवत्या प्रजापतिदृष्टा इह रुद्राभिषेकीयशान्तिमन्त्रजपे विनियुक्ता ऋगियम्। "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति" ( अ० वे० मु० ३।१।१।) श्रुतेः "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥" इति श्रीमद्भगवद्वाक्याचास्मिन् शरीरे पुरुषद्वयमस्तीत्यनुमीयते । तत्र "देवो भूत्वा देवं यजेदि"ति विशिष्टवाक्यानुस्मरणाद्भूतशुद्ध्यादिद्वारा हंसः सोहमिति स्वात्मानं ब्रह्मरूपं भावयित्वा "इन्द्रियाणि हयान्याहुरि"त्यादिश्रुतेः स्वेन्द्रियगणमश्वत्वेन परिकल्प्य गायत्र्यादितिसृभिर्ऋग्भिर्विषयप्रवृत्तिराहित्यसंस्कारेणेन्द्रियगणं संस्कृत्येदानीं जीवोपाध्यवच्छिन्नस्थूलशरीराधिष्ठितम् "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ( कृ० य० वे० २।१।१७।)" इत्यादिश्रुतेः "पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" इत्यादिश्रीमद्भगवद्वाक्याचाङ्गुष्ठमात्रं सुखदुःखभोक्तारं स्वात्मप्रतिबिम्बभूतं जीवमेवाश्वत्वेन सम्भाव्य तं प्रति "देवो भूत्वा देवं यजेदि" त्युक्तेः देवभूतो याजको रुद्राभिषेकानुष्ठानकर्त्ता पुरुषो ब्रवीति यत् हे अश्व, हे शुभाशुभकर्म्मफलोपभोक्तृपुरुष, हे जीव, नार्यः पत्न्यः, नरो वसिष्ठादयो मनुष्या ऋषयस्तेषामिमाः नार्यः तत्सम्बन्धिन्यः पत्न्यः "यत्कर्त्तव्यं तदनया सहे"तिश्रुतेर्दम्पत्योर्यज्ञे सहाधिकारदर्शनात्

यज्ञार्हाः कर्म्मपालयित्र्यस्तदीयभार्य्या अरुन्धत्यनुसूयाद्याः शक्तिविशेषा अस्माकं लोकमातरः ते तव लोम मनीषया विचिन्वन्तु। लोमेति जातावेकवचनं "सुपां सुलुगि"ति विभक्तिलोपो वा छान्दसः। मनसः ईषा मनीषा तया मनीषया मनस इच्छया विचार्य्य तव लोम लोमानि रोमाणि विचिन्वन्तु "लोमान्याश्रित्य पापानि यानि तिष्ठन्ति विग्रहे" इत्यादिस्मृतेर्लोमाश्रितानि पापानि विविच्य लोमकूपतः पृथक्कुर्वन्त्वित्यर्थः। लोमाश्रितपापपृथक्करणे इह ऋषिपत्नीनामतिपवित्रत्वाभिधानात् नार्यः पत्न्य इत्युक्तम्। "तयोरन्यः पिप्पलं स्वाद्वत्ती"ति श्रुतेरिह कर्म्मफलभोक्ता पुरुष एवाश्वशब्देनोच्यते। अशूप्रुषीत्यादिना अश्नुतेर्विहितः क्वन्प्रत्ययोऽत्र अश्नातेश्च बाहुलकादवगन्तव्यः। किञ्च हे अश्व, हे शुभाशुभकर्म्मफलोपभोक्तृपुरुष, हे जीव, देवानामिन्द्रादीनां पत्न्यो दिशः प्राच्याद्याः त्वा त्वां शम्यन्तु सांसारिकभोगविलासादिविषयासक्तत्वराहित्येन संस्कारेण संस्कुर्वन्त्वित्यर्थः॥ ४॥

ॐ रजता हरिणीः सीसा युजो युज्यन्ते कर्म्मभिः।
अश्वस्य वाजिनस्त्वचि सिमाः शम्यन्तु शम्यन्तीः॥ ५॥

अश्वदेवत्यानुष्टुप्प्रजापतिदृष्टा इह रुद्राभिषेकीयशान्तिमन्त्रजपे विनियुक्ता ऋगियम्। "त्रय्यः सूच्यो भवन्ति लोहमय्यो रजता हरिण्यः दिशो वै लोहमय्योऽवान्तरदिशो रजता ऊर्ध्वाहरिण्यस्ताभिरेवैनं कल्पयन्ति (शु० य० वे० श० ब्रा० १३।२।१०।६।)" इति श्रुतेः रजता अवान्तरदिशः हरिणीः हरिण्यः ऊर्ध्वादिशः तथा सीसाः लोहमय्यः प्राच्याद्या दिशः युजः युज्यन्ते इति युजः संयुक्ता एकीभूताः सूच्यः सूचीरूपा दिशो विदिश ऊर्ध्वादिशश्च तत्तदधिष्ठात्र्यो देवताः कर्म्मभिः अश्वदेहे सीमाकरणलक्षणैः क्रियाकलापैः युज्यन्ते योगं प्राप्नुवन्ति सीमाकरणयोग्या भवन्तीत्यर्थः। ता एव दिशो विदिश ऊर्ध्वादिशश्च शम्यन्तीः "वाच्छन्दसी"ति पूर्वसवर्णदीर्घः शम्यन्त्यः शामयन्त्यो 'वासनामितिशेषः' अश्वरूपस्येन्द्रियगणस्य संस्कारं कुर्वाणा इतियावत्, एवम्भूताः सत्यो वाजिनः "वाज इत्यन्नामे"ति निघण्टुः, वाजोऽन्नं तच्च इह अदनीयं कर्म्मफलमस्यास्तीति वाजी जीवः "तयोरन्यः पिप्पलं स्वाद्वत्ती"त्याद्याथर्वणिकश्रुतेः, तस्य वाजिनः स्वोपार्जितशुभाशुभकर्म्मफलवतो जीवस्य वाज इति वेगनामेति वा वाजः वेगः सोऽस्यास्तीति वाजी जीवस्तस्य वाजिनः स्वकर्म्मफलोपभोगार्थमितस्ततो नानायोनिषु धावतः अश्वस्य अश्नाति अत्ति कर्म्मफलानीति अश्वस्तस्य अश्वस्य शुभाशुभकर्म्मफलोपभोगिनो जीवस्य त्वचि त्वगिति सर्वेन्द्रियोपलक्षकं तेन त्वगादिसर्वेन्द्रियेषु सिमाः 'सिमाशब्दः सीमापर्य्यायः' सीमा रेखाः शम्यन्तु सम्यक् कुर्वन्तु यजनानुष्ठानादिदेवकर्म्मसु प्रमादपरिहारार्थं भोगप्रवृत्तिराहित्यविधित्सया विषयगतदोषानुसन्धानाय त्वगादिसर्वेन्द्रियेषु विदधत्वित्यभिप्रायः! रेखाकरणं विना तद्विस्मरणत्वासम्भवादिह रेखाकरणं तदनुसन्धानार्थमेव प्रार्थ्यते। यावच्च विषयेषु दोषानुसन्धानं न भवति तावच्च तत्र भोगप्रवृत्तिरनिवार्य्यैव "न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥" इति मनूक्तेः, एवं ययातिवाक्यं च श्रूयते यथाहि विष्णुपुराणे "यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। एकस्यापि न पर्य्याप्तं तदित्यतितृषं त्यजेत्॥" तथा पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः। तथाप्यनुदिनं तृष्णा यत्तेष्वेव हि जायते॥ अत एव "न जातु कामः

कामानामि''त्यादि च ययातिनाऽप्युक्तम्। एतदिन्द्रियसंयमनादौ मनुनापि यदुक्तं तदिह प्रदर्श्यते। तद्यथा–''बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्वशः। कर्म्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते॥ एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम्। यस्मिञ्जिते जितावेतौ भवतः पञ्चकौ गणौ॥ इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्। सन्नियम्य तु तान्येव ततः सिद्धिं नियच्छति॥ न जातु कामः कामाना० ॥ यश्चैतान्प्राप्नुयात्सर्वान्यश्चैतान्केवलाँस्त्यजेत्। प्रापणात्सर्वकामानां परित्यागो विशिष्यते॥ न तथैतानि शक्यन्ते सन्नियन्तुमसेवया। विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः॥ वेदास्त्यागाश्च यज्ञाश्च नियमाश्च तपांसि च। न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्॥ श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वाघ्रात्वा च यो नरः। न हृष्यति न ग्लायति स विज्ञेयो जितेन्द्रियः॥ इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम्। तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम्॥ वशेकृत्वेन्द्रियग्रामं संयम्य च मनस्तथा। सर्वान्संसाधयेदर्थानक्षिण्वन्योगतस्तनुम्॥'' इति॥ लोकेऽपि दृश्यते यथा कश्चित्पुरुषो यद्वस्तु कदाचिदपि विस्मर्तुं नेच्छति स एवं वक्ति यदिदं स्वजिह्वायां लिखितं मया तत्कदाचिदपि न विस्मर्त्तव्यं भवति। तद्वदिहाप्यवगन्तव्यम्॥ ५॥

ॐ सहस्तोमाः सहछन्दसऽआवृतः सहप्रमा ऽऋषयः सप्त दैव्याः।
पूर्वेषां पन्थामनुदृश्य धीराऽअन्वालेभिरे रथ्यो न रश्मीन्॥ ६॥

ऋषिदेवत्या ऋषिसृष्टिप्रतिपादिका त्रिष्टुप्प्रजापतिदृष्टा इह रुद्राभिषेकीयशान्तिमन्त्रजपे विनियुक्ता ऋगियम्। दैव्याः देवस्य प्रजापतेः इमे दैव्याः प्रजापतिप्राणाभिमानिनः एवं भूताः सप्त ऋषयः भरद्वाजकश्यपगौतमात्रिवसिष्ठविश्वामित्रजमदग्निसंज्ञकाः सप्तसंख्यका ऋषयः पूर्वेषां पूर्वकालीनानां पूर्वकल्पाधिकारिणां सप्तर्षीणां पन्थामनुदृश्य पन्थानमवलोक्य ''सूर्य्याचन्द्रमसौ धाता यथा पूर्वमकल्पयदि''तिश्रुतेः पूर्वकल्पीयसृष्टिक्रममनुसंधाय अन्वालेभिरे अन्वारभन्त सृष्टिमितिशेषः। सृष्ट्यारम्भं कृतवन्तः। पूर्वकल्पोत्पन्नैर्ऋषिभिर्यथा सर्वं जगत्सृष्टं तथैव पूर्वोक्तास्ते सप्तर्षयोऽपि सर्वमिदं सृष्टवन्त इत्यर्थः। कथमिव रश्मीन् रथ्यो न। ''दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते''इति यास्कोक्तेरिहापि नकार उपमार्थे ततोऽयमर्थः। रश्मीन् रथ्य इव रथे साधुः रथ्यः सुन्दरसारथिर्यथा इष्टदेशप्राप्त्यर्थं प्रथमं रश्मीन् प्रग्रहानालभते स्पृशति सृजति वा तथा ते सप्तर्षयोऽप्यस्य जगतः उपादानकारणं निमित्तकारणञ्च समवधाय जगदिदम् अन्वालेभिरे रलयोरैक्यस्मरणात् अन्वारेभिरे सृष्टवन्तः तथैव तेऽपि सृष्टियज्ञं कृतवन्त इत्यर्थः। सप्त ऋषयः किम्भूताः, सहस्तोमाः साम्नामावृत्तिविशेषाः स्तोमाः तैः सहिताः सहस्तोमा स्तोमयुक्ता इत्यर्थः। तथा सहछन्दसः छन्दांसि गायत्र्यादीनि तैः सहिताः युक्ता इत्यर्थः। सहछन्दस इत्यत्र तुगागमो न भवति, ''यस्यातिहायसहेति न''इति प्रातिशाख्यसूत्रेण निषेधात्। पुनः किम्भूताः सप्तऋषयः आवृतः (अत्रापिसहशब्दोऽध्याहर्त्तव्यस्ततोऽयमर्थः) सहावृतः (इहावृच्छब्देन कर्म्मोच्यते तेन) सहावृतः कर्म्मसहिताः श्रद्धासत्यप्रधानानां कर्म्मणामनुष्ठातार इत्यर्थः। तथा सहप्रमाः प्रमाणं प्रमा तत्सहिताः प्रमाणपरीक्षका इत्यर्थः। तथा धीराः धीमन्तः बुद्धिमन्त इत्यर्थः। एवं भूता ये सप्तर्षयः सृष्टियज्ञं कृतवन्तस्तानहं सप्तर्षीनिहानुष्ठानकर्म्मणि सविशेषमनुस्मरामीत्याशंसावाक्यार्थः॥ ६॥

ॐ पयः॒ पृथि॒व्यां पय॒ऽओष॑धीषु पयो॑ दि॒व्य॒न्तरि॑क्षे॒ पयो॑धाः।
पय॑स्वतीः प्र॒दिशः॒ सन्तु॒ मह्य॑म् ॥ ७ ॥

पञ्चामृतस्नानप्रकरणे व्याख्यातोऽयं मन्त्रस्तत्रास्य व्याख्या द्रष्टव्या। विनियोगभेदेन यद्वैशिष्ट्यं तावन्मात्रमिह प्रदर्श्यते। हे रुद्र, यतोऽहं रुद्राभिषेककर्म्मानुष्ठाने प्रवृत्तोऽस्मीति वाक्यशेषः। अतो हे रुद्र, त्वमपि मह्यं पयोधाः मदर्थं पृथिव्यादिषु पयो धेहि मदर्थं पयः स्थापयेत्यर्थः। एतन्मन्त्रपाठेऽपि यजनीयदेवताप्रसादादनुष्ठातुरनुष्ठापयितुर्वा पयो भवतीति शिष्टाचारपरम्परयाऽयं मन्त्रः शान्तिमन्त्रजपेऽपि विनियुक्तोऽस्तीतिबोद्धव्यम्। अन्यत्सर्वमपि तत्रत्य व्याख्यावदिहाप्यवगन्तव्यम्। नहि तत्र किञ्चित्पार्थक्यमस्ति। अतो न पुनर्व्याख्यायतेऽयं मन्त्रः ॥ ७ ॥

ॐ स्व॒स्ति न॒ऽइन्द्रो॑ वृ॒द्धश्र॑वाः स्व॒स्ति नः॑ पू॒षा वि॒श्ववे॑दाः।
स्व॒स्ति न॒स्तार्क्ष्यो॒ऽअरि॑ष्टनेमिः स्व॒स्ति नो॒ बृह॒स्पति॑र्दधातु ॥८॥

इन्द्रपूषतार्क्ष्यबृहस्पतिदेवत्या प्रजापतिदृष्टा विराट्स्थाना इह रुद्राभिषेकीयशान्तिमन्त्रजपे विनियुक्ता ऋगियम्। वृद्धं महत् बहु श्रवः धनं यस्य स वृद्धश्रवाः बहुधनः यद्वा वृद्धं महत् श्रवः कीर्त्तिर्यस्य स वृद्धश्रवाः बहुकीर्त्तिः देवराट् शतक्रतुः पुरन्दरः नोऽस्मभ्यं स्वस्ति क्षेमं कल्याणं दधातु ददात्वित्यर्थः। (दधात्विति दधातेर्लेटि प्रथमपुरुषैकवचने रूपम्, "डुधाञ् धारणपोषणयोः (जु० उ०)" दानेऽप्येके, इत्युक्तत्वाद्दधातिरिह दानार्थ एवेत्यनुसन्धेयम्।) तथा विश्वं सर्वं वेदो धनं यस्य विश्वं वेत्तीति वा विश्ववेदाः सर्वज्ञः सर्वधनो वा पूषा द्वादशादित्यान्तर्गतः सूर्य्यविशेषः नोऽस्मभ्यं स्वस्ति क्षेमं कल्याणं दधातु ददात्वित्यर्थः। तथा अरिष्टनेमिः "रिषतिर्हिंसार्थः" न रिष्टा अरिष्टा, अरिष्टा अनुपहिंसिता नेमिश्चक्रधारा यस्य स अरिष्टनेमिः अनुपहिंसितचक्रधारः, अरिष्टा अनुपहिंसिता नेमिः पक्षाग्रविशेषो वा यस्य स अरिष्टनेमिः अनुपहतपक्षाग्रः, तार्क्ष्यः रथो गरुडो वा नोऽस्मभ्यं स्वस्ति क्षेमं कल्याणं दधातु ददात्वित्यर्थः। तथा बृहस्पतिः सुरपुरोहितो देवगुरुः स च नोऽस्मभ्यं स्वस्ति क्षेमं कल्याणं दधातु ददात्वित्यर्थः। एतद्रुद्राभिषेककर्म्मानुष्ठाने प्रवृत्तानामस्माकमिन्द्रादिबृहस्पत्यन्ताः सर्वे देवाः क्षेमं कुर्वन्त्वित्याशंसावाक्यार्थः ॥ ८ ॥

ॐ विष्णो॑ र॒राट॑मसि॒ विष्णोः॑ श्नप्त्रे॑स्थो॒ विष्णोः॒ स्यूर॑सि॒ विष्णो॑र्ध्रु॒वो॑ऽसि। वै॒ष्ण॒वम॑सि॒ विष्ण॑वे त्वा ॥ ९ ॥

देवपूजाप्रकरणे व्याख्यातोऽयं मन्त्रस्तत्रास्य व्याख्या द्रष्टव्या। इह तु वैशिष्ट्यमात्रं प्रदर्श्यते। तद्यथा हे भगवन्, हे विष्णो, वेवेष्टि व्याप्नोतीति विष्णुस्तस्मै विष्णवे व्यापकाय तुभ्यं नम इति वाक्यशेषः। तथा हे विष्णो त्वा त्वामिह रुद्राभिषेकानुष्ठानेऽहमनुस्मरामीति वाक्यशेषः। त्वामनुध्यायामीत्यर्थः। त्वञ्च मां सुखं गमयेत्याशंसावाक्यार्थः। यस्य विष्णोः व्यापकस्य तव रराटमसि "असीति 'तिङां तिङो भवन्ती'ति व्यत्ययेन" रराटमस्ति ललाट-

स्थानीयमस्तीत्यर्थः, इदं द्युलोकस्थानमितिशेषः । इत्यादि पूर्ववदिहाऽप्यवगन्तव्यं शेषमन्यत्समानम् ॥ ९ ॥

ॐ अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता विश्वे देवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता ॥ १० ॥

लिङ्गोक्तदेवत्यानि इह रुद्राभिषेकीयशान्तिमन्त्रजपे विनियुक्तानि। अग्न्यादिवरुणान्ताः सर्वा देवताः अस्मिन्नभिषेककर्म्मणि अहमनुध्यायामीतिवाक्यशेषः । ताः अग्न्यादिवरुणान्ताः सर्वा देवताः अस्माकं क्षेमं कल्याणं विदधत्विलाशंसावाक्यार्थः ॥ १० ॥

ॐ द्यौः शान्तिरित्यग्रे स्वस्तिवाचनप्रकरणे व्याख्यास्यते तत्रास्य मन्त्रस्य व्याख्या द्रष्टव्या । ॐ गणानान्त्वेति, ॐ अम्बे अम्बिके इति, एतन्मन्त्रद्वयञ्च देवपूजाप्रकरणे व्याख्यातं तत्र द्रष्टव्यम् । ॐ श्रीश्च ते इत्ययं मन्त्रोऽग्रे उत्तरनारायणे व्याख्यास्यते तत्रास्य व्याख्या द्रष्टव्या । ॐ इमा रुद्रायेति शतरुद्रियप्रकरणेऽग्रे व्याख्यास्यते तत्रास्य व्याख्या द्रष्टव्या । ॐ यतो यतः इति चाग्रे स्वस्तिवाचनप्रकरणे व्याख्यास्यते तत्र मन्त्रार्थो द्रष्टव्यः ११॥१२॥१३॥१४॥१५॥१६॥

ॐ विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्नऽआसुव ॥ १७ ॥

सवितृदेवत्या गायत्री नारायणपुरुषदृष्टा इह रुद्राभिषेकीयशान्तिमन्त्रजपे विनियुक्ता ऋगियम् । दीव्यतीति देवस्तत्सम्बुद्धौ हे देव, सुवति प्रेरयति स्वस्वव्यापारे जगदिदमिति सविता तत्सम्बोधने हे सवितः, इति सम्बोधनद्वयं तथा हि हे देव, हे सवितः, विश्वानि सर्वाणि दुरितानि पापानि परासुव पराक्षिप मत्तो दूरं नयेत्यर्थः । यत् भद्रं कल्याणं तन्नोऽस्मान्प्रति आसुव आक्षिप अस्मान्प्रापयेत्यर्थः । दुरितनिरसनेन भद्रप्रापणेन चास्मान् सुखीकुर्वित्याशंसावाक्यार्थः ॥ १७ ॥

इति शान्तिमन्त्रव्याख्या ।

अतः परं षडङ्गशतरुद्रियमन्त्र व्याख्या ॥

---

ॐ यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति।
दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु ॥१॥

एवं शान्तिमन्त्रान्व्याख्याय यज्जाग्रत इति षडृचस्य शिवसङ्कल्पसूक्तस्य व्याख्यां विवृणोमि। तथाहि यज्जाग्रत इति षडृचस्य शिवसङ्कल्पऋषिस्त्रिष्टुप्छन्दो मनो देवता रुद्रहृदयजपे विनियोगः। स्नपनपक्षे रुद्रहृदयस्नपने विनियोगः। होमपक्षे रुद्रहृदयहोमे विनियोगः। एवं वाक्योहः कर्त्तव्यः। अथ मन्त्रार्थस्तत्र "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते सूक्तमिदं, तद्यथा रुद्राभिषेककर्त्ता वदति। तन्मे मनः शिवसङ्कल्पमस्तु रुद्रप्रसादादिति शेषः। तत् मे मम मनः शिवसङ्कल्पं शिवः शान्तः कल्याणकारी सङ्कल्पः धर्मविषयकोऽभिलाषो यस्य तत् शिवसङ्कल्पं श्रेयःसाधकं भवत्वित्यर्थः। मन्मनसि सदा धर्मप्रवृत्तिरेवास्तु न कदाचित्पापप्रवृत्तिरितिभावः। काम्यकर्म्मानुष्ठानपक्षे मदीयं मनोऽनुष्ठानसमये श्रीरुद्रप्रसादाद्विषयान्तरव्यापारशून्यमनुष्ठानसमाप्तदिनं यावत्सांसारिकविषयभोगविलासादित्यक्तवासनाकञ्च भवत्वित्याशयः। निष्काम्यपक्षे तु मदीयं मनः सर्वदैव श्रीरुद्रप्रसादान्निर्विषयं भवत्वित्यभिप्रायः। मनसो निर्विषयत्वेनैव मोक्षसिद्धेः सम्भवात्। तदुक्तं श्रुत्या अथर्ववेदस्य ब्रह्मबिन्दूपनिषदि यथाहि "मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धाय विषयासक्तं मुक्तं निर्विषयं स्मृतम्॥ अतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते। तस्मान्निर्विषयं नित्यं मनः कार्य्यं मुमुक्षुणा॥" इति, अन्यत्राप्युक्तम् "मनो हि द्विविधं प्रोक्तं शुद्धञ्चाशुद्धमेव च। अशुद्धं कामसम्पर्कं शुद्धं कामविवर्जितम्॥" इति, अतः सर्वतः प्रथमं मनःशुद्धिः कर्त्तव्या, मनःशुद्धौ चित्तैकाग्रतया कर्म्मपरिसमाप्तौ सङ्कल्पसिद्धिः, सङ्कल्पसिद्धौ सुतरामेव कार्य्यसिद्धिरितिहेतोः सङ्कल्पमात्रस्यान्ते सूक्तमिदं पठ्यते च। तत्पक्षे तन्मे मनः शिवसङ्कल्पमस्तु सङ्कल्पकर्म्माधिष्ठातृदेवप्रसादादितिशेषः। एतावदेव वाक्यं भिद्यते सर्वमन्यत्समानमेव। तत्किं मन इत्यपेक्षायामुच्यते। यत् मनः जाग्रतः पुरुषस्य दूरमुदैति दूरमुद्गच्छति चक्षुरादीन्द्रियापेक्षया दूरगामीत्यर्थः। नानाविषयेषु सञ्चरतामिन्द्रियाणां सहकारित्वेन इतस्ततः सञ्चरणशीलत्वाद्दूरगन्तृ इति भावः। वृक्षपर्वताद्यवरोधसत्त्वेऽपि यन्मदीयं मनो दूरं समुपैतीत्याशयः। तथा यच्च मनः दैवं दीव्यति प्रकाशते इति देवः विज्ञानात्मा तत्र भवं दैवं "मनसैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम्।" इतिश्रुतेरात्मग्राहकमित्यर्थः। तथा तदु "यदःस्थाने व्यत्ययेन तदिति उकारश्चार्थे" यच्च मनः सुप्तस्य पुंसः तथैव एति तथैव पुनरागच्छति यथागतमितिशेषः। स्वापकाले यथा गतं तथैव सुषुप्त्यवस्थायां पुनरागच्छतीत्यर्थः। स्वप्रावस्थापर्य्यन्तमिन्द्रियप्रसारो भोग्यविषयेषु दृश्यते। अतस्तदानीं यथा विषयसम्बन्धेन बहुविषयकं मनो भवति तथैव सुषुप्तौ स्वल्पविषयकमपि भवति तदानीं विषयेष्विन्द्रियाणां प्रसाराभावादित्याशयः। तथा यच्च दूरङ्गमं दूरं गच्छतीति दूरङ्गमं 'अत्र खश् प्रत्ययः' व्यवहिताव्यवहितसाधारणत्वादिन्द्रियाणां मध्ये दूरगन्तृ यन्मनः। यन्मदीयं मनोऽतीतानागतवर्त्तमानसन्निकृष्टविप्रकृष्टव्यवहिताव्यवहितसर्वपदार्थानां ग्राहकमित्यर्थः। तथा यच्च मनोज्योतिषां पदार्थप्रकाशकानां चक्षुरादीन्द्रियाणां मध्ये एकमद्वितीयं ज्योतिः प्रकाशकं प्रवर्त्तकमिन्द्रियमुख्यमित्यर्थः। मनसा प्रवर्त्तितान्येव चक्षुरादीन्द्रियाणि स्वस्वव्यापारेषु प्रवर्त्तन्ते। आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेनेति न्यायोक्तेर्मनःसम्बन्धमन्तरा

तेषां विषयेष्वप्रवृत्तेः । एतादृशं यन्मदीयं मनस्तत् श्रीरुद्रप्रसादात् शिवसङ्कल्पं शान्तसङ्कल्पमस्तु दुर्वासनारहितं सत् धार्म्मिकविषयकं भवत्वित्याशंसावाक्यार्थः । मन्मनसि सदा धर्मवासनैव परिस्फुरतु न कदाचित्पापवासनेत्याशयः ॥ १ ॥

येन॒ कर्मा॑ण्य॒पसो॑ मनी॒षिणो॑ य॒ज्ञे कृ॒ण्वन्ति॑ वि॒दथे॑षु॒ धीराः॑ ।
यद॑पू॒र्वं य॒क्षम॒न्तः प्र॒जाना॒ं तन्मे॒ मनः॑ शि॒वस॑ङ्क॒ल्पम॑स्तु ॥ २ ॥

ऋष्यादिकन्तु पूर्वकण्डिकायामेवोक्तम् । इह तु व्याख्यामात्रं प्रदर्श्यते । तद्यथा तन्मे मम मनः शिवसङ्कल्पमस्तु शान्तसङ्कल्पं भवत्वित्यर्थः, श्रीरुद्रप्रसादादितिशेषः । तत्किं मन इत्यपेक्षायामुच्यते येन मनसा सता धीराः धीमन्तः बुद्धिमन्तः अपसः "अप इति कर्मनामेति निघण्टुः" अपो विद्यते येषां ते अपस्विनः कर्मवन्तःसदा कर्मनिष्ठाः मनीषिणो मेधाविनो विद्वांसः विदथेषु विद्यन्ते ज्ञायन्ते तानि विदथानि तेषु विदथेषु यज्ञसंबन्धिनां हविरादिपदार्थानां ज्ञानेषु सत्सु यज्ञे यजनकर्मणि कर्माणि कृण्वन्ति कुर्वन्तीत्यर्थः । सर्वेषां मनःस्वास्थ्ये सति ज्ञानोपलब्धेः कर्म्मप्रवृत्तेश्च दर्शनात् मनः स्वास्थ्यं विना केषाञ्चिदपि ज्ञानं कर्मप्रवृत्तिश्च न संभवतीति सकललोकवेदप्रसिद्धिर्जनानुभवसिद्धिश्च दृष्टिपथमायातीत्याशयः । अतश्च "स्वस्थे चित्ते बुद्धयः सञ्चरन्ती"ति शिष्टा अपि समामनन्ति । तथा यच्च मनः अपूर्वं न विद्यते पूर्वमिन्द्रियं यस्मात्तदपूर्वम् "उद्ववर्हात्मनश्चैव मनः सदसदात्मकम् । मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम् । महान्तमेव चात्मानं सर्वाणि त्रिगुणानि च । विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च ।" इति मनूक्तश्लोकाभ्यामिन्द्रियेभ्यः पूर्वं मनसः सृष्टिप्रतिपादनाच्चक्षुरादीन्द्रियेभ्यः प्रागुत्पन्नमिति भावः । यच्च मनः यक्षं यष्टुं शक्तमित्यर्थः । तथा यच्च मनः प्रजानां प्रजायन्ते इति प्रजास्तासां प्रजानां प्राणिमात्राणामन्तर्मध्ये स्थितमितिशेषः । इतरेन्द्रियाणि बहिःष्ठानि मनस्त्वन्तरिन्द्रियमित्यर्थः । तत् तादृशं मे मनः शिवसङ्कल्पमस्तु शान्तसङ्कल्पं भवत्वित्यर्थः । धीर्विद्यते येषां ते धीरा इत्यत्र रो मत्वर्थीयः । दधते श्रुतमर्थमिति धीराः, ददति विद्याः शिष्येभ्यस्ते धीरा इति वा तत्र दधातेर्ददातेर्वा हलो व्यत्ययेन "सुसूधागृधिभ्यः क्रन्" इतिक्रन्प्रत्ययः, "घुमास्थागापा०" इतीत्वं च बोध्यम् । अथवा 'धियमीरयन्तीति धीराः, अत्र च धीशब्दोपपदादीरयतेः "कर्मण्यण्" इत्यण् प्रत्ययोऽनुसन्धेयः । पूर्वन्तु यास्कमतेनोक्तमिह तु क्षीरस्वामिमतेनाभिहितमित्यवगन्तव्यम् । अपस इत्यत्र "अस्मायामेधास्रजो विनिः"इति विन्प्रत्ययः "विन्मतोर्लुक्" इतीष्टाभावेऽपि छान्दसो विनो लुगवगन्तव्यः । 'विदथेषु' इत्यत्र "रुदिविदिभ्यां ङित्"इति वेत्तेरौणादिकोऽथ प्रत्यये ङित्वाद्गुणाभावश्च । प्रत्ययोदात्तत्वेन मध्योदात्तं पदं "प्रत्ययः परश्च आद्युदात्तश्च" इति पाणिन्युक्तेः । करोतेः प्रथमपुरुषबहुवचने "व्यत्ययो बहुलम्"इति विकरणव्यत्ययेन श्नुप्रत्यये शकारलोपे "हुश्नुवोः" इति यणि कृते कृण्वन्तीति रूपम् । यक्षमित्यत्र यजतेरौणादिकः सन्प्रत्ययः "ञ्नित्यादिर्नित्यम्" इत्याद्युदात्तत्वे प्राप्ते कृत्तद्धितेति प्रातिपदिकत्वात् "प्रातिपदिकं फिट्" "फिषोऽन्त उदात्तः"इति यक्षमित्यस्यान्तोदात्तता भवतीत्यवगन्तव्यम् ॥ २ ॥

ॐ यत्प्रज्ञानमुतचेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु।
यस्मान्नऽऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥३॥

तत् मे मनः शिवसङ्कल्पमस्तु शान्तसङ्कल्पं भवत्वित्यर्थः, श्रीरुद्रप्रसादादितिशेषः। तत् किं मन इत्यपेक्षायामुच्यते यत् मनः प्रज्ञानं प्रकर्षेण ज्ञायते येन तत्प्रज्ञानं प्रकृष्टज्ञान-जनकमित्यर्थः। उत शब्दोऽप्यर्थे। उत अपि च यन्मनः चेतः चेतयति सम्यक् ज्ञापयतीति चेतः सामान्यविशेषज्ञानजनकमित्यर्थः। तथा यच्च मनः धृतिः धैर्य्यस्वरूपमित्यर्थः मनस्येव धैर्य्योत्पत्तेर्मनसि धैर्यमुपचर्यते। तथा "प्रजास्यात्सन्ततौ जने" इत्यभिधानदर्शनात्प्रजासु जनेषु अन्तर्मध्ये वर्त्तमानं सत् यन्मनः ज्योतिः सर्वेन्द्रियाणां प्रवर्त्तकमित्यर्थः। "ज्योतिषां ज्योतिः, अन्तः प्रजानामि"ति पूर्वमुक्तत्वादिह पुनरभिधानमादरातिशयद्योतनार्थम्। "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः। तथा यच्च मनः अमृतम् आत्मरूपत्वादवि-नश्वरमित्यर्थः। तथा यस्माच्च मनसः ऋते यन्मनो विना किञ्चन (चन शब्दोऽप्यर्थे) किमपि कर्म न क्रियते कैश्चिदपि नरैरितिशेषः। प्राणिमात्रस्य मनःपूर्वककर्ममात्रप्रवृत्तिमत्त्व-सद्भावत्वान्मनःस्वास्थ्यं विना कर्माभावाच्च सर्वप्राणिनां प्रवर्त्तकं यन्मन इत्यर्थः। तन्मे मनः शिवसङ्कल्पमस्तु। तन्मदीयं मनो दुर्वासनारहितं सद्धार्मिकविषयकं भवत्वित्याशंसावा-क्यार्थः। प्रज्ञानमित्यत्र "ज्ञा अवबोधने" इत्यस्मात् "करणाधिकरणयोश्चे"ति करणे ल्युट्-प्रत्ययः। चेत इत्यत्र "चिती संज्ञाने" इत्यस्मात् ण्यन्तादसुन्प्रत्ययः। "अन्याराादितरर्त्ते" इत्यादिना यस्मादिति ऋते योगे पञ्चमी॥ ३॥

येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम्।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥४॥

तत् मे मनः शिवसङ्कल्पमस्तु श्रीरुद्रप्रसादादितिशेषः। तत्किं मन इत्यपेक्षायामुच्यते। अमृतेन अविनश्वरेण आत्मरूपत्वान्मुक्तिपर्य्यन्तस्थायिना येन मनसा इदं प्रत्यक्षं यथा स्यात्तथा भूतं भूतकालीनं, तथा भुवनं भवतीति भुवनं (भवतेः क्युट्प्रत्ययः) वर्त्तमान-कालीनं, तथा भविष्यत् भविष्यतीति भविष्यत् ("लृटः सद्वे"ति भवतेर्लृटः स्थाने शतृप्रत्ययः "तौ सदि"तिपाणिन्युक्तेः) भविष्यत्कालीनं, सर्वं प्रत्यक्षाप्रत्यक्षवस्तुजातं परिगृहीतं परि सर्वतो भावेन ज्ञातमित्यर्थः। "स वा अयमात्मा ब्रह्मविज्ञानमयो मनोमयः (बृह० ४।४।५।)" इत्यादिश्रुतेः मनस आत्मरूपत्वादविनश्वरत्वं स्पष्टतया प्रतीयते। अतोऽविनश्वरत्वान्मन एव भूतभविष्यद्वर्त्तमानकालेषु विद्यमानं सत्कालत्रयसम्बन्धि प्रत्यक्षाप्रत्यक्षवस्तुजातं परि-गृह्णाति। श्रोत्रादीन्द्रियाणि तु प्रत्यक्षमेव वस्तु परिगृह्णन्ति न त्वप्रत्यक्षं, कालान्तरे नश्यन्ति च तानीन्द्रियाणि। अतश्चक्षुरादीन्द्रियापेक्षया मनोवैशिष्ट्यं श्रुत्याऽभ्युक्तं "येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम्" इति। येन च मनसा सप्तहोता यज्ञः सप्तहोतारो देवा-नामाह्वातारो होमकर्त्तारश्च होतृमैत्रावरुणादयो यत्र स सप्तहोता अग्निष्टोमाख्यो यागस्तायते विस्तार्य्यत इत्यर्थः। "तनोतेर्यकी"ति पाणिनीयसूत्रेणाकारः। अग्निष्टोम एव सप्तहोतारो भवन्तीति प्रसिद्धेः। येन मनसाऽग्निष्टोमो यज्ञः सम्पाद्यत इत्याशयः। तन्मे मनः शिवसङ्क-

ल्पमस्त्विति पूर्ववत् दुर्वासनादिराहित्येन मदीयं मनो धर्म्मविषयकं भवत्वित्याशंसावाक्यार्थः ॥४॥

**यस्मिन्नृचः साम यजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः।**
**यस्मिंश्चित्तꣳ सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥५॥**

तत् मे मनः शिवसङ्कल्पमस्तु शान्तव्यापारं भवतु श्रीरुद्रप्रसादादितिशेषः। तत्किं मन इत्यपेक्षायामुच्यते। यस्मिन् मनसि ऋचः प्रतिष्ठिताः समाश्रिताः भवन्तीति शेषः। तथा यस्मिन् मनसि साम (सुपां सुलुगिति प्रथमाबहुवचनस्य लुक्) सामानि प्रतिष्ठितानि भवन्तीति शेषः। तथा यस्मिन् मनसि यजूँषि प्रतिष्ठितानि भवन्तीति शेषः, यस्मिन्मनसि ऋग्वेदसामवेदयजुर्वेदाः समाश्रिता भवन्तीत्यर्थः। मनस एव स्वास्थ्ये सति वेदत्रयी स्फूर्त्तेर्मनसिशब्दमात्रस्य प्रतिष्ठितत्वमनेन ध्वन्यते। अतः सामवेदीय छान्दोग्योपनिषदि मनस एव स्वास्थ्ये सति वेदोच्चारणशक्तिः प्रतिपादिता। तथा हि "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः-अन्नमयं हि सोम्य मनः" इत्यादि छान्दोग्ये द्रष्टव्यम्। मनसि ऋगादयो वेदाः प्रतिष्ठिता इत्युक्तं किन्तु कथं प्रतिष्ठिता इत्यपेक्षायां तत्र दृष्टान्त उच्यते। रथनाभौ आरा इव यथा रथनाभौ रथचक्रमध्ये आराः प्रतिष्ठितास्तथैव सर्वमपि शब्दजालं मनसि प्रतिष्ठितं भवति "आरा इव रथनाभौ संहता यत्र सर्वमि"ति श्रुतेः। किञ्च यस्मिन्मनसि प्रजानां प्रजायन्ते इति प्रजाः प्राणिनः तेषां सर्वं चित्तं "सङ्कल्पविकल्पात्मकं मनः" "निश्चयात्मकं चित्तम्" इत्याद्युक्तेः चित्तं निश्चयात्मकं सर्वपदार्थविषयि ज्ञानम् ओतं प्रोतं निक्षिप्तं तन्तुसन्ततिः पटे इवेति वाक्यशेषः। तन्तुसन्ततिर्यथा पटे निहिता भवति तथैव प्रजानां सर्वमेव ज्ञानं यस्मिन्मनसि निहितमित्यर्थः। मनस एव स्वास्थ्ये ज्ञानोत्पत्तिर्मनोवैषम्ये च ज्ञानाभाव इत्याशयः। तन्मे मम मनः शिवसङ्कल्पमस्तु दुर्वासनारहितं सत् धर्मविषयकं शान्तव्यापारं भवत्वित्यर्थः॥५॥

**सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिनऽइव।**
**हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ॥६॥**

तत् मे मम मनः शिवसङ्कल्पमस्तु शान्तव्यापारं भवतु श्रीरुद्रप्रसादादितिशेषः। तत्किं मन इत्यपेक्षायामुच्यते। यत् मनः मनुष्यान् नरान् नेनीयते अत्यर्थमितस्ततो नयति (नयतेः क्रियासमभिहारे यङ्।) मनुष्यग्रहणं प्राणिमात्रोपलक्षकं यतो मनसा प्रेरिता एव प्राणिनः सर्वव्यवहारेषु प्रवर्त्तन्ते अत एवमुक्तमित्यर्थः। तत्र दृष्टान्तद्वयं प्रदर्श्यते तद्यथा सुषारथिरश्वानिव कशयेति शेषः। शोभनः सारथिः सुषारथिः शोभनो यन्ता यथा कशया अश्वान् नेनीयते इतस्ततोऽश्वान् धावयन् स्वाभिमतप्रदेशं प्रति गन्तुमभिप्रवर्तयति तथैव मनोऽपि अश्वस्थानिनः सर्वप्राणिनो नानाव्यवहारेषु वासनारूपया कशया इतस्ततो धावयत् स्वाभिमतप्रदेशस्थानीयपदार्थं प्रति प्रवर्त्तयतीत्याशयः। अपि च अभीशुभिर्वाजिन इव, यथा सुसारथिः शोभनोऽश्ववाहकः अभीशुभिः प्रग्रहैः मुखस्थितकविकाख्यरज्जुविशेषैः वाजिनः

वेगवतोऽश्वान्नेनीयत इत्यनुषङ्गः, रश्मिभिर्नियच्छतीत्यर्थः। तथैव मनोऽपि यत्र नियन्तुमिच्छति तत्रैव प्रवर्त्तयति नियच्छति च नरानित्याशयः। एतदुपमाद्वयं तत्र प्रथमया प्रवर्त्तनं द्वितीयया नियमनमभिहितम्। तथा यच्च मनः हृत्प्रतिष्ठं हृदि प्रतिष्ठा स्थितिर्यस्य तत् हृत्प्रतिष्ठं हृद्येव मन उपलभ्यते, "यज्ज्योतिषां ज्योतिरि"तिश्रुतेर्हृद्यवस्थानं मनसोऽभिगम्यते तस्मात् हृत्प्रतिष्ठं हृदयावस्थितं यन्मन इत्यर्थः। यच्च मनः अजिरं जरारहितं बाल्ययौवनस्थविरेषु मनसस्तदवस्थत्वात्। अत उक्तं केनचित् "शिरः शुक्लं चक्षुस्तिमिरपटलैरावृतमहो विशीर्णा दन्तालिः श्रवणरहितं कर्णयुगलम्। वपुः कुब्जीभूतं गतिरपि शनैर्यष्टिशरणा मनो मे निर्लज्जं तदपि न विषयेभ्यः स्पृहयति"॥ इति। तथा यच्च मनः जविष्ठं जवोऽस्यास्तीति जववत् अतिशयेन जववदिति जविष्ठं ("विन्मतोर्लुगि"ति इष्ठनि परे मतोर्लुक्) अतिशयेन जववत् वेगवदित्यर्थः। "न वै वाताकिञ्चनाशीयोऽस्ति न मनसः किञ्चनाशीयोऽस्ती"ति श्रुतेः। यदीदृशं मदीयं मनस्तन्मे मनः शिवसङ्कल्पमस्तु शान्तव्यापारं भवत्वित्यर्थः। एवं षड्ऋचं शिवसङ्कल्पसूक्तं व्याख्याय इदानीं षोडशर्चस्य पुरुषसूक्तस्यार्थं विवृणोमि॥ ६॥

ॐ स॒हस्र॑शीर्षा॒ पुरु॑षः सहस्रा॒क्षः स॒हस्र॑पात्।
स भूमि॑ᳶ स॒र्वत॑स्पृ॒त्वात्य॑तिष्ठद्दशाङ्गु॒लम्॥१॥

सहस्रशीर्षेत्यादिषोडशर्चस्य नारायणऋषिराद्यानां पञ्चदशानामनुष्टुप्छन्दोऽन्त्यायास्त्रिष्टुप्छन्दः पुरुषो देवता रुद्रशिरोजपे विनियोगः। स्नपनपक्षे रुद्रशिरःस्नपने विनियोगः। होमपक्षे रुद्रशिरोहोमे विनियोगः। एवं वाक्योहेन विनियोगोऽनुसन्धेयः। मन्त्रार्थस्त्वेवं तत्र मन्त्रेऽस्मिन्नुत्तरार्धे स इति तच्छब्दश्रवणात्पूर्वार्धे यच्छब्दोऽध्याहर्त्तव्यः, यत्तदोर्नित्यसम्बन्धत्वात्, तथा हि योऽयं विज्ञानमयः पुरुषो "यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्॥ (कृ० य० वे० तै० श्वे० ३।८॥)" "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमितिवीतशोकः॥ यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति॥ (अ० वे० मु० ३।१।२।३।)" "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन। वासुदेवः परं ब्रह्म विराट् पुरुष इत्यसौ (तैति० २।६।)" "स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्। स एव विष्णुः स प्राणः स कालाग्निः स चन्द्रमाः॥ स एव सर्वं यद्भूतं यच्च भाव्यं सनातनम्। ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये॥ अ० वे० कै० १।८।९।)" "स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः। स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किञ्चन॥ (बृह० १।४।१।)" इत्यादिश्रुतिषु प्रसिद्धो यः पुरुषोऽव्यक्तमहदादिविलक्षणश्चेतनः, अष्टाभिर्धातुभिः पूर्य्यते इति पूः शरीरं बुद्धिर्वा तत्रासौ विषयोपलम्भार्थं सीदतीति पुरिषादः सन् पुरुष इत्युच्यते अथवा पुरि शेते विशेषेणास्ते इति पुरिशयः सन् पुरुष इत्युच्यते। पूरयतेर्वा "तेनेदं पूर्णं पुरुषेण सर्वमि"ति श्रुतेः पूर्णमनेन पुरुषेण सर्वगतत्वाज्जगदिति पुरुषः। "पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्ये"ति

यास्कोक्तेः पुरुषः सर्वान्तर्यामी सर्वधीसाक्षी पुरुष इत्युच्यते ॥ "पॄ पालनपूरणयोः" जुहोत्यादिः परस्मैपदी, इत्यस्मात् "पुरः कुषन्" इति सूत्रेणौणादिककुषन्प्रत्यये "उदोष्ठ्यपूर्वस्य" त्युत्वे तस्य च "उरण् रपरः" इति रपरत्वे पुरुष इति सिद्ध्यति ॥ एवं पिपर्त्ति पालयति सर्वमिति पुरुषः, पिपर्त्ति पूरयति सर्वकामानिति पुरुषः, पूर्णमनेन पुरुषेण सर्वमिदमिति पुरुषः, पुरि सीदतीति पुरुषादः सन् पुरुषः पुरि शेते इति पुरिशयः सन् पुरुषः—इति पुरुषशब्दार्थः। ततोऽयमर्थः। "तत्सृष्ट्वा तदेवानुप्राविशत्" इतिश्रुतेः पुरुषः सर्वानुप्रविष्टो विज्ञानघनानन्दमयो ब्रह्मविष्णुरुद्रादिस्वरूपः सर्वाधिपः सर्वकामपूरकः सर्वान्तर्यामी सर्वधीसाक्षी एवं भूतो विराड्देही यः परमात्माऽस्तीति शेषः। सः पुरुषो भूमिं ब्रह्माण्डरूपां पृथिवीं सर्वतः स्पृत्वा तिर्य्यगूर्द्ध्वमधश्च व्याप्य दशाङ्गुलमत्यतिष्ठत् दश च तानि अङ्गुलानि दशाङ्गुलानि दशेन्द्रियाणि अतिक्रम्य वशीकृत्य अत्यतिष्ठत् स्थितोऽभूत्। अङ्गुलशब्दोऽत्र इन्द्रियवाची तस्य समाहारद्वन्द्वे सत्येकवचनं दशानामङ्गुलानां समाहारो दशाङ्गुलम्। ब्रह्माण्डदेहं व्याप्य सर्वद्वाराणि सर्वेन्द्रियाणि संयम्य स्थितस्तपश्चचारेत्यर्थः। तथा च श्रुतिः "एकोऽहं बहुस्यां प्रजायेयं स तपोऽतप्यत"—इत्यादि। भूमिमित्यत्र भूमिशब्दः पञ्चभूतोपलक्षक इति वा ततोऽयमर्थः। भूमिमर्थात्पञ्चभूतानि व्याप्य दशाङ्गुलं दशाङ्गुलपरिमितं देशमत्यतिष्ठत् अतिक्रम्य स्थित इत्यर्थः। दशाङ्गुलमित्युपलक्षणं तेन ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्य स्थित इति भावः। "तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः (शु० य० वा० मा० सं० ४०।५।)" इति श्रुतेः। स एव सर्वस्यास्य जगतोऽन्तर्बहिश्च नहि तद्भिन्नः कश्चित्कश्चित्प्रदेश इत्यभिप्रायः। तथा च श्रुतिः "यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः। इति (कृ०य०वे०)" यद्वा भूमिमर्थात्पञ्चभूतोपलक्षितं जीवशरीरं सर्वतः स्पृत्वा ("पृङ् व्यायामे" इत्यस्माक्त्वान्तं रूपं करकादित्वात्सत्वञ्च) "स्पृणोतिर्व्याप्तिकर्मे"ति यास्कोक्तेः सर्वतोभावेन व्याप्य "तपस्तप्त्वा इद ठं० सर्वमसृजत यदिदं किं च तत्सृष्ट्वा तदेवानुप्राविशदि"ति श्रुतेः पञ्चभूतोपलक्षितं जीवशरीरं सृष्ट्वा तत्र जीवरूपेण प्रविश्य च दशाङ्गुलमत्यतिष्ठत् नाभेः सकाशादूर्द्ध्वं दशाङ्गुलमतिक्रम्य हृदयं भवतीति प्रसिद्धेः "कतमऽआत्मेत्युपक्रम्य सोऽयं विज्ञानमयः पुरुषः प्राणिषु हृद्यन्तर्ज्योतिःप्रविष्टः" इतिश्रुतेरात्मनो हृद्यवस्थानश्रवणाच्च नाभेरुपरि दशाङ्गुलं दशाङ्गुलपरिमितं हृदयमतिक्रम्य तत्र जीवरूपेण स्थितोऽभूदित्यर्थः। अतः साधकोऽपि स्वदेहं ब्रह्माण्डं भावयित्वा ब्रह्माण्डोपरि नाभेः सकाशादूर्द्ध्वं दशाङ्गुलपरिमितप्रदेशमतिक्रम्य स्वहृत्पद्ममध्ये परमात्मानमनुचिन्तयेदित्याशयः। तदुक्तं च श्रुत्या—"सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसंभाविताऽस्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माऽऽह शाण्डिल्यः शाण्डिल्यः (छा० ३।१४)" इति, अपि च "आत्मा श्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य। हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्यमध्ये विशदं विशोकम्। अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्। तथादिमध्यान्तविहीनमेकं विभुं चिदानन्दसरूपमद्भुतम्॥ (अ० वे० कै० उ० खं० १।)" इत्यादि, आत्मनो हृद्यवस्थानं कर्मफलोपभोगाय, अन्तर्यामिणोऽवस्थानं तु तन्नियन्तृत्वेन चेति तदुक्तं श्रुत्या "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति (मुण्ड० ३।१।१)" "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये

सन्निविष्टः ( कठो० २।६।१७ । )" इति च। अतो भगवताऽप्युक्तम् "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ।।" इति, एतदभिप्रायेणैव मनुनाऽप्युक्तं "यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः। तेन चेदविवादस्ते मागङ्गां मा कुरून्गमः ।।" इति, सर्वप्राणिषु हृद्यन्तःप्रविष्टो यः परमात्मा जीवेश्वररूपः स एव पुरुष इति। तदुक्तं श्रुत्या "इमे वै लोकाः पूरयमेव पुरुषो योऽयं पवते सोऽस्यां पुरि शेते तस्मात्पुरुषः ( ब्रा० १३।६।२।१ )" इति। एवं हि सर्वप्राणिनां हृद्यवस्थितः सर्वान्तर्यामी सर्वधीसाक्षी यः परमात्मा स एव रुद्राख्यः परमेश्वरोऽस्तीति शेषः। "स ब्रह्मा स शिवः-०"-इतिश्रुतेर्य एवम्भूतः शिवस्तमनेन सूक्तेन अभिषिञ्चामीति रुद्रशिरःस्नपनपक्षे। तमुद्दिश्य सूक्तमिदं जपामीति रुद्रशिरोजपपक्षे। तदर्थं जुहोमीति रुद्रशिरोहोमपक्षे। रुद्रसम्बन्धीयतत्तत्कर्मणि तत्तत्प्रकारेण वाक्यशेषोऽनुसन्धेयः। विष्णोः षोडशोपचारपूजनपक्षे "स एव विष्णुः स प्राणः"-इतिश्रुतेः य एवम्भूतो विष्णुस्तमहं पूजनार्थमिह आवाहयामीति वाक्यशेषः। वेदान्तप्रतिपाद्यः श्रुतिस्मृतिप्रसिद्धः स एव पुरुषो रुद्रो विष्णुर्वा स पुरुषः किम्भूत इत्यपेक्षायामुच्यते सहस्रशीर्षेति। सहस्रशब्दोऽत्र बहुत्ववाची असंख्यावाचक इत्यर्थः। ननु संख्यावाचकः संख्यावाचकत्वे तु सहस्राक्ष इत्यनेन विरोधः स्यात् नेत्रसहस्रद्वयेन च सम्भाव्यत्वात् तस्मान्नेह संख्यावाचकः सहस्रशब्द इत्यनुसन्धेयं तेनायमर्थः। असंख्याता सहस्राणीत्यत्र सहस्रशब्दस्य बहुवचनान्तत्वेन श्रुतौ प्रतिपादनादिहाप्येवं बोध्यं सहस्राणि असङ्ख्यानि शीर्षाणि शिरांसि यस्य स सहस्रशीर्षा ("शीर्षंश्छन्दसी"ति पाणिनीयसूत्रे शिरःशब्दस्य शीर्षन्नादेशः) शिरोग्रहणं सर्वावयवोपलक्षणं तेन असङ्ख्यसर्वावयवोपेत इत्यर्थः। तथा सहस्राक्षः सहस्रमक्षीणि नेत्राणि यस्य सः सहस्राक्षः, अक्षिग्रहणं सर्वज्ञानेन्द्रियोपलक्षकं तेन असङ्ख्यसर्वज्ञानेन्द्रियोपेत इत्यर्थः। तथा सहस्रपात् सहस्रं पादा यस्य सः सहस्रपात् ("सङ्ख्यासु पूर्वस्ये"ति पादस्यान्त्यलोपः) पादग्रहणं सकलकर्मेन्द्रियोपलक्षकं तेन असङ्ख्यकर्मेन्द्रियोपेत इत्यर्थः। त्रैलोक्योदरवर्त्तिनां सर्वप्राणिनां यानि शिरांसि बुद्धीन्द्रियाणि कर्मेन्द्रियाणि च तानि सर्वाण्यपि तद्देहान्तःपातित्वात्तस्यैवेत्याशयः। तथा च श्रुतिः "विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः।। (शु० य० वे० अ० १७ म० १९।)" इति, एतदेव गीतायां श्रीकृष्णचन्द्रं प्रत्यर्जुनेनोक्तं तद्यथा "अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम्।" इत्यादि, सञ्जयोक्तिरप्येवं गीतायामेव "अनेकवक्त्रनयनमनेकाऽद्भुतदर्शनम्। अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम्।। १।। दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम्। सर्वाश्चर्य्यमयं देवमनन्तं विश्वतोमुखम्।। २।। इति। यथा परमेश्वरः सर्वेन्द्रियाणि संयम्य तपोऽतप्यत तथैवोपासकोऽपि सर्वेन्द्रियाणि संयम्य एकाग्रचित्तविहितेन समाधिना जपादिना वा परमात्मचित्तरूपं तपः कुर्य्यादित्याशयः, "त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निवेश्य। ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानी"त्यादितैत्तरीयश्रुतेः "सर्वद्वाराणि संयम्य मनो हृदि निरुद्ध्य च।" इत्यादिभगवदुक्तेश्च। "सर्वतस्पृत्वा" इत्यत्र तु संहितायां विसर्गलोपश्च छान्दसो ज्ञेयः ।।१।।

पुरु॑षऽए॒वेदꣳ सर्वं॒ यद्भू॒तं यच्च॒ भा॒व्य॑म्।

उ॒ताम॑त॒त्वस्येशा॑नो॒ यदन्ने॑नाति॒रोह॑ति ।। २ ।।

एतावानस्य महिमातोज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥३॥
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॥ ४ ॥
ततो विराडजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥

एतदृक्चतुष्टयं पुरुषदेवतामात्रस्य षोडशोपचारपूजाप्रकरणे व्याख्यातं तत्रास्य भाष्यं द्रष्टव्यम् । रुद्राभिषेकादिपक्षे प्रथममन्त्रवत्सर्वत्राशंसावाक्यार्थश्चानुसन्धेयः ॥२॥३॥४॥५॥

तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥ ६ ॥

सर्वं हूयते यस्मिन् स सर्वहुत् पुरुषमेधाख्यो यज्ञविशेषस्तत्र हि सर्वं हूयते "ब्रह्मणे ब्राह्मणम्" इत्यादिश्रुतिवाक्यावगमात् । "यज्ञो वै विष्णुरि"तिश्रुतेः स एव विष्णुः, "स ब्रह्मा स शिवः सेन्द्रः—"इत्यादिश्रुतेः स एव शिवश्च । "योऽयं पवते सोऽस्यां पुरि शेते तस्मात्पुरुषः" इतिश्रुतेः स एव पुरुषः, "आत्मा वा इदमेक एवाग्रऽआसीन्नान्यत्किञ्चन मिषदि"तिश्रुतेः । सृष्टेः पूर्वं द्रव्यदेवतादीनामभावात्स स्वयमेव द्रव्यदेवतादिरूपो भूत्वा यज्ञोऽपि स एव पुरुषोऽभूत । तस्माद्यज्ञपुरुषोऽपि स एव कथ्यते । अतोऽस्य मन्त्रस्यायमर्थः । तस्मात्पूर्वोक्तात् यः सहस्रशीर्षा पुरुषः, यः पुरुष एव इदं सर्वम्, यस्य पुरुषस्य एतावान् महिमा, यश्च संसारस्पर्शरहितब्रह्मरूपः त्रिपात्पुरुषः ऊर्ध्वःसन् उदैत्, यश्च तस्मात्पुरुषाद्विराडजायत, विराजः सकाशाच्च यः अधिपूरुषो जातः, स च जातः सन्नेव यः पुरुषः पञ्चभूतानि सृष्ट्वा तैर्जगदिदञ्च सृष्टवान्, तस्मात् प्रसिद्धात् यज्ञात् यज्ञो विष्णुः तस्मात् व्यापकादित्यर्थः। सर्वहुतः पुरुषमेधात् द्रव्यदेवतात्मकत्वात् महाप्रलये सर्वस्यास्य जगतो ब्रह्मणि विलीयमानत्वेन ब्रह्मरूपात् तदुद्देशेनसर्वैर्हूयमानत्वात् शिवविष्णरूपाद्वा पृषदाज्यं दधिमिश्रमाज्यं सम्भृतं समुत्पन्नं संजातमित्यर्थः । तस्माद् यज्ञपुरुषात्परमात्मनः सकाशाद्दध्याज्यादिभोग्यजातं समुत्पन्नमित्यर्थः। अथवा तस्मात् यज्ञात् सर्वहुतः, इत्यत्र सर्वत्र "सुपां सुपो भवन्ती"त्याद्युक्तेः "व्यत्ययो बहुलमि"तिपाणिनिवचनाच्च विभक्तिव्यत्ययोऽवगन्तव्यस्तेनाग्रमर्थः । तेन प्रसिद्धेन यज्ञेन विष्णुना व्यापकेन सर्वहुता पुरुषमेधेन द्रव्यदेवतात्मकत्वेन तदाख्येन यज्ञेन यज्ञपुरुषेण वा ब्रह्मरूपेण शिवरूपेण विष्णुरूपेण वा पृषदाज्यं दधिमिश्रमाज्यं सम्भृतं सम्पादितं पुरुषेणेति शेषः । दध्याज्यादिभोग्यजातं स्वीयतपसो विभूत्या पुरुषोऽयं समुत्पादितवानित्याशयः । "स अकामयत स तपोऽअतप्यत तपस्तप्त्वा इदꣳ सर्वमसृजते"त्यादिश्रुतेः किञ्च वायव्यान् वायुदेवताकान् तान् पशून् चक्रे चकार स एव पुरुष इति शेषः । तान् कानित्यपेक्षायामुच्यते ये आरण्याः अरण्ये भवा आरण्याः अरण्योद्भवा इत्यर्थः । च पुनः ये ग्राम्याः ग्रामे भवाः

ग्राम्याः ग्रामोत्पन्ना गवादयश्च ये पशव इत्यर्थः। तानुभयविधान्पशून् स एव परमात्मा कृतवानिति भावः। "मातरिश्वा सदागतिरि"ति वायुनामप्रकरणे कोशादौ दर्शनान्मातरिश्वा वायुः, मातरि अन्तरिक्षे श्वसति निःश्वासवच्चेष्टां करोतीति मातरिश्वा वायुः तद्देवताकत्वं च पशूनां स्पष्टम् "अन्तरिक्षदेवत्याः खलु पशवः" इति श्रुतेः। अन्तरिक्षस्य च वायुदेवताकत्वात्पशूनामपि वायुदेवताकत्वमित्यवगन्तव्यम्। मृगाद्यारण्यपश्वभावे मृगचर्मासम्भवे गवादिग्राम्यपश्वभावे घृताद्यभावे च यज्ञासम्भवत्वात्पर्जन्याभावः पर्जन्याभावेऽन्नाभावोऽन्नाभावे प्रजाभावः। अतो यज्ञादिसम्पादनार्थमारण्या ग्राम्याश्च पशवः स्वयम्भुवा सृष्टाः, तदुक्तं मनुना "यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा"इत्यादि। अनेन मन्त्रेण रुद्राभिषेकं करोमि तेन मत्कृतकर्मणा तुष्टो रुद्रः मां सुखं गमयत्वित्याशंसावाक्यार्थः। विष्णुपूजादौ त्वयं वाक्यार्थः। अनेन मन्त्रेण विष्णुं स्नपयामि सोऽप्यनेन स्नपनकर्म्मणा तुष्टः सन्मां सुखं गमयत्वित्याशंसावाक्यार्थोऽनुसन्धेयः॥ ६॥

तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे।
छन्दाᳬंसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥ ७॥

सर्वहुतः तस्मात् यज्ञात् यज्ञपुरुषात् परमात्मनः सकाशात् ऋचः नियताक्षरा नियतपादावसानाः सामानि प्रगीतानि मन्त्रवाक्यानि च जज्ञिरे प्रादुर्बभूवुः। "जनी प्रादुर्भावे" इत्यस्माल्लिटि प्रथमपुरुषबहुवचने जज्ञिरे इति रूपम्। तथा छन्दांसि "छादनाच्छन्द इत्युक्तं वाससी इव चाकृतेरि"ति योगियाज्ञवल्क्यवचनाद्वस्त्रवदाच्छादकानि गायत्र्यादीनि च तस्मात् यज्ञादेव जज्ञिरे तस्मादेव यज्ञपुरुषात्परमात्मनः सकाशादुत्पन्नानीत्यर्थः। किञ्च तस्मादेव यज्ञपुरुषात्परमात्मनः सकाशादेव यजुः अनियताक्षरमनियतपादावसानमपि सकलमन्त्रजातम् अजायत उत्पन्नमभूदित्यर्थः। ऋग्यजुःसामभिश्छन्दोभिश्च विना नहि यज्ञाः सम्पद्येरन् अत एव यज्ञसम्पादनार्थं तानि सर्वाणि स्वतपसः सामर्थ्येन स्वत एवोत्पादितवानित्याशयः,"स अकामयत स तपोऽअतप्यत तपस्तप्त्वा इदᳬ सर्वमसृजत यदिदं किञ्चन. स्वयं विश्वमिदᳬ सर्वं ᳬ स्वस्मादन्यन्न किञ्चन (बृह.१।४।३।)"इति, "एवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदः (बृह. ४।५।११।)" इत्यादि च श्रुतेः। रुद्राभिषेकादावाशंसावाक्यार्थः पूर्ववदत्राप्यनुसन्धेयः। विष्णुपूजादौ त्वयं विशेषः। तथाहि यतो वस्त्रवदाच्छादकानि गायत्र्यादीनिच्छन्दांसि तस्माद्यज्ञपुरुषात्परमात्मनः सकाशादुत्पन्नानि। अतो मयापि तस्मै विष्णुरूपाय परमात्मने वस्त्रं समर्प्यते स च परमेश्वरः तद्वस्त्रं प्रतिगृह्य मां सुखं गमयत्वित्याशंसावाक्यार्थः॥ ७॥

तस्मादश्वाऽअजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽअजावयः॥ ८॥

"पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये"इत्यविशेषेणोक्तमिह तु तदेव सविशेषमुच्यते। तद्यथा तस्मात् पूर्वोक्तात् प्रसिद्धात् यज्ञात् यज्ञपुरुषात् व्यापकात् परमात्मनः सकाशात् अश्वाः अजायन्त उत्पन्ना बभूवुः। तथा ये च अश्वव्यतिरिक्ता उभयादतः उभयतो दन्ताः

उभयभागयोर्दन्ता येषां ते उभयदत इति विग्रहे "छन्दसि चे"ति दन्तस्य दत्रादेशो दीर्घश्च छान्दसो बोध्यः। उर्द्ध्वाधोभागयोर्दन्तयुक्ता ये गर्दभादयोऽश्वेतराश्च सन्तीति शेषः। तेऽपि पशवस्तस्मात् यज्ञपुरुषात्परमात्मनः सकाशादेव अजायन्त उत्पन्ना बभूवुरित्यर्थः। तथा गावो ह हकारश्चार्थे गावश्च तस्मात् यज्ञपुरुषात्परमात्मनः सकाशादेव जज्ञिरे सञ्जाता इत्यर्थः। अपि च अजावयः अजाश्च अवयश्च इति अजावयः छागमेषा अपि पशवः तस्मात् यज्ञात् यज्ञपुरुषात् व्यापकात्परमात्मनः सकाशात् जाता उत्पन्ना बभूवुरित्यर्थः। न चैभिः पशुभिर्विना यज्ञः सम्पद्येत। अत एव यज्ञसम्पादनार्थं परमेश्वरः स्वशक्तितः स्वयमेतान् पशूनुत्पादितवानित्यर्थः। यतः परमेश्वर एव सकलयज्ञसाधनोत्पत्तिकारणमतो भगवते जगदीश्वराय विष्णवे अनेन मन्त्रेण मयापि यज्ञसूत्रन्दीयते, इत्याशंसावाक्यार्थः। रुद्राभिषेकादावाशंसावाक्यार्थस्तु पूर्ववदत्राप्यनुसन्धेयः॥ ८॥

तं युज्ञं बर्हिषि प्रौक्षुन्पुरुषं जातमग्रतः।
तेनं देवाऽअयजन्त साध्याऽऋषयश्च ये॥ ९॥

तं यज्ञमिति "प्राणा वै देवाः" इति श्रुतेरिह देवशब्देन प्राणा एव गृह्यन्ते। ते च प्रकरणोपस्थितत्वात्प्रजापतेरेव। ततश्चायमर्थः। दीव्यन्तीति देवाः द्योतनात्मकाः प्रजापतेः प्राणाः तथा ये च साध्याः कर्मसाधकानि कर्मेन्द्रियाणि प्रजापतेरेव कर्मेन्द्रियगणाः तथा ये च ऋषयः ऋषन्तीति ऋषयः (ऋषतिर्गत्यर्थः यो गत्यर्थः स ज्ञानार्थेऽपि "ये ये गत्यर्थास्ते ते ज्ञानार्था अपी"त्युक्तेः) ऋषयः अतीतानागतवर्त्तमानकालानां द्रष्टारः अतीतानागतकालानां द्रष्टारः स्मर्त्तारो वा ऋषयः बुद्ध्यादिज्ञानेन्द्रियाणि प्रजापतेरेव बुद्ध्यादिज्ञानेन्द्रियगणाश्च ये आसन्निति शेषः। ते सर्वेऽपि अग्रतः जातं जीवसृष्टेः प्रथमत उत्पन्नं तं पूर्वोक्तं श्रुतिप्रसिद्धं यज्ञं तदानीं जीवसृष्टेः पूर्वमन्यद्रव्यदेवतादीनामभावात् "स्वयं सर्वमिदमि"तिश्रुतेः यज्ञमर्थाद्रव्यदेवतात्मकयज्ञसाधनभूतं पुरुषं "योऽयं पर्वते सोऽस्यां पुरि शेते तस्मात्पुरुषः"इति श्रुतेः पुरुषं ब्रह्मरूपं परमात्मानं बर्हिषि "कौशं बर्हिरि"ति कात्यायनोक्तेः कौशस्य बर्हिषस्तदानीमसम्भवात् बर्हिषि तद्रूपे मानसयागे प्रौक्षन् प्रोक्षितवन्तः प्रोक्षणसंस्कारेण संस्कृतवन्त इत्यर्थः। तेन संस्कृतेन ब्रह्मरूपेण हविषा अयजन्त यज्ञं कृतवन्त इत्यर्थः। तेन कुशोपरिस्थापितेन प्रोक्षणसंस्कारसंस्कृतेन ब्रह्मरूपेण गन्धादिद्रव्येण अयजन्त पूजितवन्त इति वा विष्णुमिति शेषः। यथा ऋत्विजो बर्हिषि हविःप्रोक्षणादिसंस्कारैः संस्कृत्य तेन पुरुषरूपेण हविषा यज्ञं "यज्ञो वै विष्णुरि"ति श्रुतेः यज्ञं विष्णुं यजन्ति, तथैव प्रजापतेः प्राणरूपा देवाः कर्मेन्द्रियरूपाः साध्या गणदेवताः बुद्ध्यादीन्द्रियरूपा ऋषयश्च तदानीं ये आसन् ते सर्वेऽप्ययजन्त आत्मसमर्पणरूपं मानसयागं कृतवन्त इति भावः। पश्चादिसृष्टेः प्रागस्य यागस्योपस्थापनाद्यागपदेनात्मसमर्पणमेवायाति। अतस्तत्फलमग्रे "तानि धर्म्माणि प्रथमान्यासन्नि"त्यादौ दर्शयिष्यति। यतस्तत्पूजनमात्मसमर्पणरूपम्, अतस्तस्मादात्मसमर्पणरूपपूजनादेव तानि प्रसिद्धानि धर्म्माणि जगद्रूपविकाराणां धारकानि प्रथमानि मुख्यानि पञ्चभूतान्यासन्निति बहुशो भाष्यकृतोऽपि स्वस्वभाष्ये समानमन्ति। अयं च सृष्टिविषयको मन्त्रार्थः॥ यतो जीवसृष्टेः पूर्वं तदानीं कर्तृद्रव्यदेवतान्तराभावात्प्रजापतेः प्राणावयवा एव देवा ब्रह्मरूपेणैव द्रव्येण प्रजापतिरूपं

यज्ञपुरुषं परमेश्वरमयजन्त। अतो विष्णवेऽनेन मन्त्रेण गन्धं समर्प्पयामि तेन तुष्टो विष्णुः मां सुखं गमयत्वित्याशंसावाक्यार्थो विष्णोः षोडशोपचारपूजादौ बोद्धव्यः। रुद्राभिषेकादावाशंसावाक्यार्थस्तु पूर्ववदत्राप्यनुसन्धेयः॥

अथास्यैव मन्त्रस्य व्याख्यान्तरमात्मोपासनविषये यथा–दीव्यन्तीति देवाः तपसा द्योतमानाः साध्याः सृष्टिसाधनयोग्याः मरीच्यादयः तथा ऋषयश्च ये अन्येऽपि कपिलादयो मुनयो ये तदानीमासन् तेऽपीत्यर्थः अग्रतो जातं सृष्टेः पूर्वं प्रथमोत्पन्नं "सत्यं ज्ञानमनन्तं ब्रह्म नेह नानास्ति किञ्चने"त्यादिश्रुतिप्रसिद्धं तं यज्ञं यज्ञसाधनभूतं प्रणवाधिष्ठितं पुरुषं बर्हिषि प्रकृतौ निधायेति शेषः।प्रौक्षन् प्रोक्षणसंस्कारवत्संस्कृतवन्तः। तेन संस्कृतेन प्रणवाधिष्ठितेन पुरुषेण अयजन्त आत्मयागं कृतवन्त इत्यर्थः। तद्वदुपासका अपि प्रणवाधिष्ठितं पुरुषं बर्हिषि आत्मयज्ञसाधनभूते हृत्कमलमध्ये निधाय प्रोक्षणसंस्कारवत्संस्कृत्य प्रणवाधिष्ठितेन पुरुषेणात्मयज्ञं कुर्य्युरिति तात्पर्य्यार्थः। आत्मोपासकाः यस्मिन्पुरुषे पशुत्वमाभाव्य तेन प्रणवाधिष्ठितपुरुषेणात्मयागं कुर्वन्ति तस्मै पुरुषाय विष्णवे गन्धं समर्पयामि। स च पुरुषस्तेन गन्धसमर्पणेन तुष्टः सन्मां सुखं गमयत्वित्याशंसावाक्यार्थः, शेषं पूर्ववदिहाप्यनुसन्धेयम्॥ ९॥

अस्यैवमन्त्रस्य व्याख्यान्तरं यागविषये यथा–दीव्यन्तीति देवाः द्युतिस्तुतिक्रीडादियुक्ता इन्द्रादयः तथा साध्याः "साध्याश्च गणदेवताः" इत्यभिधानात् साध्याः गणदेवताः देवविशेषाः यद्वा साध्याः सृष्टिसाधनक्षमाः प्रजापतिप्रभृतयः तथा ऋषयश्च ये अन्येऽपि तदनुकूला ये वसिष्ठादयस्तेऽपीत्यर्थः बर्हिषि "कौशं बर्हिरि"ति कात्यायनोक्तेः कुशमये बर्हिषि अर्थादग्निष्टोमविषये कुशोपरीत्यर्थः अग्रतो जातं प्रथमोत्पन्नं तं प्रसिद्धं पुरुषं पशुत्वेनाभाव्य यूपे बद्धमिति भावः प्रौक्षन् प्रोक्षितवन्तः। तेन प्रोक्षितेन पशुना अयजन्त यागं कृतवन्तः। यज्ञियहिंसाऽहिंसैवेति स्पष्टीकरणार्थं स्वयमग्रे वक्ष्यति भगवान्वेदपुरुषः "यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्" इति। तत्फलञ्च तत्रैव तस्योत्तरार्धे "ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः "इति। तस्मात्स्वर्गकामिनो यजमानस्याग्निष्टोमादिकर्मणि प्रवृत्तिर्न दुरिष्टहेतुरितिभावः "अग्नीषोमीयं पशुमालभेत स्वर्गकामः" इतिश्रुतेः। ध्वरतिर्हिंसार्थः न ध्वरः अध्वरः, तस्मादध्वरो यज्ञनामेति यास्कादयोऽप्युक्तवन्तः। "अग्नीषोमीयं पशुमालभेत स्वर्गकामः"इति परिसङ्ख्याविधिर्न तु प्रवर्त्तकवाक्यमितिकेचिन्निगदन्ति "मा हिंस्यात्सर्वभूतानि"इतिश्रुतेः "निवृत्तिस्तु महाफले"तिस्मृतेश्च। परित्यागाशक्तौ यागं कृत्वा मांसं खादितव्यं न तत्र कश्चिद्दोष इत्यपरे वदन्ति "देवान्पितॄन् समभ्यर्च्य खादन्मांसं न दोषभागि"तिस्मृतेः। उभयत्र प्रमाणसद्भावात् यथारुचि यथामतं श्रेयस्करमिति सिद्धान्तः। यं पुराणपुरुषं पशुत्वेन बर्हिषि संस्थाप्य प्रोक्षणादिसंस्कारेण संस्कृत्य तेन देवादयोऽयजन्त तस्मै महापुरुषाय विष्णवे अनेन मन्त्रेण गन्धं समर्प्पयामि। स च गन्धं प्रतिगृह्य मां सुखं गमयत्वित्याशंसावाक्यार्थः। शेषं पूर्ववदत्राप्यनुसन्धेयम्॥९॥

यत्पुरु॑षं॒ व्यद॑धुः क॒ति॒धा व्य॑कल्पयन्।

मुखं॒ किम॑स्यासी॒त्किं बा॒हू किमू॒रू पादा॑ऽउच्येते॥ १०॥

इयमपि ऋक् पुरुषदेवतामात्रस्य षोडशोपचारपूजाप्रकरणे व्याख्याता तत्रैवास्या

ऋचो व्याख्या द्रष्टव्या। रुद्राभिषेकादिपक्षे प्रथममन्त्रवदत्राप्याशंसावाक्यार्थोऽनुसन्धेयश्च॥ ११॥

**ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।**

**ऊरू तदस्य यद्वैश्यः पद्भ्याꣳशूद्रोऽअजायत॥ ११॥**

पूर्वकण्डिकोक्तप्रश्नोत्तरत्वेन इह पुरुष एव स्तूयते। तथा हि ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषोऽस्य पुरुषस्य परमात्मनः प्रजापतेर्यज्ञपुरुषस्येत्यर्थः मुखमासीत् मुखत्वेन ब्राह्मणो बभूव मुखाद्ब्राह्मणोऽजायतेत्याशयः। प्रजापतेर्मुखाद्ब्राह्मण उत्पन्नोऽभूदितिभावः। पूर्वकण्डिकायां तस्य मुखं किमासीदितिप्रश्नस्योत्तरत्वेन इह ब्राह्मणोऽस्य मुखमासीदित्युक्तं तत्र मुखमिति प्रथमान्तं पदं दृश्यते। वस्तुतस्तु "सुपां सुपो भवन्ति" "तिङां तिङो भवन्ती"-त्युक्तेः "व्यत्ययो बहुलं" "बहुलं छन्दसी"ति पाणिनिवचनाच्च विभक्तिव्यत्ययेन मुखमिति पञ्चम्यर्थे प्रथमा विभक्तिर्बोध्या अग्रे पद्भ्याꣳशूद्रोऽअजायतेत्यत्र पद्भ्यामिति पञ्चम्यन्तपददर्शनात्। तथा बाहू राजन्यःकृतः राजन्यः क्षत्रियः क्षत्रियत्वजातिविशिष्टः पुरुषः स च बाहुत्वेन तदानीं निष्पादितस्तेन प्रजापतिना यज्ञपुरुषेणेतिशेषः। अस्य प्रजापतेर्यज्ञपुरुषस्य बाहुभ्यां राजन्योऽजायत बाहुभ्यां क्षत्रिय उत्पन्न इत्यर्थः। तथा तदानीम् अस्य प्रजापतेर्यज्ञपुरुषस्य यत् यौ ऊरू तद्वैश्यः तद्रूपो वैश्यत्वजातिविशिष्टो यः पुरुषः स ऊरुत्वेन निष्पादितस्तेन प्रजापतिना यज्ञपुरुषेणेतिशेषः। यदित्यत्र सुपां सुलुगिति विभक्तेर्लुगवगन्तव्यः। स इत्यध्याहारेण योऽयं यत्तदोर्नित्यसम्बन्धत्वात्। उभयत्रापि पञ्चमी योग्या तदुभयत्र विभक्तिव्यत्ययेन पूर्ववत्प्रथमाविभक्तिर्बोद्धव्या। ऊरुभ्यां वैश्योऽजायत जङ्घाभ्यां वैश्यो जात इत्यर्थः। तथास्य प्रजापतेर्यज्ञपुरुषस्य पद्भ्यां शूद्रः अजायत अस्य प्रजापतेर्यज्ञपुरुषस्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिविशिष्टः पुरुप उत्पन्न इत्यर्थः। यः शूद्रः शूद्रत्वजातिविशिष्टः पुरुषः स एव पादत्वेन निष्पादितस्तेन यज्ञपुरुषेणेतिशेषः। इति तु पूर्वकण्डिकोक्तप्रश्नस्योत्तरपक्षे वाक्योहोऽनुसन्धेयः। योऽसौ ब्राह्मणादिवर्णचतुष्टयमयः पुरुषो योऽयं भगवान् स मया दीयमानं धूपं प्रतिगृह्य तेन च तुष्टः सन्मां सुखं गमयत्वितिविष्णोः षोडशोपचारपूजापक्षे आशंसावाक्यार्थोऽनुसन्धेयः। रुद्राभिषेकादिपक्षे तु प्रथममन्त्रवद्वाक्योहोऽत्रापि बोद्धव्यः॥ ११॥

**चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽअजायत।**

**श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥ १२॥**

इयमृक् देवतामात्रस्य षोडशोपचारपूजाप्रकरणे व्याख्याता। तत्रैवास्या अपि ऋचो व्याख्या द्रष्टव्या। रुद्राभिषेकादिपक्षे पूर्ववदत्राप्याशंसावाक्यार्थोऽवगन्तव्यः॥ १२॥

**नाभ्याऽआसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्त्तत।**

**पद्भ्यां भूमिर्दिशः श्रोत्रात्तथालोकाँ २॥ऽ अकल्पयन्॥ १३॥**

इयमपि ऋक् देवतामात्रस्य षोडशोपचारपूजाप्रकरणे व्याख्याता। तत्रैवास्या अपि ऋचो व्याख्या द्रष्टव्या। रुद्राभिषेकादिपक्षे पूर्ववदत्राप्याशंसावाक्यार्थोऽनुसन्धेयः॥ १३॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्मऽइध्मः शरद्धविः ॥ १४ ॥

दीव्यन्तीति देवाः प्रजापतेः प्राणावयवाः यत् यदा पुरुषेण हविषा सृष्टेः पूर्वं तदानीं द्रव्यान्तरस्यासम्भवत्वात्पुरुषमेव हविष्ट्वेन सङ्कल्प्य यज्ञमतन्वत अतनिषत मनसा पुरुषमेव हविष्ट्वेन सम्भाव्य तेन मानसयागं कृतवन्त इत्यर्थः । तत् तदानीं समये अस्य यज्ञस्य वसन्त आज्यमासीत् आज्यस्य रसेऽन्तर्भावत्वाद्रसस्य च वसन्ते प्राचुर्य्याद्वसन्ते आज्यत्वोपचारः । वसन्तमृतुमेवाज्यत्वेन देवा निष्पादितवन्तः तदानीमाज्यद्रव्यस्यासम्भवादित्याशयः । तथा ग्रीष्म इध्म आसीदितिशेषः । तदानीं ग्रीष्म एव ऋतुरिध्मत्वेन निष्पादित इत्यर्थः । इध्यते दीप्यते वह्निर्येनासौ इध्मः अग्नेः समिन्धनहेतुभूतः काष्ठविशेषः ग्रीष्म एवाभवत्तदानीं काष्ठद्रव्यस्यासम्भवाद् ग्रीष्मे इध्मत्वमारोपितं ग्रीष्मर्त्तोरग्निदीप्तिकरत्वात्। यथा ग्रीष्मे वह्नेर्दाहिकाशक्तिर्दरीदृश्यते न तथान्येषु ऋतुषु दृश्यते। अतो ग्रीष्मे इध्मत्वं श्रुत्याभिहितम् ग्रीष्मऽइध्म इति । तथा शरद्धविरासीदितिशेषः । व्रीह्यादेर्हविषः शरदि प्रादुर्भावत्वाच्छरदि हविष्ट्वमारोपितं तदानीमन्यहविषोऽसम्भवादित्याशयः । य एवं सामान्यहविःस्वरूपो विशेषहविःस्वरूपश्च यज्ञपुरुषाख्यः प्रजापतिः शिवाख्यः परमेश्वरस्तमनेन मन्त्रेणाभिषिञ्चामि तमुद्दिश्यामुं मन्त्रं जपामि तमुद्दिश्यानेन मन्त्रेण जुहोमीति रुद्राभिषेकादिपक्षे । विष्णोः षोडशोपचारपूजापक्षे त्वेवं य एवंसामान्यहविःस्वरूपो विशेषहविःस्वरूपश्च यज्ञपुरुषो विष्णुस्तदर्थमनेन मन्त्रेण प्रार्थनापूर्वकं नमस्करोमि तस्मै दक्षिणाद्रव्यञ्च समर्प्पयामि तेन परितुष्टः स परमेश्वरो मां सुखं गमयत्वित्याशंसावाक्यार्थः । यद्यप्यत्र कण्डिकाव्युत्क्रमोऽस्ति । अस्या अनन्तरं तं यज्ञं (९) ततश्च तस्माद्यज्ञादिति (६) तिस्रः क्रमेणैव । ततः सप्तास्यासन्निति (१५) क्रमोऽपेक्षितः; तथापि प्रयोगे यथास्थित एव पठ्यते मन्त्रगणः । अर्थविचारदशायान्तु पाठक्रमादर्थक्रमो बलीयानित्युक्तेरूह्योऽनुसन्धेयः । अन्यत्रापि यथास्थितव्याख्यादर्शनान्मयापि ग्रन्थेऽस्मिन् यथास्थिता एव व्याख्याताः ॥ १४ ॥

सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वानाऽअबध्नन्पुरुषं पशुम् ॥ १५ ॥

सप्तास्यासन्निति मन्त्रस्य सृष्टिविषये व्याख्या यथा "प्राणा वै देवाः" इतिश्रुतेरिह देवशब्देन प्राणा गृह्यन्ते ते च प्रजापतेरेव तथा हि दीव्यन्तीति देवाः प्रजापतेः प्राणेन्द्रियरूपाः यज्ञं तन्वानाः आत्मसमर्पणरूपं मानसयागं कुर्वाणाः पुरुषं पशुमबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्त इत्यर्थः। तदास्य सङ्कल्पितस्य यज्ञस्य सप्तसमुद्राः क्षीरोदकादयः परिधयः आसन् । भारतखण्ड एव यागादीनां सद्भावत्वादिह सप्तसमुद्राणां परिधित्वमुक्तम् । तथा त्रिःसप्त त्रिगुणाः सप्त एकविंशतिसंख्याविशिष्टाः छन्दोवर्गाः समिधः कृताः । गायत्र्यादीनि सप्त च्छन्दांसि, अतिजगत्यादीनि च सप्त, कृत्यादीनि सप्त, एवं परिगणनया एकविंशतिसंख्यकानि छन्दांसि भवन्ति तान्येकविंशति सङ्ख्यकानि समित्त्वेन परिकल्पितानि तदानीं समिदन्तरस्यासम्भवादित्याशयः । यतोऽस्य यज्ञमयस्य विष्णोः शिवस्य वा परमेश्वरस्य सप्तसमुद्राः प्रादक्षिण्येन

वेष्टनद्रव्यत्वेन श्रुत्याऽभिहिताः। अतोऽनेन मन्त्रेणास्य प्रदक्षिणां कुर्वतो ममापि सप्तसमुद्र-वेष्टितपृथिवीप्रदक्षिणाजन्यफलं भवत्वित्याशंसावाक्यार्थः। इति तु विष्णोः षोडशोपचार-पूजापक्षेऽवगन्तव्यम्॥ रुद्राभिषेकादिपक्षे तु प्रथममन्त्रवदत्राप्यनुसन्धेयम्॥ १५॥

अथास्यैव मन्त्रस्यार्थान्तरं यज्ञविषये प्रतिपाद्यते। तद्यथा दीव्यन्तीति देवाः इन्द्रादयः यत् यदा यज्ञं पुरुषमेधाख्यं यागं तन्वानाः विस्तारयन्तः पुरुषं पशुमवध्नन् यूपे इति शेषः। यज्ञे हि पशुबन्धनं यूपे भवति तच्च पशुहननार्थमेव। अतः पुरुषमेव पशुत्वेन सम्भाव्य यूपे बध्वा हतवन्तस्तेन पुरुषरूपेण पशुद्रव्येण सर्वमेधयागं कृतवन्त इत्याशयः। मन्त्रेऽस्मिन् यच्छब्दो-पादानात्तच्छब्दोऽध्याहर्त्तव्यः यत्तदोर्नित्यसम्बन्धत्वात्, तथाहि तत् तदा अस्य पुरुषमेधा-ख्ययज्ञस्य सप्त परिधयः आसन् गायत्र्यादीनि सप्त च्छन्दांसीति शेषः। सप्त च्छन्दोरूपाः परि-धय आसन्नित्यर्थः। गायत्र्यादीनि सप्त च्छन्दांसि पुरुषमेधाख्ययज्ञस्य वेष्टनान्यभवन्नित्यर्थः। परितो धीयन्तेऽग्निरक्षणार्थमिति परिधयो वेष्टनार्थकाष्ठविशेषास्तदानीं तेषामसम्भवाच्छन्दां स्येव परिधित्वेन देवैः स्थापितानीत्याशयः। अतोऽत्र छन्दःस्वेव परिधित्वमुपचर्य्यते। तथास्य पुरुषमेधाख्ययज्ञस्य त्रिःसप्त एकविंशतिसङ्ख्याविशिष्टाः समिधः कृताः देवैरितिशेषः। तद्विवरणञ्च श्रुत्या इत्थमुक्तं तद्यथा "द्वादशमासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्यः" इत्येकविंशतिः। एतदेकविंशतिसङ्ख्याविशिष्टा मासाद्यादित्यान्ताः समिन्नामककाष्ठविशेषत्वेन भावितास्तदानीमन्यकाष्ठासम्भवादित्यर्थः। सम्यक् इध्यते दीप्यतेऽग्निर्याभिस्ताः समिधः अग्नीन्धनकाष्ठविशेषास्तदानीं समिधामसम्भवान्मासादय एव अग्निसमिन्धनकाष्ठविशेषत्वेन प्रजापतिप्राणावयवैर्देवैर्निष्पादिता इत्याशयः। अत इदानीन्तनैरपि यजमानैर्यज्ञे सप्त परिधयः एकविंशतिसंख्याविशिष्टाः समिधश्च क्रियन्ते। तत्र "गुप्त्यै वा अभितः परिधयो भवन्त्यथै-तत्सूर्य्यमेव पुरस्ताद्गोप्तारं करोति" इति श्रुतेः ऐष्टिकस्याहवनीयस्य त्रयः परिधयः, औत्तर-वेदिकाश्च त्रयः, आदित्यस्तु सप्तमः परिधिः परिधेः प्रतिनिधिरूपः, एतद्रूपाः सप्त परिधयो भवन्ति। समिधश्च पालाश्यः प्रसिद्धा एव ताश्चैकविंशतिसंख्याविशिष्टा भवन्तीतिश्रौतप-द्धतौ द्रष्टव्यम्। य एवं भूतो भगवान् स मदीयप्रदक्षिणां स्वीकरोतु। स्वीकृत्य च मत्कृतया प्रदक्षिणया तुष्टः सन् मां सुखं गमयत्वित्याशंसावाक्यार्थो विष्णोः षोडशोपचारपूजापक्षेऽव-गन्तव्यः। रुद्राभिषेकादिपक्षे तु प्रथममन्त्रवदिहाप्यनुसन्धेयः॥ १५॥

अथास्य मन्त्रस्य व्याख्यान्तरमात्मोपासनविषये यथा—दीव्यन्तीति देवाः ज्ञानेन दीप्यमानाः योगिनः कपिलादयो मुनय इति यावत् ते देवाः यत् यदा यज्ञं तन्वानाः समाधि-रूपं यागं कुर्वाणाः पुरुषं पशुमबध्नन् "यस्मात्परं नापरमस्ति किञ्चित् तेनेदं पूर्णं पुरुषेण सर्व-मि"ति श्रुतेर्विज्ञानघनानन्दस्वभावं श्रुतिप्रसिद्धं परमेश्वरं पशुं मेधपशुरूपेणावस्थितमबध्नन् अगृह्णन्नित्यर्थः। तदाऽस्यात्मयागस्य सप्त परिधयः आसन् पृथिव्यप्तेजोवाय्वाकाशमनोबुद्धि-रूपाः सप्त परिधयोऽभवन् पृथिव्यादिबुद्ध्यन्ता एव सप्त परिधित्वेन देवैः कल्पिता इत्यर्थः। तथा त्रिःसप्त समिधश्च कृताः त्रिःसप्त एकविंशतिस्तावत्संख्याविशिष्टा एव समिधोऽभवन्नि-त्यर्थः। पञ्च महाभूतानि पृथिव्यादीनि, पञ्च तन्मात्राणि रूपादीनि, पञ्च बुद्धीन्द्रियाणि चक्षु-रादीनि, पञ्च कर्मेन्द्रियाणि पाय्वादीनि, मनश्चैकम्, एतास्त्रिःसप्त एकविंशतिसंख्याविशिष्टाः समिधश्च कृताः समित्काष्ठविशेषत्वेन कल्पिता इत्यभिप्रायः। तद्वदिदानीमप्यात्मोपासका आत्मयागे आत्मज्ञानहीनत्वात्स्वाऽज्ञानमेव पशुत्वेनाऽऽभाव्य समाधिरूपं यज्ञं कुर्वाणा योगिनः

पृथिव्यप्तेजोवाय्वाकाशमनोबुद्धीः सप्त परिधित्वेन सम्भाव्य पञ्च महा भूतानि, पञ्च तन्मात्राणि, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनश्चैकम्, इत्येकविंशतिसंख्यानि तान्येव समिधः समित्काष्ठविशेषत्वेन विभाव्यात्मोपासनं कुर्य्युरित्याशयः। तत्र हि परितो धीयन्ते इति परिधयः, सम्यगिध्यते दीप्यतेऽग्निर्याभिस्ताः समिधः एवं व्युत्पत्तिद्वयेन यद्यपि वस्तुद्वयं प्रतीयते तथापि परमार्थदशायामभेद एव उभयस्याग्निरक्षणार्थत्वादतोऽत्रापि पृथिव्यादिपञ्चकस्य मनसश्च परिधिषु समित्सु च परिगणितत्वेऽपि सामान्यविशेषत्वभेदाददोष एवेति-बोध्यः। य एवम्भूतो भगवान् स मदीयप्रदक्षिणां स्त्रीकरोत्वित्याशंसावाक्यार्थः पूर्ववदत्राप्यनुसन्धेयो विष्णोः षोडशोपचारपूजापक्षे, तथा रुद्रस्याभिषेकादिपक्षे तु प्रथममन्त्रवदिहाप्यवगन्तव्यम् ॥ १५ ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥

यज्ञेन यज्ञमित्यस्य सृष्टिविषये व्याख्या। "प्राणा वै देवाः" इति श्रुतेरिह देवशब्देन प्राणा एव गृह्यन्ते। ते च प्रजापतेरेव तदानीं तन्मात्रस्यैव सम्भवात्। दीव्यन्तीति देवाः प्रजापतेः प्राणरूपाः यज्ञेन यथोक्तेन मानसयागेन यज्ञं यज्ञस्वरूपं प्रजापतिमयजन्त पूजितवन्तः। सृष्ट्युत्पादनसामर्थ्यलाभाय भगवदुद्देशेनात्मसमर्पणरूपं पूजनं कृतवन्त इत्यर्थः। तस्मात्पूजनादेवेतिशेषः। तानि प्रसिद्धानि धर्म्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यानि आसन् समुत्पन्नान्यभूवन्नित्यर्थः। पञ्च महाभूतानीति शेषः। यथा स्वर्गार्थं यजमानाः ज्योतिष्टोमादियागेन यज्ञं "यज्ञो वै विष्णुः" इति श्रुतेः यज्ञं नारायणाख्यं वासुदेवं यजन्ति, तथा सृष्ट्युत्पादनशक्त्यर्थं प्रजापतिप्राणरूपा देवाः यज्ञं द्रव्यदेवताक्रियात्मकं प्रजापतिं ब्रह्माणमयजन्त आत्मसमर्पणरूपं मानसयागमकुर्वन्नित्यर्थः। तत एव जगद्रूपप्रकृतिविकारधारणसमर्थानि तानि प्रसिद्धानि पञ्च महाभूतानि जातानि ततो जगत्सृष्टिरभवदिति शेषः। एवं कतिपयमन्त्रभागैरुपासना प्रतिपादिता। इदानीमुपासनाफलमुच्यते। तद्यथा तत्र ते इह तच्छब्दोपादानाद्ये इति यच्छब्दोऽध्याहर्त्तव्यः यत्तदोर्नित्यसम्बन्धत्वात्। ये तदुपासकाः परमेश्वरं यजन्तीति शेषः। ते तदुपासका महिमानः महात्मानस्तं नाकं नास्ति अकं दुःखं यस्मिन्नसौ नाकस्तं नाकं विराट्प्राप्तिरूपं स्वर्गं ह हकार एवार्थे स्वर्गमेव सचन्त सचन्ते सेवन्ते इत्यर्थः (लडर्थे लङ् "छन्दसि लुङ्लङ्लिट" इति पाणिनिवचनात्, अडभावश्च छान्दसः "बहुलं छन्दस्यमाङ्योगेऽपी"ति पाणिनिवचनात्, तं कं नाकमित्यपेक्षायामुच्यते। यत्र यस्मिन्नाके विराट्प्राप्तिरूपे नाके पूर्वे पुरातनाः साध्या विराडुपाधिसाधकाः देवाः सन्ति तिष्ठन्ति तं नाकं तदुपासकाः प्राप्नुवन्तीत्याशयः। एवमनेन सृष्टेः प्रवाहनित्यत्वं प्रदर्शितं तदुक्तं श्रुत्या "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति। य एवम्भूतो भगवान् तस्मै अनेन मन्त्रेण पुष्पाञ्जलिं समर्प्पयामि अनेन केचन विसर्जनमिच्छन्ति तत्पक्षे य एवंभूतो भगवान् स मत्सपर्य्यया परितुष्टः सन् स्वस्थानं यात्वित्यवगन्तव्यम्। रुद्राभिषेकादौ तु य एवम्भूतो रुद्रस्तमनेन पुरुषसूक्तेनाभिषिञ्चामि, तं रुद्रमुद्दिश्य मन्त्रमिमं जपामि, तं रुद्रमुद्दिश्य अनेन मन्त्रेण जुहोमि, एवं रुद्राभिषेकादिकर्मस्वाशंसावाक्यार्थश्च बोद्धव्यः ॥१६॥

अथास्य मन्त्रस्य व्याख्यान्तरं यागप्रवृत्तिविषये यथा—दीव्यन्तीति देवा इन्द्रादयः यज्ञेन ज्योतिष्टोमाख्येन यागेन यज्ञं "यज्ञो वै विष्णुः" इति श्रुतेः यज्ञं विष्णुं वासुदेवमयजन्त विधिना इष्टवन्त इत्यर्थः। तदानीं कालत एव तानि प्रसिद्धानि ज्योतिष्टोमादिरूपाणि धर्म्माणि प्रथमानि मुख्यानि आसन्। "स्याद्धर्ममस्त्रियामि"ति कोशादौ दर्शनाद्धर्मशब्दस्य क्लीबत्वमपि सुप्रसिद्धमेवास्ति। अत इहापि तथैव दृश्यते धर्म्माणीति। यद्यपि देवानामाप्तकामत्वाज्ज्योतिष्टोमादिकर्मकरणे नाधिकारोऽस्ति तथाप्यत्र कल्पान्तरीयेन्द्रादिदेवताभिप्रायेण कर्मदेवत्वप्रचारार्थं देवा इन्द्रादयः यज्ञेन ज्योतिष्टोमाख्येन यज्ञं वासुदेवमयजन्तेति स्पष्टीकृतम्। तदानीं कर्मदेवत्ववतामिन्द्रादीनामसम्भवादित्याशयः। मन्त्रेऽस्मिन् ते इति तच्छब्दोपादानात् ये इति यच्छब्दोऽध्याहर्त्तव्यः यत्तदोर्नित्यसम्बन्धत्वात्। ये देवा यज्ञेन यज्ञमयजन्त। ते ह हकार एवार्थे ते एव देवाः पूर्वकल्पस्था इन्द्रादयः तद्यज्ञप्रसादादेव महिमानः महाभाग्ययुक्ताः सन्तः नाकं नास्ति अकं दुःखं यस्मिन् असौ नाकस्तं नाकं स्वर्गं सचन्ते सेवन्ते स्वर्गे निवसन्तीत्यर्थः। (लडर्थे लङ् अडभावश्चार्षः।) तं कं नाकमित्यपेक्षायामुच्यते। यत्र यस्मिन्नाके पूर्वे पूर्वकालीनाः पूर्वकल्पीयाः साध्याः गणदेवविशेषाः देवा वासुदेवांशा आजानदेवाः अग्निवायुसूर्य्याख्याः सन्ति तिष्ठन्तीत्यर्थः। तं नाकं सचन्ते इति भावः। यतो यज्ञं ज्योतिष्टोमं कृत्वैव देवा इन्द्रादयः स्वर्गे निवसन्ति अतो मनुष्यैरपि पूर्वं ज्योतिष्टोमः कृतः। इदानीमपि कुत्रचित् क्रियते च "ज्योतिष्टोमेन यजेत स्वर्गकामः" इति श्रुतेः स्वर्गकामुकैरिदानीन्तनैरपि यजमानैर्ज्योतिष्टोमेन यष्टव्यं ये यजमाना ज्योतिष्टोमेन यजन्ते ते स्वर्गं प्राप्नुवन्तीति तात्पर्य्यार्थः। अतोऽनेन मन्त्रेण विष्णवे पुष्पाञ्जलिं समर्पयामि। रुद्राभिषेकादिपक्षे तु अनेन रुद्रमभिषिञ्चामि, रुद्रमुद्दिश्य मन्त्रमिमं जपामि, रुद्रमुद्दिश्य अनेन मन्त्रेण जुहोमि, स विष्णुः रुद्रो वा मां सुखं गमयत्वित्याशंसावाक्यार्थः॥ १६॥

अथास्य मन्त्रस्य व्याख्यान्तरमात्मोपासनविषये यथा—दीव्यन्तीति देवास्तपसा द्योतमानाः योगिनः यज्ञेन समाधिलक्षणेन यागेन यज्ञं नारायणाख्यं ज्ञानस्वरूपं परमेश्वरमयजन्त समाधिविधिना सम्यगनुष्ठितवन्त इत्यर्थः। तानि प्रसिद्धानि समाधिरूपाणि धर्माणि प्रथमानि मुख्यानि आसन् अभवन्नित्यर्थः। अत इदानीमपि ये योगिनः समाधिना परमात्मानं यजन्ते इतिशेषः। ते ह ते तु महिमानः महात्मानः नाकं सनकादीनां स्थानं सचन्त (लडर्थे लङ् अडभावश्चार्षः) सचन्ते सेवन्ते गच्छन्तीत्यर्थः। यत्र यस्मिन्नाके ब्रह्माख्यस्थाने पूर्वे पुरातनाः पूर्वकालीनाः कपिलादयो मुनयः साध्याः कर्मदेवाः गणदेवताविशेषाः देवाः आजानदेवाश्च सन्ति तिष्ठन्तीत्यर्थः। तं नाकं सचन्ते सङ्गच्छते इत्यर्थः। इदानीन्तना अपि ये योगिनः समाधिना नारायणमनुस्मरन्ति ते महिमानः महात्मानो जन्मान्तरैर्निर्धूतगुणाः शुद्धा भूत्वा नारायणाख्यं पुरुषं विशन्ति मुक्तिं गच्छन्तीत्याशयः। तथा च श्रुतिः "एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" इति, यथा स्वर्गप्राप्तौ नानोपाया यज्ञव्रतानुष्ठानरूपा दरीदृश्यन्ते न तथा मुक्तावित्यर्थः। तस्मादात्मोपासनार्थं सर्वैर्यतितव्यं येनात्यन्तदुःखनिवृत्तिः स्यादितिभावः। तथाचोक्तं "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे"। इति॥ अयमेव मोक्षोपायः। मोक्षे नान्यदुपायान्तरं दरीदृश्यते। तदुक्तं श्रुत्या "नान्यः पन्था विद्यतेऽयनाय" इति॥ अतो विष्णुं पूजयित्वानेन

मन्त्रेण तस्मै पुष्पाञ्जलिं समर्पयामीति विष्णोः षोडशोपचारपूजापक्षे । रुद्राभिषेकादौ तु रुद्रमनेनाभिषिञ्चामीत्यादि पूर्ववत् ॥१६॥

एवं पुरुषसूक्तं व्याख्यायोत्तरनारायणं व्याख्यायते ॥

ॐ अ॒द्भ्यः सम्भृ॑तः पृथि॒व्यै रसा॑च्च वि॒श्वक॑र्मणः॒ सम॑वर्त्त॒ताग्रे॑ ।
तस्य॒ त्वष्टा॑ वि॒दध॑द्रू॒पमे॑ति॒ तन्मर्त्य॑स्य दे॒व॒त्वमा॒जान॒मग्रे॑ ॥ १७ ॥

अद्भ्यः सम्भृत इत्यादिषड्ऋचस्योत्तरनारायणऋषिराद्यानां तिसृणां त्रिष्टुप्छन्दो द्वयोरनुष्टुप्छन्दोऽन्त्यास्त्रिष्टुप्छन्दऽआदित्यो देवता रुद्रशिखाजपे विनियोगः। स्नपनपक्षे तु रुद्रशिखास्नपने विनियोगः । होमपक्षे तु रुद्रशिखाहोमे विनियोगः । एवं वाक्योहेन विनियोगोऽनुसन्धेयः । मन्त्रार्थस्त्वेवं तथाहि । तत्र पूर्वकल्पे पुरुषमेधयाजी आदित्यरूपं प्राप्तः स्तूयते। अद्भ्यः जलात् तथा पृथिव्यै व्यत्ययेन पञ्चम्यर्थे चतुर्थी "व्यत्ययो बहुलं" "बहुलं छन्दसी"ति पाणिन्युक्तेः । पृथिव्याश्च सकाशात् यः रसः सम्भृतः पुष्टोऽभूदितिशेषः । पृथिव्यपां ग्रहणं पञ्चभूतोपलक्षणार्थं तेनायमर्थः । भूतपञ्चकात् यः रसः सम्भृतः पुष्टोऽभूदित्यर्थः । तथा विश्वकर्मणः विश्वानि सर्वाणि जगदुत्पत्त्यादीनि कर्माणि यस्य स विश्वकर्म्मा इह विश्वकर्मशब्देन काल एवोच्यते जगदुत्पत्त्यादिकार्य्यमात्रं प्रति तस्य कारणत्वसद्भावात् । तस्य विश्वकर्मणः कालस्य रसात्प्रीतेः सकाशाच्च यः रसः अग्रे प्रथमं समवर्त्तत जीवसृष्टेः प्रागेव समभवदित्यर्थः । भूतपञ्चकस्य कालस्य च सर्वं प्रति कारणत्वात् पुरुषमेधयाजिनो लिङ्गशरीरे पञ्चभूतानि तुष्टानि कालश्च तुष्टोऽभूदित्यर्थः । ततश्च तुष्टेभ्यः कश्चिद्रसविशेषफलरूपः उत्तमजन्मप्रद उत्पन्नोऽभूदित्याशयः । तस्य रसस्य अर्थाद्रसविशेषस्य फलरूपस्य तेजोमयं रूपं विदधत् धारयन् त्वष्टा आदित्यः एति प्रत्यहमुदयं करोतीत्यर्थः । अत एव, अग्रे प्रथमं जीवसृष्टेः प्रागेवेत्यर्थः मर्त्यस्य मनुष्यस्य सतस्तस्य पुरुषमेधयाजिनः आजानदेवत्वं सूर्य्यरूपेण मुख्यदेवत्वं सम्बभूवेति शेषः । देवाश्च द्विविधाः, कर्मदेवाः आजानदेवाश्चेति भेदेन । उत्कृष्टकर्मणा ये देवत्वं प्राप्तास्ते कर्मदेवाः उच्यन्ते । ये तु सृष्ट्यादावुत्पन्नास्ते आजानदेवाश्च । ये खलु आजानदेवास्ते कर्मदेवेभ्यः श्रेष्ठा भवन्ति । तदुक्तं श्रुत्या "अथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दः" इति । तत्रेत्थं विवरणं सूर्य्यादय आजानदेवाः, इन्द्रादयश्च कर्मदेवा इति ॥१७॥

यद्वास्या ऋचः एवमर्थान्तरं तद्यथा—त्वष्टा आदित्यः अग्रे सृष्ट्यादौ अद्भ्यः जलात् पृथिव्यै विभक्तिव्यत्ययेन पञ्चम्यर्थे चतुर्थी पृथिव्याः भूमेरपि प्रागेव सम्भृतः सम्बभूव । इह पृथिव्यपां ग्रहणं पञ्चभूतोपलक्षणार्थं तेनायमर्थः । त्वष्टा आदित्यः पञ्चभूतोत्पत्तेः प्रागेव सम्भृतः पुष्टः सञ्जात इत्यर्थः । न केवलं पञ्चभूतोत्पत्तेः प्रागेव सम्भृतः किन्तु विश्वकर्मणः ब्रह्मणः रसात् इच्छातः पूर्वमेव समवर्त्तत समभवत् । "एकोऽहं बहुस्यामि"ति जगन्निर्माणेच्छा परमात्मनो यदाभूत्तदा तदिच्छातः प्रागेव समवर्त्तत ब्रह्मरूपत्वेनेतिशेषः । अत एव तस्य आदित्यस्य तत् रूपं मण्डलाकारं मर्त्त्यस्य मनुष्यस्य जातावेकवचनं मनुष्याणां सृष्टितोऽपि अग्रे प्रथममेव विश्वकर्मणा कृतमितिशेषः । तत्प्रभृत्येवादित्यः आजानदेवत्वं सूर्य्यरूपेण मुख्यं देवत्वं विदधत् धारयन् सन् एति तेजोमयमेतन्मण्डलाकारं रूपं धारयन्नुदया-

चलादस्ताचलं गच्छतीत्यर्थः। इदानीमपि तदेवादित्यस्य मण्डलाकारं रूपं मनुष्यैर्दरीदृश्यते। द्विविधाः देवाः, उत्कृष्टेन कर्मणा देवत्वं प्राप्ताः कर्मदेवा इन्द्रादयः, सृष्ट्यादावुत्पन्ना देवा आजानदेवाः सूर्य्यादयः, इति। तदुक्तं श्रुत्या "ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दः" इति। आजानदेवत्वं तेजोविशिष्टत्वं तच्च सूर्य्यादिष्वेव दृश्यते। अतो भगवता श्रीकृष्णचन्द्रेणाप्युक्तमर्ज्जुनं प्रति "यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥" इति। अतो विमुक्तये सर्वैस्तत्तेज एवोपासितव्यम्। तथा चोक्तं श्रुत्या "स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्। स एव विष्णुः स प्राणः स कालाग्निः स चन्द्रमाः। स एव सर्वं यद्भूतं यच्च भाव्यं सनातनम्। ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये॥" इत्यथर्ववेदस्य कैवल्योपनिपदि प्रथमखण्डे द्रष्टव्यम्॥ यस्तेजोमयोऽयं पुरुषः शिवस्तमनेनाभिषिञ्चामि, तमुद्दिश्य जपामि, तमुद्दिश्य जुहोमि, स चायं परितुष्टः शिवो मां सुखं गमयत्वित्याशंसावाक्यार्थः॥१७॥

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥ १८॥

अहमुपासक ईदृशमेतं पुरुषमादित्यमण्डलान्तर्गतं तेजोमयं "योऽसावादित्ये पुरुषः सोऽसावहम्" इतिश्रुतेर्वेदान्तप्रतिपाद्यं श्रुतिप्रसिद्धं वेद जानामीत्यर्थः। कीदृशमेतं पुरुषमित्यपेक्षायामुच्यते। महान्तं सर्वोत्कृष्टं देशकालव्यवच्छेदरहितमित्यर्थः। तथा आदित्यवर्णं आदित्यस्येव वर्णो यस्य स आदित्यवर्णस्तमादित्यवर्णम् उपमान्तराभावात्स्वोपममित्यर्थः। ज्योतिर्मयमितिभावः। यथाऽऽदित्यः स्वप्रकाशकः परानपि प्रकाशयति तथायमपि ब्रह्मरूपोः पुरुषोजगदपि प्रकाशयतीत्याशयः। तथा तमसः परस्तात् तमोरहितं तमःशब्देनाविद्योच्यते तेनायमर्थः, अविद्यात्मकसंसारात्परमुत्तीर्णमित्यर्थः। ईदृशं पुरुषं वेद अहं जानामीत्यभिप्रायः। तथा यं पुरुषमहं जानामि तमेव पुरुषं विदित्वा ज्ञात्वा मृत्युमत्येति अतिक्रामति अत्रोपसर्गस्य व्यवहितेनापि क्रियापदेन सह सम्बन्धः "व्यवहिताश्चे"ति पाणिनिवचनात्। मृत्युमतिक्रम्य परं ब्रह्माधिगच्छति संसाररूपं मृत्युमुल्लङ्घ्य ज्योतिर्मयं ब्रह्म प्राप्नोति, संसारं तिरस्कृत्य तं ब्रह्माख्यं पुरुषमनुप्रविशतीत्याशयः। अयनाय अपुनरावृत्तये मोक्षाय अन्यः पन्था मार्गो न विद्यते येन पथा साधको मृत्युमतिक्रम्य परं ब्रह्म प्राप्नुयादितिभावः। सूर्यमण्डलान्तः पुरुषमात्मानं ज्ञात्वैव मुक्तिं लभते। यतोऽसौ पुरुषो ज्ञातः सन् मोक्षं ददाति अतोऽयमेव पुरुषो ध्यानगम्य इति वाक्यार्थः "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयी"तिश्रुतेः॥ १८॥

प्रजापतिश्चरति गर्भेऽअन्तरजायमानो बहुधा विजायते।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा॥ १९॥

प्रजापतिः प्रजानां पालकः विज्ञानघनानन्दस्वभावः सर्वान्तर्यामी सर्वसाक्षी सर्वात्मा श्रुतिप्रसिद्धः परमात्माऽऽदित्यमण्डलान्तर्गतः पुरुष एव अन्तश्चरति सर्वप्राणिनां देहमध्ये जीवात्मकरूपतया वसतीत्यर्थः। तथा यश्च पुरुषः गर्भे अजायमानोऽनुत्पद्यमानोऽपि बहुधा

विजायते कार्य्यकारणरूपेण मायया प्रपञ्चरूपेणोत्पद्यते नित्यत्वात्। अथवा स एव पुरुषः अजायमानोऽनुत्पत्तिधर्म्मापि गर्भे बहुधा विजायते बहुप्रकारेण गर्भे प्रविशति स्थावरजङ्गमात्मकसर्वदेहेषु जन्मस्थितिं लभते रामादिशरीरेण बोभवीतीत्यर्थः। तस्य प्रजापतेः योनिमुत्पत्तिस्थानं धीराः ब्रह्मविदः परिपश्यन्ति ध्यानेन सम्यगवलोकयन्तीत्यर्थः। तस्य प्रजापतेर्यदुत्पत्तिस्थानं तदेव ब्रह्मेत्यभिप्रायः "एकोऽहं बहुस्यां प्रजायेयम्" इति श्रुतेः "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहमि"तिभगवदुक्तेश्च। अथवा तस्य प्रजापतेः योनिं स्वरूपं धीराः ब्रह्मवादिनः परिपश्यन्ति सम्यगवलोकयन्तीत्यर्थः। अहं ब्रह्मास्मीति जानन्तीत्यभिप्रायः। तस्मिन् ह हकार एवार्थे तस्मिन्नेव प्रजापतौ कारणात्मनि ब्रह्मणि विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि तस्थुः स्थितानि सर्वं तदात्मकमेवेति तात्पर्य्यार्थः "सर्वं खल्विदं ब्रह्मे"ति श्रुतेः॥ १९॥

यो दे॒वेभ्य॑ऽआ॒तप॑ति॒ यो दे॒वानां॑ पु॒रोहि॑तः।
पूर्वो॒ यो दे॒वेभ्यो॑ जा॒तो नमो॑ रु॒चाय॒ ब्राह्म॑ये॥ २०॥

यः प्रजापतिरेव रविमण्डले स्थितः सन् आदित्यमण्डलान्तर्गतः पुरुषो भूत्वा देवेभ्यः आतपति देवेभ्योऽर्थाय आ समन्ताद्भावेन सूर्य्यरूपेण तपति देवोपकारार्थमुदेति दिवि विद्योतते इत्यर्थः। सति सूर्य्योदये देवकर्मणः प्रवर्त्तमानत्वात्। यो देवानां पुरोहितः यश्चादित्यरूपः प्रजापतिः देवानां पुरः अग्रे हितः स्थापितः यज्ञादौ देवस्थापनात्पूर्वमग्निरूपेण आधीयते इत्यभिप्रायः। "अग्निर्वै देवानां मुखं तस्मादग्निमुखा ह वै देवा अदन्ति" इति श्रुतेः देवानामग्निमुखत्वाद्देवानां पुरोऽग्निरेव निधीयते इति तात्पर्य्यार्थः। तथा यः प्रजापतिः आदित्यमण्डलान्तर्गतः पुरुषः देवेभ्यः पूर्वो जातः देवेभ्यः प्रागेवोत्पन्नस्तस्मै रुचाय रोचतेऽसौ रुचः तस्मै रुचाय रोचमानाय दीप्यमानाय ब्राह्मये ब्रह्मणोऽपत्यं ब्राह्मिः तस्मै ब्राह्मये ब्रह्मणोऽपत्याय ब्रह्मावयवभूताय वा सूर्य्यरूपाय प्रजापतये नमः नमस्कारोऽस्त्वित्यर्थः। रुचायेरयत्र "इगुपधे"त्यादिना कप्रत्ययः। ब्राह्मये इत्यत्र इञि टिलोपो बोध्यः॥ २०॥

रु॒चं ब्रा॒ह्मञ्ज॒नय॑न्तो दे॒वाऽअग्रे॒ तद॑ब्रुवन्।
यस्त्वै॒वं ब्रा॑ह्म॒णो वि॒द्यात्तस्य॑ दे॒वाऽअ॑स॒न्वशे॑॥ २१॥

दीव्यन्तीति देवाः ब्रह्मादयः जनयन्तः स्वयमुत्पद्यमानाः सन्तः रुचं रोचतेऽसौ रुचस्तं रुचं रोचमानं दीप्यमानं दिवि भासमानं ब्राह्मं ब्रह्मसुतं रविमण्डलान्तर्गतं पुरुषमादित्यम् अग्रे प्रथमं तदब्रुवन् तदुक्तवन्तः, यत् हे पुरुषोत्तम, आदित्यात्मन् प्रजापते, एवममुना यः ब्राह्मणः ब्रह्म जानातीति ब्राह्मणः ब्रह्मज्ञानवान् पुरुषः त्वा त्वां विद्यात् सूक्तोक्तप्रकारेण ब्रह्मभूतं विश्वरूपं "सर्वं खल्विदं ब्रह्मे"तिश्रुतेर्ब्रह्मादिस्तम्बपर्य्यन्तभूतं त्वां जानीयात् तस्य ब्रह्मज्ञानिनः पुरुषस्य वशे देवाः ब्रह्मप्रभृतयः इन्द्रादयः असन् आसन् भवन्तीत्यर्थः। "ब्रह्मवित्साक्षाद्ब्रह्मैव भवती"ति श्रुतेः ब्रह्मविदः पुरुषस्येच्छायां सर्वदैव देवा वर्त्तन्ते अन्येषां पुनः का कथेत्यभिप्रायः। "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनादसन्नित्यत्र अस्तेर्लर्डर्थे लङ् अडभावश्चार्षः "बहुलं छन्दस्यमाङ्योगेऽपी"ति पाणिन्युक्तेः। यद्वशे सर्वे ब्रह्मादयो

देवाः सर्वदैव विद्यन्ते तस्य का मृत्युभीतिः संसारभीतिर्वेत्याशयः। "त्वयाऽभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्द्धसु प्रभो" इत्यादि श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे गर्भस्तुतौ द्रष्टव्यम् । अतोऽस्माकं देवानां मध्येऽयमादित्य एव मुख्य इति देवाः परस्परं पूर्वमब्रुवन् , अत इदानीं साधकोऽप्यहं ब्रुवे यदहं त्वदैकशरणोऽस्मि मां सर्वतो भावेन तथा रक्ष यथा मम केनापि प्रकारेण न क्वापि भीतिर्भवेदिति तात्पर्य्यार्थः ॥ २१ ॥

श्रीश्च॑ ते ल॒क्ष्मीश्च॒ पत्न्या॑वहोरा॒त्रे पा॒र्श्वे नक्ष॑त्राणि रू॒पम॒श्विनौ॒ व्यात्त॑म् ।
इ॒ष्णन्नि॑षाणा॒मुम्म॑ऽइषाण सर्वल्लो॒कम्म॑ऽइषाण ॥ २२ ॥

एवमादित्यमण्डलान्तर्गतं पुरुषं प्रजापत्याख्यं पुरुषोत्तमं स्तुत्वा ततः प्रार्थयते । तद्यथा हे आदित्यमण्डलान्तर्गतपुरुष, प्रजापते, पुरुषोत्तम, श्रीश्च लक्ष्मीश्च तव पत्न्यौ सहचारिण्यौ स्त इति शेषः । तव जाये वर्त्तेते इत्यर्थः । चकारद्वयं तुल्यप्राधान्यज्ञापनार्थं श्रीरैश्वर्य्यं लक्ष्मीर्धनमित्यर्थः । यद्वशात्पुरुषो लोकानामाश्रयणीयो भवति सा श्रीः । श्रीयतेऽनयेति श्रीः सम्पदित्यर्थः । तथा यद्वशात्पुरुषो लोकानां दर्शनीयो भवति सा लक्ष्मीः लक्ष्यते दृश्यते जनैः सा लक्ष्मीः सौन्दर्य्यादिकारणं धनमित्यर्थः । "यस्यास्ति वित्तं स नरः कुलीनः स एव वक्ता स च दर्शनीयः । स पण्डितः स श्रुतवान् गुणज्ञः सर्वे गुणाः काञ्चनमाश्रयन्ति" इत्युक्तेः । यस्य धनं वर्त्तते तमेव सर्वे जनाः पश्यन्ति निर्धनं नरं दृष्ट्वा मुखं न्युब्जीकुर्वन्ति । अतो दारिद्र्यं प्रति केनचिदुक्तं "हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः । पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चने"ति । लक्षदर्शनाङ्कनयोरित्यस्य रूपं श्रीर्लक्ष्मीश्चेत्युभे त्वद्वश्ये इत्यर्थः । तथा हे पुरुषोत्तम, अहोरात्रे तव पार्श्वे स्त इति शेषः । अहोरात्रिश्चेत्युभे तव पार्श्वस्थानीये वर्त्तेते तव पार्श्वद्वयमस्तीत्यर्थः । अहःशब्दो ब्रह्मपरः तस्य विद्यात्मकत्वेन प्रकाशरूपत्वात् । रात्रिशब्दः संसारपराप्रकृतिपरः तस्याऽविद्यात्मकत्वेनाप्रकाशकत्वात् । एतेन धर्म्मार्थकामात्मकः संसारः तन्निवृत्त्यात्मको मोक्षश्च श्रीपरमेश्वरस्य पार्श्वद्वयमित्युक्तं भवति । तथा हे पुरुषोत्तम, नक्षत्राणि अन्तरिक्षस्थाः सर्वास्तारकास्तव रूपं तव मूर्त्तिरित्यर्थः । नक्षत्राणां तवैव तेजसा भासमानत्वादित्याशयः। "तेजसा गोलकः सूर्य्यो नक्षत्राण्यम्बुगोलकाः" इति ज्योतिःशास्त्रोक्तेः । तथा हे पुरुषोत्तम, अश्विनौ द्यावापृथिव्यौ तव व्यात्तं विवृतं मुखमित्यर्थः । अश्नुवाते व्याप्नुतः सर्वं जगदित्यश्विनौ, द्यौर्ज्योतिषाश्नुते, पृथिवी रसेनान्नलक्षणेनाश्नुते; अतोऽश्विशब्देन इह द्यावापृथिव्योर्ग्रहणं तस्मादेवमुक्तं भवति यत् हे पुरुषोत्तम, अश्विनौ द्यावापृथिव्यौ तव विकसितमुखस्थानीये इत्यभिप्रायः । तथा च श्रुतिः "अश्विनौ द्यावापृथिव्यौ इमे हीदꣳ सर्वमश्नुवाताम्" इति । हे पुरुषोत्तम, यस्त्वमीदृशस्तं त्वामहं याचे इति शेषः । किं तद्याचनं तदुच्यते । इष्णन् इषाण कर्मफलमिच्छन्तं सकामं मामिच्छन् सन् त्वं इषाण इच्छ अनुगृहाण, निजोपासकं मां सत्वरमनुगृहाणेत्यर्थः । "इष इच्छायाम्"विकरणव्यत्ययः, "व्यत्ययो बहुलमि"ति पाणिनिवचनात् । अथवा "इष आभीक्ष्ण्ये"क्र्यादिः अत्रेच्छार्थः। किमेषणीयं तत्रोच्यते । मे मम कृते अमुं परलोकम् इषाण मम परलोकः समीचीनोऽस्त्विति त्वमिच्छ । न केवलममुं परलोकमेव, किन्तु मे मम सर्वलोकं भूरादिसप्तलोकमिषाण सर्वलोकात्मकोऽहं भवेयमितीच्छेत्यर्थः । अहं मुक्तो भवेयमित्यभिप्रायः "सर्वं

खल्विदं ब्रह्म" इति श्रुतेः। यद्वा मे मम अमुमिषाण मे मम इमं भार्य्यापुत्रजनादिकम् इषाण तथा मे मम सर्वलोकं भुरादिसप्तलोकमिषाण। यथा मम भार्य्यापुत्रात्मकोऽयं संसारः स्वर्गादिरूपः परलोकश्च सुसमीचीनो भवेत्तथा त्वमिच्छ। तवेच्छामात्रेणैव ममोपासकस्य सर्वमेव सम्पत्स्यते सत्यसङ्कल्पत्वेनामोघेच्छत्वात्तवेत्यभिप्रायः। यः कश्चित्स्वर्गपुत्रादिकामनयानेन सहस्रशीर्षाध्यायेन त्वां स्तौति पूजयत्युपतिष्ठते वा तस्य सर्वाभीष्टसिद्धिर्भवति। अतोऽनेनाध्यायेन स्तुतिं कुर्वतो ममापि भार्य्यापुत्रधनादिलाभोऽन्ते मोक्षश्चास्त्वितिवाक्यार्थः। अनेन सहस्रशीर्षाध्यायेन यद्यपि प्रधानतया विराड्रूपेण पुरुषमेधाख्ययज्ञरूपेण आदित्यमण्डान्तर्गतपुरुषरूपेण ( आदित्यरूपेण ) प्रजापतिरूपेण च विष्णुरेव स्तूयते। तथापि रुद्रस्नपनरुद्रजपरुद्रहोमेष्वपि रुद्रपक्षे तत्तद्रूपेण रुद्रोऽपि स्तूयते। "योऽयं विष्णुः स वै रुद्रो रुद्रो विष्णुः स एव हि। एवं द्वयोरभेदेन पूजायाः फलमाप्नुयादि"ति ब्रह्मवचनात्। अतो विष्णुयजने रुद्रस्नपने तथा विष्णुयागे रुद्रयागे च सममेव भाष्यमवगन्तव्यम्॥ २२॥

एवमुत्तरनारायणं व्याख्याय अप्रतिरथस्यार्थं विवृणोमि तथा हि—

आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्।
सङ्क्रन्दनोऽनिमिषऽएकवीरः शतꣳसेनाऽअजयत्साकमिन्द्रः॥१॥

आशुःशिशान इत्यादिसप्तदशर्चस्याप्रतिरथऋषिराद्यानां द्वादशानां त्रिष्टुप्छन्द इन्द्रो देवता अवसृष्टेति द्वयोरनुष्टुप्छन्द इषुसुरभी देवते असौयेति त्रिष्टुप्छन्दो मरुद्देवता यत्र बाणा इति पङ्क्तिश्छन्दो बाणादेवता मर्माणित इति त्रिष्टुप्छन्दो वर्मदेवता रुद्रकवचजपे विनियोगः। स्नपनपक्षे स्नपने विनियोगः। होमपक्षे होमे विनियोगः। अस्य श्राद्धेऽपि पाठो भवति तत्पक्षे श्राद्धाधिकरणकजपे विनियोगः। एवंप्रकारेण वाक्योहः कर्त्तव्यः। रुद्रस्नपनादिप्रकरणवशादिहानेनाप्रतिरथेनापि रुद्र एव इन्द्ररूपेण स्तूयते। "अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायते। तथा हि—"इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः" इत्याद्यभिधानाद्यद्यप्यत्र इन्द्रशब्देन शतक्रत्वाख्यः शचीपतिरेव गृह्यते स्तूयते च तथाप्यत्र षडङ्गशतरुद्रियप्रकरणवशादिन्द्रपदं रुद्रविशेषणत्वेनाभ्युपेयम्। रुद्रः शिवः प्रत्येतव्यः। "स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्। स एव विष्णुः सः प्राणः स कालाग्निः स चन्द्रमाः" इत्याथर्वणिकश्रुतेः। "स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः। स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किञ्चन" इति बृहदारण्यकश्रुतेश्च शिवेन्द्रयोरभेदत्वेन प्रतिपादनादिहेन्द्रपदं शिवमेवोपलक्षयति स शिवो रुद्र एव "नमः सोमाय च रुद्राय च नमः शिवाय च शिवतराय चे"ति मन्त्रद्वयेनोभयनाम्ना स्तुत्यवगतेः। "इदि परमैश्वर्ये" इत्यस्माद्रक्प्रत्यये इदित्वान्नुमि इन्दतीति इन्द्रः इतियौगिककल्पनया परमैश्वर्य्ययुक्तो रुद्र एव गृह्यते स्तूयते च। तथा हि ईदृशो रुद्रः शतं बह्वीः सेनाः साकं सहैव एकदैव अजयत् जितवान् दक्षप्रजापतेर्यज्ञविध्वंसावसरे तदीयसैन्यैः सह बाणासुरयुद्धे बाणासुररक्षार्थं विष्णुना च सह घोरसङ्ग्रामे इतिशेषः। कीदृशो रुद्रः इन्द्रः परमैश्वर्य्ययुक्तः। तथा आशुः क्षिप्रकारी शीघ्रगामी च आपत्तौ भक्तरक्षणार्थं शीघ्रगन्तेत्यर्थः। आशुरित्यस्य क्षिप्रनामसु पठि-

तत्वात् । अथवा अश्नुते व्याप्नोति सर्वं जगदित्याशुः व्यापक इत्यर्थः । "अशू व्याप्तौ" इत्यस्मात् उण्प्रत्ययोऽवगन्तव्यः । तथा शिशानः "शो तनूकरणे" "बहुलं छन्दसी"ति जुहोत्यादित्वाच्छानचि द्वित्वं श्यति पाशुपतास्त्रं तीक्ष्णीकरोतीति शिशानः शत्रुवधार्थं पाशुपतास्त्रस्य तीक्ष्णकर्त्ता। इन्द्रपक्षे तु श्यति वज्रं तिक्ष्णीकरोतीति शिशानः वृत्रादिवधार्थं वज्रस्य तीक्ष्णकर्त्ता इत्यर्थः । तथा वृषभो न भीमः न इवार्थे वृषभ इव भीमः बिभेत्यस्मादिति भीमः भयङ्करः शत्रूणां कृते भयानकः शत्रूणां भयदातेत्यर्थः । तथा घनाघनः हनहनेति वक्ता शत्रूणामतिशयेन घातक इत्यर्थः । वृष्टिकर्तृत्वसम्बन्धेन घनशरीरो वा मेघरूप इत्यर्थः, वर्षुकाब्दो घनाघन इत्यभिधानात् । तथा चर्षणीनां मनुष्याणां क्षोभणः क्षोभतीति क्षोभणः क्षोभकः शत्रूणां पापिनां वा चालकः । तथा सङ्क्रन्दनः सम्यक् क्रन्दनं परभयहेतुर्ध्वनिर्यस्य सः सङ्क्रन्दनः शत्रूणां कृते भयानकध्वनिकारकः शत्रूणां ह्वाता आह्वानकर्त्तेति वा । अथवा सम्यक् क्रन्दयति शत्रून् पापिनो वा नरान् रोदयतीति सङ्क्रन्दनः शत्रूणां पापिनां नराणां वा रोदयितेत्यर्थः । तथा अनिमिषः नास्ति निमिषो यस्य सः तथोक्तः निमेषरहितः आहवे अप्रमादी कदाचिदपि निमेषं न करोति अत्यन्तसावधान इत्यर्थः । अथवा अनिमिषः निमेषरहितः अनिमिषत्वञ्च देवत्वादेव तस्य प्रसिद्धम् । तथा एकवीरः एकश्चासौ वीरः एकवीरः विक्रान्तः अन्यनिरपेक्षः सन् समस्तशत्रूनेक एव जेतुं समर्थ इत्यर्थः । ईदृशो रुद्रः एकदैव समस्ताः सेनाः पुराऽजयत् । अत इदानीमपि स्नपनकर्त्तुर्मम रक्षार्थं मदीयशत्रोः समस्ता अपि सेनाः जयत्वित्याशंसावाक्यार्थः ॥१॥

सङ्क्रन्दनेना निमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।
तदिन्द्रेण जयत तत्सहध्वं युधोनरऽइषुहस्तेन वृष्णा ॥ २ ॥

( युध्यन्ते इति युधः, युध्यतेः क्विप्प्रत्यये सम्बोधने "पादादावामन्त्रितस्ये"ति आद्युदात्तः।) हे युधः योद्धारः, हे नरः मनुष्याः, यूयं तत्सैन्यं परबलं जयत वशीकुरुत। वशीकृत्य च तत्सैन्यं परबलं सहध्वम् अभिभवत विनाशयतेत्यर्थः । अग्रे "अतिरिक्तमि"ति कारिकया हीनपदाध्याहारेण वाक्ययोजना द्रष्टव्या । तत् किं सैन्यमित्यपेक्षायामुच्यते । यत्सैन्यं परबलं रुद्रेण पुरा जितमितिशेषः । भक्तरक्षार्थं वशीकृतं तत्सैन्यमित्यर्थः । प्रथमन्तु मद्रक्षार्थं रुद्रेणैव परसैन्यं जितं पश्चाद्युष्माभिर्जेतव्यमित्याशयः । कीदृशेन रुद्रेण "इदि परमैश्वर्य्ये" इन्दतीति इन्द्रस्तेन इन्द्रेण परमैश्वर्य्ययुक्तेनेत्यर्थः । पुनः कीदृशेन सङ्क्रन्दनेन शत्रुभयार्थमत्यन्तभयानकशब्दकारिणेत्यर्थः । तथा अनिमिषेण देवत्वान्निमेषरहितेनेत्यर्थः । यद्वा अनिमिषेण अप्रमादिना एकचित्तेन अत्यन्तसावधानेनेत्यर्थः । जिष्णुना जयतीत्येवं शीलो जिष्णुस्तेन जिष्णुना जयनशीलेनेत्यर्थः । तथा युत्कारेण युधं करोतीति युत्कारस्तेन युत्कारेण ( कर्म्मण्यण् ) युद्धकारिणेत्यर्थः । तथा दुश्च्यवनेन दुःखेन च्यावयितुं शक्यः दुश्च्यवनस्तेन दुश्च्यवनेन दुराधर्षेण अजय्येनेत्यर्थः । तथा धृष्णुना धर्षतीत्येवं शीलो धृष्णुस्तेन धृष्णुना धर्षणशीलेनेत्यर्थः । तथा इषुहस्तेन इषवो हस्ते यस्य स इषुहस्तस्तेन इषुहस्तेन बाणपाणिनेत्यर्थः । तथा वृष्णा वर्षतीति वृषा तेन वृष्णा वर्षणशीलेन भक्तानां कृते कामाभिवर्षुकेणेत्यर्थः । ईदृशेन रुद्रेण मद्रक्षार्थं तत्सैन्यं परबलं पूर्वमेव जितम् हे युधोनरः, मदीययोद्धारो

मनुष्याः, इदानीं यूयमपि रुद्रजितावशिष्टं तत्सैन्यं परबलं जयत जित्वा च सहध्वमभिभवतेत्याशयः॥ २॥

स इषुहस्तैः सनिषङ्गिभिर्वशी सꣳसृष्टा स युधऽइन्द्रो गणेन।
सꣳसृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता॥ ३॥

"अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तत्र मन्त्रेऽस्मिन् स इति तच्छब्दश्रवणाद्यच्छब्दोऽध्याहर्त्तव्यः, यत्तदोर्नित्यसम्बन्धत्वात्। तथा हि य ईदृशो रुद्रोऽस्तीति शेषः। स इषुहस्तैः बाणहस्तैर्योद्धृभिः सह संसृष्टा संसृजतीति संसृष्टा ( "ण्वुल्तृचावि"तितृच्प्रत्ययः ) युद्धाय संसर्गकर्त्ता सम्मिलितो भवतीतिशेषः। तथा स एव रुद्रो निषङ्गिभिः निषज्यते इति निषङ्गः खड्गः सोऽस्ति येषां ते निषङ्गिणस्तैः निषङ्गिभिः खड्गिभिः खड्गधारिभिः पुरुषैश्च सह संसृष्टेत्यनुषङ्गः। संमिलितो भवतीत्यर्थः। रुद्रः कीदृश इत्यपेक्षायामुच्यते। वशी वशयति शत्रून् वशीकरोतीति वशी शत्रूणां वशकारकः। यद्वा वशी कान्तः सर्वजनप्रियः स्वतन्त्रो वा निगृहीतारिषड्वर्गो वा ईश्वरो वा। पुनः कीदृशः गणेन रिपुसमूहेनापि सह युधः युध्यतेऽसौ युधः ( इगुपधेति कप्रत्ययः ) शत्रुभिः सह युद्धकर्त्तेत्यर्थः। पुनः कीदृशः इन्द्रः इन्दतीति इन्द्रः परमैश्वर्य्ययुक्त इत्यर्थः। तथा संसृष्टजित् संसृष्टान् सम्मिलितानेकीभूतान् शत्रून् जयतीति संसृष्टजित् सङ्घीभूतानां सर्वेषामपि शत्रूणां जेतेत्यर्थः। तथा सोमपाः सोमं पिबतीति सोमपाः सोमपानकर्त्ता स्कन्नहविर्भोक्तृत्वाद्रुद्रस्य इह सोमपानकर्तृत्वेनेयं स्तुतिरित्यनुसन्धेयम्। अथवा सोमं चन्द्रं पाति रक्षति स्वाश्रयत्वेन पालयतीति सोमपाः सोमरक्षक इत्यर्थः। तथा बाहुशर्धी बाह्वोः शर्धो बलमस्यास्तीति बाहुशर्धी बाहुबली बाहुबलोपेतः संयोगिनिरपेक्ष इत्यर्थः। शर्ध इति बलनामेतिनिघण्टुः। तथा उग्रधन्वा उग्रमुत्कृष्टं पिनाकाख्यं धनुर्यस्य स उग्रधन्वा ( धनुषश्चेत्यनङ्गादेशः ) उद्यतधनुः पिनाकहस्त इत्यर्थः। तथा प्रतिहिताभिः शत्रून्प्रति स्वेन धनुषा प्रेरिताभिः इषुभिः अस्ता क्षेप्ता अस्यतीत्येवं शीलः शत्रुनाशयितेत्यर्थः। ( "असु क्षेपणे"ततस्तृन्प्रत्ययः तस्याद्युदात्तः। ) य एतादृशो रुद्रस्तमहं स्नपयामि सोऽपि तुष्टः सन्मां शत्रुतो रक्षत्वित्याशंसावाक्यार्थः। स युध इत्यत्र सं शब्दाऽऽवृत्तिः पादपूरणार्थावगन्तव्या॥ ३॥

बृहस्पते परि दीया रथेन रक्षोहाऽमित्राँ२॥ऽअपबाधमानः।
प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्॥४॥

"बृहस्पतिः सुराचार्य्यो गीष्पतिर्धिषणो गुरुरि"त्यभिधानात् यद्यपि देवगुरुर्ग्रहाणां मध्ये यः पञ्चमो ग्रहः स एव बृहस्पतिशब्देनोपादीयते तथापि "वाग्वै बृहती तस्या एष पतिर्बृहस्पतिरि"तिश्रुतेः शतक्रत्वाख्यो यः शचीपतिरिन्द्रः सोऽपि कुत्रचित् बृहस्पतिशब्देनाभिधीयते तस्यापि व्याकरणकर्तृत्वात्। "इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेरि" त्याद्यभिहितमनुभूतिस्वरूपाचार्य्येण। "अष्टौ व्याकरणानि, चतुर्दश निरुक्तानि" इति निरुक्तभाष्यकृताप्युक्तं तत्राष्टानां व्याकरणानां मध्ये एकमैन्द्रं व्याकरणमिति श्रूयते। इह तु षडङ्गशतरुद्रियप्रकरणवशाद्बृहस्पतिशब्देन रुद्र एव गृह्यते स्तूयते च "अइउण् ऋलृग्" त्या-

दिचतुर्द्दशसूत्रकर्तृत्वात्। तान्येव चतुर्द्दशसूत्राणि पाणिनीयव्याकरणस्य निदानभूतानि सन्ति "नृत्यावसाने नटराजराजो ननाद ढक्कां नव पञ्चवारम्। उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शेच्छिवसूत्रजालम्॥" इत्युक्तेः। अतोऽत्र बृहस्पतिशब्दो रुद्रविशेषणत्वेनाभ्युन्नेयः तथा हि तत्र "अतिरिक्तमिति" कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे बृहस्पते, वाक्पते, वाक्पालक, हे रुद्र, एतादृशस्त्वं रथेन परिदीय सर्वतो गच्छेत्यर्थः। दीयतिर्गत्यर्थः ततो लोट्, तस्य "द्व्यचोऽतस्तिङः" इतिदीर्घः। गत्वा च अस्माकं रथानां स्यन्दनानाम् अविता रक्षकः एधि भव। अस्तेर्लोण्मध्यमपुरुषैकवचने एधीति रूपं तत्र "घ्वसोरेद्धावभ्यासलोपश्च" इत्येत्वम्, आभीयत्वेन एत्वस्यासिद्धत्वाद्धेर्धिः, "श्नसोरि"त्यल्लोपश्चावगन्तव्यः। कीदृशस्त्वं रक्षोहा रक्षांसि हन्तीति रक्षोहा क्विप् रक्षसां हन्तेत्यर्थः। तथा किं कुर्वन् सन् परिदीयेत्यपेक्षायामुच्यते। अमित्रान् शत्रून् परिबाधमानः परिपीडयन् तथा सेनाः परकीयाः शत्रुसेनाः प्रभञ्जन् प्रमर्द्दयन् प्रकर्षेण भग्नाः कुर्वन्नित्यर्थः। तथा प्रमृणः प्रमर्द्दकान् हिंसकान् रिपून् युधा युद्धेन जयन् पराभवन् सन् परिदीय परितो गच्छ गत्वा चास्माकं रथानामविता रक्षको भवेत्यभिप्रायः। प्रमृण इति "मृण हिंसायां (तु० प०)" प्रपूर्वकस्य तस्य क्विपि द्वितीयाबहुवचनम्॥ ४॥

बलविज्ञाय स्थविरः प्रवीरः सहस्वान्वाजी सहमानऽउग्रः।
अभिवीरोऽअभि सत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित्॥ ५॥

"अतिरिक्तमिति" कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे इन्द्र, परमैश्वर्य्ययुक्त, हे रुद्र, ईदृशस्त्वं जैत्रं जयनशीलं रथम् आतिष्ठ आरोहेत्यर्थः। कीदृशस्त्वमित्यपेक्षायामुच्यते। बलविज्ञायः बलं परकीयं विशेषेण जानातीति बलविज्ञायः परकीयबलस्य ज्ञातेत्यर्थः। (कर्मण्यण्, "आतो युक्चिण्कृतोः" इति युगागमश्च बोध्यः) अथवा बलेन कृत्वा विज्ञायते इति बलविज्ञायः बलेन प्रसिद्ध इत्यर्थः। (करणे घञ्प्रत्ययो वाऽवगन्तव्यः) तथा स्थविरः पुरातनः सर्वानुशासको वा सर्वमान्यो वा। तथा प्रवीरः प्रकृष्टश्चासौ वीरः प्रवीरः शूर इत्यर्थः। तथा सहस्वान् "सह इति बलनामेति निघण्टुः" सहो बलमस्यास्तीति सहस्वान् बलवानित्यर्थः। तथा वाजी "वाज इत्यन्ननाम" वाजोऽन्नमस्यास्तीति वाजी अन्नवानित्यर्थः। तथा सहमानः "षह मर्षणे"शत्रून् अभिभवन् पराभवन्नित्यर्थः। तथा उग्रः भीषणः युद्धेषु क्रूर इत्यर्थः। तथा अभिवीरः अभितः सर्वतो वीरा यस्य स अभिवीरः सर्वतो वीरैरुपेत इत्यर्थः। तथा अभिसत्वा सभितः सर्वतः सत्वानः परिचारकाः प्राणिनो यस्य स अभिसत्वा सर्वतः परिचारकगणैर्वेष्टित इत्यर्थः। तथा सहोजा "सह इति बलनामेति निघण्टुः" सहसः बलाज्जातः सहोजाः नहि अन्यस्माज्जात ईदृग्बलवान् स्यादित्याशयः। तथा गोवित् गां स्तुतिगिरं वेत्तीति गोवित् स्तुतिज्ञः हे रुद्र, यस्त्वमीदृशः स त्वं जैत्रं जयनशीलं रथमातिष्ठ मद्रक्षार्थमारोहेत्यर्थः। बलविज्ञाय इत्यत्र सुपांसुलुगिति सुलोपश्छान्दसः॥ ५॥

गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्ज्मप्रमृणन्तमोजसा।
इमꣳसजाताऽअनुवीरयध्वमिन्द्रꣳसखायोऽअनुसꣳरभध्वम्॥ ६॥

हे सजाताः, समानं जातं जन्म येषां ते सजाताः समानजन्मानो देवाः इन्द्रादयः, यद्वा "रुद्राश्च गणदेवताः"—इत्यभिधानादेकादशसङ्ख्यकानां रुद्राणां मध्ये अहिर्बुध्न्यादयो देवाः, यूयम् ईदृशमसुं रुद्रमनुवीरयध्वम् "(शूरवीरविक्रान्तौ" अदन्तश्चुरादिस्तस्य लोण्मध्यमपुरुषबहुवचनम्) वीरकर्मकुर्वाणमनुगम्य वीरकर्मणा प्रोत्साहयतेत्यर्थः। यद्यप्ययं रुद्रः स्वयं वीरकर्म्मा तथाप्येनं प्रोत्साहयुक्तं यूयं कुरुतेत्यभिप्रायः। तथा हे सखायः, सखिवदुपकारकाः सखिवत्प्रीतियुक्ता वा हे देवाः इन्द्रादयोऽहिर्बुध्न्यादयोवा देवाः, यूयमिमं रुद्रम् अनुसंरभध्वम् "रभराभस्ये" अस्य रुद्रस्य संरम्भं वेगं ज्ञात्वा पश्चाद्यूयमपि संरम्भं कुरुतेत्यभिप्रायः। कीदृशं रुद्रमित्यपेक्षायामुच्यते। गोत्रभिदं गोत्रम् असुरकुलं भिनत्तिविदारयतीति गोत्रभित् तं गोत्रभिदम् असुरविनाशकमित्यर्थः। रुद्रस्य त्रिपुरासुरविनाशकत्वादेव असुरविनाशकत्वमित्यर्थः। यद्वा गाः अपः त्रायते इति गोत्रो मेघस्तस्य भेत्तारमित्यर्थः। गोत्रं मेघवृन्दं वृष्ट्यर्थं भिनत्ति विदारयतीति गोत्रभिदिति विग्रहोऽस्मिन्पक्षेऽनुसन्धेयः। अतोऽनावृष्टौ रुद्राराधनं जनाः कुर्वन्तीति लोकेऽपि दृश्यते, इत्याशयः। तथा गोविदं गां वाचं स्तुतिवाणीं वेत्तीति गोवित्तं गोविदं भक्तकृतस्तुतिरूपाया वाचोवेत्तारमित्यर्थः। गोविदं पण्डितं वा "अइउण्" इत्यादिचतुर्दशसूत्रकर्तृत्वात्। तथा वज्रबाहुं वज्रं बाहौ यस्य स बज्रबाहुस्तं बज्रबाहुं वज्रहस्तं रुद्रपक्षे पिनाक एव वज्रस्थानीयोऽवगन्तव्यः। शतक्रतुपक्षे वज्रं वज्राख्यं प्रसिद्धं रुद्रायुधं तदेवावगन्तव्यमितिविवेकः। तथा अज्म जयन्तम् अज्मेति सङ्ग्रामनामेति· निघण्टुः, अजतेर्गत्यर्थस्येति यास्कः, अज्म सङ्ग्रामं जयन्तं युद्धस्य जेतारमित्यर्थः। तथा ओजसा बलेन प्रमृणन्तं शत्रूनितितिशेषः। शत्रून् हिंसन्तं "मृणहिंसायां (तु० प०)" मृणतिर्हिंसाकर्मेतियास्कोक्तेश्च तथा इन्द्रं "इदि परमैश्वर्ये" ततो रक्प्रत्ययः इन्दतीति इन्द्रस्तं तथोक्तं परमैश्वर्य्ययुक्तमित्यर्थः। हे सजाताः, एतादृशममुं रुद्रमनुवीरयध्वमनुसंरभध्वञ्चेत्यर्थः। रुद्रपक्षे इन्द्रपदं रुद्रविशेषणत्वेन व्याख्येयं शतक्रतु पक्षे तु इन्द्रपदं विशेष्यत्वेनैव व्याख्येयमित्यूहोऽनुसन्धेयः। अन्यदिन्द्रपक्षेऽपि समानमेव॥ ६॥

अ॒भि गो॒त्राणि॒ सह॑सा॒ गाह॑मानो द॒यो व्वी॒रः श॒तम॑न्यु॒रिन्द्रः॑।
दु॒श्च्य॒व॒नः पृ॑त॒ना॒षाड॑यु॒द्ध्यो॒ऽस्माक॑ꣳ सेना॑ऽअवतु॒ प्र यु॒त्सु॥ ७॥

रुद्रपक्षे अतिरिक्तमितिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। युत्सु सङ्ग्रामेषु ईदृशो रुद्रोऽस्माकं सेनाः प्रावतु प्रकर्षेण अवतु रक्षत्वित्यर्थः। "छन्दसि परेऽपि" इति पाणिनिवचनादिहोपसर्गस्य क्रियापदात्परः प्रयोगोऽवगन्तव्यः। रुद्रपक्षे इन्द्रपदं रुद्रविशेषणत्वेन व्याख्येयं तद्यथा कीदृशो रुद्र इत्यपेक्षायामुच्यते। इन्द्रः इन्दतीति इन्द्रः परमैश्वर्य्ययुक्तः परमैश्वर्य्ययुक्तत्वादेव महादेव इति कथ्यते, इत्यभिप्रायः। अथवा इन्द्रः इन्द्ररूपो वेत्यर्थः। तथा गोत्राणि असुरकुलानि मेघवृन्दानि वा सहसा बलेन अभिगाहमानः सर्वतो भावेन विलोड़यन्नित्यर्थः। सहइतिबलनामेतिनिघण्टुः। तथा अदयः दयारहितः परसैन्यानां पापिनाञ्च कृते इतिशेषः। तथावीरः विक्रान्तः शूर इत्यर्थः। तथा शतमन्युः शतमसङ्ख्योमनुर्यज्ञः क्रोधो वा यस्य स शतमन्युः शतयज्ञः शतक्रोधो वा "मनुर्यज्ञेक्रतौ क्रुधी" त्यमरः। शतक्रोधत्वादेव महाप्रलये कालाग्निरूपं धृत्वा सर्वमिदं जगत् रुद्र एव विनाशयति

क्रोधाग्निना सर्वं भस्मीकरोतीत्याशयः। शतक्रत्वाख्यो यः शचीपतिस्तद्रूपोऽपि रुद्र एवेति वा "सर्वंठं० रुद्रमयं जगदितिश्रुतेः। इन्द्रपक्षे तु इन्द्र इति विशेष्यपदं तद्विशेषणञ्च शतमन्युरिति पदं "शतमन्युर्दिवस्पतिरि"त्यभिधानात्। तथा दुश्च्यवनः दुःखेन च्यावयितुं शक्यः अप्रच्याव्य इत्यर्थः। तथा पृतनाषाट् पृतनां सेनां सहते अभिभवतीति पृतनाषाट् शत्रुसेनानां पराभवकर्त्तेत्यर्थः। तथा अयुध्यः योद्धुमशक्यः नास्ति युध्यः प्रतियोधास्येति वा। अस्यरुद्रस्य इन्द्रस्य वा बलं ज्ञात्वा त्रैलोक्येऽनेन सह केऽपि युद्धं कर्त्तुं न शक्नुवन्तीत्यभिप्रायः। अतोऽजय्योऽयं रुद्र इन्द्रोवेतिभावः। स एतादृशो रुद्र इन्द्रो वास्माकं सेनाः प्रावतु प्रकर्षेण रक्षत्वित्याशयः॥ ७॥

इन्द्रंऽआसान्नेता बृहस्पतिर्दक्षिणायज्ञः पुर ऽएतु सोमः॑। 
देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्रम्॥ ७॥

रुद्रपक्षे अतिरिक्तमितिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। ईदृशो रुद्र ईदृशीनाम् आसां देवसेनानां नेता नियामको भवत्वितिशेषः। कीदृशो रुद्र इत्यपेक्षायामुच्यते। बृहस्पतिः वाग्देव्या अधिपतिः पालक इत्यर्थः। "वाग् वै बृहती तस्या एष पतिर्बृहस्पतिरि"ति श्रुतेः। नृत्यावसाने नटराजराज इतिश्लोकेन रुद्रस्य "अइउण्" इत्यादिचतुर्दशसूत्रकर्त्तृत्वज्ञापनादस्य रुद्रस्यापि बृहस्पतिरिति विशेषणपदेन वाक्पतित्वं ध्वन्यते, इत्यभिप्रायः। पुनः कीदृशो रुद्रः इन्द्रः परमैश्वर्य्ययुक्तः। एतादृशो रुद्र इत्यर्थः। इन्द्रपक्षे तु इन्द्रपदं बृहस्पतिपदञ्चान्यथैव पृथगेव व्याख्येयं तद्यथा इन्द्रः देवराट् बृहस्पतिः इन्द्रमन्त्री च आसां देवसेनानां नेता नियामकः रक्षको भवत्वित्यर्थः। मन्त्रिप्रणीतानि कार्य्याणि राजा करोतीति सकलजनानुभवप्रसिद्धिस्तदेवात्र श्रुत्याप्यभिहितम्। "इन्द्रऽआसान्नेता बृहस्पतिरि"ति। तथा दक्षिणायज्ञः दक्षिणाभिर्युक्तोयागः सोऽपि सोम एव अर्थात्सहस्रदक्षिणात्मकः सोमयागः आसां देवसेनानां पुरः अग्रे एतु आगच्छत्वित्यर्थः। कीदृशीनां देवसेनानामित्यपेक्षायामुच्यते। अभिभञ्जतीनाम् अभिसर्वतो भावेन शत्रून् मर्द्दयन्तीनामित्यर्थः। तथा जयन्तीनां शत्रूनिति शेषः। एवं प्रथमपुरुषनिदर्शनेन परोक्षवृत्त्या रुद्रमिन्द्रं वा प्रत्युक्त्वा इदानीं प्रथमपुरुषत्वेनैव परोक्षवृत्त्या मरुद्गणं प्रत्युच्यते मरुतो यन्त्वग्रमिति। आसां देवसेनानामग्रे मरुतो मरुद्गणा एकोनपञ्चाशत्सङ्ख्यकाः वायवः यन्तु गच्छन्त्वित्यर्थः। एताः देवसेनाः सोमं पीत्वा मदोन्मत्ताः सत्यः शत्रुसेनाः जेष्यन्ति अतो मरुतोऽपि देवसेनासंरक्षणार्थं सोमपानं कृत्वातीवानन्दयुक्ताः सन्तः आसां देवसेनानामग्रे गच्छन्त्वित्याशयो ध्वन्यतेऽनया श्रुत्येति भावः। इन्द्रपक्षे तु आसां पूर्वोक्तानां देवसेनानामिन्द्रो नेतास्तु तस्येन्द्रस्य बलवृद्ध्यर्थं सदक्षिणाकः सोमः पुर एतु आगच्छतु। सोमस्यागमनेसति मरुद्भिः सहित इन्द्रः सोमं पीत्वातीव हर्षयुक्तः सन् शत्रूञ्जेष्यतीत्यभिप्रायेणैव अनया ऋचाभ्युक्तम् "इन्द्रऽआसान्नेते"त्यादि अतोऽन्यत्राप्युक्तं तथाहि ( शु० य० वे० वा० मा० सं० ७, ३७, ) "सजोषाऽइन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्। जहि शत्रूँ २॥ रपमृधो नुदस्वाथाभयं कृणु हि विश्वतो नः॥" इति॥ ८॥

इन्द्रस्य वृष्णो वरुणस्य राज्ञऽआदित्यानाम्मरुताᳬशर्द्धऽउग्रम्।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात्॥ ९॥

रुद्रपक्षे अतिरिक्तमितिकारिकया पूर्ववदिहापि हीनपदान्यध्याहृत्य व्याख्यायतेऽय मन्त्रः। तत्र रुद्रस्येति षष्ठ्यन्तंविशेष्यपदमध्याहार्य्यम्, इन्द्रस्य वृष्ण इति च रुद्रविशेषणत्वेनाभ्युन्नेयं तद्यथा इन्दतीति इन्द्रस्तस्य इन्द्रस्य परमैश्वर्य्ययुक्तस्य वृष्णःवर्षतीति वृषा तस्य वृष्णः कामाभिवर्षितुः रुद्रस्येतिशेषः। तथा राज्ञो वरुणस्य राजसूययाजिनो वरुणस्येत्यर्थः। तथा आदित्यानां द्वादशानामितिशेषः। द्वादशादित्यानाम् अदितेः पुत्राणां सूर्य्यादीनामित्यर्थः। तथा मरुतां च एकोनपञ्चाशद्व्रातानामित्यर्थः। एषां देवानामुग्रमुत्कृष्टमुद्गूर्णायुधं वा शर्द्धः बलं हस्त्यश्वरथादि सैन्यं घोषो जितं जितमितिशब्दश्च उदस्थात् उद्बभूव उत्थितोऽभूदित्यर्थः। कीदृशानां देवानामित्यपेक्षायामुच्यते। महामनसां महन्मनो येषां ते महामनसस्तेषां महामनसामुत्कृष्टचेतसां युद्धे स्थिरचित्तानामित्यर्थः। तथा भुवनच्यवानां भुवनं लोकं च्यावयन्तीति भुवनच्यवास्तेषां भुवनच्यवानां भुवनच्यावनसमर्थानामित्यर्थः। तथा जयतां जयशालिनां विजयमानानामित्यर्थः। एतादृशानां देवानां बलं हस्त्यश्वरथादिकं जितं जितमितिशब्दश्च उत्थितोऽभूदित्यर्थः। पूर्वोक्तकतिपयमन्त्रेषुस्वाभिप्रेतार्थस्याभिशंसनमिहतु तस्यैवार्थस्य सिद्धार्थत्वेनानुवर्णनमित्यनुसन्धेयम्॥ ९॥

उद्धर्षय मघवन्नायुधान्युत्सत्वनाम्मामकानाम्मनाᳬसि।
उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानाञ्जयतां यन्तुघोषाः॥ १०॥

रुद्रपक्षे अतिरिक्तमितिकारिकया विशेष्यपदमध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तत्रोपसर्गावृत्या क्रियापदाभ्यावृत्तिरप्यवगन्तव्या। तथाहि मघं धनमस्यातीति मघवा तत्सम्बुद्धौ हे मघवन्, धनवन्, हे रुद्र, त्वम् आयुधानि स्वकीयानि पिनाकादीनि पाशुपतास्त्राणि उद्धर्षय हर्षयुक्तानि कुरु उल्लासयेत्यर्थः। तथा मामकानां मदीयानां सत्वनां प्राणिनां मनांसि च चेतांसि उद्धर्षय प्रोत्साहय मामकानां प्राणिनां मनांसि हर्षयुक्तानि उत्साहपूर्णानि कुर्वित्यर्थः। तथा हे वृत्रहन्, असुरघातिन्, तद्रूप, हे रुद्र, त्वं वाजिनामश्वानां वाजिनानि शीघ्रगमनानि उद्धर्षय उल्लासय अश्वानां गमनानि उत्कृष्टानि यथा स्युस्तथाकुर्वित्यर्थः। तथा जयतां जयशालिनां विजयमानानां रथानां घोषाः शब्दा उद्यन्तु उद्गच्छन्तु तथा त्वं सम्पादयेत्याशयः। त्वत्प्रसादाद्रथा अपि सशब्दाः प्रसरन्त्वितिभावः। इन्द्रपक्षे यथास्थितमेव व्याख्येयम्। "इन्द्रो मरुत्वान्मघवा, वासवोवृत्रहावृषा" इति च कोशादौ दर्शनात्। शेषं पूर्ववदत्रापि॥ १०॥

अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं याऽइषवस्ता जयन्तु।
अस्माकं वीराऽउत्तरे भवन्त्वस्माँ २॥ऽ उंदेवाऽअवता हवेषु॥ ११॥

रुद्रपक्षे अतिरिक्तमतिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। ध्वजेषु

समृतेषु "ऋगतौ" तस्मात्सम्पूर्वात् क्तप्रत्ययः, सङ्गतेषु शत्रुध्वजैः सह सङ्गतेषु सत्सु इन्द्रः इन्दतीति इन्द्रः परमैश्वर्य्ययुक्तो रुद्रः अस्माकं रुद्रस्नपनादिकर्त्तॄणां रक्षिता भवत्विति शेषः। तथा सति अस्माकं या इषवः ता जयन्तु शत्रूनित्यनुषङ्गः, रुद्रप्रसादादिति शेषः। अस्मदीयैः सैन्यैः प्रेरिताः प्रक्षिप्ताः बाणाः परसैन्यानि घ्नन्त्वित्यर्थः। रुद्रप्रसादादित्यभिप्रायः। तथा अस्माकं वीराः शूराः योद्धारः उत्तरे भवन्तु 'रुद्रप्रसादादिति शेषः। परकीयभटेभ्यः शत्रुसेनाभ्यः उत्कृष्टा भवन्त्वित्यर्थः। इदानीं देवान्प्रत्युच्यते। हे देवाः द्युतिस्तुतिक्रीडादियुक्ता रुद्रानुचराः, हवेषु सङ्ग्रामेषु अस्मान् उ 'उकार एवार्थः' अस्मानेव यूयमवता 'छान्दसोदीर्घः, "अन्येषामपिदृश्यते" इतिपाणिनिवचनात्। अवत रक्षतेत्यर्थः। न शत्रून् अवतेत्याशयः। इन्द्रपक्षे रुद्र इति न अध्याहर्त्तव्यं ध्वजेषु समृतेषु शत्रुध्वजैः सह सङ्गतेषु सत्सु इन्द्रः पुरन्दरः अस्माकं रक्षिता भवत्विति शेषः। अन्यत्पूर्ववदेव स्पष्टम्॥ ११॥

अ॒मीषां॑ चि॒त्तं प्र॑तिलो॒भय॑न्ती गृहा॒णाङ्गा॒न्यप्वे॒ परे॑हि।
अ॒भि प्रेहि॒ निर्द॑ह हृ॒त्सु शोकै॑र॒न्धेना॒मित्रा॒स्तम॑सा सचन्ताम्॥ १२॥

अप्वेति काचिद्देवता सा व्याधिर्भयं वा एतया विद्धोऽपचीयते यस्मात्तस्माद्प्वेति नाम। (अपपूर्वाद्वातेरन्तर्भूतण्यर्थात् "अन्येभ्योऽपि दृश्यते" इति डप्रत्ययः, अपशब्दान्त्याकारलोपश्च छान्दसोऽवगन्तव्यः, ततश्च टाप्प्रत्ययोऽनुसन्धेयः) अपवापयति अपगमयति सुखं प्राणाँश्चेत्यप्वा "ऐन्द्योऽभिरूपा द्वादश भवन्ती"ति श्रुतेर्यद्यपि इयमपि इन्द्रसम्बन्धिन्येव तथापि इह रुद्रस्नपनप्रकरणवशात् रुद्रसम्बन्धिन्यपि वक्तुं शक्यते। अथवा अस्मिन्प्रकरणे रुद्र एव इन्द्ररूपेण स्तूयते तेन इन्द्रसम्बन्धिन्यपि रुद्रसम्बन्धिन्येव गृहीतव्या। ततोऽयमर्थः। हे अप्वे, रुद्रसेने, अथवा हे अप्वे, इन्द्ररूपस्य रुद्रस्य सेने, अमीषां शत्रूणां शत्रुसैन्यसम्बन्धिनां मनुष्याणां चित्तं चित्तानि प्रतिलोभयन्ती विमोहयन्ती सती त्वम् अङ्गानि गात्राणि गृहाण तान्यपि शत्रूणामेवेति शेषः। गृहीत्वा च परेहि शत्रूणामङ्गान्यादाय परागच्छेत्यर्थः। प्रतिलोभयन्तीत्यत्र "लुभ विमोहने" इत्यस्मात्प्रतिपूर्वात् शतृप्रत्ययस्ततो ङीप्प्रत्ययो बोध्यः। चित्तमित्यत्र सुपां सुपो भवन्तीति पाणिन्युक्तेर्द्वितीयाबहुवचनस्थाने द्वितीयैकवचनमित्यनुसन्धेयम्। तथा हे अप्वे, रुद्रसेने, (इन्द्ररूपस्य रुद्रस्य सेने, इति वा) त्वम् अभिप्रेहि पुनरन्यानपि शत्रून् गृहीतुमभितः शत्रुसङ्घं प्रत्यागच्छेत्यर्थः। शत्रून् प्रत्यागत्य च हृत्सु शोकैर्निर्दह (हृत्स्वित्यत्र विभक्तिव्यत्ययः) तेषां मदीयशत्रूणां हृदयानि शोकैर्धनपुत्रादिवियोगजन्यैर्भस्मीकुर्वित्यभिप्रायः। किञ्च हे अप्वे, रुद्रसेने, (इन्द्ररूपस्य रुद्रस्य सेने, इति वा) त्वत्प्रसादात् अमित्राः शत्रवोऽन्धेन तमसा गाढान्धकारेण अज्ञानेन व्यामोहेन सचन्तां सङ्गच्छन्तां संयुक्ता भवन्त्वित्यर्थः। "षच सम्बन्धे" इत्यस्माल्लोट्॥ १२॥

अव॑सृष्टा॒ परा॑पत॒ शर॑व्ये॒ ब्रह्म॑सᳪशिते।
गच्छा॒मित्रा॒न्प्रप॑द्यस्व॒ मामीषां॒ कञ्च॒नोच्छि॑षः॥ १३॥

इदानीमनया ऋचा इषुः स्तूयते। तथाहि हिंसिका शरमयी हेतिः शरव्येत्यभिधीयते तां प्रत्युच्यते। हे शरव्ये, शरमये, हे ब्रह्मसंशिते ब्रह्मणा वेदेन अर्थात् वेदमन्त्रेण संशिता

ब्रह्मसंशिता तत्सम्बुद्धौ हे ब्रह्मसंशिते, "शोतनूकरणे" तनूकरणमतितीक्ष्णीकरणम्, अतोऽयमर्थः। हे ब्रह्मसंशिते, ब्रह्मणाऽतितीक्ष्णीकृते, हे इषो, अवसृष्टा अस्माभिः प्रक्षिप्ता सती त्वं परापत परसैन्ये पतिता भव। पतित्वा च अमित्रान् गच्छ अस्मच्छत्रून्प्रतियाहि। गत्वा च तान् प्रपद्यस्व प्राप्नुहि। प्राप्य च शत्रुशरीरेषु प्रविशेत्यर्थः। प्रविश्य च अमीषां शत्रूणां मध्ये कञ्चन चन शब्दोऽप्यर्थेकमपिशत्रुं मा उच्छिषः मा अवशेषय अवशिष्टं मा कुर्वित्यर्थः। सर्वानपि शत्रून् विनाशयेत्यभिप्रायः। "शिष्लृ विशेषणे" इत्यस्मात् "छन्दसि लुङ्लङ्लिटः" इतिपाणिनिवचनादिह लोडर्थेलुङ्। तत्र लृदित्वात्पुषादीत्यादिना च्लेरङ्बोध्यः॥ १३॥

प्रेता जयता नरऽइन्द्रो वः शर्म्म यच्छतु।
उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ॥ १४॥

मन्त्रेऽस्मिन् यथासथेत्यत्र यच्छब्दोपादानात्तथेतितच्छब्दोऽध्याहर्त्तव्यः, यत्तदोर्नित्यसम्बन्धात्। तथाहि—इदानीं योद्धॄन्प्रत्युच्यते। हे नरः, अस्मदीया योद्धारो मनुष्याः, यूयं प्रेत परसैन्यं प्रति प्रकर्षेण गच्छत। ततो जयत शत्रूनिति शेषः। विजयं प्राप्नुतेत्यर्थः। प्रेतेत्यत्र "द्व्यचोऽतस्तिङः" इति दीर्घः। तथा जयतेत्यत्र "अन्येषामपि दृश्यते" इति दीर्घः। किञ्च हेनरः, अस्मीदा योद्धारो मनुष्याः, इन्द्रः इन्दतीति इन्द्रः परमैश्वर्ययुक्तो रुद्रः, अथवा इन्द्रः सहस्राक्षो देवेन्द्रः वः युष्मभ्यं शर्म सुखं यच्छतु ददात्वित्यर्थः। "दाण् दाने" ततो लोट् "पाघ्राध्मे"त्यादिना यच्छादेशः। किंच यथा यूयम् अनाधृष्या असथ केनाप्यतिरस्कार्य्या भवेत तथा वः युष्माकं बाहवः हस्ता उग्रा उद्गूर्णायुधाः सन्तु भवन्त्वित्यर्थः। असथेत्यत्र लिङर्थे लेट्, तस्य "लेटोऽडाटौ" इत्यडागमः। अस्तेर्लेण्मध्यमपुरुषबहुवचने असथेति रूपं बोध्यम्॥ १४॥

असौ या सेना मरुतः परेषामभ्यैति नऽओजसा स्पर्द्धमाना।
तां गूहत तमसापव्रतेन यथामीऽअन्योऽअन्यन्न जानन्॥ १५॥

योद्धॄन्प्रत्युक्त्वा इदानीं मरुतः प्रत्युच्यते हे मरुतः, ओजसा बलेन स्पर्द्धमाना स्पर्द्धांकुर्वाणा परेषां शत्रूणां या सेना नः अस्मान् अभ्यैति आभिमुख्येनागच्छति। तां सेनाम् अपव्रतेन तमसा यूयं गूहत (व्रतमितिकर्म्मनामेति निघण्टुः) अपगतं व्रतं कर्म्म यस्मात् तदपव्रतं तमः तेन अपव्रतेन अपगतकर्मणा तमसा अन्धकारेण तथा गूहत आच्छादयत। यथा अमी सैनिकाः अन्योऽन्यं न जानन् परस्परं न जानीयुरित्यर्थः। शत्रूणां कर्म्म यथापगतं भवेत् अर्थात् शत्रूणां सर्वाणि कार्य्याणि यथा विनश्येयुस्तथा कुरुतेत्यभिप्रायः। येनान्धकारेण व्याप्तानां शत्रूणां सर्वेतिकर्त्तव्यता विनश्येत्तादृशेन गाढान्धकारेण तदीयसेनां संयुक्तांकुरुतेत्याशयः॥ १५॥

यत्र बाणाः सम्पतन्ति कुमारा विशिखाऽइव।
तन्नऽइन्द्रो बृहस्पतिरदितिः शर्म्म यच्छतु विश्वाहा शर्म्म यच्छतु॥१६॥

यत्र यस्मिन् युद्धे बाणाः विशिखा विगता शिखा येषां ते विशिखाः शिखारहिता विकीर्णकेशाः मुण्डितमुण्डा वा कुमारा इव सम्पतन्ति इतस्ततो निपतन्ति शत्रुसैन्यमध्ये सर्वतः प्रसरन्तीत्यर्थः। सर्वतो मुण्डितमुण्डा विकीर्णकेशा वा कुमारा अतिबालाश्चपलाः सन्तो यथा क्रीड़ार्थमितस्ततो गच्छन्ति। तथा बाणा अपि यस्मिन् युद्धे चपलाः सन्तः शत्रुसैन्यमध्ये इतस्ततः प्रचरन्तीतिभावः। तत्र तस्मिन् युद्धे इन्द्रः इन्दतीति इन्द्रः परमैश्वर्य्ययुक्तो रुद्रः अथवा इन्द्रः शतक्रत्वाख्यो देवेश एव नः अस्मभ्यं शर्म्म यच्छतु। (शर्म्मेति सुखनामेति निघण्टुः। दाण् दाने तस्य पाघ्राध्मेत्यादिना यच्छादेशः) सुखं ददात्वित्यर्थः। न केवलमिन्द्र एव शर्म्म यच्छतु किन्तु बृहस्पतिर्देवगुरुस्तथा अदितिर्देवमाता च नोऽस्मभ्यं शर्म्म सुखं यच्छतु ददात्वित्यर्थः। तत्र युद्ध एव शर्म्म यच्छत्विति न किन्तु विश्वाहा सर्वदा इन्द्रो बृहस्पतिरदितिश्च नोऽस्मभ्यं शर्म्म सुखं यच्छतु ददात्वित्यर्थः॥ १६॥

मर्म्माणि ते व्वर्म्मणा च्छादयामि सोमस्त्वा राजामृतेनानुवस्ताम्।
उरोर्व्वरीयो व्वरुणस्ते कृणोतु जयन्तन्त्वानु देवा मदन्तु॥ १७॥

रुद्रस्नपनपक्षे अतिरिक्तमिति कारिकया हीनपदान्यध्याहृत्यव्याख्यायतेऽयं मन्त्रः। इदादौ स्वसैन्यं प्रत्युच्यते ? हे अस्मदीय योद्धृपुरुष, ते तव मर्म्माणि जीवस्थानानि वर्म्मणा कवचेनाहंच्छादयामि आवृणोमीत्यर्थः। तथा राजा "राजा वै राजसूयेनेष्ट्वा भवती"ति श्रुतेः राजसूययाजी "सोमोऽस्माकं ब्राह्मणानाँ राजे"तिश्रुतेर्ब्राह्मणादीनामधिपतिः सोमः त्वा त्वाममृतेन नास्ति मृतं मरणं यस्य तदमृतं तेन अमृतेन मरणधर्म्मरहितेन वर्म्मणा कवचेन अनुवस्ताम् ("वस आच्छादने" अदादिः, ततो लोट्) मदाच्छादनानन्तरं सोमोपि त्वामाच्छादयत्वित्यर्थः। किञ्च हे अस्मदीययोद्धृपुरुष, वरुणः अपाम्पतिः ते तव वर्म्म कवचं उरोः विस्तीर्णादपि वरीयः उरुतरं विस्तीर्णतरं कृणोतु करोतु। वरुणस्त्वदीयं कवचमुत्कृष्टादप्युत्कृष्टं करोत्वितिभावः। उरुशब्दोविस्तीर्णवाचकः अत्यन्तमुरु वरीयः इयसुनि प्रस्थस्फ इत्यादिना उरोर्वरादेशः। तथा हे अस्मदीययोद्धृपुरुष, जयन्तं "शत्रूनिति शेषः" विजयं प्राप्नुवन्तमित्यर्थः त्वा त्वां देवा अन्येऽपि इन्द्रादयो देवाः मदन्तु अनुकूला भूत्वा हृष्यन्तु अन्तर्भावितण्यर्थो वा प्रोत्साहयन्तु प्रवर्द्धयन्त्वित्यर्थः। जयशालिनं त्वां सर्वेदेवा अनुमदन्तु त्वदीयविजयस्य अनुमोदनं कुर्वन्त्वित्यर्थः। इन्द्रपक्षेऽन्यभाष्यवदेव यथास्थितमेव व्याख्येयं तदेव मह्यमपि रोचते। अतोऽस्य मन्त्रस्येन्द्रपक्षे व्याख्यान्तरं न क्रियते॥१७॥

एवमप्रतिरथंव्याख्याय विभ्राडित्यादि सूर्य्यसूक्तस्यार्थं विवृणोमि तद्यथा—

व्विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्द्दधद्यज्ञपतावविहुतम्।
व्वातजूतो योऽअभिरक्षति त्मना प्रजाः पुपोष पुरुधा व्विराजति॥१॥

विभ्राडित्यादि चतुर्दशर्चस्य चित्रमिति कीलकसहितस्य सूर्य्योदेवता आद्याया विभ्राट् सूर्य्य ऋषिर्ज्जगतीच्छन्द उदुत्यमितितिसृणाम्प्रस्कण्व ऋषिर्गायत्रीच्छन्दस्तम्प्रत्नथेति कीलकस्य वत्सारकश्यप ऋषिर्ज्जगतीच्छन्दो विश्वेदेवा देवता अयं व्वेन इति कीलकस्य वेन

ऋषिस्त्रिष्टुप्छन्दः सोमो देवता चित्रन्देवानामिति कीलकस्य कुत्सआङ्गिरस ऋषिस्त्रिष्टुप्छन्द आन इत्यगस्त्य ऋषिस्त्रिष्टुप्छन्दो यदद्येति श्रुतकक्षसुतकक्षावृषी गायत्रीछन्दस्तरणिरिति प्रस्कण्व ऋषिर्गायत्रीच्छन्दस्तत्सूर्य्यस्येति द्वयोः कुत्सऋषिस्त्रिष्टुप्छन्दो वण्महानितिद्वयोर्जम-दग्निर्ऋषिर्बृहतीसतोबृहत्यौच्छन्दसी श्रायन्त इवेति नृमेधऋषिर्बृहतीच्छन्दो अद्यादेवा इति कुत्स ऋषिस्त्रिष्टुप्छन्द आकृष्णेनेति हिरण्यस्तूप आङ्गिरसऋषिस्त्रिष्टुप्छन्दो रुद्रनेत्रजपे विनियोगः ॥ स्नपनपक्षे रुद्रनेत्रस्नपने विनियोगः। होमपक्षे रुद्रनेत्रहोमे विनियोगः इत्येवं वाक्योहः कर्त्तव्यः। रुद्रस्नपनादिप्रकरणवशादिहानेन सूक्तेनापि रुद्र एव सूर्य्यरूपेण स्तूयते। अतिरिक्तमितिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। यः सूर्य्यः अर्थात्सूर्य्यरूपोरुद्रः, रवेः स्तुतिपक्षे सूर्य्य आदित्य एव त्मना आत्मना स्वेनैव नान्यस्य कस्य-चित्साहाय्येनेति भावः, प्रजाः अभिरक्षति सर्वतो भावेन पालयति। तथा यश्च सूर्य्यः प्रजाः पुपोष पुष्णाति च प्रकाशोष्णवर्षैरितिशेषः। तथा यश्च सूर्य्यः पुरुधा बहुधा विराजति विराजते शोभते; इत्यर्थः। स ईदृशः सूर्य्यः सूर्य्यरूपो रुद्रः, रवेः स्तुतिपक्षे सूर्य्य आदित्य एव ग्राह्यः सूर्य्यरूपो रुद्रः रुद्ररूपश्च सूर्य्योऽवगन्तव्यः उभयोरभेद एव "एष विष्णुः शिवश्चैव ब्रह्मा चैव प्रजापतिः" इति व्यासोक्तेः सः पूर्वोक्तः सूर्य्यः सूर्य्यरूपो रुद्रः सोम्यं सोममयं बृहत् महत् प्रसिद्धमित्यर्थः, मधु मधुरस्वादं स्नपनद्रव्यं होमपक्षे होमीयद्रव्यं जपपक्षे स्तुतिरूपं वाक्यामृतं पिबतु। रवेः स्तुतिपक्षे तु सः पूर्वोक्तः सूर्य्यः बृहत् महत् सोम्यं सोममयं मधुरं स्तुतिवाक्यामृतं पिबतु कीदृशः सूर्य्यः रुद्रो वा इत्यपेक्षायामुच्यते विभ्राट् विविधं नाना-ज्योतिःस्वरूपेण भ्राजते शोभते इति विभ्राट् यद्वा विशेषेण भ्राजते दीप्यते इति विभ्राट् बहु-दीप्यमान इत्यर्थः। तथा यज्ञपतौ यजमाने अविह्रुतम् अकुटिलम् अखण्डितं सम्पूर्णम् आयुः जीवनं दधत् स्थापयन्नित्यर्थः। "ह्वृकौटिल्ये" "ह्वृह्वरेश्छन्दसि" इति ह्वु आदेशः। तथा वातजूतः वातेन जूतः प्रेरित इति वातजूतः स्वप्राणवायुना प्रेरित इत्यर्थः। रविपक्षे तु प्रसिद्धेनैव वायुना प्रेरितः वातेन प्रेरितं रविमण्डलं भ्रमतीति प्रसिद्धेः। ईदृशो यः सूर्य्यो रुद्रो वा सः सोम्यं मधुपिबतु। पीत्वाचास्मान् सुखयत्वित्याशंसावाक्यार्थः। त्मनेत्यत्र "मन्त्रेष्वाङ्यादेरात्मनः" इत्याकारलोपः। तथा पुपोषेत्यत्र "छन्दसि लुङ्लङ्लिटः" इति लडर्थे लिट् ॥ १ ॥

उदु॒त्यं जा॒तवे॑दसं दे॒वं व्व॑हन्ति के॒तवः॑ ।
दृ॒शे व्विश्वा॑य॒ सूर्य्य॑म् ॥ २ ॥

उदुत्यमिति सन्ध्याप्रकरणे व्याख्यातं तस्य व्याख्या तत्रैव द्रष्टव्या ॥ २ ॥

येना॑ पावक॒ चक्ष॑सा भु॒रण्य॑न्तं॒ जनाँ॑ २॥ऽ अनु॑ ।
त्वं व्व॑रुण॒ पश्य॑सि ॥ ३ ॥

हे पावक, शोधक, रुद्र, अथवा हे पावक, पावयितः, सूर्य्य, येन चक्षसा दर्शनेन त्वं भुरण्यन्तं क्षिप्रपाती पक्षी भुरण्युः भुरण्युमात्मानं करोतीति भुरण्यति भुरण्यतीति भुर-

ण्यन् तं भुरण्यन्तं भुरण्यपक्षिवत्क्षिप्रं यथा स्यात्तथाशीघ्रं स्वर्गंच्छन्तं पुरुषम् अनुपश्यसि। तेन चक्षसा दर्शनेन हे वरुण. वृणोतीति वरुणस्तत्सम्बुद्धौ हे वरुण, अस्माभिः प्रार्थ्यमान, हे रुद्र, अथवा हे सूर्य्य, जनान् अर्थादस्मानपि पश्य तेन दर्शनेनास्मानप्यवलोकयेत्यर्थः। मन्त्रेऽस्मिन् यद्यपि "कृशानुः पावकोऽनलः" इत्यभिधानात्पावकशब्देन वह्निरेव गृह्यते तथा प्रचेता वरुणः पाशीत्यभिधानाद्वरुणशब्देन अपां पतिरेव गृह्यते तथाप्यत्र रुद्रस्नपन-प्रकरणवशात्पावकवरुणशब्दाभ्यां रुद्र एवाभिधीयते। एवं सूर्य्यस्तुतिपक्षे सूर्य्य एव पावक-वरुणशब्दाभ्यामुच्यते। भुरण्यन्तमिति क्विबन्ताच्छतृप्रत्यये द्वितीयैकवचने रूपम्। चक्षसेति चक्षेरसन्तस्य तृतीयैकवचने रूपम्। यत्तदोर्नित्यसम्बन्धात्पूर्वार्द्धे यच्छब्दोपादानादुत्तरार्द्धे-ऽपितच्छब्दाध्याहारेण वाक्यपूर्त्तिरनुसन्धेया॥ ३॥

दैव्यावद्ध्वर्य्यू ऽआगतꣳ रथेन सूर्य्यत्वचा।
मद्ध्वायज्ञꣳ समञ्जाथे॥ तं प्रत्नथायंवेनश्चित्रन्देवानाम्॥ ४॥

अश्विनौहि देवानामध्वर्य्यू तौ प्रत्युच्यते हे देव्यौ देवसम्बन्धिनौ, अध्वर्य्यू, अध्व-रस्य यज्ञस्य नेतारौ, अश्विनौ, युवां सूर्य्यत्वचा सूर्य्यस्येव त्वक् कान्तिः शोभा यस्य असौ सूर्य्यत्वक् तेन सूर्य्यत्वचा सूर्य्यकान्तिविशिष्टेन अतिदीप्तिमता रथेन इहागतमिहागच्छतम्। आगत्य च मध्वा मधुना मधुस्वादयुक्तेन स्नपनद्रव्येण अन्यत्र तु मधुररसोपेतेन सोमचरुपु-रोडासदध्यादिद्रव्यरूपेण हविषा चरुसाफल्यादिद्रव्यरूपेण वा हविषा यज्ञं समञ्जाथे स्नपन-रूपं जपरूपं होमरूपं वा मदीयं यागं संम्रक्षयतं समं कुरुतं प्रचुरत्वेन सम्पादयतमित्यर्थः। मध्वेत्यत्रागमशास्त्रस्यानित्यत्वान्नुमागमाभावोऽवगन्तव्यः, आगमशास्त्रमनित्यमित्युक्तेः। सम्पूर्वादञ्जेर्लोण्मध्यमपुरुषद्विवचने सुप्तिङुपग्रहेतिकारिकयोपग्रहव्यत्ययेनात्मनेपदे समञ्जा-थामिति रूपम्। तं प्रत्नथा, अयं वेनः, चित्रन्देवानाम्, इति प्रतीकोक्तास्तिस्रः ऋचः पठ-नीयाः, ताश्चाग्रेद्रष्टव्याः, तासां तत्रैव व्याख्या द्रष्टव्या॥ ४॥

तं प्रत्नथा पूर्व्वथा व्विश्वथेमथा ज्येष्ठतातिम्बर्हिषदꣳस्वर्व्विदम्।
प्रतीचीनं वृजनन्दोहसे धुनिमाशुञ्जयन्तमनु यासु व्वर्द्धसे॥ ५॥

अतिरिक्तमितिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे रुद्र, यासु रुद्रस्नपनादिक्रियासु अनुवर्द्धसे। ईदृशं रुद्रस्नपनादिकर्म्मकर्त्तारमनुष्ठातृपुरुषमनुलक्ष्य यस्त्वं वर्द्धसे। ईदृशं तं त्वां तासु स्नपनादिक्रियासु अहं स्तौमि अनेन स्नपनादिद्रव्येण स्नपयामि चेतिशेषः। कीदृशमनुष्ठातृपुरुषमनुलक्ष्य वर्द्धसे इत्यपेक्षायामुच्यते। धुनिं त्वत्प्रसादाच्छत्रून् कम्पयन्तं तथा आशुं शीघ्रकारिणं तथा जयन्तं जयशीलं त्वत्प्रसादाच्छत्रूणां जेतारमित्यर्थः। ईदृशमनुष्ठातारमनुलक्ष्य त्वं वर्द्धसे इत्यर्थः। यत्तदोर्नित्यसम्बन्धत्वादुत्तरार्द्धे यच्छब्दश्रवणा त्पूर्वार्द्धे तच्छब्दाध्याहारेण तासु रुद्रस्नपनादिक्रियासु तं त्वां स्तौमि स्नपयामीति चोक्तं तत्र दृष्टान्तचतुष्टयं प्रदर्श्यते। तद्यथा कथं त्वां स्तौमि स्नपयामि चेत्यपेक्षायामुच्यते प्रत्नथा प्रत्नशब्दश्चिरन्तनवाचकः "प्रत्नंचिरन्तनम्" इत्यमरसिंहोक्तेः। ततः प्रत्नपूर्वेत्यादिना

उपमार्थीयो थाल्प्रत्ययः, एवमग्रेऽपि। प्रत्नाः चिरन्तनाः पुरातनाः भृग्वादयो यथा त्वामस्तुवन् अस्नापयँश्च तथाहमपि त्वां स्तौमि स्नपयामिचेत्यर्थः। एवं सर्वत्रानुसन्धेयम्। पूर्वथा पूर्वे पित्राद्य इव। तथा विश्वथा विश्वे सर्वे अतीताः ऋषिपुत्रा इव। तथा इमथा इदानीन्तना वर्त्तमाना अनुष्ठातृपुरुषा इव। पित्रादयोऽतीताः सर्वे ऋषिपुत्राश्च यथा त्वामस्तुवन् अस्नापयँश्च एवं यथेदानीन्तना अप्यनुष्ठातृपुरुषाश्च त्वां स्तुवन्ति स्नापयन्ति च तथाहमपि त्वां स्तौमि स्नापयामिचेत्याशयः। कीदृशं स्तौमि स्नापयामि चेत्यपेक्षायामुच्यते। ज्येष्ठतातिं "वृकज्ज्येष्ठाभ्यामित्यादिना प्राशस्त्यर्थे तातिल्प्रत्ययः प्रशस्तो ज्येष्ठो ज्येष्ठेषु प्रशस्यो वा ज्येष्ठतातिस्तं ज्येष्ठतातिं सर्वापेक्षयातिप्रशस्तमित्यर्थः। तथा बर्हिषदं "कौशं बर्हिरि"ति कात्यायनोक्तेः कुशमयमासनं बर्हिरुच्यते तत्र सीदतीति बर्हिषत् तं बर्हिषदं कुशासनोपविष्टं यज्ञे इन्द्रादिरूपेण वा बर्हिषि उपविष्टमित्यर्थः। तथा स्वर्विदं स्वसेवकानां कृते दातव्यत्वेन स्वः स्वर्गं वेत्ति जानातीति स्वर्वित्तं तथोक्तम् ईदृशं त्वां स्तौमि स्नापयामिचेत्यर्थः। त्वमपि आसु रुद्रस्नपनादिक्रियासु हे रुद्र, प्रतीचीनं प्रतिगमनशीलं मत्प्रतिकूलं वृजनं वर्जनीयमालस्याश्रद्धादिकं दोहसे लोडर्थे लट् धुक्ष्व रिक्तीकुरु विनाशयेत्यर्थः "दुह प्रपूरणे" प्रपूरणं रिक्तीकरण मिति क्षीरस्वामिनो वचनात्। त्वत्प्रसादान्ममालस्याश्रद्धादिकं सर्वमपि झटित्येव विनश्यतु एतदभिप्रायेणैव त्वां स्तौमि स्नापयामि चेत्याशंसावाक्यार्थः॥ ५॥

अ॒यं वे॒नश्चो॑दय॒त्पृश्नि॑गर्भा॒ज्योति॑र्जरायू॒ रज॑सो वि॒माने॑।
इ॒मम॒पाᳬ सं॑ग॒मे सूर्य॑स्य॒ शिशुं॒न विप्रा॑ म॒तिभी॑ रिहन्ति॥ ६॥

इदानीं रुद्रभालस्थश्चन्द्रोऽधिदैवताधियज्ञाभ्यामत्र स्तूयते। तत्रादौ प्रथमतोऽधिदैवतं व्याख्यायते। तत्र हि चन्द्रात्मना स्तुतिः, वेन इति "विनि कान्तौ" इत्यस्यायं प्रयोगः। "वेनो वेनतेः कान्तिकर्मणः (१०।३८)" इति यास्कोक्तेः। अयं वेनः कान्तः मनोज्ञो रुद्रभालस्थोऽयं चन्द्रः रजसोविमाने (रज इत्युदकनामेतिनिघण्टुः) उदकस्य निर्माणे अर्थात् ग्रीष्मान्ते इत्यर्थः। पृश्निगर्भाः पृश्निरादित्यो द्युलोको वा गर्भोऽवस्थानस्थानं यासां ताः पृश्निगर्भाः "आदित्याज्जायते वृष्टिरि"ति वचनादादित्यमण्डलस्थाः द्युलोकस्था वा वृष्टिरूपाः अपः चोदयत् चोदयति प्रेरयति वर्षतीत्यर्थः। कीदृशो वेनश्चन्द्र इत्यपेक्षायामुच्यते। ज्योतिर्जरायुः ज्योतिर्विद्युल्लक्षणं तेज एव जरायुः जरायुवद्वेष्टनं यस्य सः ज्योतिर्जरायुः ज्योतिर्मयः सुप्रकाश इत्यर्थः। तमहं स्तौमीति वाक्यशेषः। अतः परश्चाधियज्ञमनुसन्धेयम् अमृतांशुश्चन्द्र एव स्वीयानमृतकणान् लतारूपेऽस्मिन्सोमे निदधाति तदिदं व्याख्यायतेऽनेन मन्त्रार्द्धेन। तद्यथा विप्राः मेधाविनो ब्रह्मणाः याज्ञिका अध्वर्युप्रभृतयो महर्त्विजः अपां सूर्य्यस्य च सङ्गमे सङ्गमननिमित्ते वृष्टिगर्भनिष्पत्यर्थमिमं सोमयज्ञसम्पादकं लतारूपं सोमं शिशुं न नकारोऽत्र उपमार्थीयः "उपरिष्टादुपचारस्तस्य येनोपमिमीते" इति यास्कोक्तेः। शिशुमिव बालमिव मतिभिः स्तुतिपूर्वाभिर्वाग्भिः रिहन्ति स्तुवन्ति (रिहतिरर्चनकर्म्मसु निघण्टौ पठितः) अर्चनन्त्विह स्तवनमेवेत्यनुसन्धेयम्। यदा बालकेन किमपि वस्तु परिगृहीतं चेत्तर्हि तदा तद्वस्तुनो लाभार्थं स्तुतिपूर्वाभिर्वाग्भिर्यथा केचिद्बालकं स्तुवन्ति तद्वद्विप्राः मेधाविनो ब्राह्मणाः इमं वल्लीरूपं सोमं वृष्ट्यर्थमपां गर्भनिष्पत्त्यर्थं स्तुवन्तीत्यभिप्रायः। "एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ती"ति श्रुतेः। "यज्ञाद्भवति पर्ज्जन्यः पर्जन्यादन्नसम्भव" इत्यादि भगवद्गा-

क्याश्च। कदा स्तुवन्तीत्यपेक्षायामुच्यते। तथा हि अपां सूर्य्यस्य च सङ्गमे सति, अर्थात्सूर्य्यास्तमनवेलायां वहन्तीनामपां च सन्निधाविति यावत् तत्र गृहीताभिः वसतीवर्य्याख्याभिरद्भिरभिषुतं सोममिति च सोमविशेषणमनुसन्धेयं तत्र हि अपां सूर्य्यस्य च सङ्गमे वसतीवर्य्य आपः सोमाभिषवणार्थं गृह्यन्ते। "ता वै वहन्तीनां स्यन्दमानानां गृह्णीयाद्दिवा वा गृह्णीयादि" तिश्रुतेः। एवं विप्रैः स्तुतो वेनः कान्तो मनोज्ञो लतारूपः सोमो रजसो विमाने उदकनिर्माणे ग्रीष्मान्ते पृश्निगर्भा अपश्चोदयद्वृष्ट्यर्थं प्रेरयतीत्यर्थः। शेषं पूर्ववत्। सोऽयं वेनो मनोज्ञश्चन्द्रो मम कृतेऽपि कामाभिवर्षुको भवत्वित्याशंसावाक्यार्थः॥ ६॥

चित्रं देवानामिति सन्ध्याप्रकरणे सूर्य्योपस्थाने सस्वरो व्याख्यातस्तत्र द्रष्टव्यः॥ ७॥

आ न॒ऽइडा॑भिर्वि॒दथे॑ सुश॒स्ति वि॒श्वान॑रः सवि॒ता दे॒वऽए॑तु।
अपि॑ यथा॑ युवा॒नो मत्स॑था॒नो वि॒श्वं॒ जग॑दभिपि॒त्वे म॑नीषा॥ ८॥

विश्वानरः सर्वजनहितकारी सविता देवः सूर्य्यः नोऽस्माकं विदथे यज्ञगृहे आ एतु आगच्छतु। अत्र व्यवहितेनापि क्रियापदेन सह 'आ' इत्ययमुपसर्गः समवैति "व्यवहिताश्चे"ति पाणिनिवचनात्। कथमागच्छत्वित्यपेक्षायामुच्यते। इडाभिः सुशस्ति यथास्यात्तथाऽऽगच्छतु। इडा भक्षणेन शोभना शास्तिः शंसनं प्रशंसा यस्यां क्रियायां भवेत्तथाऽऽगच्छत्वित्यर्थः। यथा सर्वे इडां भक्षयन्ति तथाऽऽगच्छत्वित्याशयः। सुशस्तीति क्रियाविशेषणं तत्र इडाभिरितिकरणत्वेन समवैतीत्यनुसन्धेयम्। एवं सूर्य्यं परोक्षवृत्त्या प्रथमपुरुषत्वेन अभिधाय इदानीं देवान्प्रति प्रत्यक्षवृत्त्योच्यते मत्सथेति मध्यमपुरुषप्रयोगात्। तथा हि हे युवानः, युवत्वधर्म्मविशिष्टाः, जरारहिताः "देवा इति शेषः" हे देवाः, यूयम् अभिपित्वे अभिपतने आगमनकाले यथा येन प्रकारेण अपि निश्चितं मत्सथ "मद तृप्तौ" तृप्यथ तृप्ता यूयं भवथेत्यर्थः। तथा तेन प्रकारेण नोऽस्माकं विश्वं सर्वं जगत् जङ्गमं पुत्रपश्वादिकं मनीषा (सुपां सुलुगित्यादिना विभक्तेर्लुक्, तेनैव विभक्तेराकारो वा) मनीषा अर्थात् मनीषया बुद्ध्या अपि निश्चितं मत्सथेति पुनरनुषङ्गः—(अत्रान्तर्भूतो ण्यर्थः। तत्र लोडर्थे लट्। मादयतेत्यर्थोऽनुसन्धेयः तर्प्पयतेत्यर्थः। यथा भवद्भिस्तृप्तिः क्रियते तथास्मत्प्रजा अपि तर्प्पणीया भवद्भिरित्याशयः। अत्र यद्यपि रुद्रस्नपनादिपक्षे रुद्रार्चनप्रकरणवशाद्रुद्र एव स्तोतव्यस्तथाप्यत्र सवित्रादयोऽन्येऽपि ये देवाः स्तूयन्ते तत्तद्रूपेण रुद्र एव स्तूयते, इत्यनुसन्धेयम्। "स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः। स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किञ्चने"त्यादिश्रुतेः॥ ८॥

यद॒द्य कच्च॑ वृत्रहन्नु॒दगा॑ऽअ॒भि सू॑र्य्य।
सर्व्वं॒ तदि॑न्द्र ते॒ वशे॑॥ ९॥

"वृत्रो मेघे रिपौ ध्वान्ते दानवे वासवे गिरौ" इति विश्वकोशादौ दर्शनादिह वृत्रशब्दो ध्वान्तवाची तेन वृत्रं ध्वान्तम् अन्धकारं शार्वरं तमः हन्तीति वृत्रहा रविस्तत्सम्बुद्धौ हे वृत्रहन्, तमो विनाशक, हे इन्द्र, इन्दतीति इन्द्रस्तत्सम्बुद्धौ हे इन्द्र, परमैश्वर्य्ययुक्त, हे

सूर्य्य, आदित्य, अद्य अस्मिन् अनुष्ठानदिने यत् कच ("सुपां सुलुगि"त्यादिना सप्तम्या लुक्) यत्र कुत्रचिच त्वम् अभ्युदगाः ( अत्र लडर्थे लुङ् "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनात् तत्र छान्दसोऽडभावः "बहुलं छन्दस्यमाङ्योगेऽपी"ति पाणिन्युक्तेः। ) अभि सर्वतो भावेनोदयं प्राप्नोषीत्यर्थः। अभीत्यस्योपसर्गस्य परप्रयोगोऽत्र "छन्दसि परेऽपी"ति पाणिनि वचनात्। तत्सर्वं ते तव वशे 'वर्त्तते' इति शेषः। तत्र सर्वत्र त्वमेव एक ईश्वरो-नान्यःकश्चिदित्याशयः। तस्मादद्य ममानुष्ठाने यो विलम्बः सञ्जातः स त्वया क्षन्तव्य इत्यभिप्रायः। यद्वा यत् कचेति पदद्वयं तच कर्तृपदम् अभि उत् अगाः अगा इत्यत्र पुरुषव्यत्ययेनैवं वाक्ययोजना। तथा हि हे वृत्रहन्, शार्वरस्य तमसोऽन्धकारस्य हन्तः, हे इन्द्र, परमैश्वर्य्ययुक्त, हे सूर्य्य, यत् कच यत्किञ्चित्पदार्थजातमभ्युदगात् लडर्थे लुङ् अभ्युदेति प्रकाशवद्भवति तत्सर्वं ते तव वशे 'वर्त्तते' इति शेषः। तव सम्पर्कवशादेव इह जगति सर्वोऽपि पदार्थः प्रकाशवान्भवतीत्याशयः। अतोऽद्यानुष्ठानदिने ममापि तव सम्पर्कवशात्त्वत्प्रसादाच सुप्रकाशोऽस्त्वित्याशंसावाक्यार्थः। अत्र रुद्रस्नपनादि प्रकरणवशाद्रुद्र एव सूर्य्यरूपेण स्तूयते "एष ब्रह्मा च विष्णुश्च शिवश्चैव प्रजापतिरि"त्यादि भविष्योत्तरीयश्रीकृष्णवचनेन ब्रह्मविष्णुशिवादीनां सूर्य्येण सहैकत्वप्रतिपादनात्। एवमस्मिन्प्रकरणे इतोऽग्रेऽपि सर्वत्रानुसन्धेयम् ॥९॥

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य्य। विश्वमाभासि रोचनम् ॥१०॥

हे सूर्य्य, ईदृशस्त्वं ज्योतिष्कृदसि ज्योतिः करोतीति ज्योतिष्कृत् ज्योतिस्तेजस्तस्य कर्त्तासि, तथा हे सूर्य्य, त्वमेव विश्वमाभासि सर्वमपि इदं जगत् त्वमेव प्रकाशयसि चेत्यर्थः। अग्निविद्युन्नक्षत्रचन्द्रग्रहतारकादिषु यज्ज्योतिस्तत्त्वदीयमेव तेज इत्याशयः। विश्वं कीदृशं रोचनं दीप्यमानं त्वत्प्रकाशेनेति शेषः। त्वञ्च कीदृशः तरणिः तरति अतिक्रामति नभोवर्त्म तारयति वा स्वोपासकं संसाराब्धेः सकाशादिति तरणिः "अश्यवितृभ्योऽनिः" इति तरतेरनिप्रत्ययो वोध्यः। अपदेऽप्यन्तरिक्षे ऊर्द्ध्वं तूर्णमेव गमनशीलः भक्तानां कृते संसारोत्तारको वेत्यर्थः। अस्य संसाराब्धेः पारगमने त्वमेव नौकारूपः कर्णधारस्वरूपो वा त्वदन्यः कश्चिन्नास्तीत्याशयः। "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये"तिश्रुतेः। तथा विश्वदर्शतः विश्वस्य सर्वस्य दर्शतः दर्शनीय इत्यर्थः। अत्र दृशेरतच्प्रत्ययो बोद्धव्यः। यस्त्वमीदृशः सर्वं जगदिदं प्रकाशयसि स त्वं मम हृदि ज्ञानोद्भासनेन मामपि प्रकाश्य इतः संसाराब्धेः सकाशान्मामुद्धरेत्याशंसावाक्यार्थः ॥ १० ॥

तत्सूर्य्यस्य देवत्वन्तन्महित्वं मुद्ध्या कर्त्तोर्विततꣳ सञ्जभार।
यदेदयुक्त हरितः सुधस्थादाद्रात्री व्वासस्तनुते सिमस्मै ॥ ११ ॥

सूर्य्यस्य तत् देवत्वं देवतानुभावः, तच महित्वं महत्त्वं महाभाग्यमैश्वर्य्यं 'मन्ये' इति शेषः, अहं जाने इत्यर्थः। तत् किमित्यपेक्षायामुच्यते यत्किल कर्त्तोः "ईश्वरे तोसुन्कसुनौ" इति करोतेस्तोसुन् प्रत्ययः कार्य्यश्रेष्ठस्य जगद्रूपस्य मध्या ("सुपां सुलुगि"त्यादिना विभ-

रूराकारः ) मध्ये विततं विस्तारितम् अंशुजालं सञ्जभार सञ्जहार संहरते इत्यर्थः । हरतेर्लं-डर्थे लिट् । "हृग्रहोर्भश्छन्दसी"ति हरतेर्हस्य भः । नह्यन्यः कश्चित्सूर्य्यव्यतिरिक्तः एतादृश-मंशुजालं प्रसारयितुं संहर्त्तुं वा शक्नोतीत्याशयः । किञ्च यदा इत् इदिति एवार्थे यदा इत् यदैव हरितः हरिद्वर्णान् रश्मीन् अयुक्त (लडर्थे लुङ् "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवच-नात् ) युङ्क्ते इत्यर्थः आत्मनि यदैवारोपयतीत्याशयः । तदेव पुनः स्पष्टीक्रियते । सध-स्थात् सह तिष्ठन्त्यंशवो यत्र तत्सधस्थं ("सधमादस्थयोश्छन्दसी"ति सहस्य सधादेशः ) व्योममण्डलमितियावत् तस्मात् सधस्थात् व्योममण्डलात् यदैव सन्ध्याकाले पीतवर्णान् रश्मीन् स्वस्मिन् योजयतीत्यर्थः । तदैव आत् तत्समनन्तरमेव रात्री निशा सिमस्मै वासः तनुते सिमः सर्वपर्य्यायः सर्वस्मै वासस्तनुते सर्वं वस्तु तमसा आच्छादयतीत्यर्थः । सूर्य्या-स्तादनन्तरं रात्रेः सद्भावत्वात् ॥११॥

तन्मित्रस्य वरुणस्याभिचक्षे सूर्य्यो रूपं कृणुते द्योरुपस्थे ।
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति ॥ १२ ॥

सूर्य्यः सविता देवः द्योः द्युलोकस्य उपस्थे उत्सङ्गे मित्रस्य वरुणस्य च तत्प्रसिद्धं रूपं कृणुते कुरुते मण्डलाकृतिरूपं करोतीत्यर्थः । येन रूपेण जनानभिचक्षे अभिचष्टे अभि सर्वतो भावेन पश्यतीत्यर्थः । मित्ररूपेण सुकृतिनोऽनुगृह्णाति वरुणरूपेण दुष्कृतिनो निगृ-ह्णाति । सति सूर्य्योदये हि मित्रावरुणौ जगदनुगृह्णीत इत्यभिप्रायः । किञ्च अस्य सूर्य्यस्य अन्यत् एकं पाजः रूपम् अनन्तं कालतो देशतश्च अपरिच्छेद्यं रुशत् रोचते इति रुशत् रोचमानं शुक्लं दीप्यमानं विज्ञानघनानन्दमद्वैताख्यं ब्रह्माख्यमस्तीति शेषः । तथा अन्यदपरञ्च कृष्णं द्वैतलक्षणं रूपं सर्वप्राणिनां नेत्रे यत् कनीनिकाख्यमस्तीतिशेषः । तत्र कृष्णं द्वैतलक्षणं रूपं हरितः दिशः इन्द्रियवृत्तयो वा सम्भरन्ति धारयन्तीत्यर्थः । "यदेतन्मण्डलं तपति यश्चैष रुक्मऽइदं तच्छुक्लमक्षन्नथ यदेतदर्चिर्दीप्यते यच्चैतत्पुष्करपर्णमिदन्तत्कृष्णमक्षन्नथ यऽएषऽएत-स्मिन्मण्डले पुरुषो यश्चैष हिरण्मयः पुरुषोऽयमेव स योऽयन्दक्षिणेऽक्षन्पुरुषः ( शु. य. वे. मण्डलब्रा. )" इतिश्रुतेः । इन्द्रियग्राह्यं द्वैतरूपमेकम् , एकं च शुद्धचैतन्यस्वरूपमद्वैतम् , इति द्वे रूपे सूर्य्यस्य वर्त्तेते । सगुणं निर्गुणं ब्रह्म सूर्य्य एवेत्यर्थः । "पाज इति बलनामे"तिनिघ-ण्टौ पठितं तथापीह पाज इत्यनेन रूपमुच्यते । रोचते इति रुशत् । रोचतेरौणादिकोऽ-त्प्रत्ययः । चकारस्य शकारो गुणाभावश्च निपात्यते । यद्वा "रुश हिंसायाम्" रुच्यर्थे वर्त्तमा-नादस्माल्लटः शतरि रुशदिति रूपम् । रुद्रस्नपनादिप्रकरणवशादिह सूर्य्यरूपेण रुद्र एव स्तूयते । अतोऽयमर्थः । यस्य सूर्य्यरूपस्य रुद्रस्य सगुणं निर्गुणं रूपं तमहं रुद्रमनेन मन्त्रेण अमुकस्नपनद्रव्येण स्नापयामि । तमुद्दिश्य इमं मन्त्रं जपामि । तदर्थमहं जुहोमि । एवं हि वाक्यभेदेन रुद्रस्नपनजपहोमेषु भावार्थोऽनुसन्धेयः । स च मत्कृतेनानेन स्नपनेन जपेन होमेन वा कर्मणा सन्तुष्टः सन्मां सुखं गमयत्वित्याशंसावाक्यार्थः ॥ १२ ॥

बण्महाँ २॥ऽ असि सूर्य्य बडादित्य महाँ २॥ऽअसि ।
महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ२॥ऽअसि ॥ १३ ॥

बडित्यव्ययं सत्यार्थं ततोऽयमर्थः। सुवति प्रेरयति कार्य्येषु जगदिति सूर्यस्तत्सम्बुद्धौ हे सूर्य्य, जगत्प्रेरक, बट् सत्यं त्वं महानसि श्रेष्ठोऽसीत्यर्थः। पूर्वमन्त्रोक्तप्रकारेण ब्रह्मरूपोऽसीति भावः। (सूर्य्यशब्दस्तु "राजसूयसूर्य" इत्यादिना क्यबन्तो निपातितः।) तथा हे आदित्य, अदितेः पुत्रः आदित्यः, आदत्तेंऽशूनित्यादित्य इति वा तत्सम्बुद्धौ हे आदित्य, अदितिपुत्र, यद्वा हे आदित्य, अंशुहारक, बट् सत्यं त्वं महानसि महान्भवसि तेजसातिप्रवृद्धोऽसीत्यर्थः। किञ्च मह्नः महतः सतः सत्यस्य ते तव महिमा महाभाग्यं पनस्यते लोकैः अर्च्यते स्तूयते वा इत्यर्थः। "पनस्यतिरर्चतिकर्म्मेतियास्कः" स्तुत्यर्थ इति क्षीरस्कन्दस्वामिनौ। अतो हे देव दीव्यतीति देवस्तत्सम्बुद्धौ हे देव, द्युतिस्तुतिदानक्रीडादियुक्त, अद्धा त्वं महानसि सत्यं त्वं महानसि तत्त्वतो महान् भवसीत्यर्थः। "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेरिह पुनरुक्तिरादरातिशयद्योतनार्था। य एवं भूतः सूर्य्यः स च रुद्ररूप एव "एष ब्रह्मा च विष्णुश्च शिवश्चैव प्रजापतिरि"तिव्यासोक्तेः तमहमनेन स्नपनद्रव्येण स्नापयामीत्याशंसावाक्यार्थः॥ एवं रुद्रहोमादावपि वाक्योहोऽनुसन्धेयः॥ १३॥

बट् सूर्य्य श्रवसा महाँ २॥ऽअसि सत्रा देव महाँ २॥ऽअसि।
मह्ना देवानामसुर्य्यः पुरोहितो विभुज्योतिरदाभ्यम्॥ १४॥

हे सूर्य्य, जगत्प्रेरक, श्रवसा धनेन यशसा वा बट् सत्यं त्वं महानसि। तथा हे देव, दीप्यमान, सूर्य्य, देवानां मध्ये मह्ना महत्त्वेन सत्रा सत्यं त्वं महानसि देवानां मध्ये श्रेष्ठोऽसीत्यर्थः। तदेव कतिपयविशेषणैः स्पष्टीक्रियते। तथा हि हे सूर्य्य, ईदृशस्त्वमसीतिवाक्यशेषः। कीदृश इत्यपेक्षायामुच्यते। असुर्य्यः असवः प्राणाः सन्ति येषां ते असुराः प्राणिनः तेभ्यो हितः असुर्य्यः सर्वप्राणिनां हितकर इत्यर्थः। तथा पुरोहितः पुरोऽग्रे हितः स्थापितः सर्वकार्य्येषु पुरः पूज्य इत्यर्थः। सर्वदेवानां पूजने सूर्य्यार्घ्यदानानन्तरमेव पूजाधिकारात्। अथवाग्निरूपेण पुरोहितः अग्रे स्थापितः यज्ञादौ सर्वदेवापेक्षयाग्नेरेव पुरःस्थाप्यमानत्वादित्याशयः। तथा विभु व्यापकम् अदाभ्यम् अनुपहिंस्यं ज्योतिः तेजः तदपि त्वमेवासि त्वं तेजःस्वरूपोऽसीत्यर्थः। अत्रापि रुद्र एव सूर्य्यरूपेण स्तूयते "एष ब्रह्मा च विष्णुश्च शिवश्चैव प्रजापतिरि"ति वचनात्। आशंसावाक्यार्थस्तु पूर्ववदिहाप्यवगन्तव्यः॥ १४॥

श्रायन्तऽइव सूर्य्यं विश्वेदिन्द्रस्य भक्षत।
वसूनि जाते जनमानऽओजसा प्रति भागं न दीधिम॥ १५॥

श्रयन्ते इति श्रायन्तः "श्रिञ् सेवायाम्" अतः शतरि शपि गुणे प्राप्ते व्यत्ययेन वृद्धिः। सूर्य्यं श्रायन्तः इव (इव एवार्थे) सूर्य्यं श्रायन्तः आश्रयन्तः एव अर्थात् रश्मयः इन्द्रस्य विश्वा इत् (इत् इति एवार्थे) विश्वानि सर्वाण्येव वसूनि धनानि वृष्टिधान्यनिष्पत्त्यादीनि भक्षत अभक्षत भजन्ते विभजन्ते सर्वेभ्यः प्राणिभ्यो विभज्य ददतीत्यर्थः। "भज भागसेवयोः" अस्माल्लडर्थे लुङ् "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनात्। भजतेर्लुङि तङि प्रथम पुरुषबहुवचने रूपम्। अडभावश्चार्षः "बहुलं छन्दस्यमाङ्योगेऽपी"तिपाणिन्युक्तेः। "आत्मने

पदेष्वनन्तः'' इति झस्यादादेशोऽप्यनुसन्धेयः। सूर्य्यकिरणा इन्द्रदत्तां वृष्टिं भूमौ विभजन्तीत्याशयः। किञ्च वयं तान्येव वसूनि धनानि जाते पुत्रे जनमाने उत्पद्यमाने च ओजसा तेजसा सह प्रतिदीधिम धारयाम स्थापयामेत्यर्थः। किमिव, भागं न नइवार्थे भागमिव। यथा स्वभागं पुत्रादिषु धारयामस्तथेत्यर्थः। ''धिधृतौ'' इत्यस्माज्ज्लङ् व्यत्ययेन शपः श्लुः ''श्लौ'' इति द्वित्वं च। तुजादित्वादभ्यासस्य दीर्घोऽप्यवगन्तव्यः॥ १५॥

अ॒द्या दे॑वा॒ऽउदि॑ता॒ सूर्य्य॑स्य॒ निरᳪं॑ह॒सः पि॑पृ॒ता निर॑व॒द्यात्।
तन्नो॑ मि॒त्रो वरु॑णो मा मह॑न्ता॒मदि॑ति॒: सिन्धु॑: पृथि॒वी उ॒त द्यौः॥ १६॥

दीव्यन्तीति देवाः रश्मयः, तत्सम्बुद्धौ हे देवाः, सूर्य्यरश्मयः, किरणाः, यूयं नोऽस्मान् अंहसः पापात् निःपिपृत निर्म्मुञ्चत। न केवलमंहसः पापादेव किन्तु अवद्यात् दुर्यशसोऽपि नोऽस्मान्निःपिपृत पृथक् कुरुतेत्यर्थः। हे देवाः, यूयमस्माकं पापानि दुर्यशांसि च नाशयतेत्याशयः। कदेत्यपेक्षायामुच्यते अद्य अस्मिन् अनुष्ठानदिने सूर्य्यस्य (सुपां सुपो भवन्तीति सप्तम्येकवचनस्थाने षष्ठ्येकवचनम्) उदिता (सुपां सुलुगित्यादिना विभक्तेराकारः) सूर्य्ये उदिते 'एवे'ति शेषः। अद्य यावत्सूर्य्यो नास्तमियात्तावदेव अस्मान् शुद्धान्कुरुतेत्यर्थः, समयान्तरापेक्षा न कर्त्तव्येति भावः। किञ्च मित्रादयः तत् नोऽस्माकं वचनं मामहन्ताम् पूजयन्तु अङ्गीकुर्व्वन्त्वित्यर्थः। ते के मित्रादय इत्यपेक्षायामुच्यते। मित्रः द्वादशादित्यानां मध्ये कश्चित्तन्नामकः आदित्य एव तथा वरुणः अपां पतिरित्यर्थः। तथा अदितिः देवमाता तथा सिन्धुः समुद्रो नदी वा तथा पृथिवी भूमिः उत अपि च द्यौः स्वर्गश्चेत्येते मित्रादयो देवा अस्मद्वचनं स्वीकुर्व्वन्त्वित्याशयः। अद्येत्यत्र ''द्व्यचोऽतस्तिङः'' इतिदीर्घप्रकरणे ''निपातस्य च'' इति दीर्घः। पिपृतेत्यत्र तु ''अन्येषामपि दृश्यते''इति दीर्घः। ''निः' इत्ययमुपसर्गः व्यवहितेनापि पिपृतेति क्रियापदेन सह सम्बध्यते, ''व्यवहिताश्चे''तिपाणिनिवचनात्॥ १६॥

आ कृ॒ष्णेन॒ रज॑सा॒ वर्त्त॑मानो निवे॒शय॑न्न॒मृतं॒ मर्त्यं॑ च।
हि॒र॒ण्यये॑न सवि॒ता रथे॒ना दे॒वो या॑ति॒ भुव॑नानि॒ पश्य॑न्॥ १७॥

आकृष्णेनेति देवपूजाप्रकरणे व्याख्यातं तत्रास्य व्याख्या द्रष्टव्या॥ १७॥

एवं विभ्राडित्यादि सप्तदशर्च्चं सूर्य्यसूक्तं व्याख्याय नमस्त इत्यादिषोडशर्चस्य रुद्राख्यमन्त्रगणस्यार्थं विवृणोमि। तद्यथा—

नम॑स्ते रुद्र म॒न्यव॑ऽउ॒तो त॒ऽइष॑वे॒ नमः॑। बा॒हुभ्या॑मु॒त ते॒ नमः॑॥ १॥

नमस्त इत्यादिषोडशर्चस्य चतुर्द्दशानामाद्यानां परमेष्ठी ऋषिर्नमस्त इति गायत्रीच्छन्दो यात इति तिसृणामनुष्टुप्छन्दो अध्यवोचदिति तिसृणाम्पङ्क्तिश्छन्दो नमोऽस्त्वित्यादिसप्तानामनुष्टुप्छन्दो मान इतिद्वयोः कुत्सऋषिर्जगतीच्छन्द एकरुद्रो देवता रुद्राख्यजपे विनियोगः।

स्नपनपक्षे रुद्राखस्नपने विनियोगः। होम पक्षे रुद्राखहोमे विनियोगः। इत्येवं वाक्योहः कार्य्यः॥ रुत् दुःखं द्रावयति नाशयतीति रुद्रः तत्सम्बुद्धौ हे रुद्र, हे दुःखनाशक, यद्वा "रु गतौ" ये ये गत्यार्थास्तेते ज्ञानार्था इतिशिष्टोक्तेरिह रुच्छब्दो ज्ञानार्थस्तेन च रवणं रुत् ज्ञानम् भावे क्विप् तुगागमश्चात्रानुसन्धेयः। रुत् ज्ञानं राति ददातीति रुद्रः तत्सम्बुद्धौ हे रुद्र, ज्ञानप्रद, यद्वा पापिनो नरान् दुःखभोगेन रोदयतीति रुद्रः तत्सम्बुद्धौ हे रुद्र, पापिनां रोदक, हे महादेव, ते तव मन्यवे क्रोधाय नमः नमस्कारोऽस्त्वित्यर्थः। उतो अपि च ते तव इषवे बाणाय नमः नमस्कारोऽस्त्वित्यर्थः। उत अपि च ते तव बाहुभ्यां हस्ताभ्यां नमः नमस्कारोऽस्त्वित्यर्थः। तव क्रोधबाणहस्ता अस्मदरिष्वेव प्रसरन्तु नास्मास्वित्यभिप्रायेणानेन षोडशर्चेनानुवाकेन तवोपरि स्नपनं करोमीत्याशंसावाक्यार्थः। रुद्रस्य षोडशोपचारपूजनेऽनेन मन्त्रेणासनं विदधति सम्प्रदायविदस्तत्पक्षे "अतिरिक्तमि"तिकारिकया तुभ्यमनेनासनं समर्प्पयामीत्यध्याहर्त्तव्यं ततश्चैवमनुसन्धेयम्। यत् हे रुद्र, तव क्रोधबाणहस्ता अस्मदरिष्वेव प्रसरन्तु नास्मास्वित्यभिप्रायेणैवाऽनेन मन्त्रेण तुभ्यमासनं समर्प्पयामीतिशेषः। शेषञ्च पूर्ववदवगन्तव्यम्॥ १॥

या ते॑ रुद्र शि॒वा त॒नूर॒घो॒राऽपा॑पकाशिनी।
तया॑नस्त॒न्वा॒ शन्त॑मया॒ गिरि॑शन्ता॒ऽभिचा॑कशीहि॥ २॥

हे रुद्र, दुःखनाशक, अथवा हे रुद्र, ज्ञानप्रद, अथवा हे रुद्र, पापिनां रोदक, हे महादेव, या ते तव ईदृशीः तनूः शरीरमस्तीतिशेषः। कीदृशीः तनूः शिवा शान्ता मङ्गलरूपा। तथा अघोरा न घोरा अघोरा अविषमा सौम्येत्यर्थः। यतोऽघोरा अत एव अपापकाशिनी या पुण्यफलमेव ददाति न पापफलमित्यर्थः। हे गिरिशन्त, गिरौ कैलासे स्थितः सन् शं सुखं प्राणिनां तनोति विस्तारयतीति गिरिशन्तः यद्वा गिरि वाचि स्थितः सन् शं सुखं तनोतीति गिरिशन्तः 'संज्ञायां सप्तम्या अलुक्' अथवा गिरौ मेघे स्थितः सन् वृष्टिद्वारा शं सुखं तनोतीति गिरिशन्तः यद्वा गिरौ शेते इति गिरिशः अमति गच्छति जानातीति अन्तः सर्वज्ञः "अम गतौ भजने शब्दे च" इत्यस्मात्कर्त्तरि क्तः गिरिशश्चासावन्तश्चेति गिरिशन्तः अस्मिन्पक्षे शकन्ध्वादित्वात्पररूपमप्यवगन्तव्यम्। तत्सम्बुद्धौ हे गिरिशन्त, तया ईदृश्या तन्वा शरीरेण नः अस्मान् अभिचाकशीहि अभिपश्य "चाकशीतिः पश्यतिकर्म्मे"तियास्कोक्तेः। कीदृश्या तन्वा शन्तमया सुखतमया ईदृश्या तन्वाऽस्मानभिपश्येत्यर्थः॥ रुद्रस्य षोडशोपचारपूजने हे रुद्र, तया ईदृश्या तन्वाऽस्मानभिपश्येति यतो वयं प्रार्थयामहे अतस्तथाविधोपकारकस्य तवानेन मन्त्रेण स्वागतं विधीयतेऽस्माभिरिति वाक्यार्थः॥ २॥

यामिषुं॑ गिरिशन्त॒ हस्ते॑ बि॒भर्ष्यस्त॑वे।
शि॒वां गि॑रित्र॒ तां कु॑रु॒ मा हि॑ꣳसीः॒ पुरु॑षं॒ जग॑त्॥ ३॥

हे गिरिशन्त, अस्तवे ("असु क्षेपणे"दिवादिः तस्मात् "तुमर्थे सेसेनसेऽसे०" इत्यादिना तुमर्थे तवे प्रत्ययः।) असितुं शत्रून्प्रतिक्षेप्तुं त्वं याम् इषुं बाणं हस्ते बिभर्षि धारयसि। हे

गिरित्र, गिरौ कैलासे स्थितः सन् भूतानि त्रायते इति गिरित्रस्तत्सम्बुद्धौ हे गिरित्र, ताम् इषुं शिवां कल्याणकारिणीं कुरु । किञ्च पुरुषं पुत्रपौत्रादिकं जगत् जङ्गमम् अन्यदपि गवाश्वादिकं मा हिंसीः मावधीः । अस्मदीयं पुरुषं पुत्रपौत्रादिकं जङ्गमं गवाश्वादिकञ्च न मारय, रक्षेत्यभिप्रायः ॥

रुद्रस्य षोडशोपचारपूजने हे रुद्र, यतस्त्वां प्रति वयमेवं ब्रूमः यत् हे गिरित्र, पुरुषं पुत्रपौत्रादिकं जगत् जङ्गमम् अन्यदपि गवाश्वादिकं मा हिंसीरिति अतस्तुभ्यमनेन मन्त्रेणाऽर्घ्यं समर्प्पयामीतिवाक्यशेषः । अन्यत्सर्वमपि समानमेव ॥ ३ ॥

शिवेन वचसा त्वा गिरिशाऽच्छांवदामसि ।
यथा नः सर्व्वमिज्जगदयक्ष्मꣳसुमनाऽअसत् ॥ ४ ॥

गिरौ कैलासे शेते इति गिरिशस्तत्सम्बुद्धौ हे गिरिश, शिवेन मङ्गलेन वचसा स्तुतिरूपेण वचनेन त्वा त्वाम् अच्छ आभिमुख्येन आप्तुं प्राप्तुं वयं वदामसि वदामः वयं प्रार्थयामहे इत्यर्थः । "अच्छाभेराप्तुमितिशाकपूणिः" इति यास्कोक्तेः अच्छेत्ययं निपात आप्तुमित्यर्थे तस्य च संहितायां "निपातस्य च" इति पाणिनीयसूत्रेण दीर्घः "इदन्तो मसि" इति पाणिनीयसूत्रेण मस इगागमे वदाम इत्यस्य स्थाने वदामसीत्येवं प्रयोगो भवतीत्यप्यनुसन्धेयम् । किं वदाम इत्यपेक्षायामुच्यते । नोऽस्माकं सर्वमित् "इदित्येवार्थे" सर्वमेव जगत् जङ्गमं नरपश्वादि यथा येन प्रकारेण अयक्ष्मं यक्ष्मा प्रबलरोगः नास्ति यक्ष्मा यस्य तत् अयक्ष्मं प्रबलरोगरहितम् सुमनाः शोभनमनस्कं च असत् भवेत् तथा कुर्विति शेषः । अस्मदीयनरपश्वादेः प्रबलरोगराहित्ये सति सुतरामल्परोगाभायात्सर्वथाऽऽरोग्यं तथा सुमनस्त्वे सति मानसिकदुःखाभावात्सर्वथाऽऽनन्दत्वं च सम्पत्स्यते। तदीयानन्दत्वे सति दृढाभक्तिः, भक्तिदार्ढ्ये शिवप्राप्तिः,इत्यभिप्रायेण जगदयक्ष्मꣳ सुमना असदित्युक्तम् । परिवारवतः साधकस्य परिवारस्वास्थ्ये तदीयसौमनस्ये च सत्येव ध्याने मनस्तिष्ठति । परिवारमध्ये कस्याप्यनारोग्ये तदीयवैमनस्ये च साधकस्यापि विकृतं मनो भवति अतस्तद्राहित्यं प्रार्थ्यते इतिभावः।सुमनःशब्दस्य जगद्विशेषणत्वात्क्लीबत्वं युक्तं तत्र पुंस्त्वमार्षं "व्यत्ययो बहुलमि"ति पाणिनिवचनात्। असदिति लेट्प्रथमपुरुषैकवचने "अस भुवि"इत्यस्यायं प्रयोगः। "लिङर्थे लेडि'तिपाणिन्युक्तेरिह लिङर्थे लेट्लकारः । तत्र "लेटोऽडाटावि"त्यडागमः "इतश्च लोपःपरस्मैपदेष्वि"त्यनेन तिप इलोपश्च बोद्धव्यः। रुद्रस्य षोडशोपचारपूजने हे रुद्र, यतस्त्वा त्वाम् अच्छ आभिमुख्येन आप्तुं प्राप्तुं वयं वदामसि वदामः । अतो वयं तुभ्यमनेन मन्त्रेण पाद्यं समर्प्पयाम इति वाक्यशेषः ॥ ४ ॥

अध्ध्यवोचदधिवक्ता प्रथमो दैव्व्यो भिषक् ।
अहींꣳश्च सर्वाञ्जम्भयन्त्सर्व्वाश्च यातुधान्न्योऽधराचीः परासुव ॥ ५ ॥

"अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । ईदृशो रुद्रः

मामध्यवोचत् अधिवक्तु सर्वस्मादधिकोऽयं भवत्विति मां वदतु तेनोक्ते मम सर्वाधिक्यं भविष्यत्येवेत्याशयः। कीदृशो रुद्र इत्यपेक्षायामुच्यते। अधिवक्ता अधिकवदनशीलः। तथा प्रथमः सर्वेषां मध्ये मुख्यः पूज्यत्वादित्यर्थः। तथा दैव्यः देवेभ्यो हितः तथा भिषक् वैद्यः रोगनाशक इत्यर्थः। स्मरणेनैव रोगनाशाद्भिषक्त्वमस्य, अतोऽयं वैद्यस्वरूप इत्यभिप्रायः। एवं परोक्षमुक्त्वा प्रत्यक्षमाह। हे रुद्र, सर्वान् अहीन् सर्प्पव्याघ्रादीन् जम्भयन् विनाशयन् अधराचीः अधरेऽधोदेशेऽञ्चन्तीति अधराच्यः ताः अधराचीः अधोऽधोगमनशीलाः यातुधान्यः यातुधानीः राक्षसीः त्वं परासुव पराक्षिप अस्मभ्यो दूरीकुर्वित्यर्थः। इह चकारद्वयं समुच्चयार्थे वर्त्तते। तेन सर्प्पनाशराक्षसीक्षेपौ सहैव कुर्वित्यभिप्रायः। रुद्रस्य षोडशोपचारपूजने हे रुद्र, यतस्त्वमधिवक्ता भक्तानां कृते अधिकवदनशीलोऽसीतिशेषः। अतस्तुभ्यमनेन मन्त्रेणाचमनीयं समर्प्पयाम इति वाक्यशेषः, शेषं पूर्ववदेव ॥ ५ ॥

असौ यस्ताम्रोऽअ॑रुणऽउ॒तब॒भ्रुः सु॑म॒ङ्गलः॑ ।
ये चै॑नꣳरु॒द्राऽअ॒भितो॑ दि॒क्षु श्रि॒ताः स॑हस्र॒शो वै॑षा॒ꣳहेड॑ऽईमहे ॥ ६ ॥

इहादित्यरूपेण रुद्रः स्तूयते ताम्रोऽअरुणऽउत बभ्रुरिति लिङ्गात्। तद्यथा ईदृशः यः रुद्रः असौ प्रत्यक्षः रविरूपोऽस्तीतिशेषः। च पुनरर्थे। ये च ये पुनः सहस्रशः असङ्ख्याः किरणरूपाः रुद्राः एनं रविरूपं रुद्रं दिक्षु प्राच्यादिषु अभितः श्रिताः सर्वतः स्थिता इत्यर्थः। एषां रुद्राणां हेडः क्रोधं स्वापराधजं वयम् अवईमहे अवनयामः। भक्त्या निराकुर्म्म इत्यर्थः। हेड इति क्रोधनामेति निघण्टुः। एनमित्यत्र "अभिसर्वतसोः" इतिद्वितीया कीदृशो रविरूपो रुद्र इत्यपेक्षायामुच्यते। ताम्रः उदये रक्तः उदयकाले रक्तवर्ण इत्यर्थः। तथा अरुणः रक्तः 'अस्तकाले' इति शेषः। अस्तमनवेलायामपि रक्तवर्ण इत्यर्थः। "उदेति सविता ताम्रस्ताम्र एवास्तमेति चे"इत्युक्तेः। उत अपिच बभ्रुः पिङ्गलवर्णः 'अन्यस्मिन् समये' इतिशेषः, उदयास्तमनसमयतो भिन्नसमये तथैव दृश्यमानत्वात्। तथा सुमङ्गलः शोभनानि मङ्गलानि यस्य स सुमङ्गलः मङ्गलरूपः सति सूर्य्योदय एव सर्वमङ्गलानां प्रवर्त्तमानत्वात्। ईदृशो रविरूपो रुद्रोऽस्यामृचि स्तुतः। रुद्रस्य षोडशोपचारपूजने हे रुद्र, यतस्त्वं रविरूपोऽसि अतो वयमनेन मन्त्रेण तुभ्यं मधुपर्कं समर्प्पयामः॥ अन्यच्च पूर्ववत्समानमेव। मधुपर्कस्य तेजोरूपत्वात् "तेजो वै घृतमि"ति श्रुतेः॥ ६ ॥

असौ योऽव॒सर्प्प॑ति नील॑ग्रीवो॒ विलो॑हितः ।
उ॒तैनं॑ गो॒पाऽअ॑दृश्र॒न्नदृ॑श्रन्नुदहा॒र्य्यः॑ स दृ॒ष्टो मृ॑डयाति नः ॥ ७ ॥

योऽसौ रविरूपो रुद्रः अवसर्प्पति उदयास्तमयौ कुर्वन् सन् निरन्तरं गच्छति। एनं रविरूपं रुद्रं गोपा उत (उत शब्दोऽप्यर्थे) गाः पान्तीति गोपाः गोपाला वेदोक्तसंस्कारहीना अपि अदृश्रन् (दृशेर्लङर्थे लङ् "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनात्) पश्यन्तीत्यर्थः। न केवलं गोपा एव अदृश्रन् किन्तु उदहार्य्यः उदकं हरन्तीति उदहार्य्यः ("मन्थौदन-०" इत्यादिना उदकस्योदादेशः।) जलहारिण्यो योषितः ता अपि एनं रविरूपं रुद्रमदृश्रन् पश्य-

न्तीत्यर्थः। आगोपालाङ्गनादिप्रसिद्धोऽयं रविरूपो रुद्र इत्याशयः। (अद्दश्रमित्यत्र दृशेर्लुङि "इरितो वा" इतिच्लेरङ् "शीङो रुट्" "बहुलं छन्दसी"ति पाणिन्युक्तेः रुडागमश्च छान्दसो बोध्यः, शेषं स्पष्टमेव।) कीदृशो रविरूपो रुद्र इत्यपेक्षायामुच्यते। नीलग्रीवः विषधारणेन नीला ग्रीवा कण्ठो यस्य स नीलग्रीवः नीलकण्ठः अस्तमये नीलकण्ठ इव लक्ष्यते इतिभावः। तथा विलोहितः विशेषेण रक्त इत्यर्थः। स एतादृशो रुद्रो दृष्टः सन्नोऽस्मान्मृडयाति (अत्र-लोडर्थे लेट् "लेटोऽडाटावि" त्यडागमश्च बोध्यः) अस्मान् मृडयतु सुखयत्वित्यर्थः। असौ मण्डलवर्त्ती रुद्र एव तपतीत्येवं ज्ञानवान् य उपासकस्तस्यासौ रविरूपो रुद्रोऽवश्यमेव सुखं करोतीत्यभिप्रायः॥ रुद्रस्य षोडशोपचारपूजने यतः स रविरूपो रुद्रो दृष्टः सन् नोऽस्मान्मृडयाति मृडयति सुखयति अतो वयमपि अनेन मन्त्रेण रुद्रस्याचमनं कारयामः। शेषं पूर्ववदेव॥ ७॥

नमो॑ऽस्तु नील॑ग्रीवाय सहस्राक्षाय॑ मी॒ढुषे॑।

अथो॒ ये अ॑स्य॒ सत्वा॑नो॒ऽहं तेभ्यो॑ऽकरं॒ नम॑ः॥ ८॥

विषधारणेन नीला ग्रीवा कण्ठो यस्य स नीलग्रीवस्तस्मै नीलग्रीवाय नीलकण्ठाय रुद्राय नमोऽस्तु मत्कृतनमस्कारोऽस्त्वित्यर्थः। पुरा क्षीरसमुद्रमथने क्षीराब्धेः सकाशात् प्रथमतो विषः समुत्थितस्तं निगलितुं न केऽपि सेहिरे, तत उभये प्राजापत्या देवा असुराश्च परं भयं जग्मुः। ततो विष्णुं पुरस्कृत्य ते सर्वेऽपि देवा असुराश्च शिवं सानुनयं प्रार्थितवन्तः। तैः प्रार्थितः परमकारुणिको भगवान् सदाशिवः सर्वोपकाराय परमया मुदा गायन् तं विषं पपौ। तत्समय एवास्य विषधारणेन ग्रीवा नीलाभूदिति श्रुति कथानुसन्धेया। इयञ्चाख्यायिका पुराणेष्वपि सुप्रसिद्धास्ति। एतदभिप्रायेणैव तथाभूताय सर्वोपकारिणे नीलग्रीवाय विषधारणेन नीलकण्ठाय रुद्राय मदीया नतिरस्त्वितिभावः। तथा सहस्राक्षाय सहस्रमक्षीणि नेत्राणि यस्य सः सहस्राक्षस्तस्मै सहस्राक्षाय इन्द्रस्वरूपिणे रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा मीढुषे मेहतीति मीढ्वान् मिमेहेति वा मीढ्वान् तस्मै मीढुषे सेक्त्रे वृष्टिकर्त्रे पर्जन्यरूपाय रुद्राय नमोऽस्तु। यद्वा मीढुषे अर्थात् तरुणाय तरुणरूपाय रुद्राय नमोऽस्तु तरुणोऽपि यः कश्चित्तद्रूपोऽपि रुद्र एव ध्येय इतिभावः। "नमो महद्भ्योऽअर्भकेभ्यश्च वो नमः, नमो ह्रस्वाय च व्वामनाय च नमो बृहते च व्वर्षीयसे च नमो वृद्धाय च स वृधे चे" त्याद्यग्रे वक्ष्यमाणत्वात्। अथो अपि च अस्य रुद्रस्य ये सत्वानः प्राणिनो भृत्यास्तेभ्योऽहं नमः नमस्कारम् अकरं करोमीत्यर्थः। अकरमिति "डुकृञ्-करणे" इत्यस्माल्लङि "व्यत्ययो बहुलमि"ति विकरणव्यत्ययेन शपि उत्तमैकवचने रूपम्। लुङि वा "कृमृदृरुहिभ्यश्छन्दसी" तिच्लेरङिकृते "ऋदृशोऽङि गुणः" इतिगुणे अडागमे मिप अमादेशे पररूपे च उत्तमैकवचने रूपम्। अत्र च लङर्थे लङ् लुङ् वा "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनात्। मीढ्वानिति "मिह सेचने" इत्यस्मात् "दाश्वान्साह्वान्मीढ्वाँश्चे"ति क्वस्वन्तो निपातः। तस्य चतुर्थ्येकवचने मीढुषे इति रूपं भवतीत्यप्यनुसन्धेयम्॥ रुद्रस्य षोडशोपचारपूजने यतोऽयं रुद्रोऽस्मान्सुखयति अतोऽनेन मन्त्रेण रुद्रं स्नपयामि। शेषं पूर्ववदेवावगन्तव्यम्॥ ८॥

प्रमुँञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम्।
याश्च ते हस्तऽइषवः परा ता भगवो व्वप ॥ ९ ॥

"ऐश्वर्य्यस्य समग्रस्य धर्म्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥" इत्युक्तेः भग इतिषड्विधैश्वर्य्यस्याभिधानं ततोऽयमर्थः। भगं षड्विधमैश्वर्य्यमस्यास्तीति भगवान् तत्सम्बुद्धौ हे भगवन् इति प्राप्ते "मतुवसो रु संबुद्धौ छन्दसि" इति पाणिनीयसूत्रेण रुत्वे भगव इतिरूपम्। तद्यथा हे भगवः, हे भगवन् षड्विधैश्वर्य्ययुक्त, हे रुद्र, धन्वनः धनुषः उभयोः आर्त्न्योः द्वयोः कोट्योः स्थितां ज्यां मौर्वीं त्वं प्रमुञ्च दूरीकुरु। "पिनाकोऽजगवं धनुरि"त्यभिधानात्पिनाकाख्यं धनुः शिवस्यास्तीत्येवं ज्ञायते तस्यैवेह विगतमौर्वीकत्वं प्रार्थ्यते। पिनाकाख्यं स्वकीयं धनुः ज्यारहितं कुर्विंतिभावः। तथा हे भगवः, हे भगवन्, षड्विधैश्वर्य्ययुक्त, हे रुद्र, ते तव हस्ते याश्च इषवः बाणाः सन्तीतिशेषः। ता इषूः परावप पराक्षिप बाणानपि अस्मत्तो दूरीकुर्वित्यभिप्रायः॥ रुद्रस्य षोडशोपचारपूजने हे रुद्र, यतो वयं तुभ्यमनेन मन्त्रेण वस्त्रं समर्प्पयाम इति शेषः। अतस्त्वं धन्वन उभयोरार्त्न्योर्द्वयोः कोट्योः स्थितां ज्यां प्रमुञ्च दूरीकुर्वित्यर्थः, शेषं समानमेव ॥ ९ ॥

व्विज्ज्यन्धनुः कपर्द्दिनो व्विशल्यो बाणवाँ२॥ऽ उत।
अनेशन्नस्य या ऽइषवऽआभुरस्य निषङ्गधिः ॥ १० ॥

"कपर्दोऽस्य जटाजूटः" इति कोशादौ दर्शनात्कपर्द इति रुद्रजटाजूटस्याभिधानं ततोऽयमर्थः। कपर्दो जटाजूटः सोऽस्यास्तीति कपर्दी तस्य कपर्दिनः जटाजूटधारिणो रुद्रस्य धनुः पिनाकाख्यं विज्यं विगता ज्या यस्मात् तत् विज्यं विगतमौर्वीकमस्त्वितिशेषः। उत अपि च बाणवान् बाणाः अस्मिन् सन्तीति बाणवान् इषुधिः तूणीरः सोऽपि विशल्यः विगतं शल्यं यस्मात् स विशल्यः बाणाग्रतो लोहभागः शल्यं तद्रहितोऽस्त्वितिशेषः। रुद्रस्येषुधिर्निरग्रबाणो विफलोऽस्त्वितिभावः। या इषव इत्यत्र यच्छब्दश्रवणात्तच्छब्दोऽप्यध्याहर्त्तव्यः यत्तदोर्नित्यसम्बन्धत्वात्। तद्यथा अस्य रुद्रस्य या इषवः बाणाः सन्तीतिशेषः ता अपि अनेशन् नश्यन्त्वित्यर्थः। "णश अदर्शने" इत्यस्माल्लोडर्थे लुङ "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनात्। अनेशन्नित्यत्र पुषादित्वाच्च्लेरङ् अङ्वेति नशेरत एत्वञ्चेत्यनुसन्धेयम्। तथा अस्य रुद्रस्य निषङ्गधिः निषज्यते इति निषङ्गः खड्गः स धीयतेऽस्मिन्निति निषङ्गधिः खड्गकोशः स आभुः रिक्तोऽस्त्वितिशेषः। अस्य रुद्रस्य खड्गकोशोऽपि खड्गरहितो भवत्विति भावः। रुद्रोऽस्मान्प्रति सर्वथा न्यस्तशस्त्रो भवत्वित्यभिप्रायः। रुद्रस्य षोडशोपचारपूजने रुद्रोऽस्मान्प्रति सर्वथा न्यस्तशस्त्रो भवत्विति यतो वयमाशास्महे अतोऽनेन मन्त्रेण रुद्रायाभरणं समर्प्पयाम इतिवाक्यशेषः ॥ १० ॥

याते हेतिर्म्मीढुष्टम हस्ते बभूव ते धनुः।
तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परिभुज ॥ ११ ॥

"मिह सेचने" मेहति मिमेहेति वा मीढ्वान् अतिशयेन मीढ्वानिति मीढुष्टमस्तत्सम्बुद्धौ हेमीढुष्टम "तसौ मत्वर्थे" इति भसंज्ञायां "वसोः सम्प्रसारणम्" इति सम्प्रसारणे षत्वष्टुत्वद्वये च कृते मीढुष्टमेति रूपं भवति। तथा धनुरिति हेतिविशेषणमस्ति। ते इति एकं ते पदं निरर्थकं केवलं पादपूरणार्थकमेवास्तीति सर्वमप्यनुसन्धेयम्। "अतिरिक्तमि" तिकारिकया विशेष्यादिपदमध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तद्यथा हे मीढुष्टम, सेक्तृतम, कामाभिवर्षुक, हे रुद्र, ते तव हस्ते या धनुर्हेतिः धनूरूपा हेतिर्बभूव अस्तीत्यर्थः। बभूवेत्यत्र तु लडर्थे लिट् "छन्दसि लुङ्लङ्लिट" इति पाणिनिवचनात्। तव हस्ते यद्धनूरूपमायुधं विद्यते इति भावः। तया धनूरूपया हेत्या त्वं विश्वतः सर्वतोऽस्मान् परिभुज परिपालयेत्यर्थः। भुजेति भुजेर्विकरणव्यत्यये शप्रत्यये रूपं ज्ञेयम्। कीदृश्या तया हेत्येत्यपेक्षायामुच्यते। अयक्ष्मया यक्ष्मा प्रबलरोगः 'थाइ सिस' इति भाषायां प्रसिद्धः। नास्ति यक्ष्मा यस्याः सा अयक्ष्मा तया अयक्ष्मया निरुपद्रवया दृढया अनुपद्रवकारिण्या वा। एवं भूतया धनूरूपया हेत्या हे रुद्र, अस्मान् सर्वतो भावेन त्वं रक्षेत्यर्थः। रुद्रस्य षोडशोपचारपूजने हेरुद्र, यतो वयमनेन मन्त्रेण तुभ्यं गन्धं समर्प्पयामः। अतस्त्वमस्मान् विश्वतः सर्वतः परिभुज सर्वतो भावेन रक्षेत्यर्थः। शेषं समानमेव ॥ ११ ॥

परि॑ ते॒ धन्व॑नो हे॒तिर॒स्मान्वृ॑णक्तु वि॒श्वत॑ः ।
अथो॒ यऽइ॑षु॒धिस्तवा॒रेऽअ॒स्मन्नि धे॑हि॒ तम् ॥ १२ ॥

"अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे रुद्र, ते तव धन्वनो हेतिः धनुःसम्बन्धि हेतिनामकमायुधम् अस्मान् विश्वतः सर्वतः परिवृणक्तु परित्यजतु अस्मान्माहन्त्वित्यर्थः। "वृजी वर्जने" रुधादिः, इत्यस्य लोट्प्रथमपुरुषैकवचने रूपम्। 'अथो' इत्ययं निपातोऽप्यर्थे तथाहि अथो अपि च हे रुद्र, तव य इषुधिः तूणीरोऽप्यस्तीतिशेषः। तमपि अस्मत्सकाशात् आरे दूरे निधेहि स्थापय। तवेषुधिं दृष्ट्वा यतो वयं बिभीमस्तस्मात्तमप्यस्मत्तो दूरे प्रक्षिपेत्यर्थः॥ रुद्रस्य षोडशोपचारपूजने हे रुद्र, यतो वयमनेन मन्त्रेण तुभ्यं पुष्पं समर्प्पयामः, अतस्त्वमपि तमिषुधिमस्मत्तो दूरे निधेहि शेषं पूर्ववदेव॥१२॥

अ॒व॒तत्य॒ धनु॒ष्ट्वꣳ सह॑स्राक्ष॒ शते॑षुधे ।
नि॒शीर्य॑ श॒ल्याना॒ं मुखा॑ शि॒वो न॑ः सु॒मना॑ भव ॥ १३ ॥

सहस्रमक्षीणि यस्य स सहस्राक्षस्तत्सम्बुद्धौ हे सहस्राक्ष, इन्द्रस्वरूपिन्, अथवा रुद्रस्य सर्वप्राण्यात्मकत्वाद् यस्य यस्य प्राणिनो यानि यानि अक्षादीनि इन्द्रियाणि सन्ति तानि सर्वाण्यस्यैव रुद्रस्येत्यभिप्रायेण सहस्राक्षशब्दस्यायमर्थो वा हे सहस्राक्ष, बहुनेत्रादीन्द्रिययुक्त, सर्वप्राण्यात्मक, तथा हे शतेषुधे, शतमिषुधयो यस्यासौ शतेषुधिस्तत्सम्बद्धौ हे शतेषुधे, शतसङ्ख्यकायुधधारिन्, हे रुद्र, त्वं धनुः अवतत्य अपज्याकं कृत्वा शल्यानां बाणाग्रगतलोहभागानां मुखा मुखानि फलाग्राणि निशीर्य्य नितरां शीर्णानि कृत्वा नोऽस्मान्प्रति शिवः शान्तः सुमनाः सुष्ठु मनो यस्यासौ सुमनाः शोभनचित्तश्च भव। हे रुद्र, वयं त्वद्भक्ताः स्मः,

अतोऽस्माननुगृहाणेत्यर्थः। रुद्रस्य षोडशोपचारपूजने हे रुद्र, यतो वयं तुभ्यमनेन मन्त्रेण धूपं समर्प्पयामः, अतस्त्वमपि नोऽस्मान्प्रति शिवः शान्तः सुमनाः शोभनमनस्कश्च भवेत्यर्थः। शेषं पूर्ववदेव ॥ १३ ॥

नमस्तऽआयुधायानातताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥१४॥

"अतिरिक्तमिति"कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे रुद्र, ते तव ईदृशाय आयुधाय बाणाय नमोऽस्त्विति शेषः। नमस्कारोऽस्त्वित्यर्थः। कीदृशायेत्यपेक्षायामुच्यते। अनातताय धनुषि अनारोपितायेत्यर्थः। पुनः कीदृशाय धृष्णवे धृष्णोतीति धृष्णुस्तस्मै धृष्णवे धर्षणशीलायेत्यर्थः। धृषेः क्नुप्रत्ययः। रिपून्हन्तुमतिप्रगल्भायेतिभावः। उत अपि च हे रुद्र, ते तव उभाभ्यां बाहुभ्यां नमः नमस्कारोऽस्त्विति शेषः। तथा हे रुद्र, तव धन्वने नमः नमस्कारोऽस्त्विति शेषः। अनातताय इति धनुषोऽपि विशेषणम्। कीदृशाय धन्वने अनातताय अवतारितमौर्वीकायेत्यर्थः। एवम्भूताय तव पिनाकाख्याय धनुषेऽपि नमस्कारोऽस्त्विति भावः॥ रुद्रस्य षोडशोपचारपूजने—हे रुद्र, वयं तुभ्यमनेन मन्त्रेण दीपं समर्प्पयामस्त्वञ्चास्मान् सुखयेतिवाक्यशेषः। शेषं पूर्ववदेव ॥ १४ ॥

मानो महान्तमुतमानोऽअर्भकम्मानऽउक्षन्तमुतमानऽउक्षितम्। मानोवधीः पितरम्मोत मातरम्मानः प्रियास्तन्वो रुद्ररीरिषः ॥ १५ ॥

हे रुद्र, नोऽस्माकं महान्तं वृद्धं गुरुपितृव्यादिकं मा वधीः मा हिंसीः न जहीत्यर्थः। उत अपि च नोऽस्माकम् अर्भकं बालं मा वधीः मा हिंसीः न मारयेत्यर्थः। तथा हे रुद्र, नोऽस्माकम् उक्षन्तं सिञ्चन्तं तरुणमपि मा वधीः मा हिंसीः न विनाशयेत्यर्थः। उत अपि-च नोऽस्माकम् उक्षितं सिक्तम् अर्थात् गर्भस्थं च मा वधीः मा हिंसीः न मारयेत्यर्थः। एवं नोऽस्माकं मातरं जननीमपि मा वधीः मा हिंसीः न विनाशयेत्यर्थः। अस्यामेव कण्डिकायां महान्तमित्यनेन सिद्धयोर्मातापित्रोरिह पुनरुपादानमादरातिशयद्योतनार्थमेव। अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः। तथा हे रुद्र, नोऽस्माकं प्रियाः वल्लभाः मनोज्ञाः तन्वः तनूः शरीराणि अर्थात्पुत्रपौत्रादिरूपाणि च मा रीरिषः रिषतिर्हिंसार्थः, मा हिंसीः न मारयेत्यर्थः। रुद्रस्य षोडशोपचारपूजने वाक्यार्थश्चैवं तथाहि हे रुद्र, यतो वयमनेन मन्त्रेण तुभ्यं नैवेद्यं समर्प्पयामः, अतस्त्वमपि नोऽस्माकं महान्तं गुरुपितृव्यादिकं मा वधीः मा हिंसीः। अन्यत्समानमेव ॥ १५ ॥

मानस्तोके तनये मानऽआयुषिमानोगोषु मानोऽअश्वेषुरीरिषः। मानोवीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ १६ ॥

"अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तत्र तोकम्, तनयः, इत्युभयमपत्यनामसु पठितम्। तस्मात्पदद्वयेनापि यद्यपि पुत्र एवाभिधीयते, तथापि

तोकशब्देन पुत्रः, तनयशब्देन पौत्रश्चेहानुगृह्यते। तदुभयस्यापि शब्दस्यार्थः प्रयोगसाधनविधिश्चैवं तद्यथा तोकमित्यत्र "तुद व्यथने ( तु० प० )" ततश्च "पुंसि संज्ञायां घः" इति घप्रत्ययः। पृषोदरादित्वाद्दकारस्य ककारश्च बोद्धव्यः। तुदतेऽनेन माता गर्भवासकाले, तुद्यते व्याधिभिरितिवा। यद्वा, "ष्टुच् स्तुतौ" ( भ्वा० आ० ) तस्मात् "कृदाधारार्चिकलिभ्यः कः ( उ० ३, ३८ )" इति बाहुलकात्कप्रत्ययः सलोपश्च स्तोच्यते स्तूयते इति तोकम्। तथाच हरिश्चन्द्रोपाख्याने "ऋणमस्मिन्त्सन्नयत्यमृतत्वं च गच्छति ( ऐ० ब्रा० ७, ३, १ )" इत्यादिगाथाभिः प्रशस्यते पुत्रः। यद्वा, "तु" इति सौत्रो धातुर्वृध्यर्थः, ततः कप्रत्ययश्च पूर्ववत् वर्द्धते हि तत्, वर्द्धयते वा मातापितृभ्यां यद्वा, सर्वेभ्य एव धातुभ्यो घञि रूपम्, अर्थश्च स एव। तुदेस्तु ककारो बाहुलकात् ष्टुचेः सकारलोपश्च बोद्धव्यः। तथा तनय इत्यत्र "तनु विस्तारे ( त० उ० )" तस्मात् "वलिमलितनिभ्यः कयन् (उ० ४, ९७)" इति कयन् प्रत्ययः कुलं तनोति विस्तारयतीति तनयः पौत्रोऽवगन्तव्यः। तथाहि हे रुद्र, नोऽस्माकं तोके पुत्रे तनये पौत्रे च मा रीरिषः मा हिंसीः अस्मत्पुत्रविषये पौत्रविषये च हिंसां मा कार्षीः न कुर्वित्यर्थः। तथा नोऽस्माकम् आयुषि जीवने मा रीरिषः मा हिंसीः अस्मज्जीवनविषयेऽपि हिंसां मा कार्षीः न कुर्वित्यर्थः। तथा नोऽस्माकं गोषु धेनुषु मा रीरिषः मा हिंसीः अस्मद्गोविषयेषु हे रुद्र, त्वं हिंसां मा कार्षीः न कुर्वित्यर्थः। तथा नोऽस्माकम् अश्वेषु च मा रीरिषः मा हिंसीः अस्मदश्वविषयेऽपि त्वं हिंसां मा कार्षीः न कुर्वित्यर्थः। यद्वा "बहुलं छन्दसी"ति पाणिन्युक्तेः सुप्तिङ्उपग्रहेतिकारिकया च तोके, तनये, आयुषि, गोषु, अश्वेषु, इति सर्वत्र विभक्तिव्यत्यय एव बोध्यः। ततोऽयमर्थः। हे रुद्र, नोऽस्माकं तोकं पुत्रं तनयं पौत्रं च मा रीरिषः मा हिंसीः। तथा नोऽस्माकम् आयुर्जीवनं मा रीरिषः मा हिंसीः। तथा नोऽस्माकं गाः धेनूः मा रीरिषः मा हिंसीः। तथा नोऽस्माकम् अश्वाँश्च मा रीरिषः मा हिंसीः। किञ्च हे रुद्र, भामिनः "भाम क्रोधे" भामिनः क्रोधयुक्तानपि नोऽस्माकं वीरान् भृत्यान् "वीरो वै पुत्रः" इति श्रुतेः वीरान् पुत्रानित्येव वा तानपि क्रोधयुतान् मा वधीः मा हिंसीः। क उपकार इति चेत्तत्र ब्रूमः, हविष्मन्तः हविर्युक्ताः सन्तो वयं सदमित् सदैव त्वा त्वां हवामहे यागाय त्वामाह्वयामः। त्वदेकशरणा वयमतोऽस्माकं तोकादीनां रक्षा त्वयाऽवश्यमेव कर्त्तव्येतिभावः। रुद्रस्य षोडशोपचारपूजने हे रुद्र, यतो वयमनेन मन्त्रेण तुभ्यं चन्दनं समर्प्पयामः, अतोऽस्माकं तोकादीन् मा वधीरिति पूर्ववद्बोद्धव्यम्। षोडशोपचारपूजाविधाने पूजापङ्कजभास्करोद्धृतप्रमाणं यथा—"आसनं स्वागतं चार्घ्यं पाद्यमाचमनीयकम्। मधुपर्काचमनस्नानवसनाभरणानि च ॥१॥ गन्धपुष्पे धूपदीपौ नैवेद्यं चन्दनं तथा। पूजायां हि कर्त्तव्या उपचाराश्च षोडश ॥ २ ॥" इति। एतत्प्रमाणानुसारेणैव रुद्रस्य षोडशोपचारपूजनमन्त्रा यथाक्रमं मया व्याख्याताः। षोडशोपचारपूजायाः क्रमान्तरमपि दृश्यते। यथा च ब्रह्मवैवर्त्ते "आसनं पाद्यमर्घ्यं च स्नानीयं चानुलेपनम्। धूपो दीपश्च नैवेद्यं ताम्बूलं शीतलं जलम्॥ १ ॥ वसनं भूषणं माल्यं गन्धमाचमनीयकम्। मनोहरं सुतल्पं च देयान्येतानि षोडश ॥ २ ॥" इति। प्रयोगपद्धतिष्वन्यथैव क्रमो दृश्यते। तत्राप्यधिकतरैव पदार्थसङ्ख्याऽवलोक्यते। अस्तु तथापि न कश्चिद्विरोधः, वचनान्तरक्रमे पाठक्रमादर्थक्रमो बलीयानितिनियमात्। पद्धतिष्वधिकसङ्ख्याप्रक्रमे च "अधिकस्याधिकं फलम्" इत्यादिवचनान्तरेण विरोधपरिहारो विधेयः ॥१६॥

एवं षोडशर्चं रुद्राख्यमन्त्रगणं व्याख्याय शतरुद्रियमन्त्राणामर्थं विवृणोमि। तथाहि—

नम॑स्ते रुद्र म॒न्यव॑ऽउ॒तोत॒ऽइष॑वे॒ नमः॑। बा॒हुभ्या॑मु॒त ते॒ नमः॑ ॥१॥

इत्यादयः षोडशमन्त्राः ॥ १६ ॥

शतरुद्रियस्याघोरऋषी रुद्रो देवता नमस्त इति गायत्रीच्छन्दो यात इतितिसृणामनुष्टुप्छन्दो अध्यवोचदितितिसृणां पङ्क्तिच्छन्दो नमोऽस्त्वित्यादिसप्तानामनुष्टुप्छन्दो मान इति द्वयोर्जगतीच्छन्दो नमोहिरण्यबाहव इत्यादीनि यजूँषि द्रापे अन्धस इत्युपरिष्टाद्बृहतीच्छन्द इमारुद्रायेतिजगतीच्छन्दो यात इत्यनुष्टुप्छन्दः परिनो मीढुष्टम इति त्रिष्टुप्छन्दो विकिरिद्र विलोहित सहस्राणि सहस्रश इत्यनुष्टुप्छन्दो असङ्ख्यतेत्यादिशदानामनुष्टुप्छन्दो नमोऽस्त्वित्यादित्रीणि यजूँषि व्वयर्ठ सोमेतिगायत्रीच्छन्द एषत इति यजुरवरुद्रमिति पङ्क्तिश्छन्दस्त्र्यायुषमित्युष्णिक्छन्दः शिवो नामेति यजुर्नतं विवदेति द्वे त्रिष्टुभौ सर्वपापक्षयपूर्वकश्रीरुद्रप्रीत्यर्थे शतरुद्रियजपे विनियोगः॥ तत्र नमस्त इत्यादि षोडशर्च्चं रुद्राक्षमन्त्रप्रकरणे व्याख्यातं तत्रैव व्याख्या द्रष्टव्या॥ अतः परं रुद्राणां तिस्रोऽशीतयः प्रदर्श्यन्ते। तत्र चैकैकस्यां कण्डिकायामष्टावष्टौ रुद्रा अवगन्तव्याः। तद्रुद्रमध्ये केचन उभयतो नमस्काराः केचन अन्यतरतो नमस्कारा बोद्धव्याः। तत्र ये घोरतरा अर्थाद् अशान्ततरा रुद्रास्तेषां क्रोधोपशमनार्थमुभयतः पदद्वयात्पूर्वं पश्चाच्च नमः पदं द्रष्टव्यं त एव उभयतो नमस्काराः बोद्धव्याः। ते खलु हिरण्यबाहवे ( १७ क० ) इत्यादिश्वपतिभ्यश्च वः ( २८ क० ) इत्यन्ता मूलमन्त्रेषु द्रष्टव्याः। ततोऽन्ये ये रुद्राः शान्ततमास्तेषामन्यतरतो यजुर्द्वयस्यादावेव नमः पदं द्रष्टव्यं त एवान्यतरतो नमस्काराः प्रत्येतव्याः। ते च भवाय च ( २८ क० ) इत्यादिप्रखिदते च ( ४६ क० ) इत्यन्ता ज्ञातव्याः। तत्र "इषुमद्भ्यः ( २२ क० )" इत्यादि "श्वपतिभ्यश्च वः ( २८ क० )" इत्यन्ताः प्रत्यक्षा अवगन्तव्याः, व इतियुष्मच्छब्दयोगात्। तथा "इषुमद्भ्यः ( ४६ क० )"इति च उभयतो नमस्कारा बोद्धव्याः। एवं "सभाभ्यः (२४ क०)" इति जातसंज्ञा रुद्रा अभिधीयन्ते। अपि च ये रुद्रा यतो घोरतरा अशान्ततरा इत्यर्थः, अतस्तेभ्य उभयतो यजुर्द्वयस्यादावन्ते च नमस्क्रियते। उचितञ्चैतत्–लोकेऽपि दृश्यते ये अशान्ततरा अतिक्रोधिनस्तेषां क्रोधोपशमनार्थं तेभ्यो मुहुर्मुहुर्नमस्क्रियते। शान्तेभ्यो रुद्रेभ्यश्चैकतर एव नमस्क्रियते संसारभयभीरुभिर्भक्तैरित्यभिप्रायः। ते मन्त्रास्तेषामर्थाश्चाधोऽधो द्रष्टव्याः। तथा हि—

नमो॒ हिर॑ण्यबाहवे सेना॒न्ये॑ दि॒शाञ्च॒ पत॑ये॒ नमो॒ नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यः पशू॒नां पत॑ये॒ नमो॒ नमः॑ शष्पि॒ञ्जरा॑य॒ त्विषी॑मते प॒थीनां॒ पत॑ये॒ नमो॒ नमो॒ हरि॑केशायोपवी॒तिने॑ पु॒ष्टानां॒ पत॑ये॒ ( नमः॑ ) नमो॒ नमो॑ बभ्लु॒शाय॑ ॥ १७ ॥

हिरण्यमाभरणरूपं बाह्वोर्यस्य स हिरण्यबाहुस्तस्मै हिरण्यबाहवे हिरण्याभरणयुक्ताय सेनान्ये सेनां नयतीतिसेनानीस्तस्मै सेनान्ये सेनानायकाय नमोऽस्त्वितिशेषः। सुवर्णाभरणविशिष्टाय सेनानायकरूपाय रुद्राय नमस्कारोऽस्त्वित्यर्थः। तथा दिशाञ्च पतये नमोऽस्त्वितिशेषः। चकारः समुच्चयार्थः। अतो हिरण्यबाहवे इतिविशेषणमत्राप्यनुषजति। तेनायं भावः हिरण्यबाहवे हिरण्याभरणविशिष्टाय दिशां पतये पालकाय रुद्राय नमस्कारोऽस्त्वित्यर्थः।

तथा हरिकेशेभ्यो वृक्षेभ्यो नमोऽस्त्वितिशेषः। हरयो हरितवर्णाः केशाः पत्ररूपा येषां ते हरिकेशास्तेभ्यः हरिकेशेभ्यः पत्ररूपकेशधारिभ्यः वृक्षेभ्यः वृक्षरूपेभ्यो रुद्रेभ्यो नमस्कारोऽस्त्वित्यर्थः। हरितवर्णपत्रयुक्ता ये वृक्षास्तेऽपि रुद्रा एव ध्येया इति भावः। "सर्वं रुद्रमयं जगदि"ति श्रुतेः। तथा पशूनां पतये नमोऽस्त्विति शेषः। पश्यन्तीति पशवस्तेषां पशूनां जीवानां पतये पालकाय रुद्राय नमस्कारोऽस्त्वित्यर्थः। तथा शष्पं बालतृणं तद्वत्पिञ्जरः शष्पपिञ्जर इतिप्राप्ते छान्दसत्वाट्टिलोपे शष्पिञ्जर इत्येवं भवति तस्मै शष्पिञ्जराय पीतरक्तवर्णाय त्विषीमते त्विषिर्दीप्तिरस्यास्तीति त्विषिमानिति प्राप्ते शृणुतेत्यादिप्रातिशाख्यसूत्रेण त्विषिमच्छन्दे षकारघटकेकारस्य संहितायां दीर्घे त्विषीमानित्थं भवति तस्मै त्विषीमते दीप्तिमते रुद्राय नमोऽस्त्विति शेषः। नमस्कारोऽस्त्वित्यर्थः। तथा पथीनां पतये नमोऽस्त्विति शेषः। पथिशब्दो मार्गवाची। उत्तरदक्षिणतृतीया मार्गाः श्रुतावुक्ताः, तेषां पथीनां श्रुत्युक्तानां मार्गाणां पतये पालकाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा हरिकेशाय नीलवर्णकेशाय जरारहिताय उपवीतिने मङ्गलार्थं यज्ञोपवीतधारिणे नागयज्ञोपवीतिने वा एवम्भूताय रुद्राय नमोऽस्त्वितिशेषः। नमस्कारोऽस्त्वित्यर्थः। तथा पुष्टानां गुणपूर्णानां नराणां पतये पालकाय रुद्राय नमोऽस्त्वितिशेषः। नमस्कारोऽस्त्वित्यर्थः। मन्त्रेषु दिशां च पतये, पशूनां पतये, पथीनां पतये, पुष्टानां पतये, इति सर्वत्र "षष्ठीयुक्तश्छन्दसि वा" इतिपाणिनीयसूत्रेण घिसंज्ञाऽवगन्तव्या। पुष्टानां पतये नमः, इत्यन्तैव कण्डिकास्ति। नमो बभ्लुशायेति यत्कण्डिकान्ते वर्त्तते तच्चपलासंज्ञाभिप्रायेण चपलासंज्ञा च शिष्याणां सञ्चार (सञ्चर) निवारणार्थं भवतीति शिक्षायां स्पष्टम्। तत्र पुष्टानां पतये नमः नमो बभ्लुशायेत्यत्र प्रथमनमःसम्बन्धिविसर्गस्य द्वितीयनमःशब्दे परे रुत्वे उत्वे गुणे च सति "पुष्टानां पतये नमो नमो बभ्लुशाय" इत्येवं संहितायां पाठो द्रष्टव्यः। वस्तुतस्तु नमः शब्दान्तैव कण्डिका बोद्धव्या। अतो मया मूलमन्त्रोल्लेखे ( नमः ) इत्येवं सचिह्नं व्यलेखि। एवमग्रेऽपि सवत्रानुसन्धेया ॥ १७ ॥

नमो॑ बभ्लु॒शाय॑ व्या॒धिनेऽन्ना॑ना॒ं पत॑ये॒ नमो॒ नमो॑ भ॒वस्य॑ हे॒त्यै जग॑ता॒ं पत॑ये॒ नमो॒ नमो॑ रु॒द्राया॑तता॒यिने॒ क्षेत्रा॑णा॒ं पत॑ये॒ नमो॒ नम॑ -:- सू॒ताया॒हन्त्यै॒ वना॑ना॒ं पत॑ये॒ ( नम॑ -:- ) नमो॒ 'नमो॒ रोहि॑ताय' ॥ १८ ॥

बभ्लुशः कपिलवर्णः, अथवा बिभर्त्ति रुद्रमिति बभ्लुर्वृषभस्तस्मिन् शेते इति बभ्लुशो वृषारूढ इति यावत् तस्मै बभ्लुशाय कपिलवर्णाय वृषभारूढाय वा, व्याधिने विध्यति शत्रुनिति व्याधी तस्मै व्याधिने शत्रुघातकाय रुद्राय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा अन्नानां पतये पालकाय रुद्राय नमः नमस्कारोऽस्तु। तथा भवस्य संसारस्य हेत्यै आयुधाय रुद्राय नमः संसारसंहारकाय रुद्राय नमस्कारोऽस्त्वित्यर्थः। इह संसारे ये केचन प्राणिनो म्रियन्ते तान् सर्वानपि रुद्र एव स्वयमायुधरूपं धृत्वा हन्ति, अतस्तत्प्राणिनां कृते रुद्रो हेतिरित्युच्यते। एतस्मादेव कारणात् 'भवस्य हेत्यै' इत्येवमुक्तम्। रुद्र एव नानाविधव्याध्यादिरूपं धृत्वा प्राणिनो हन्ति, अतस्तच्छान्त्यर्थं तद्रूपाय रुद्राय वयमपि नमस्कुर्म्मं इति भावः। अथवा भवस्य संसारस्य हेत्यै आयुधाय संसारनिवर्त्तकाय रुद्राय नमोऽस्त्विर्थः।

य एवं रुद्रमुपासते न तत्कृते संसारभयमित्यभिप्रायेणैवमुक्तं यत् 'भवस्य हेत्यै' इति। अतो भवस्य संसारस्य कृते रुद्रो हेतिः संसारोच्छेदकायुधविशेषः। तदुक्तं श्रुत्या "स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्। स एव विष्णुः स प्राणः स कालाग्निः स चन्द्रमाः। स एव सर्वं यद्भूतं यच्च भाव्यं सनातनम्। ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये इति (अ. वे. कै. १।८।९) "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् (शु. य. वे. ३।६०)" इति च। तथा जगतां पतये पालकाय रुद्राय नमः नमस्कारोऽस्त्विवतिशेषः। अनावृष्टौ वृष्ट्यादिप्रदानेन महामारीभयादौ तद्भयशान्तिकरणद्वारा च रुद्रस्य जगत्पालनकर्तृत्वं स्पष्टं प्रतीयते, अतोऽनावृष्टौ रुद्राराधनं वृष्ट्यर्थं जनाः कुर्वन्ति महामारीभये च सम्प्राप्ते तच्छान्त्यर्थं रुद्राराधनं सर्वेऽपि विदधतीत्यपि दृश्यते। अत एव 'जगतां पतये नमः' इत्युक्तमत्र। जगतामिति बहुवचनान्तप्रयोगदर्शनेनैवानुमीयते यत् स्थावरजङ्गमानां सर्वेषामेव संसारिणां प्राणिनां पतिः पालको रुद्र एव रूपान्तरेणाऽस्ति तस्मै नमस्कुर्म्म इति भावः। तथा आततायिने रुद्राय नमः आततेन अर्थात् विस्तृतेन धनुषा सह एति गच्छतीत्याततायी तस्मै आततायिने उद्यतायुधाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा क्षेत्राणां पतये नमः "इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते" इति भगवदुक्तेः क्षेत्राणि शरीराणि तेषां क्षेत्राणां देहानां पतये पालकाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा सूताय सारथये तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। कथंभूताय सूतायेत्यपेक्षायामुच्यते अहन्त्यै न हन्ति कमपि इति अहन्तिः अहन्ता तस्मै अहन्त्यै अहन्त्रे एवम्भूताय रुद्राय नमः नमस्कारोऽस्त्विवति भावः। सारथिर्हि न कमपि हन्ति, इति युद्धविदां व्यवस्था श्रूयते। अतः 'सूतायाहन्त्यै' इत्युक्तमिह। तथा वनानां पतये पालकाय रुद्राय नमः नमस्कुर्म्मः। अन्नानां पतये, जगतां पतये, क्षेत्राणां पतये, वनानां पतये, इति "षष्ठीयुक्तश्छन्दसिवे"त्यनेन सर्वत्र घिसंज्ञाऽनुसन्धेया। तथा 'सूतायाहन्त्यै' इत्यत्र अहन्तिशब्दस्य सूतविशेषणत्वात्पुंस्त्वं युक्तम्, तत्र स्त्रीत्वमार्षम्। अतो'ऽहन्त्ये' इति प्राप्ते 'अहन्त्यै' इति चतुर्थ्येकवचने रूपमित्यवगन्तव्यम्॥ १८॥

नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नमऽउच्चैर्घोषायाक्रन्दयते पत्तीनां पतये (नमः) नमो नमः कृत्स्नायतया॥ १९॥

रोहिताय लोहितवर्णाय स्थपतये गृहादिकर्त्रे विश्वकर्म्मरूपिणे रुद्राय नमः नमस्कारोऽस्त्विवति पूर्ववत्क्रियापदमध्याहर्त्तव्यम्। भुवन्तये भुवं तनोतीति भुवन्तिर्भूमण्डलविस्तारकस्तस्मै भुवन्तये भूमण्डलविस्तारकाय वारिवस्कृताय वरिवो धनं करोतीति वरिवस्कृत् स एव वारिवस्कृतः (स्वार्थेऽण्) तस्मै वारिवस्कृताय स्थानभोग्यकराय तद्रूपाय रुद्राय नमः नमस्कारोऽस्तु। तथा ओषधीनां पतये नमः ग्राम्यारण्यानामोषधीनां पतये पालकाय रुद्राय नमस्कुर्म्म इत्यर्थः। तथा मन्त्रिणे वाणिजाय नमः आलोचनकुशलो मन्त्री तथा वणिगेव वाणिजः (स्वार्थेऽण्) व्यापारकर्त्ता तस्मै तदुभयरूपाय रुद्राय नमः नमस्कुर्म्म इत्यर्थः।

तथा कक्षाणां वनगतगुल्मवीरुधादीनां पतये पालकाय नमः नमस्कारोऽस्तु । तथा उच्चैर्घोषाय आक्रन्दयते नमः "घुषिर् शब्दे" घुष्यते इति घोषः उच्चैर्घोषो यस्य स उच्चैर्घोषस्तस्मै उच्चैर्घोषाय उच्चध्वनिविशिष्टाय आक्रन्दयति रोदयति शत्रून् पापिनो वा नरानित्याक्रन्दयन् तस्मै आक्रन्दयते युद्धे महाशब्दाय रिपुरोदकाय, पापिनां भीत्यै महाशब्दं कुर्वते पापिजनरोदकाय इति वा एतादृशाय रुद्राय एतद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा पत्तीनां सेनाविशेषाणां पदातीनां वा चमूनां पतये पालकाय रुद्राय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः । महाभारते पत्तिलक्षणञ्चोक्तं व्यासेन "एको रथो गजश्चाश्वास्त्रयः पञ्च पदातयः । एषसेनाविशेषोऽयं पत्तिरित्यभिधीयते" एतल्लक्षणविशिष्टानां सेनानां पालकाय रुद्राय नम तद्रूपाय रुद्राय नमः इत्याशयः ।। १९ ।।

**नमः॑ कृत्स्नाय॒तया॒ धाव॑ते॒ सत्व॑नां॒ पत॑ये॒ नमो॒ नमः॒ सह॑मानाय निव्या॒धिन॑ऽआव्याधिनी॑नां॒ पत॑ये॒ नमो॒ नमो॑ निष॒ङ्गिणे॑ ककु॒भाय॑ स्ते॒नानां॒ पत॑ये॒ नमो॒ नमो॑ निचे॒रवे॑ परिच॒रायार॑ण्यानां॒ पत॑ये॒ ( नमः॑ ) नमो॒ नमो॒ वञ्च॑ते ।। २० ।।**

कृत्स्नायतया धावते नमः कृत्स्नमिति समग्रनाम कृत्स्नं समग्रम् आयतं विस्तृतम् अर्थाद्धनुर्यस्य सः कृत्स्नायतः तस्य भावः कृत्स्नायतता तया कृत्स्नायततया आकर्णपूर्णधनुष्ट्वेन धावते युद्धे शीघ्रं गच्छते भक्तानामापत्तौ भक्तत्राणार्थं वा शीघ्रं गच्छते रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । कृत्स्नायततया इति प्राप्ते छान्दसत्वात्तकारलोपे कृत्स्नायतया इति तृतीयैकवचने रूपं भवति। धावते इति "धावु गतिशुद्ध्योः" इत्यस्माच्छतृप्रत्यये चतुर्थ्येकवचने धावते इति रूपं सिध्यतीत्यवगन्तव्यम् । 'कृत्स्नायतया धावते' इत्यस्यार्थान्तरं वा कृत्स्नः सर्वः आयो लाभो यस्य स कृत्स्नायस्तस्य भावः कृत्स्नायता तया कृत्स्नायतया सर्वलाभप्रापकत्वेन धावते शीघ्रं गच्छते तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । यथा च तादृशो रुद्रो यत्र यत्र गच्छति तत्र तत्र सर्वेष्टं लाभं प्राप्नोति तथैव तद्रुद्रप्रसादान्ममाप्यस्तु, यत्र यत्र गच्छेयं तत्र तत्र सर्वेष्टं लाभं प्राप्नुयामित्यभिप्रायेण तादृशाय तद्रूपाय रुद्राय अहमपि नमस्करोमीत्यभिप्रायः । तथा सत्वनां पतये रुद्राय नमः, अस्त्विति शेषः । सत्वन् शब्दः प्राणिवाची । सत्वानः सात्त्विकाः शरणागताः प्राणिनस्तेषां पतये पालकाय रुद्राय नमस्कारोऽस्त्वित्यर्थः । तथा सहमानाय निव्याधिने रुद्राय नमः सहतेऽरीनभिभवतीति सहमानस्तस्मै सहमानाय शत्रूणामभिभवकर्त्रे नितरां विध्यति हन्ति शत्रूनिति निव्याधी तस्मै निव्याधिने शत्रुहन्त्रे तदुभयविशेषणविशिष्टाय शत्रुनाशकाय रुद्राय नमस्कारोऽस्त्वित्यर्थः । तथा आव्याधिनीनां पतये रुद्राय नमः आसमन्ताद्विध्यन्तिताड़यन्ति परकीयसैन्यानीति आव्याधिन्यः शूरसेनास्तासां पतये पालकाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा निषङ्गिणे ककुभाय रुद्राय नमः निषज्यते इति निषङ्गः खड्गः सोऽस्यास्तीति निषङ्गी तस्मै निषङ्गिणे खड्गधारिणे ककुभ इति महन्नामसु पठितं ककुभो महान् तस्मै ककुभाय उभयविशेषणविशिष्टाय उभयरूपाय वा रुद्राय नमः नमस्कारोऽस्तु । तथा स्तेनानां पतये रुद्राय नमः स्तेना गुप्तचोरास्तेषां पतये पालकाय रुद्राय नमः नमस्का-

रोऽस्तु। तथा निचेरवे परिचराय रुद्राय नमः अपहारबुद्ध्या निरन्तरं चरति इतस्ततो गच्छतीति निचेरुस्तस्मै निचेरवे निरन्तरं गच्छते परितः आपणवाटिकादौ हरणेच्छया चरतीति परिचरस्तस्मै परिचराय हरणेच्छया सर्वतो गमनशीलाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्तु। तथा अरण्यानां पतये पालकाय रुद्राय नमः नमस्कारोऽस्तु। रुद्रो लीलया चोरादिरूपं धत्ते अथवा रुद्रस्य जगदात्मकत्वाच्चोरादयोऽपि रुद्रा एव ध्येयाः। अथवा स्तेनादिशरीरे जीवेश्वररूपेण रुद्रो द्विधा तिष्ठति। तत्र जीवरूपं स्तेनादिशब्दवाच्यं तदीश्वररुद्ररूपं लक्षयति यथाहि शाखाग्रं चन्द्रस्य लक्षणं तद्वदत्राप्यवगन्तव्यम्। किं बहुना लक्ष्यार्थविवक्षया लौकिका अपि शब्दा मन्त्रेऽभिहिताः। अत एव लौकिकशब्दप्रयोगोऽत्र न दोषावह इत्यनुसन्धेयम्॥२०॥

नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निषङ्गिणऽइषुधिमते तस्कराणां पतये नमो नमः स्रकायिभ्यो जिघांꣳसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यो विकृन्तानां पतये (नमः) नमो नमऽउष्णीषिणे ॥ २१ ॥

वञ्चते परिवञ्चते नमः वञ्चति प्रतारयतीति वञ्चन् तस्मै वञ्चते प्रतारकाय परितः सर्वतो वञ्चति प्रतारयतीति परिवञ्चन् तस्मै परिवञ्चते सर्वतो भावेन प्रतारकाय तदुभयरूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। यद्यपि वञ्चनपरिवञ्चनयोर्विशेषभेदो नास्ति तथापि शब्दसामर्थ्यादीषद्भेदोऽवगम्यत एव। अर्थात् स्वामिन आप्तो भूत्वा व्यवहारे कुत्रचित्तदीयं धनमपह्नुते तद्वञ्चनं सर्वव्यवहारे धनापह्नवः परिवञ्चनमित्युभयोर्वैलक्षण्यं द्रष्टव्यम्। तथा स्तायूनां पतये नमः कस्यचिद्धनिनो गृहे प्रवेशार्थं रात्रौ खनित्रादिना खातं विधाय तदीयद्रव्यहर्त्तारस्तथा कस्यापि धनिनः स्वामिनः स्वीया एव भूत्वा तेन धनिनाऽज्ञाताः सन्तोऽहर्निशं तदीयद्रव्यापहर्त्तार इति द्विविधा गुप्तचोरा भवन्ति। तत्र पूर्वकण्डिकायां स्तेनशब्देनोक्ताः। इह कण्डिकायान्तु स्तायुशब्देनाभिधीयन्ते। तथाहि स्तायूनां गुप्तचोराणां मध्ये केषाञ्चिच्चोरविशेषाणां पतये पालकाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा निषङ्गिणे निषङ्गः खड्गो बाणो वा सोऽस्यास्तीति निषङ्गी तस्मै निषङ्गिणे खड्गधारिणे बाणधारिणे वा इषुधिमते इषुधिर्बाणधारः सोऽस्यास्तीति इषुधिमान् तस्मै इषुधिमते तूणीरधारिणे रुद्राय नमः, तदुभयविशेषणविशिष्टाय तदुभयरूपाय वा रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा तस्कराणां पतये नमः तस्कराः प्रकटचोरास्तेषां पतये पालकाय रुद्राय नमः। तथा स्रकायिभ्यो जिघांꣳसद्भ्यो नमः "स्रक इति वज्रनामसु पठितम्" स्रकेन वज्रेण सह यन्ति गच्छन्तीत्येवं शीलाः स्रकायिणः अत एव शत्रून् हन्तुमिच्छन्ति ये ते जिघांसन्ति जिघांसन्तीति जिघांसन्तः (हन्तेः सन्नन्ताच्छतृप्रत्ययः) तेभ्यो रुद्रेभ्यो नमः तदुभयविशेषणविशिष्टेभ्यस्तदुभयरूपेभ्यो वा रुद्रेभ्यो नमस्कारोऽस्त्वित्यर्थः। तथा मुष्णतां पतये नमः मुष्णन्तीति मुष्णन्तः क्षेत्रादिषु धान्यापहर्त्तारस्तेषां पतये पालकाय रुद्राय नमः नमस्कारोऽस्तु। तथा असिमद्भ्यो नक्तञ्चरद्भ्यो नमः असयः खड्गाः सन्ति येषां तेऽसिमन्तः नक्तं रात्रौ चरन्तीति नक्तञ्चरन्तः खड्गं धृत्वा रात्रौ वीथिनिर्गतप्राणिघातकास्तेभ्यो नमः तत्तद्विशेषणविशिष्टेभ्यस्तत्तद्रूपेभ्यो वा

रुद्रेभ्यो नमस्कारोऽस्त्वित्यर्थः । तथा विकृन्तानां पतये नमः विकृन्तन्ति छिन्दन्ति ये ते विकृन्ताश्छित्त्वा धनापहर्त्तारस्तेषां पतये पालकाय रुद्राय नमः । किं बहुना "सर्वं रुद्रमयं जगदि"तिश्रुतेः सर्वमिदं जगद्रुद्रबुद्ध्या ध्यातव्यमित्यर्थः । इह संसारे यद्यद्रूपधारिणो ये ये जीवास्ते सर्वेऽपि रुद्रा एवेति मत्वा तेभ्यः सर्वेभ्यो नमस्कुर्म्म इत्यभिप्रायः ॥ २१ ॥

नमं॑ऽउष्णी॒षिणे॑ गिरिच॒राय॑ कुलु॒ञ्चानां॒ पत॑ये॒ नमो॒ नमं॑ऽइषु॒मद्भ्यो॑ धन्वा॒यि- भ्य॑श्च वो॒ नमो॒ नमं॑ऽआतन्वा॒नेभ्य॑: प्रति॒दधा॑नेभ्यश्च वो॒ नमो॒ नमं॑ऽआ॒यच्छ॑द्भ्योऽस्य॑- द्भ्यश्च वो॒ ( नम॑: )नमो॒ नमो॑ वि॒सृ॒जद्भ्य॑: ॥ २२ ॥

उष्णीषिणे गिरिचराय नमः उष्णीषं शिरोवेष्टनं तदस्यास्तीति उष्णीषी उष्णीषेण शिरः संवेष्ट्य ग्रामेऽपहर्त्तुं प्रवृत्तः, गिरौ चरतीति गिरिचरः अध्वन्यानां वस्त्राद्यपहर्त्तुं पर्वतादिविषमस्थानचारी तस्मै पूर्वोक्ताय उभयविशेषणविशिष्टाय तदुभयरूपाय वा रुद्राय नमः नमस्कारोऽस्तु । तथा कुलुञ्चानां पतये नमः कुं भूमिं क्षेत्रगृहादिरूपां लुञ्चन्ति हरन्तीति कुलुञ्चाः अथवा कुत्सितं लुञ्चन्तीति कुलुञ्चास्तेषां पतये पालकाय रुद्राय नमः नमस्कारोऽस्तु । तथा इषुमद्भ्यो नमः इषवो बाणा विद्यन्ते येषां ते इषुमन्तः जनान्भीषयितुं बाणधारिणस्तेभ्यः तद्रूपेभ्यो रुद्रेभ्यो नमः नमस्कारोऽस्तु । नमो हिरण्यबाहव इत्यारभ्य नमऽइषुमद्भ्य इति पर्य्यन्तं परोक्षा एव रुद्रा उक्ताः । अतः परं धन्वायिभ्यश्चवोनम इत्यारभ्य श्वपतिभ्यश्चवो नम इति पर्य्यन्तं प्रत्यक्षा रुद्रा उच्यन्ते, युष्मदादेशस्य व इत्यस्य श्रवणात् । तत्र सर्वत्र सम्बुद्धिपदमध्याहर्त्तव्यं "हीनं वाक्ये निवेशयेदि"तिवचनात् । तथाहि हे रुद्राः, धनुषा सह यन्ति गच्छन्तीति धन्वायिनस्तेभ्यो धन्वायिभ्यः धनुर्धारिभ्यः वः युष्मभ्यं नमः नमस्कारोऽस्तु । चकारोऽत्र मन्त्रभेदज्ञापनार्थः । एवमग्रेऽपि सर्वत्रानुसन्धेयम् । तथा इतोऽग्रे यत्र यत्र व इति युष्मच्छब्दोपादानं न दृश्यते तेऽपि रुद्राः प्रत्यक्षभूतानां रुद्राणां सहकारित्वेनैन व्याख्येयास्तैः सह पठितत्वात् । तथाहि हे रुद्राः, आतन्वानेभ्यो नमः आतन्वन्त्यारोपयन्ति ज्यां धनुषीत्यातन्वानास्तेभ्यःतद्रूपेभ्यो रुद्रेभ्यो नमः नमस्कारोऽस्तु वः युष्मभ्यमित्यनुषङ्गः । तथा हे रुद्राः, प्रतिदधानेभ्यः प्रतिदधते सन्दधते बाणं धनुषीति प्रतिदधानाः सन्दधाना इति यावत् तेभ्यो युष्मभ्यं नमः नमस्कारोऽस्तु । तथा हे रुद्राः, आयच्छद्भ्यो नमः आयच्छन्ति आकर्षन्ति धनूंषि ये ते आयच्छन्तस्तेभ्यो रुद्रेभ्यस्तद्रूपेभ्यो वा रुद्रेभ्यो नमः नमस्कारोऽस्तु । वः युष्मभ्यमित्यस्यात्राप्यनुषङ्गः । तथा हे रुद्राः, अस्यद्भ्यः अस्यन्ति क्षिपन्ति बाणानित्यस्यन्तस्तेभ्यो वो युष्मभ्यं नमः नमस्कारोऽस्तु । "असु क्षेपणे" दिवादिः । तस्य शत्रन्तस्य चतुर्थीबहुवचनेऽस्यद्भ्य इति रूपमवगन्तव्यम् ॥ २२ ॥

नमो॑ वि॒सृ॒जद्भ्यो॑ वि॒द्ध्य॑द्भ्यश्चवो॒ नमो॒ नम॑: स्व॒पद्भ्यो॒ जाग्र॑द्भ्यश्चवो॒ नमो॒ नम॒: शया॑नेभ्य॒ऽआसी॑नेभ्यश्चवो॒ नमो॒ नम॒स्तिष्ठ॑द्भ्यो॒ धाव॑द्भ्यश्चवो॒ ( नम॑: ) नमो॒ नम॑: स॒भाभ्य॑: ॥ २३ ॥

विसृजद्भ्यो नमः विसृजन्ति विमुञ्चन्ति बाणानरिष्विति विसृजन्तस्तेभ्यो नमस्तद्रूपेभ्यो नमः नमस्कारोऽस्तु। तथा हे रुद्राः, विध्यद्भ्यो वो नमः विध्यन्ति ताडयन्ति शत्रूनिति विध्यन्तस्तेभ्यस्तद्रूपेभ्यो वो युष्मभ्यं रुद्रेभ्यो नमः नमस्कारोऽस्तु। तथा हेरुद्राः, स्वपद्भ्यो नमः स्वपन्तीति स्वपन्तः स्वप्नावस्थामनुभवन्तस्तेभ्यः तद्रूपेभ्यो रुद्रेभ्यो नमः नमस्कारोऽस्तु वः युष्मभ्यमित्यनुषङ्गः। तथा हेरुद्राः, जाग्रद्भ्यो वो नमः जाग्रतीति जाग्रतः जाग्रदवस्थावन्तस्तेभ्यो वो युष्मभ्यं नमः नमस्कारोऽस्तु। तथा हेरुद्राः, शयानेभ्यो नमः "शीङ् स्वप्ने" अदादिरात्मनेपदी शेरते इति शयानाः सुषुप्त्यवस्थावन्तस्तेभ्यो नमस्तद्रूपेभ्यो रुद्रेभ्यो नमस्कारोऽस्त्वित्यर्थः, वः युष्मभ्यमित्यस्यात्राप्यनुषङ्गः। तथा हे रुद्राः, आसीनेभ्यो वो नमः आसते इत्यासीना उपविशन्त इत्यर्थः, तेभ्यो वः युष्मभ्यं नमः नमस्कारोऽस्त्वित्यर्थः। तथा हे रुद्राः, तिष्ठद्भ्यो नमः तिष्ठन्तीति तिष्ठन्तः गतिनिवृत्ता इत्यर्थः, तेभ्यस्तद्रूपेभ्यो रुद्रेभ्यो नमः नमस्कारोऽस्तु वः युष्मभ्यमित्यनुषङ्गः। तथा हे रुद्राः, धावद्भ्यो वो नमः धावन्तः वेगवद्गतिमन्तस्तेभ्यस्तद्रूपेभ्यो वो युष्मभ्यं नमः नमस्कारोऽस्त्वित्यर्थः। रुद्रस्य सर्वप्राण्यात्मकत्वादेतत्सर्वमपि सम्पद्यते नतु किमपि विरुध्यते "सर्वं रुद्रमयं जगदि"ति श्रुतेः ॥ २३ ॥

**नमः॑ स॒भाभ्यः॑ स॒भाप॑तिभ्यश्च वो॒ नमो॒ नमोऽश्वे॒भ्योऽश्व॑पतिभ्यश्च वो॒ नमो॒ नम॑ऽआव्या॒धिनी॑भ्यो वि॒विध्य॑न्तीभ्यश्च वो॒ नमो॒ नम॒ऽउग॑णाभ्यस्तृꣳह॒तीभ्य॑श्च वो॒ (नमः॑) नमो॒ नमो॑ ग॒णेभ्यः॑ ॥ २४ ॥**

जातसंज्ञा ये रुद्रा रुद्रलोके सन्ति ते रुद्रा एव इह कथ्यन्ते, रुद्राद्वैतप्रतिपादनार्थम्। "अथो एव हैतानि रुद्राणां जातानि" इति श्रुतेः। तथाहि हेरुद्राः, सभाभ्योनमः सभाः परिषदस्ताभ्योनमः सभारूपा ये रुद्राः सन्ति तेभ्योरुद्रेभ्यो नमः नमस्कारोऽस्त्वित्यर्थः, वः युष्मभ्यमित्यनुषङ्गः। सभादिषु रुद्रदृष्टिः कर्त्तव्येतिभावः। तथा हेरुद्राः, सभापतिभ्यो वो नमः सभायाः परिषदः पतिभ्यः पालकेभ्यो रुद्रेभ्यस्तद्रूपेभ्यो वा वः युष्मभ्यं रुद्रेभ्यो नमः नमस्कारोऽस्तु। तथा हेरुद्राः, अश्वेभ्यो नमः अश्वास्तुरगास्तेभ्यस्तद्रूपेभ्योरुद्रेभ्यो नमः नमस्कारोऽस्तु वः युष्मभ्यमित्यस्यात्राप्यनुषङ्गः। तथा हे रुद्राः, अश्वपतिभ्यो वोनमः अश्वपतिभ्यस्तुरगपालकेभ्यो रुद्रेभ्यो नमस्तद्रूपेभ्यो वा वः युष्मभ्यं रुद्रेभ्यो नमः नमस्कारोऽस्तु। तथा हे रुद्राः, आव्याधिनीभ्यो नमः आसमन्ताद्विध्यन्तीत्याव्याधिन्यः देव्यः सेना वा ताभ्यो नमः तद्रूपेभ्यो रुद्रेभ्यो नमः नमस्कारोऽस्तु वः युष्मभ्यमित्यनुषङ्गः। तथा हे रुद्राः, विविध्यन्तीभ्यो वो नमः विशेषेण विध्यन्ति ताड़यन्ति शत्रून् पापिनो वा नरानिति विविध्यन्त्यस्ताभ्यो नमः तद्रूपेभ्यो रुद्रेभ्यो वः युष्मभ्यं नमः नमस्कारोऽस्तु। तथा हे रुद्राः, उगणाभ्यो नमः उत्कृष्टा गणा भृत्यसमूहा यासां ता उगणास्ताभ्यो वः युष्मभ्यं नमः तद्रूपेभ्यो वो युष्मभ्यं रुद्रेभ्यो नमः नमस्कारोऽस्तु। उगणाभ्य इत्यत्रोपसर्गान्त्यलोपः पृषोदरादित्वादित्यवगन्तव्यम्। ब्रह्माद्या या मातरः सन्ति ताः सर्वा अपि रुद्ररूपा एव ध्यातव्या इति भावः। अतस्तदभिप्रायेणैव तत्तद्रूपेभ्योऽत्र नमस्क्रियते इत्याशयः। तथा हे रुद्राः, तृंहतीभ्यो वो नमः, "तृहि हिंसायां" तृंहन्ति घ्नन्तीति तृंहत्यः हन्तुं समर्था दुर्गाद्या मातरस्ताभ्यो वो नमः तद्रूपेभ्यो रुद्रेभ्यो वः युष्मभ्यं नमः नमस्कारोऽस्तु। स्त्रीलिङ्गान्तपदेषु

तत्तच्छब्दघटकस्त्रीत्वापेक्षया सर्वत्र स्त्रीत्वमार्षम्, अन्यथा रुद्रशब्दस्य नित्यपुंस्त्वात्तदसम्भव-मित्यवगन्तव्यम् ॥ २४ ॥

**नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो (नमः) नमो नमः सेनाभ्यः ॥ २५ ॥**

हे रुद्राः, गणेभ्यो नमः गणाः देवानुचरभूतविशेषास्तेभ्यो रुद्रेभ्यो नमः तद्रूपेभ्यो रुद्रेभ्यो वा नमः नमस्कारोऽस्त्विति शेषः, वो युष्मभ्यमित्यनुषङ्गः। तथा हे रुद्राः, गणपतिभ्यश्चवो नमः गणानां पतिभ्यः पालकेभ्यो रुद्रेभ्यस्तद्रूपेभ्यो वा रुद्रेभ्यो वः युष्मभ्यंनमः नमस्कारोऽस्त्वित्यर्थः। तथा हे रुद्राः, व्रातेभ्यो नमः व्राता नानाजातीयानां सङ्घास्तेभ्यो रुद्रेभ्यस्तद्रूपेभ्यो वा रुद्रेभ्यो नमस्कारोऽस्तु, वः युष्मभ्यमित्यनुषङ्गः। तथा हे रुद्राः, व्रातपतिभ्यो वो नमः व्रातपालका व्रातपतयस्तेभ्यो वः युष्मभ्यं नमोऽस्त्विति शेषः। तथा हे रुद्राः, गृत्सेभ्यो नमः, गृध्यन्ति वाञ्छन्ति विषयभोगानिति गृत्साः विषयलम्पटाः, गृत्सा मेधाविनो वा तेभ्यो रुद्रेभ्यस्तद्रूपेभ्यो वा रुद्रेभ्यो नमः, वः युष्मभ्यमित्यनुषङ्गः। तथा हे रुद्राः, गृत्सपतयो गृत्सपालकास्तेभ्यो-रुद्रेभ्यस्तद्रूपेभ्यो वा रुद्रेभ्यो वः युष्मभ्यं नमः नमस्कारोऽस्त्वित्यर्थः। तथा हे रुद्राः, विरूपेभ्यो नमः विकृतं विविधं वा रूपं येषां ते विरूपाः नग्नमुण्डजटिलादयस्तेभ्यो रुद्रेभ्यस्त-द्रूपेभ्यो वा रुद्रेभ्यः नमस्कारोऽस्त्वित्यर्थः, वः युष्मभ्यमित्यस्यात्राप्यनुषङ्गः। तथा हे रुद्राः, विश्वरूपेभ्यश्च वो नमः विश्वं सर्वं नानाविधं रूपं येषां ते विश्वरूपास्तुरङ्गवदनहयग्रीवा-दयस्तेभ्यो वः युष्मभ्यं नमः तेभ्यो रुद्रेभ्यस्तद्रूपेभ्यो वा रुद्रेभ्यो वः युष्मभ्यं नमस्कारोऽ-स्त्वित्यर्थः। चकाराः सर्वे समुच्चयार्था अवगन्तव्याः ॥ २५ ॥

**नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्योऽअरथेभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमो महद्भ्योऽअर्भकेभ्यश्च वो (नमः) नमो-नमस्तक्षभ्यः ॥ २६ ॥**

हे रुद्राः, सेनाभ्यो नमः सेनाः सैन्यानि तद्रूपेभ्यो रुद्रेभ्यो नमोऽस्त्विति शेषः, वः युष्मभ्यमित्यनुषङ्गः। तथा हे रुद्राः, सेनानिभ्यो वो नमः सेनां नयन्तीति सेनान्यः सेना-नायकाः सेनापतय इति यावत्तेभ्यः रुद्रेभ्यस्तद्रूपेभ्यो वा रुद्रेभ्यो वः युष्मभ्यं नमः। सेनानी-भ्य इति प्राप्ते सेनानिभ्य इति छान्दसत्वाद्ध्रस्वविधानेन सिध्यतीत्यवगन्तव्यम्। तथा हे-रुद्राः, रथिभ्यो नमः रथाः सन्ति येषां ते रथिनस्तेभ्यो रुद्रेभ्यो नमः, वः युष्मभ्यमित्यनुषङ्गः। तथा हे रुद्राः, अरथेभ्यो वः युष्मभ्यं नमः नास्ति रथो येषां ते अरथास्तेभ्यो रुद्रेभ्यस्तद्रूपेभ्यो वा रुद्रेभ्यो वः युष्मभ्यं नमः नमस्कारोऽस्त्वित्यर्थः। तथा हे रुद्राः, क्षत्तृभ्यो नमः "क्षि निवासगत्योः" तुदादिः क्षियन्ति निवसन्ति रथेष्विति क्षत्तारः अथवा "क्षिप प्रेरणे" क्षिपन्ति प्रेरयन्ति सारथीनिति क्षत्तारः रथाधिष्ठातारः पुरुषा इति यावत्तेभ्यः रुद्रेभ्यस्त-

द्रूपेभ्यो वा रुद्रेभ्यो नमः वः युष्मभ्यमित्यनुषङ्गः। युष्मभ्यं नमस्कारोऽस्त्वित्यर्थः। क्षतृशब्दस्तु "नप्तृनेष्टृत्वष्टृक्षत्तृहोतृ०"—इत्याद्यौणादिकसूत्रेण तृच्प्रत्ययान्तो निपातितः, तस्य चतुर्थीबहुवचने क्षतृभ्य इति रूपं भवति तदवगन्तव्यम्। तथा हे रुद्राः, सङ्ग्रहीतृभ्यश्च वो नमः, संगृह्णन्त्यश्वानिति सङ्ग्रहीतारः सारथय इत्यर्थः ("ण्वुल्तृचौ" इति पाणिनीयसूत्रेण तृच्प्रत्ययोऽनुसन्धेयः) तेभ्यो रुद्रेभ्यस्तद्रूपेभ्यो वा रुद्रेभ्यो वः युष्मभ्यं नमः नमस्कारोऽस्त्वित्यर्थः। तथा हे रुद्राः, महद्भ्यो नमः जातिविद्यादिभिरुत्कृष्टा महान्तः श्रेष्ठास्तेभ्यो रुद्रेभ्यस्तद्रूपेभ्यो वा रुद्रेभ्यो नमः वो युष्मभ्यमित्यस्यात्राप्यनुषङ्गः। युष्मभ्यं नमस्कारोऽस्त्वित्यर्थः। तथा हे रुद्राः, अर्भकेभ्यश्च वो नमः अर्भकाः प्रमाणादिभिरल्पास्तेभ्यो रुद्रेभ्यस्तद्रूपेभ्यो वा रुद्रेभ्यो वः युष्मभ्यं नमः नमस्कारोऽस्त्वित्यर्थः॥ २६॥

**नम॒स्तक्ष॑भ्यो रथका॒रेभ्य॑श्च वो॒ नमो॒ नम॒ः कुला॒लेभ्य॒ः कर्म्मा॒रेभ्य॑श्च वो॒ नमो॒ नमो॑ निषा॒देभ्य॑ः पु॒ञ्जिष्ठे॑भ्यश्च वो॒ नमो॒ नम॑ः श्व॒निभ्यो॑ मृग॒युभ्य॑श्च वो॒ (नम॑ः) नमो॒ नम॒ः श्वभ्य॑ः ॥ २७॥**

हे रुद्राः, तक्षभ्यो नमः तक्षाणः शिल्पजातयस्तेभ्यो नमः तद्रूपेभ्यो रुद्रेभ्यो नमस्कारोऽस्त्वित्यर्थः, वः युष्मभ्यमित्यनुषङ्गः। तथा हे रुद्राः, रथकारेभ्यश्च वो नमः रथं कुर्वन्तीति रथकाराः सूत्रधारविशेषास्तेभ्यो रुद्रेभ्यस्तद्रूपेभ्यो वा रुद्रेभ्यः वः युष्मभ्यं नमः नमस्कारोऽस्त्वित्यर्थः। तथा हे रुद्राः, कुलालेभ्यो नमः कुलालाः कुम्भकारास्तेभ्यो नमस्तद्रूपेभ्यो रुद्रेभ्यो नमः। नमस्कारोऽस्तु, वः युष्मभ्यमित्यस्यात्राप्यनुषङ्गः। तथा हे रुद्राः कर्म्मारेभ्यश्च वो नमः कर्म्माराः लोहकारास्तेभ्यो नमस्तद्रूपेभ्यो वः युष्मभ्यं रुद्रेभ्यो नमोऽस्त्वित्यर्थः। तथा हे रुद्राः, निषादेभ्यो नमः निषादाः गिरिचरामांसाशिनो भिल्ला इति यावत्तेभ्यो नमस्तद्रूपेभ्यो रुद्रेभ्यो नमः नमस्कारोऽस्त्वित्यर्थः, वः युष्मभ्यमित्यस्यात्राप्यनुषङ्गः। तेऽपि सर्वे रुद्रबुद्ध्यैवानुसन्धेया इत्याशयः। तथा हे रुद्राः, पुञ्जिष्ठेभ्यो वो नमः पुञ्जिष्ठाः पक्षिपुञ्जघातकाः पुल्कसादयस्तेभ्यो वः युष्मभ्यं नमः तद्रूपेभ्यो रुद्रेभ्यो नमः नमस्कारोऽस्त्वित्यर्थः। तथा हे रुद्राः, श्वनिभ्यो नमः शुनो नयन्तीति श्वन्यस्तेभ्यः श्वनिभ्यः श्वकण्ठबद्धरज्जुधारकेभ्यो नमः वः युष्मभ्यमित्यनुषङ्गः। तद्रूपेभ्यो रुद्रेभ्यो युष्मभ्यं नमोऽस्त्वित्यर्थः। (श्वनिभ्य इत्यत्र नयतेर्ह्रस्व आर्षत्वादित्यनुसन्धेयम्) तथा हे रुद्राः, मृगयुभ्यश्च वो नमः मृगान् कामयन्ते इति मृगयवः लुब्धका इत्यर्थः "इदं युरिदंकामयमानः" इतियास्कोक्तेः। तेभ्यो वः युष्मभ्यं नमः तद्रूपेभ्यो रुद्रेभ्यो वः युष्मभ्यं नमस्कारोऽस्त्वित्यर्थः॥ २७॥

**नम॒ः श्वभ्य॒ः श्वप॑तिभ्यश्च वो॒ नमो॒ नमो॑ भ॒वाय॑ च रु॒द्राय॑ च॒ नम॑ः श॒र्वाय॑ च पशु॒पत॑ये च॒ नमो॒ नील॑ग्रीवाय च शिति॒कण्ठा॑य च॒ नम॑ः कप॒र्दिने॑ ॥ २८॥**

हे रुद्राः, श्वभ्यो नमः श्वानः कुक्कुरास्तेभ्यः तद्रूपेभ्यो रुद्रेभ्यो नमः नमस्कारोऽस्त्वित्यर्थः, वः युष्मभ्यमित्यनुषङ्गः। हे रुद्राः, तथा श्वपतिभ्यश्च वो नमः शूनां पतयः श्वपतयः

श्वपालकास्तेभ्यो वः यूष्मभ्यं नमः। किरातवेषस्य रुद्रस्यानुचराः श्वपतय उच्यन्ते तेभ्यस्तद्रूपेभ्योऽपि वः युष्मभ्यं रुद्रेभ्यो नमः नमस्कारोस्त्वित्यर्थः। व इति युष्मच्छब्दयोगाद्येप्रत्यक्षा रुद्रा आभिहितास्ते आभिः कण्डिकाभिः प्रतिपादिताः। पक्षान्तरे "नमऽइषुमद्भ्यो धन्वायिभ्यः" इत्यारभ्य येवः शव्दास्ते पूजावाचका एव न युष्मदादेशाः। तत्पक्षे ये एवं भूताः पूर्वोक्तगुणविशिष्टाः पूजार्हाः रुद्रास्तेभ्यो वयं नमस्कुर्म्म इत्यभिप्रायः। इत्युभयतो नमस्कारमन्त्राः समाप्ताः। अतः परञ्च नमस्कारोपक्रमेण नाममन्त्रा उच्यन्ते। तथा हि भवाय च नमः, 'चकारः पुनरर्थे' च पुनः, भवन्त्युत्पद्यन्ते जन्तवोऽस्मादिति भवस्तस्मै भवाय जगदुत्पत्तिकारणाय संसाररूपाय वा नमः नमस्कारोऽस्त्विवति शेषः। तथा रुद्राय च नमः अत्रापि चकारः पुनरर्थे, च पुनः रुद्राय नमः रुत् दुःखं द्रावयति नाशयतीति रुद्रस्तस्मै रुद्राय भक्तानां दुःखनाशिने नमः नमस्कारोऽस्त्वित्यर्थः। अथवा रवणं रुत् ज्ञानं राति ददातीति रुद्रस्तस्मै रुद्राय स्वोपासकानां ज्ञानप्रदाय नमः नमस्कारोऽस्त्वित्यर्थः। तथा शर्वाय च नमः च पुनरर्थे "शृञ् हिंसायां" शृणाति हिनस्ति पापमिति शर्वस्तस्मै शर्वाय पापनाशकाय नमः नमस्कारोऽस्त्वित्यर्थः। तथा पशुपतये च नमः च पुनः पशून् अज्ञान् पाति रक्षतीति पशुपतिस्तस्मै पशुपतये अज्ञानिनामपि रक्षकाय नमः नमस्कारोऽस्तु। यद्वा पश्यन्तीति पशवो जीवास्तेषां पतिः पालकः विष्णुरूपेण जीवरक्षकोऽपि य एव रुद्रः, तस्मै नमः नमस्कारोऽस्तु। तथा नीलग्रीवाय च नमः च पुनः विषभक्षणेन नीला नीलवर्णा ग्रीवा कण्ठैकदेशो यस्य स नीलग्रीवस्तस्मै नीलग्रीवाय नीलकण्ठाय नमः नमस्कारोऽस्तु। तथा शितिकण्ठाय च नमः च पुनः शितिः श्वेतः कण्ठो नीलातिरिक्तभागो यस्य स शितिकण्ठस्तस्मै शितिकण्ठाय नमः नमस्कारोऽस्त्वित्यर्थः। यद्वा चकारः सर्वत्र समुच्चयार्थः पादपूरणार्थो वाऽवगन्तव्यः॥२८॥

नमः॑ कप॒र्दिने॑ च॒ व्युप्तकेशाय च॒ नमः॑ सहस्रा॒क्षाय॑ च श॒तध॑न्वने च॒ नमो॑ गिरिश॒याय॑ च शिपिवि॒ष्टाय॑ च॒ नमो॑ मी॒ढुष्ट॑माय॒ चेषु॑मते च॒ नमो॑ ह्र॒स्वाय॑ ॥२९॥

कपर्दिने च नमः "कपर्दोऽस्य जटाजूटः पिनाकोऽजगवं धनुः" इत्यभिधानात्कपर्दः जटाजूटः सोऽस्यास्तीति कपर्दी तस्मै कपर्दिने पाशुपतादिवेषेण जटाजूटधारिणे ब्रह्मचारिणे वा रुद्राय नमः नमस्कारोऽस्त्विवति शेषः। ब्रह्मचारिणः संन्यासिनश्च सर्वे रुद्रबुद्ध्यैव ध्यातव्या इत्याशयः। तथा सहस्राक्षाय च नमः सहस्रमक्षीणि यस्यासौ सहस्राक्षस्तस्मै सहस्राक्षाय इन्द्ररूपाय रुद्राय नमः नमस्कारोऽस्त्विवति शेषः। तथा च पुनः शतधन्वने च नमः शतं धनूंषि यस्यासौ शतधन्वा "धनुषश्च" इति पाणिनीयसूत्रेणानङादेशोऽवगन्तव्यः। तस्मै शतधन्वने बहुधनुर्धारिणे रुद्राय नमः नमस्कारोऽस्त्विवति शेषः। तथा गिरिशयाय च नमः गिरौ कैलासे शेतेऽसौ गिरिशयस्तस्मै गिरिशयाय अर्थात् कैलासवासिने रुद्राय नमः नमस्कारोऽस्त्विवति शेषः। यत्र निवसति तत्र शेतेऽपीति व्यवस्थया गिरिशयायेत्यस्य पर्य्याये कैलासवासिने इत्युक्तेऽपि न कश्चिद्विरोध इत्यनुसन्धेयम्। तथा शिपिविष्टाय नमः 'विष्णुः शिपिविष्टः' इति श्रुतेः शिपिविष्टो विष्णुस्तस्मै शिपिविष्टाय विष्णुरूपाय रुद्राय नमः नमस्कारोऽस्त्विवति शेषः। अथवा "पशवो वै शिपिः" इति श्रुतेः पशव एव शिपिशब्देनोच्यन्ते। पशवश्च पश्यन्तीति पशव इति व्युत्पत्त्या पशुशब्देनेह जीवा एवाभिधीयन्ते। ततोऽयमर्थः।

शिपिषु पशुषु विष्टः प्रविष्टः शिपिविष्टस्तस्मै शिपिविष्टाय सर्वप्राणिष्वन्तर्यामितयास्थितायेत्यर्थः । एवम्भूताय रुद्राय नमः नमस्कारोऽस्त्विति शेषः । अथवा "यज्ञो वै शिपिः" इति श्रुतेर्यज्ञ एव शिपिशब्देनाभिधीयते । ततोऽयमर्थः । शिपौ यज्ञेऽधिदेवतात्वेन विष्टः प्रविष्टः शिपिविष्टस्तस्मै शिपिविष्टाय अधिदेवतास्वरूपिणे रुद्राय नमः नमस्कारोऽस्त्विति शेषः । एतस्याधिदेवतात्वं च श्रूयते । तद्यथा "शिवः शिवा गुहो विष्णुर्ब्रह्मेन्द्रयमकालकाः । चित्रगुप्तोऽथ भान्वादेर्दक्षिणे चाधिदेवताः ॥" इति । अथवा शिपयोऽत्र रश्मय उच्यन्ते "तैराविष्टो भवती"तियास्कोक्तेरादित्य एव शिपिविष्टशब्देनाभिधीयते । ततोऽयमर्थः । शिपिभिः रश्मिभिराविष्टः शिपिविष्टस्तस्मै शिपिविष्टाय मण्डलाधिष्ठात्रे आदित्याय नमः मण्डलाधिष्ठातृरूपाय आदित्यस्वरूपिणे रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा मीढुष्टमाय च नमः अतिशयेन मीढ्वानिति मीढुष्टमः मेघरूपेण सेक्तेत्यर्थस्तस्मै मीढुष्टमाय अतिसेक्त्रे मेघरूपाय रुद्राय नमः नमस्कारोस्त्विति शेषः । तथा इषुमते च नमः इषवो बाणाः सन्तीति इषुमान् तस्मै इषुमते तूणीरधारिणे रुद्राय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः । एतेन च किरातवेषस्य रुद्रस्य स्तुतिरिहोक्ता ॥ २९ ॥

नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च नमऽआशवे ॥ ३० ॥

अत्र रूपतो नमस्कारा उच्यन्ते । तथाहि ह्रस्वाय च नमः ह्रस्वोऽल्पशरीरस्तस्मै तादृशाय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः । तथा वामनाय च नमः वामनः सङ्कुचितावयवस्तस्मै तादृशाय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्वितिशेषः । तथा बृहते च नमः बृहन्प्रौढाङ्गस्तस्मै तादृशाय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्वितिशेषः । तथा वर्षीयसे च नमः अतिशयेन वृद्ध इति वर्षीयान् तस्मै ( "प्रियस्थिरस्फिरोरु०" इत्यादिना वृद्धस्य वर्षादेशः ) तादृशाय रुद्राय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्वितिशेषः । तथा वृद्धाय च नमः वृद्धो वयसाधिकस्तस्मै तादृशाय रुद्राय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्वितिशेषः । तथा सवृधे च नमः वर्धन्ते विद्याविनयादिगुणैस्ते वृधः वृद्धाः पण्डिताः ( वर्धतेः क्विप् ) तैः सह वर्त्तते इति सवृत् तस्मै तादृशाय रुद्राय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्वितिशेषः । तथा अग्र्याय च नमः महाप्रलये विलुप्तेऽस्मिञ्जगति "आत्मा वा इदमग्रऽआसीन्नान्यत्किञ्चनमिषत्सोऽकामयत एकोहं बहुस्यां प्रजायेयम्" इत्यादिश्रुतेः अग्र्यः सृष्ट्यादौ प्रथमोत्पन्नः स एव परमात्माऽभिलक्ष्यते । जगतामग्रे भवोऽग्र्यस्तस्मै नमः नमस्कारोऽस्त्विति शेषः । "अग्राद्यत्" इति पाणिनीयसूत्रेण भवार्थेऽग्रशब्दाद्यत्प्रत्ययोऽवगन्तव्यः । तथा प्रथमाय च नमः सर्वत्र य एव मुख्यः स एव प्रथम उच्यते । तस्माद्यमर्थः । प्रथमः अर्थात्सर्वत्र मुख्यः श्रेष्ठ इति यावत् । य एवम्भूतो रुद्रस्तस्मै तादृशाय रुद्राय तद्रूपाय वा रुद्रायनमः नमस्कारोस्त्विति शेषः । चकाराः सर्वे समुच्चयार्थाः । एवमग्रेऽपि॥३०॥

नमऽआशवे चाजिराय च नमः शीघ्र्याय च शीभ्याय च नमऽऊर्म्याय चावस्वन्याय च नमो नादेयाय च द्वीप्याय च ॥ ३१ ॥

आशवे च नमः "तत्सृष्ट्वा तदेवानुप्राविशदि"ति श्रुतेः आशुः व्यापकः ( "अशू व्याप्तौ ( स्वा. आ. )" "कृवापाजिमिस्वदिसाध्यशूभ्य उण्" इत्यौणादिक उण् प्रत्ययः, अश्नुते व्याप्नोति सर्वं जगदित्याशुः सर्वप्राण्यात्मकत्वेन व्यापकः य एवम्भूतो रुद्रस्तस्मै तादृशाय रुद्राय नमः नमस्कारोऽस्त्वितिशेषः। तथा अजिराय च नमः "अजतिर्गत्यर्थः" अजति गच्छतीत्यजिरः गमनशीलस्तस्मै तादृशाय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा शीघ्र्याय च नमः शीघ्रे वेगवद्वस्तुनि भवः शीघ्र्यस्तस्मै तादृशाय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा शीभ्याय च नमः "शीभृ कत्थने" शीभ्यते कथ्यते इति शीभः आत्मश्लाघी ( पचाद्यच् ) शीभः जलप्रवाहो वा, शीभः क्षिप्रो वा तत्र भवः शीभ्यः तस्मै तादृशाय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा ऊर्म्याय च नमः ऊर्म्मिषु कल्लोलेषु भव ऊर्म्यस्तस्मै नमः नमस्कारोऽस्त्विति शेषः। तथा अवस्वन्याय च नमः अवगतः स्वनो यस्मात् तदवस्वनं स्थिरजलं तत्र भवः अवस्वन्यस्तस्मै अवस्वन्याय स्थिरजले भवाय तादृशाय तद्रूपाय वा रुद्राय नमः। अथवा अव नीचैर्गर्त्तादौ स्वनः अवस्वनस्तत्र भवः अवस्वन्यस्तस्मै तादृशाय तद्रूपाय वा रुद्राय नमः। "तत्र भवः" इति सर्वत्र यत्प्रत्ययः। तथा नादेयाय च नमः नद्यां भवो नादेयस्तस्मै नादेयाय नर्मदायां नद्यां नर्मदेश्वररूपेण शालग्राम्यां नद्यां शालग्रामरूपेण, अन्यस्यां च नद्यां जलचरजन्तुरूपेण पङ्कादिरूपेण वा भवाय तादृशाय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः। "स्त्रीभ्यो ढक्" इति पाणिनीयसूत्रेण ढक्प्रत्ययोऽवगन्तव्यः। तथा द्वीप्याय च नमः द्वीपे जलान्तर्वर्त्तिनिर्जलभूमौ भवो द्वीप्यस्तस्मै तादृशाय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्वितिशेषः॥ ३१॥

**नमो॒ ज्ये॒ष्ठाय॑ च कनि॒ष्ठाय॑ च॒ नम॑ः पूर्व॒जाय॑ चापर॒जाय॑ च॒ नमो॑ मध्य॒माय॑ चापग॒ल्भाय॑ च॒ नमो॑ जघ॒न्याय च बु॒ध्न्याय च॒ (नम॑ः) नम॒ः सो॒भ्याय॥३२॥**

अस्यां कण्डिकायां वयोवस्थाविशेषाभिधायकाः षट् नमस्कारा उच्यन्ते। तथा हि ज्येष्ठाय च नमः अत्यन्तं प्रशस्यो ज्येष्ठस्तस्मै ज्येष्ठाय प्रशस्ततराय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। "ज्य च" इति पाणिनीयसूत्रेण प्रशस्यशब्दस्येष्ठनि ज्यादेशे ज्येष्ठशब्दः सिद्ध्यति। तस्य चतुर्थ्येकवचने ज्येष्ठायेतिपदं भवतीत्यवगन्तव्यम्। तथा कनिष्ठाय च नमः अत्यन्तं युवाऽल्पो वा कनिष्ठस्तस्मै कनिष्ठाय अतियूने अल्पाय वा नमः तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। "युवाल्पयोः कनन्यतरस्याम्" इति युवाल्पयोः कनादेशे कनिष्ठशब्दः सिद्ध्यति। तस्य चतुर्थ्येकवचने कनिष्ठायेति रूपं सम्पद्यते इत्यनुसन्धेयम्। तथा पूर्वजाय च नमः पूर्वं जगदादौ जायते इति पूर्वजस्तस्मै पूर्वजाय हिरण्यगर्भरूपेण प्रथमोत्पन्नाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा अपरजाय च नमः अपरस्मिन्काले महाप्रलये जायते इत्यपरजस्तस्मै अपरजाय प्रलयकालीनकालाग्निरूपेणोत्पन्नाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। मध्यमाय च नमः मध्ये भवो मध्यमस्तस्मै मध्यमाय सृष्टिसंहारान्तर्वर्त्तिदेवतिर्यगादिरूपेणोत्पन्नाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। मध्यशब्दाद्भवार्थे "मध्यान्मः" इति पाणिनीयसूत्रेण मप्रत्ययो बोद्धव्यः।

तथा अपगल्भाय च नमः "गल्भ धाष्ट्यें" गल्भनं गल्भः धाष्ट्र्यम् अपगतो गल्भो यस्मात्सोऽपगल्भः अव्युत्पन्नेन्द्रिय इत्यर्थस्तस्मै तादृशाय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। एकगर्भान्तरितो वा अपगल्भः तस्मै नमः तद्रूपाय वा रुद्राय नमस्कारोऽस्त्वित्यर्थः। तथा जघन्याय च नमः जघनं गवादीनां पश्चाद्भागस्तत्र भवो जघन्यस्तस्मै नमः तद्रूपाय रुद्राय नमस्कारोऽस्त्वित्यर्थः। तथा बुध्न्याय नमः बुध्नं वृक्षादिमूलं तत्र भवो बुध्न्यस्तस्मै नमः तद्रूपाय रुद्राय नमस्कारोऽस्त्वित्यर्थः। सर्वे चकाराः समुच्चयार्था ज्ञेयाः ॥ ३२ ॥

**नमः॑ सोभ्या॑य च प्रतिसर्य्या॑य च॒ नमो॒ याम्या॑य च॒ क्षेम्या॑य च॒ नम॒ः श्लोक्या॑य चावसा॒न्या॑य च॒ नम॑ऽउर्व॒र्य्या॑य च॒ खल्या॑य च॒ (नमो॒ व्व॒न्या॑य) ॥ ३३ ॥**

सोभ्याय च नमः सोभं गन्धर्वनगरं तत्र भवः सोभ्यस्तस्मै सोभ्याय गन्धर्वनगरोत्पन्नाय गन्धर्वनगराधिष्ठातृरूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः। अथवा "पुण्येन पुण्यं लोकं नयति पापेन पापं लोकमुभाभ्यां मनुष्यलोकम् (प्रश्नो. १)" इत्याथर्वणश्रुतेः उभाभ्यां पुण्यपापाभ्यां सहितः सोभो मनुष्यलोकस्तत्र भवः सोभ्यस्तस्मै सोभ्याय मनुष्यलोकोत्पन्नाय नानाविधस्थावरजङ्गमादिरूपेण तत्तदधिष्ठातृरूपाय वा तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वितिशेषः। तथा प्रतिसर्याय च नमः प्रतिसरो विवाहोचितं हस्तसूत्रमभिचारो वा तत्र भवः प्रतिसर्यस्तस्मै प्रतिसर्याय नमः तद्रूपाय रुद्राय नमस्कारोऽस्त्वितिभावः। प्रतिसरशब्दस्यानेकार्थत्वे कोशप्रमाणञ्च यथा "आहुः प्रतिसरं हस्तसूत्रे माल्यस्य मण्डने। व्रणशुद्धौ चमूपृष्ठे नियोज्यारक्षके तथा॥ कर्णेऽथ मन्त्रभेदेऽपि" इति विश्वः। तथा याम्याय च नमः यमे भवो यम्य इतिप्राप्ते छान्दसत्वाद्दीर्घे याम्यस्तस्मै याम्याय च यमाधिष्ठातृरूपाय पापिनां नरकार्त्तिदात्रे रुद्राय नमः नमस्कारोऽस्त्वितिशेषः। यद्वा यामः प्रहरस्तत्राधिष्ठातृरूपेण भवो याम्यस्तस्मै तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा क्षेम्याय च नमः क्षेमं कुशलं तत्र भवः क्षेम्यस्तस्म क्षेम्याय क्षेमाधिष्ठातृरूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा श्लोक्याय च नमः श्लोका वैदिकमन्त्राः यशो वा श्लोकस्तत्र भवः श्लोक्यस्तस्मै श्लोक्याय तत्तदधिष्ठातृस्वरूपाय रुद्राय नमः नमस्कारोऽस्त्वितिशेषः। तथा अवसान्याय च नमः अवसानं समाप्तिर्वेदान्तो वा तत्र भवोऽवसान्यस्तस्मै अवसान्याय महाप्रलयेऽपि ब्रह्मरूपेण स्थिताय "तत्त्वमसी"त्यादिमहावाक्यस्वरूपायेति वा रुद्राय नमःनमस्कारोऽस्त्वित्यर्थः। तथा उर्वर्याय च नमः सर्वसस्याढ्या भूः उर्वराशब्देनोच्यते "उर्वरा सर्वसस्याढ्ये"त्यमरसिंहोक्तेः। ततोऽयमर्थः। उर्वरायां भवः उर्वर्यस्तस्मै उर्वर्याय सर्वप्रकारकसस्यस्वरूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा खल्याय च नमः "खलः कल्के क्षितौ धान्ये पूरे कर्णे जयेऽधमे" इति विश्वकोशादौ दर्शनात् खलः धान्यविवेचनदेशस्तत्र भवः खल्यस्तस्मै खल्याय धान्यविवेचनदेशाधिष्ठातृरूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः ॥ ३३ ॥

**नमो॒ व्व॒न्या॑य च॒ कक्ष्या॑य च॒ नम॑ः श्र॒वाय॑ च प्रतिश्र॒वाय॑ च॒ नम॑ऽआ॒शुषे॑णाय चा॒शुर॑थाय च॒ नम॒ः शूरा॑य चावभे॒दिने॑ च॒ (नमो॒ बि॒ल्मिने॑ ॥ ३४ ॥**

वन्याय च नमः वने वृक्षादिरूपेण भवो वन्यस्तस्मै वन्याय वृक्षाधिष्ठातृस्वरूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । अथवा वनं जलं तत्र नानाजलचरजन्तुरूपेण भवात्र तत्तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । वनमिति वृक्षौघस्य जलादेश्चाभिधानम्, तदुक्तं कोशकारेण "वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने" इति । तथा कक्ष्याय च नमः कक्षं तृणं वल्ली वा तत्र भवाय तदधिष्ठातृस्वरूपिणे रुद्राय नमः नमस्कारोऽस्तु । 'कक्षो वीरुधि दोर्मूले कच्छे शुष्कवने तृणे" इति रभसकोशात्कक्षशब्दस्यानेकार्थत्वमिह दर्शितम् । तथा श्रवाय च नमः श्रूयते इति श्रवः शब्दस्तस्मै श्रवाय तद्रूपाय शब्दब्रह्मस्वरूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः । तथा प्रतिश्रवाय च नमः प्रतिश्रवः प्रतिशब्दः तद्रूपाय रुद्राय नमः नमस्कारोऽस्तु । तथा आशुषेणाय च नमः आशुः शीघ्रा सेना यस्य स आशुषेणः तस्मै तद्रूपाय रुद्राय नमः नमस्कारोऽस्तु । तथा आशुरथाय च नमः आशुः शीघ्रो रथो यस्य स आशुरथः तस्मै तद्रूपाय रुद्राय नमः नमस्कारोऽस्तु । तथा शूराय च नमः, शूराय युद्धधीराय तद्रूपाय रुद्राय नमः नमस्कारोऽस्तु । तथा अवभेदिने च नमः अवभिनत्ति नीचैर्विदारयति शत्रूनिति अवभेदी तस्मै तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः ॥ ३४ ॥

**नमो॑ बि॒ल्मिने॑ च कव॒चिने॑ च॒ नमो॑ व॒र्म्मिणे॑ च व॒रूथिने॑ च॒ नम॑ः श्रु॒ताय॑ च श्रुतसे॒नाय॑ च॒ नमो॑ दुन्दु॒भ्याय च आहन॒न्याय च॒ (नमो॑ धृ॒ष्णवे॑ ॥ ३५ ॥**

बिल्मिने च नमः बिल्मं शिरस्त्राणं तदस्यास्तीति बिल्मी तस्मै बिल्मिने शिरस्त्राणवते पुरुषाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा कवचिने च नमः पटस्यूतं कार्पासगर्भं देहरक्षकं कवचं तदस्यास्तीति कवची तस्मै कवचिने कवचधारिणे पुरुषाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा वर्म्मिणे च नमः लोहमयं शरीररक्षकं वर्म तदस्यास्तीति वर्म्मी तस्मै वर्म्मिणे युद्धार्थं वर्मधारिणे पुरुषाय तदधिष्ठातृस्वरूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा वरूथिने च नमः गजोपरिस्थः काष्ठविशेषो वरूथ इत्युच्यते सोऽस्यास्तीति वरूथी तस्मै वरूथिने तद्विशिष्टाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः । "वरूथं तु तनुत्राणे रथगोपनवेश्मनोः" इत्यभिधानाद्वरूथं तनुत्राणं वा तद्विशिष्टाय तद्रूपाय रुद्राय नमः । तथा श्रुताय च नमः श्रुतः प्रसिद्धः प्रख्यातस्तस्मै तादृशाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा श्रुतसेनाय च नमः श्रुता प्रसिद्धा सेना यस्य श्रुतसेनस्तस्मै तादृशाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा दुन्दुभ्याय च नमः "भेरी स्त्री दुन्दुभिः पुमान्" इत्यभिधानाद्दुन्दुभिः भेरी तत्र शब्दरूपेण तदधिष्ठातृरूपेण वा भवाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा आहनन्याय च नमः आहन्यते ताड्यतेऽनेनेत्याहननं वाद्यताडनसाधनं दण्डादि तत्र भवाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः । एवम्भूताय रुद्राय नमस्कारोऽस्त्वित्यर्थः ॥ ३५ ॥

**नमो॑ धृ॒ष्णवे॑ च प्रमृ॒शाय॑ च॒ नमो॑ निष॒ङ्गिणे॑ चेषुधि॒मते॑ च॒ नम॑स्ती॒क्ष्णेष॑वे चायु॒धिने॑ च॒ नम॑ः स्वायु॒धाय॑ च सु॒धन्व॑ने च॒ नम॒ः स्रुत्या॑य ॥३६॥**

तथा धृष्णवे च नमः धृष्णोतीत्येवं शीलो यस्य स धृष्णुः प्रगल्भस्तस्मै धृष्णवे प्रगल्भशीलाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा प्रमृशाय च नमः प्रमृशति विचारयतीति प्रमृशस्तस्मै प्रमृशाय पण्डिताय तद्रूपाय रुद्राय नमः नमस्कारोऽस्तु। "इगुपध०" इति कः। निषज्यते इति निषङ्गः खड्गः सोऽस्यास्तीति निषङ्गी तस्मै निषङ्गिणे खड्गधारिणे तदधिष्ठात्रे तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा इषुधिमते च नमः इषवो बाणा धीयन्तेऽस्मिन्निति इषुधिः सोऽस्यास्तीति इषुधिमान् तस्मै इषुधिमते तूणीरवते तद्रूपाय रुद्राय नमः नमस्कारोऽस्तु। तथा तीक्ष्णेषवे च नमः तीक्ष्णा असह्या इषवः बाणा यस्य सः तीक्ष्णेषुस्तस्मै तादृशाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा आयुधिने च नमः आयुधान्यन्यान्यपि सन्तीति आयुधी तस्मै आयुधिने अन्यान्यायुधधारिणे तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा स्वायुधाय च नमः शोभनमायुधं त्रिशूलं यस्य स स्वायुधस्तस्मै स्वायुधाय शोभनत्रिशूलधारिणे रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा शोभनं धनुर्यस्य स सुधन्वा तस्मै सुधन्वने पिनाकाख्यधनुर्धारिणे रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः ॥३६॥

**नमः॑ स्रुत्या॑य च प॒थ्या॑य च॒ नमः॑ का॒ट्या॑य च॒ नीप्या॑य च॒ नमः॒ कुल्या॑य च सर॒स्या॑य च॒ नमो॑ नादे॒याय॑ च वैश॒न्ताय॑ च॒ (नमः॑ कूप्या॑य) ॥३९॥**

तथा स्रुत्याय च नमः स्रुतिः क्षुद्रः क्षुद्रमार्गो वा तत्र भवाय रुद्राय नमः तद्रूपाय रुद्राय नमस्कारोऽस्त्वित्यर्थः ॥ तथा पथ्याय च नमः रथाश्वादिगमनयोग्यो मार्गः पन्थाः तत्र भवाय रुद्राय नमः तद्रूपाय रुद्राय नमस्कारोऽस्त्वित्यर्थः। तथा काट्याय च नमः कुत्सितमटति जनो यत्र स काटः विषममार्गस्तत्र भवाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा नीप्याय च नमः नीचैः पतन्त्यापो यत्र स नीपः "ऋक्पूरब्धूः पथाम्–"इत्यप्रत्ययः "द्व्यन्तरुपसर्गेभ्योऽप ईत्"इत्यप्शब्दस्येकारस्तेन नीप इति शब्दसिद्धिः, नीपो गियधोभागः अपां नीचप्रपतनदेशः "झरना" इति प्रसिद्धस्तत्र भवो नीप्यस्तस्मै नीप्याय निर्झरोदकरूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा कुल्याय च नमः कुल्या तु कृत्रिमा सरिदित्यभिधानात्कुल्या कृत्रिमा सरित् तत्र भवः कुल्यः कुलेषु देहेषु अन्तर्यामि रूपेण भवः कुल्यः इति वा "कुलं देहेऽन्वये गणे" इति वाचस्पत्यभिधानकारोक्तेः, तस्मै तादृशाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा सरस्याय च नमः सरः सरोवरस्तत्र पङ्कजादिरूपेण समुत्पन्नाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा नादेयाय च नमः नद्यां भवो नादेयः ("स्त्रीभ्यो ढक्"इति ढक् प्रत्ययः) तस्मै नादेयाय नदीजलरूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा वैशन्ताय च नमः वेशन्तोऽल्पसरस्तत्र भवो वैशन्तस्तस्मै तादृशाय रुद्राय नमः नमस्कारोऽस्त्वर्थः ॥ ३७ ॥

**नमः॑ कूप्या॑य चाव॒ट्या॑य च॒ नमो॒ वीध्र्या॑य चात॒प्या॑य च॒ नमो॒ मेघ्या॑य च विद्यु॒त्या॑य च॒ नमो॒ वर्ष्या॑य चाव॒र्ष्या॑य च॒ ( नमो॒ वात्या॑य ) ॥ ३८ ॥**

तथा कूप्याय च नमः कूपे भवः कूप्यस्तस्मैकूप्याय कूपोदकरूपाय कूपाधिष्ठातृरूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा अवट्याय च नमः अवटो गर्त्तस्तत्र भवाय

तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा वीध्र्याय च नमः "इन्धि दीप्तौ" विशेषेण इध्रं वीध्रं निर्मलं शरदभ्रं तत्र भवो वीध्र्यः। यद्वा विगत इध्रो दीप्तिर्यस्मात्स वीध्रो घनागमस्तत्र भवाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा मेघ्याय च नमः मेघे भवो मेघ्यस्तस्मै मेघ्याय मेघोदकरूपाय मेघगतशब्दरूपाय मेघाधिष्ठातृस्वरूपाय वा तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा विद्युत्याय च नमः विद्युति भवो विद्युत्यस्तस्मै विद्युत्याय वैद्युतानलरूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः । वर्षे वृष्ट्यां भवो वर्ष्यस्तस्मै वर्ष्याय वृष्टि-जलरूपाय करकादिस्वरूपाय वा तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा अवर्षे वृष्टिप्रतिबन्धे भवोऽवर्ष्यस्तस्मै अवर्ष्याय च नमः वृष्ट्यभावे दुर्भिक्षादेः सद्भावत्वात्तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । इह जगति यत्किञ्चिदस्ति तत्सर्वं रुद्र एवेति बुद्ध्याऽवगन्तव्यं "सर्वं रुद्रमयं जगदि"ति श्रुतेः ॥ ३८ ॥

नमो॒ वात्या॑य च॒ रेष्म्या॑य च॒ नमो॑ वास्त॒व्या॑य च वास्तु॒पाय॑ च॒ नम॒ꣳ सोमा॑य च रु॒द्राय॑ च॒ नम॑स्ता॒म्राय॑ चारु॒णाय॑ च॒ ( नम॑ ÷ शङ्ग॒वे॑ ) ॥ ३९ ॥

तथा वात्याय च नमः वाते भवो वात्यस्तस्मै वात्याय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा रेष्म्याय च नमः "रिष हिंसायाम्"रिष्यन्ते नश्यन्ति भूतान्यत्रेति रेष्मा प्रलयकालः ("अन्येभ्योऽपि दृश्यन्ते" इति मनिन्प्रत्ययः।) तत्र भवो रेष्म्यस्तस्मै रेष्म्याय प्रलयेऽपि विद्यमानायेत्यर्थः। तादृशाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा वास्तव्याय च नमः वास्तुनि गृहभुवि भवो वास्तव्यस्तस्मै वास्तव्याय गृहोपयोगिनानावस्तुस्वरूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा वास्तुपाय च नमः "वेश्मभूर्वास्तुरस्त्रियाम्" इति वाचस्पत्यभिधानकारोक्तेर्वास्तुर्गृहभूमिरित्युच्यते तत्पालको वास्तुपस्तथा हि वास्तुं गृहभुवं पातीति वास्तुपस्तस्मै वास्तुपाय गृहोपयोगिनां नानावस्तूनां पालकाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः । तथा सोमाय च नमः उमया सहितः सोमस्तस्मै सोमाय उमासहिताय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा रुद्राय च नमः रुत् दुःखं द्रावयति नाशयतीति रुद्रस्तस्मै रुद्राय दुःखनाशकाय शिवाय नमः नमस्कारोऽस्त्वित्यर्थः। तथा ताम्राय च नमः ताम्रो रक्तवर्णस्तस्मै ताम्राय उदयकालीनबालार्कस्वरूपाय रुद्राय नमः नमस्कारोऽस्तु। तथा अरुणाय च नमः अरुण इषद्रक्तस्तस्मै अरुणाय उदयोत्तरकालीनार्कस्वरूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः ॥३९॥

नम॑ ÷ शङ्ग॒वे॑ च पशु॒पत॑ये च॒ नम॑ उ॒ग्राय॑ च भी॒माय॑ च॒ नमो॑ऽग्रेव॒धाय॑ च दूरे व॒धाय॑ च॒ नमो॑ ह॒न्त्रे च॒ हनी॑यसे च॒ नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यो॒ नम॑स्ता॒राय॑ ॥ ४० ॥

शङ्गवे च नमः "शमिति सुखनामे"ति निघण्टुः शं सुखं गमयति प्रापयतीति शङ्गुः शं सुखरूपाः गावः वाचः वेदरूपा यस्य स शङ्गुरिति वा तस्मै शङ्गवे सुखप्रापकाय वेदमयशब्दब्रह्मरूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः । तथा पशुपतये च नमः पश्य-

न्तीति पशवः प्राणिनस्तेषां पतिः पशुपतिस्तस्मै पशुपतये प्राणिनां पालकाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा उग्राय च नमः उग्रः शत्रून् हन्तुमुद्गूर्णायुधस्तस्मै तादृशाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा भीमाय च नमः बिभेत्यस्मादिति भीमः भयङ्करस्तस्मै भीमाय पापिनां शत्रूणां च भयोत्पादकाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा अग्रे वधाय च नमः अग्रे पुरो वर्त्तमानः सन् हन्ति शत्रून् हिनस्तीति अग्रेवधस्तस्मै अग्रेवधाय पुरतः शत्रुहन्त्रे एवम्भूताय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा दूरेवधाय च नमः दूरेऽपि वर्त्तमानः सन् शत्रून् हन्तीति दूरेवधस्तस्मै दूरेवधाय दूरतोऽपि शत्रुहन्त्रे एवम्भूताय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। लोके यो हन्ति तद्रूपेण रुद्र एव हन्तीति बुद्ध्याऽवगन्तव्यम्। तथा हनीयसे च नमः अतिशयेन हन्ता हनीयान् तस्मै हनीयसे महाप्रलये सर्वहन्त्रे तादृशाय रुद्राय नमः नमस्कारोऽस्त्विति शेष;। ( तुरिष्ठेमेयःसु इति तृचोलोप इहावगन्तव्यः ) तथा हरिकेशेभ्यो वृक्षेभ्यो नमः हरयः हरितवर्णाः केशाः पत्ररुपा येषां ते हरिकेशास्तेभ्यो हरिकेशेभ्यो हरितवर्णकेशस्थानीयपत्रधारिभ्यो वृक्षेभ्यो मन्दारपारिजातादिकल्पतरुरूपेभ्यो रुद्रेभ्यस्तत्तदधिष्ठातृस्वरूपेभ्यो वा रुद्रेभ्यो नमः नमस्कारोऽस्त्वित्यर्थः। तथा ताराय च नमः तारयति संसारमिति तारस्तस्मै ताराय संसारोत्तारकाय गुरुरूपाय रुद्राय नमः नमस्कारोऽस्तु। तथा च गुरुपूजायां "शशाङ्कयुतसङ्काशं वराभयलसत्करम्। वामोरौ रक्तशक्त्या च युतं देवाख्यमव्ययम्। शिवेनैक्यं समानीय ध्यायेत्परगुरुं शिवमि"त्याद्यागमोक्तेः ॥ ४० ॥

नमः॑ शम्भुवाय॑ च मयोभुवाय॑ च॒ नमः॑ शङ्कराय॑ च मयस्कराय॑ च॒ नमः॑ शिवाय॑ च शिवतराय च ॥ ४१ ॥

देवपूजायां व्याख्यातेयमृक्, अस्या ऋचो व्याख्या तत्रैव द्रष्टव्या ॥ ४१ ॥

नम॒ः पार्या॑य चावार्या॑य च॒ नमः॑ प्रतर॑णाय चोत्तर॑णाय च॒ नम॒स्तीर्थ्या॑य च॒ कूल्या॑य च॒ नम॒ः शष्प्या॑य च॒ फेन्या॑य च॒ (नमः॑ सिक॒त्याय) ॥ ४२ ॥

"पारावारे परार्वाची तीरे पात्रं यदन्तरम्" इति कोशादौ प्रमाणमुपलभ्यते। अत इयमृगेवं व्याख्यायते। तथा हि पार्याय च नमः पारे संसाराब्धेः परतीरे जीवन्मुक्तरूपेण भवाय रुद्राय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा अवार्याय च नमः अवारे संसाराब्धेः अर्वाक्तीरे अर्थात्संसारमध्ये संसारित्वेन भवाय रुद्राय तद्रूपाय नमः नमस्कारोऽस्त्वित्यर्थः। तथा प्रतरणाय च नमः प्रकर्षेण मन्त्रजपादिना पापतरणहेतवे तपोरूपाय रुद्राय नमः नमस्कारोऽस्तु। तथा उत्तरणाय च नमः उत्कृष्टेन "अहं ब्रह्मास्मी"त्यादितत्त्वज्ञानेन संसारोत्तरणहेतवे "सत्यं ज्ञानमनन्तं ब्रह्म नेह नानास्ति किञ्चने"त्यादि विशिष्टज्ञानस्वरूपाय परब्रह्मरूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा तीर्थ्याय च नमः तीर्थे भवस्तीर्थ्यस्तस्मै तीर्थ्याय तीर्थे प्रयागादौ तीर्थाधिष्ठातृरूपेणोत्पन्नाय रुद्राय नमोऽस्त्विति शेषः। तथा कूल्याय च नमः कूलं नद्यादेरुभयतटं तत्र भवाय नानाविधोत्पन्नाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा शष्प्याय च नमः शष्पं बालतृणं गंगातीरोत्पन्नं कुशाङ्कुरादि तत्र भवाय

तद्रूपेण तत्रोत्पन्नाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा फेन्याय च नमः फेने डिण्डिरे जलबुद्बुदे येन केनचित्पदार्थरूपेण तदधिष्ठातृरूपेण वा समुत्पन्नाय तत्तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः ॥ ४२ ॥

नमः॑ सिक॒त्याय॑ च प्रवा॒ह्या॑य च॒ नमः॒ किᳪशिला॒य॑ च क्षय॒णाय॑ च॒ नमः॑ कप॒र्दिने॑ च पुलस्तये॑ च॒ नमः॑ऽइरि॒ण्या॒य च प्रप॒थ्या॒य च॒ (नमो॑व्रज्या॑य) ॥ ४३ ॥

तथा सिकत्याय च नमः सिकतासु पृथिव्या अत्यन्तसूक्ष्मपरमाणुभूतासु क्षुद्राश्मकणासु तदधिष्ठातृरूपेण भवाय तद्रूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा प्रवाह्याय च नमः नद्यादेः प्रवाहे स्रोतसि भवाय जलरूपेण तदधिष्ठातृरूपेण चोत्पन्नाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा किंशिलाय च नमः कुत्सिताः क्षुद्राः शिलाः सिकतातो विशेषपरिमाणविशिष्टाः शर्करारूपाः पाषाणा विद्यन्ते यत्र प्रदेशे स किंशिलस्तस्मै किंशिलाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्तु। तथा क्षयणाय च नमः क्षियन्ति निवसन्त्यापो यत्र स क्षयणः स्थिरजलप्रदेशस्तस्मै तद्रूपाय रुद्राय नमोऽस्त्विति शेषः। तथा कपर्दिने च नमः "कपर्दोऽस्य जटाजूटः पिनाकोऽजगवन्धनुः" इत्यभिधानात्कपर्दो जटाजूटः सोऽस्यास्तीति कपर्दी तस्मै कपर्दिने जटाजूटधारिणे रुद्राय तद्रूपाय ब्रह्मचारिस्वरूपिणे वा रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा पुलस्तये च नमः पुरोऽग्रे तिष्ठतीति पुलस्तिः (पुरस्थिगिति प्राप्ते थस्य तत्वं रस्यलत्वं चेह छान्दसम्।) अथवा पुर्षु शरीरेषु अस्तिः सत्ता विद्यते यस्य स पुलस्तिः (अत्रापि रस्य लत्वं छान्दसम्।) सर्वान्तर्यामीत्यर्थस्तस्मै तद्रूपाय रुद्राय नमोऽस्त्विति शेषः ॥ तथा इरिण्याय च नमः इरणमूषरं स्थानं वितृणदेशस्तत्र क्षाररूपेण भवाय रुद्राय नमः नमोऽस्तु। तथा प्रपथ्याय च नमः प्रकृष्टः पन्थाः प्रपथः बहुसेवितमार्गस्तत्र पथिकरूपेण भवाय रुद्राय नमः नमोस्त्विति शेषः ॥ ४३ ॥

नमो॑ व्र॒ज्या॑य च॒ गोष्ठ्या॑य च॒ नम॒स्तल्प्या॑य च॒ गेह्या॑य च॒ नमो॑ हृद॒य्या॒य च निवे॒ष्प्या॒य च॒ नम॒ꣳ काट्या॑य च गह्वरे॒ष्ठाय॑ च॒ (नम॒ꣳ शुष्क्या॑य) ॥ ४४ ॥

व्रज्याय च नमः व्रजे गोसमूहे धूल्यादिरूपेण भवो व्रज्यस्तस्मै व्रज्याय धूल्यादिस्वरूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा गोष्ठ्याय च नमः गावस्तिष्ठन्ति यत्रेति तद्गोष्ठं तत्र गवादिपशुरूपेण भवो गोष्ठ्यस्तस्मै गोष्ठ्याय गवादिपशुरूपधारिणे तदधिष्ठातृस्वरूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा तल्प्याय च नमः तल्पं शय्या तत्र भवस्तल्प्यस्तस्मै तल्प्याय शय्यायामास्तरणरूपेण शयनकर्त्रधिष्ठातृस्वरूपेण वा भवाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा गेह्याय च नमः गेहे गृहे भवो गेह्यस्तस्मै गेह्याय नमः गृहे गृहिणां दारापत्यरूपेण गृहोपयोगिनानापदार्थरूपेण वा भवाय गृह्याग्निस्वरूपाय वा रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा हृदय्याय च नमः हृदये भवो हृदय्यस्तस्मै हृदय्याय जीवरूपेण हृद्यन्तर्भवाय रुद्राय नमः नमस्कारोऽस्तु। "कतम आत्मेत्युपक्रम्य सोऽयं विज्ञानमयः पुरुषः प्राणिषु हृद्यन्तर्ज्योतिः प्रविष्ट आत्मे"ति श्रुतेर्हृद्यवस्थानं जीवरूपेणास्य रुद्रस्य

विज्ञायते। अतो "हृदय्याय च नमः" इति श्रुतिवाक्येन हृद्यन्तर्वर्त्तिजीवात्मस्वरूपाय रुद्राय नमः नमस्करोमीत्यर्थः। तथा निवेष्प्याय च नमः निवेष्प आवर्त्तो नीहारजलं वा तत्र तत्तदधिष्ठातृरूपेण भवाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा काट्याय च नमः कुत्सितमटन्ति गच्छन्ति जना यत्र स काटः दुर्गारण्यदेशः कूपो वा तत्र भवः काट्यस्तस्मै काट्याय दुर्गारण्ये स्थाणुकन्टकादिरूपेणोत्पन्नाय कूपे कूपोदकरूपेण तदधिष्ठातृस्वरूपेण वा भवाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा गह्वरेष्ठाय च नमः "गह्वरं बिलदम्भयोः" इत्यभिधानात् गह्वरं बिलं गम्भीरजलं वा तत्र गह्वरे विषमे गिरिगुहादौ गम्भीरे जले वा तिष्ठतीति गह्वरेष्ठस्तस्मै गह्वरेष्ठाय तत्तदधिष्ठातृस्वरूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः॥४४॥

नमः॑ शुष्क्या॑य च हरित्याय च॒ नमः॑ पाᳬसव्या॑य च रजस्याय च॒ नमो॒ लोप्या॑य चोलप्याय च॒ नम॒ऽऊर्व्या॑य च॒ सूर्व्या॑य च॒ (नमः॑ पूर्णाय॑) ॥४५॥

तथा शुष्क्याय च नमः शुष्के काष्ठादौ भवः शुष्क्यस्तस्मै शुष्क्याय तदधिष्ठातृस्वरूपाय रुद्राय नमः नमस्कारोऽस्त्वितिशेषः। तथा हरित्याय च नमः हरिते आर्द्रे काष्ठादौ भवः हरित्यस्तस्मै हरित्याय तदधिष्ठातृस्वरूपाय रुद्राय नमः नमस्कारोऽस्त्वितिशेषः। तथा पाᳬसव्याय च नमः पांसुषु धूलिषु भवः पांसव्यस्तस्मै पाᳬसव्याय तदधिष्ठातृस्वरूपाय रुद्राय नमोऽस्त्विति शेषः। "तत्र भवः" इतियत्प्रत्यये "ओर्गुणः" इतिगुणे "वान्तोयिप्रत्यये" इत्यवादेशे पाᳬसव्य इति तस्य चतुर्थ्येकवचने पाᳬसव्यायेति रूपम्। तथा रजस्याय च नमः "रजो रेणुपरागयोः" इत्यभिधानात् रजसि रेणौ परागे वा भवो रजस्यस्तस्मै रजस्याय रेणौ धूल्यादिरूपेण भवाय परागपक्षे रजसि पुष्परजसि सौगन्ध्यरूपेण भवाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्तु। "लोका रजांस्युच्यन्ते" इति यास्कोक्तेः रजस्सु लोकेषु भोग्यभोक्तृस्वरूपेण भवाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। "स्त्री रजोऽप्यनेनैव व्याख्यातमि"ति यास्कोक्तत्वात् "स्त्रीपुष्पे गुणभेदेच" इत्यभिधानाच रजसि स्त्रीपुष्पे "शुक्राधिक्येपुमान् रजसश्चाधिक्ये स्त्री जायते" इति परिशिष्टकारोक्तेः प्रकृतिस्वरूपेणोत्पन्नाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। गुणभेदपक्षे त्वित्थं रजसि रजोगुणे तदीयकार्य्यस्वरूपेण भवाय तद्रूपाय रुद्राय नमस्कारोऽस्त्विति शेषः। तथा लोप्याय च नमः लुप्यते नश्यति गमनादिकं यत्रेति लोपोऽगम्यप्रदेशो महारण्यादिस्तत्र भवाय तद्रूपाय रुद्राय नमोऽस्त्विति शेषः। यद्वालोपः संहारस्तत्र भवो लोप्यस्तस्मै लोप्याय "आत्मा वा इदमग्रऽआसीन्नान्यत्किञ्चनमिषदि" तिश्रुतेर्महाप्रलयेऽपि ब्रह्मस्वरूपेण विद्यमानाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा उलप्याय च नमः "उलपस्तु गुल्मिनीतृणभेदयोः" इत्युक्तेः उलपा वल्वजादितृणविशेषास्तत्र भव उलप्यस्तस्मै उलप्याय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा ऊर्व्याय च नमः उर्व्यां भूमौ नानाविधभोग्यभोक्तृस्वरूपेण भव उर्व्यस्तस्मै उर्व्याय भूम्यधिकरणकभोग्यभोक्तृस्वरूपाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वितिशेषः। उर्व्यायेति प्राप्ते आर्षत्वाद्दीर्घे ऊर्व्यायेत्येतद्भवति। ऊर्वो वडवानलो वा तत्र भवाय रुद्राय नमस्कारोऽस्त्विति शेषः। तथा सूर्व्यायच नमः शोभन ऊर्वः सूर्वः कालानलस्तत्र भवः सूर्व्यस्तस्मै सूर्व्याय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः॥ ४५॥

नम॑: पुर्ण्णाय॑ च पर्ण्णशुदाय॑ च॒ नम॑ऽउद्गुरमा॑णाय चाभिघ्नु॒ते च॒ नम॑ऽआखिद॒ते च॑ प्रखिद॒ते च॒ नम॑ऽइषुकृद्भ्यो॑ धनुष्कृद्भ्यश्च॑ वो॒ नमो॒ नमो॑ व: किरि॒केभ्यो॑ दे॒वाना॒ᳬ हृद॑येभ्यो॒ नमो॑ विचिन्व॒त्केभ्यो॒ नमो॑ विक्षिण॒त्केभ्यो॒ नम॑ऽआनिर्ह॒तेभ्य॑: ॥ ४६ ॥

तथा पर्णाय च नमः तरूणां पत्ररूपाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा पर्णशदाय च नमः "शद्लृशातने" शदनं शदः शातनं पर्णानां शदः पर्णशदस्तस्मै तद्रूपाय रुद्राय नमोऽस्त्विति शेषः। अथवा पर्णानि शीर्य्यन्ते शात्यन्ते पक्वानि पतन्ति यत्र स पर्णशदः पतितपर्णस्थितिदेशस्तस्मै तद्रूपाय रुद्राय नमः। तथा उद्गुरमाणाय च नमः "गुरी उद्यमने" "तुदादिभ्यः शः" इति शः, उद्गुरते उद्यमं करोतीति उद्गुरमाणः उद्यमशीलः उद्यमी पुरुषस्तस्मै तादृशाय तद्रूपाय रुद्राय नमः नमस्कारोऽस्त्वित्यर्थः। तथा अभिघ्नते च नमः अभिहन्ति शत्रूनित्यभिघ्नन् तस्मै अभिघ्नते स्वाभक्तानामभिहननं कुर्वते एतादृशाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा आखिदते च नमः आखिद्यते इत्याखिदन् तस्मै आखिदते आसमन्तादभक्तानां दैन्यं कुर्वते एतादृशाय रुद्राय नमः नमस्कारोऽस्त्विति शेषः। तथा प्रखिदते च नमः प्रकर्षेण खेदयति पापिन इति प्रखिदन् तस्मै प्रखिदते पापिनां प्रकर्षेण दीनभावं कुर्वते तादृशाय रुद्राय नमोऽस्त्विति शेषः। अतः परं व इति युष्मदादेशयोगाद्रुद्राणां प्रत्यक्षत्वमुच्यते। तथाहि हे रुद्राः, इषुकृद्भ्यो वो नमः इषून् बाणान् कुर्वन्तीति इषुकृतस्तेभ्यो वो युष्मभ्यं नमः नमस्कारोऽस्त्विति शेषः। तथा हे रुद्राः, धनुष्कृद्भ्यश्च वो नमः धनूंषि चापानि कुर्वन्तीति धनुष्कृतस्तेभ्यो धनुष्कृद्भ्यो वो युष्मभ्यं नमः नमस्कारोऽस्त्विति शेषः। अत्र हि तिस्रोऽशीतयो रुद्राणां समाप्ताः। अस्यां कण्डिकायां पूर्वोक्तकण्डिकासु च ये चकारास्ते सर्वे समुच्चयार्था ज्ञेयाः। एवं चत्वारिंशदधिकशतद्वयमन्त्रैः रुद्रस्य सर्वात्मत्वमुक्तम्। अथ रुद्रेषु प्रधानभूतानामग्निवायु-सूर्य्याणां सम्बन्धीनि चत्वारि यजूंष्युच्यन्ते। चतुर्णामादौ नमः शब्दाच्चत्वार्येव यजूंषि ज्ञातव्यानि। तत्राद्यं चतुर्दशाक्षरं यजुः, त्रीणि च सप्ताक्षराणि यजूंषि, तानि नमो व इत्यादीनि व्याहृतिसंज्ञकानि ज्ञेयानि। तैश्च रुद्राणां प्रधानभूता अग्निवायुसूर्य्या एव देवानां हृदयत्वेन स्तूयन्ते। तथा च श्रुतिः "देवानाᳬ हृदयेभ्यइत्यग्निर्वायुरादित्यऽएतानि ह तानि देवानाᳬ हृदयानि" इति। हृदयानीव हृदयानि यथाऽङ्गानां हृदयं प्रधानमस्त्येवमेतेऽग्निवायुसूर्य्या रुद्राणां प्रधाना इति श्रुत्या प्रतिपाद्यते। अथ मन्त्रार्थः। हे अग्निवायुसूर्य्याः, देवानां हृदयेभ्यः दीव्यन्तीति देवास्तेषां देवानां द्युतिस्तुतिक्रीडादियुक्तानां रुद्राणां हृदयवत्प्रधानभूतेभ्योऽग्निवायुसूर्य्येभ्यो वो युष्मभ्यं नमः नमस्कारोऽस्त्वित्यर्थः। कीदृशेभ्यो वो युष्मभ्यमित्यपेक्षायामुच्यते। किरिकेभ्यः वृष्ट्यादिद्वारा जगत्कुर्वन्तीति किरिकास्तेभ्यः जगत्कारकेभ्योऽग्निवायुसूर्य्यरूपेभ्य एभ्यो रुद्रेभ्यो वो युष्मभ्यं नमः नमस्कारोऽस्त्वित्यर्थः। एते हि जगदिदं कुर्वन्ति। तथा च श्रुतिः "एते हीदᳬ सर्वं कुर्वन्ति" (९-१-१-२३) इति। तथा हे अग्निवायुसूर्य्यरूपा रुद्राः, ईदृशेभ्यो वो युष्मभ्यं नमः नमस्कारोऽस्त्विति शेषः। कीदृशेभ्यः विचिन्वत्केभ्यः विचिन्वन्ति पृथक्कुर्वन्ति धर्मिष्ठं पापिष्ठं चेति विचिन्वत्कास्तेभ्यो विचिन्वत्केभ्यः धर्मिष्ठं पापिष्ठं च पृथक्कुर्वद्भ्योऽग्निवायुसूर्य्यरूपेभ्यो

वो युष्मभ्यं रुद्रेभ्यो नमः नमस्कारोऽस्त्विति शेषः। तथा हे अग्निवायुसूर्य्यरूपा रुद्राः, ईदृशेभ्यो वो युष्मभ्यं नमः नमस्कारोऽस्त्विति शेषः। कीदृशेभ्यः विक्षिणत्केभ्यः विविधं क्षिण्वन्ति हिंसन्ति पापं शत्रूंवेति विक्षिणत्कास्तेभ्य एतादृशेभ्यो रुद्रेभ्यो वो युष्मभ्यं नमः नमस्कारोऽस्त्वित्यर्थः। तथा हे अग्निवायुसूर्य्यरूपा रुद्राः, ईदृशेभ्यो वो युष्मभ्यं नमः नमस्कारोऽस्त्विति शेषः। कीदृशेभ्यो वो युष्मभ्यमित्यपेक्षायामुच्यते। आनिर्हतेभ्यः आसमन्तान्निर्हता निर्गता सर्गादौ लोकेभ्य इत्यानिर्हतास्तेभ्यो रुद्रावतारेभ्योऽग्निवायुसूर्येभ्यो वो युष्मभ्यं नमः नमस्कारोऽस्त्वित्यर्थः। हन्तिरिहगत्यर्थः। "हन हिंसागत्योः" इत्युक्तत्वात्। तप्तेभ्य एव एतेभ्यो रुद्रेभ्यः सकाशादग्निवायुसूर्य्या अजायन्तेति श्रुत्याऽप्युक्तं "तेभ्यस्तप्तेभ्यस्त्रीणि ज्योतीꣳषि व्यजायन्ताग्निर्योऽयं पवते सूर्य्यश्च" इति ॥ ४६ ॥

द्रापेऽअन्धसस्पते दरिद्रनीललोहित। आसां प्रजानामेषां पशूनां–
माभेर्म्मारोङ्मोचनः किञ्चनाममत् ॥ ४७ ॥

अतः परं सप्तकण्डिकापर्य्यन्तमेकरुद्रस्तुतयोऽवगन्तव्याः। "द्रा कुत्सायां गतौ" द्रापयति कुत्सितां गतिं पापिनः प्रापयतीति द्रापिस्तत्सम्बुद्धौ हे द्रापे, पापिनां कुत्सितगतिप्रापक, तथा हे अन्धसस्पते, "अन्धसस्पत इति सोमस्य पत इत्येतत्" इति श्रुतेः अन्धसस्पतिः सोमस्य पतिस्तत्सम्बुद्धौ हे अन्धसस्पते सोमस्य पालक, तथा हे दरिद्र, दरिद्रो निष्परिग्रहः अद्वितीयत्वात् तत्सम्बुद्धौ हे दरिद्र निष्परिग्रह, तथा हे नीललोहित, नीलश्चासौ लोहितश्चेति नीललोहितः कण्ठे नीलोऽन्यत्र लोहितो रक्तः शिवस्यैतत्प्रसिद्धमस्ति। तदभिप्रायेण इहोच्यते हे नीललोहित, नीलग्रीवरक्तकण्ठ हे शिव, नोऽस्माकम् आसां प्रजानां पुत्रादीनाम् तथा नोऽस्माकम् एषां पशूनाम् गवादीनां च त्वं मा भेः भयं मा कुरु "ञिभी भये" इत्यस्य जुहोत्यादित्वेऽपि "बहुलं छन्दसी"ति शपोलुगित्यवगन्तव्यम्। माङ्योगे लुङि प्राप्ते छन्दसि सर्वेविधीनां वैकल्पिकत्वादिह लङ्। तथा मा रोक् "रुजो भङ्गे" अस्माकं प्रजापशूनां भङ्गं मा कार्षीः आसां प्रजानामेषां पशूनामित्युभयत्र कर्मणि षष्ठ्यौ। इमाः प्रजाः इमान् पशूँश्च मा भेः मारोगित्यर्थः। च पुनर्नोऽस्माकं किंचन चनशब्दोऽप्यर्थे किमपि द्विपदचतुष्पदादिकं मो मा आममत् रुग्णं माकार्षीत् भवानितिशेषः। आममदित्यत्र प्रथमपुरुषक्रियायोगात्। यद्वा आममदित्यत्र पुरुषव्यत्ययो बोध्यस्तेन मा आममः त्वं रुग्णं मा कार्षीरित्यर्थः। "मो इत्ययं निपातो माङर्थे" निषेधार्थीय इत्यर्थः, "अम् रोगे" लङिधातोरमागम आर्षः। अथवा आममदिति लोडर्थे लङ् ततोऽयमर्थः। हे पूर्वोक्तविशेषणविशिष्ट, हे सदाशिव, त्वत्प्रसादाच्च पुनर्नोऽस्माकं किंचन किमपि द्विपदचतुष्पदादिकं मो आममत् मा अमतु रुग्णं माऽस्त्वित्यर्थः ॥ ४७ ॥

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः।
यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामेऽअस्मिन्ननातुरम् ॥४८॥

"अतिरिक्तमि"ति कारिकया हीनपदाध्याहारेणायमर्थः प्रतिपाद्यते। वयमुपासका ईदृ-

शाय रुद्राय इमाः स्वकीया मतीः बुद्धीः प्रभरामहे प्रहरामहे समर्प्पयामहे आभिर्मतिभिः रुद्रं स्मराम इति भावः। "हृग्रहोर्भश्छन्दसि"इति हरतेर्हकारस्य भकार इत्यनुसन्धेयम्। कीदृशाय रुद्रायेत्यपेक्षायामुच्यते। तवसे "तवः" इति महन्नामसु बलनामसु च निघण्टौ पठितम्। अतो द्व्यर्थकोऽयं शब्दः। तवसे महते बलवते वेत्यर्थः। तथा कपर्दिने "कपर्दोऽस्य जटाजूटः" इत्यभिधानात्कपर्दः जटाजूटः सोऽस्यातीति कपर्दी तस्मै कपर्दिने जटाजूटधारिणे ब्रह्मचारिवेषेण जटिलाय ब्रह्मचारिस्वरूपिणे इत्यर्थः। पुनः कीदृशाय क्षयद्वीराय क्षयन्तो निवसन्तो वीराः शूरा यत्र स क्षयद्वीरस्तस्मै क्षयद्वीराय शूरैर्वेष्टिताय यः खलु स्वयं शूरः स एव स्वनिकटेऽन्यानपि शूरान् वासयति यो यद्गुणंवेत्ति तस्य तत्रैव रुचिर्भवतीति प्रसिद्धमेवास्ति। अतः स्वयमपि रुद्रः शूरो भवितुमर्हति तस्मात् शूरायेत्यर्थः। यद्वा क्षयन्तो नश्यन्तो वीरा रिपवो यस्मात्स क्षयद्वीरस्तस्मै क्षयद्वीराय रिपुनाशकायेत्यर्थः। द्विपदे पुत्रादये चतुष्पदे गवादिपशवे, उभयत्र सप्तम्यर्थे चतुर्थी वा द्विपदे मनुष्ये चतुष्पदे गवादिपशौ च अर्थादस्माकं द्विपदचतुष्पदविषये यथा शमसत् (यथेत्यत्र प्रकारवचने थाल्प्रत्ययः शमिति सुखनामेति निघण्टुः। असदिति अस्तेर्लिङर्थे लेट्, तस्य प्रथम पुरुषैकवचने रूपम्।) ततोऽयमर्थः। यथा येन प्रकारेण शं सुखम् असत् भवेत्, एवम् अस्मिन् ग्रामे अस्यां वसतौ अथवा ग्रामपदेन वासस्थानमेव वोपलक्षितव्यं तेन अस्मिन् वासस्थाने विश्वं सर्वं प्राणिजातं पुष्टं समृद्धम् अनातुरं निरुपद्रवं स्वस्थं च यथा असत् भवेत्। यत्तदोर्नित्यसम्बन्धत्वादत्र यथेति यच्छब्दोपादानात्तथेति तच्छब्दोऽप्यध्याहर्त्तव्यःस्ततोऽयमर्थः। तथा तेन प्रकारेण पूर्वोक्तविशेषणविशिष्टाय एतादृशाय रुद्राय वयं स्वीया मतीः प्रभरामहे प्रहरामहे समर्प्पयाम इत्यर्थः। यथाऽस्मद्द्विपदचतुष्पदविषये रुद्रप्रसादात्सुखं भवेत् एवं यथा चास्मद्वासस्थाने सर्वमपि प्राणिजातं समृद्धमापद्रहितं च स्यात्तथा वयमाभिर्मतिपूर्विकाभिः स्तुतिभिः रुद्रं स्तुम इति समस्ताभिप्रायः॥४८॥

या ते॑ रुद्र शि॒वा त॒नूः शि॒वा वि॒श्वाहा॑ भेष॒जी।
शि॒वा रु॒तस्य॑ भेष॒जी तया॑ नो मृड जी॒वसे॑॥ ४९ ॥

हे रुद्र, शिवा शान्ता सौम्या तथा विश्वाहा विश्वानि च तान्यहानि चेति विश्वाहा "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया तस्याः "सुपां सुलुगि"त्यादिना आकारः। रुर्वेष्वहःसु सर्वदा शिवा कल्याणकारिणी भेषजी औषधरूपा संसारव्याधिनिवर्तिका तथा रुतस्य शारीरव्याधेः शिवा समीचीना भेषजी व्याधिनिवर्त्तिकौषधिः या ते तव तनूः शरीरमस्तीति शेषः। तया तन्वा शरीरेण नोऽस्मान् जीवसे ("तुमर्थे सेसेनसे" इत्यादिना जीवतेस्तुमर्थेऽसे प्रत्ययः) जीवितुं मृड सुखय। यथाऽस्माकं जीवनधारणं भवेत्तथाऽस्मान् सुखीकुर्वित्यभिप्रायः॥४९॥

परि॑ णो रु॒द्रस्य॑ हे॒तिर्वृ॑णक्तु॒ परि॑ त्वे॒षस्य॑ दुर्म॒तिर॑घा॒योः।
अव॑ स्थि॒रा म॒घव॑द्भ्यस्तनुष्व॒ मीढ्व॑स्तो॒काय॒ तन॑याय मृड॥ ५० ॥

रुद्रस्य शिवस्य हेतिः आयुधं नोऽस्मान् परिवृणक्तु परितो वर्जयतु ( "वृजी वर्जने" रु० प० ) इत्यस्य लोण्मध्यमपुरुषैकवचने वृणक्त्विति रूपम्। ) अस्मान्मा हन्त्वित्यर्थः। तथा त्वेषस्य त्वेषति क्रोधेन ज्वलतीति त्वेषस्तस्य क्रोधेन ज्वलितस्य अघायोः अघं पापं परस्येच्छतीति अघायुस्तस्य अघायोः द्रोग्धुः परस्य पापमिच्छतः पुरुषस्य दुर्मतिः दुष्टमतिः द्रोहबुद्धिश्चास्मान्परिवृणक्तु परितस्त्यजत्वित्यर्थः। एवं परोक्षार्थवृत्त्येदमुक्त्वेदानीं रुद्रं प्रति प्रत्यक्षत उच्यते तनुष्वेति मध्यमपुरुषक्रियायोगात्तथाहि हे मीढ्वः, मेहति सिञ्चतीति मीढ्वान् तत्सम्बुद्धौ हे मीढ्वः, कामाभिवर्षुक, रुद्र, मघवद्भ्यः "मघमिति धननामे"ति निघण्टुः, तच्चेह हविर्लक्षणं ज्ञेयं तेनायमर्थः, मघं हविर्लक्षणं धनं विद्यते येषां ते मघवन्तः धनवन्तो यजमानास्तेभ्यः मघवद्भ्यः हविर्लक्षणधनवद्भ्यो यजमानेभ्यः स्थिरा स्थिराणि दृढानि अर्थात् धनूंषि त्वमवतनुष्व अवतारय विगतमौर्वीकानि कुरु यजमानां भयनिवृत्तये ज्यारहितानि कुर्वित्यर्थः। स्वार्थरुद्राराधनपक्षे त्वयं विशेषः, मघवद्भ्यो हविर्लक्षणवद्भ्योऽस्मभ्यमिति शेषः शेषं समानम्। किञ्च हे रुद्र, त्वं तोकाय पुत्राय तनयाय पौत्राय च मृड "कर्मणि चतुर्थ्यौ" यजमानानां स्वार्थपक्षेऽस्माकमितिपदाध्याहारेणोह्यम् तोकं पुत्रं तनयं पौत्रं च मृड ( अन्तर्भावितोऽत्र ण्यर्थः ) मृडय सुभयेत्यर्थः। यजमानानामिति शेषः। स्वार्थरुद्राराधनपक्षेऽस्माकमिति शेषः। मन्त्रगतशब्दसाधनप्रणाली चेत्थं "त्विष दीप्तौ ( भ्वा० उ० प० )" ततः पचाद्यच् , तस्य षष्ठ्येकवचने त्वेषस्येति रूपम्। अघं पापं परस्येच्छतीति अघायुः "सुप आत्मनः क्यच्" इत्यत्र "छन्दसि परेच्छायां क्यच उपसङ्ख्यानमि"तिवार्त्तिकेनेह परेच्छायामपि क्यच्। "क्यचि चे"तीत्वे प्राप्ते "अश्वाघस्यात्" इत्याकारः। "क्याच्छन्दसि" इत्युप्रत्ययश्चावगन्तव्यः। तस्य अघायुशब्दस्य षष्ठ्येकवचने अघायोरिति रूपम्। "दाश्वान्साह्वान्मीढ्वाँश्च" इत्यनेन क्वसन्तो निपातितो मीढ्वःशब्दस्तत्सम्बुद्धौ 'हे मीढ्वः' इति रूपम्। "मृड सुखने" (तु० प०) इत्यस्य लोण्मध्यमपुरुषैकवचने "मृड" इति रूपम्। एवमिह रूपसिद्धिरनुसन्धेया॥ ५०॥

मीढुष्टम् शिवतम शिवो नः सुमना भव। परमे वृक्षऽआयुधन्निधाय
कृत्तिं वसानऽआचर पिनाकम्बिभ्रदागहि॥ ५१॥

हे मीढुष्टम , अतिशयेन मीढ्वानिति मीढुष्टमस्तत्सम्बुद्धौ हे मीढुष्टम , हे अतिशयेन कामसेक्तः, हे शिवतम, अत्यन्तं शिवः शिवतमस्तत्सम्बुद्धौ हे शिवतम, हे अत्यन्तकल्याणकर्त्तः, त्वं नोऽस्मान्प्रति शिवः शान्तः सुमनाः हृष्टचित्तश्च भव। किञ्च हे पूर्वोक्तविशेषणविशिष्ट, हे सदाशिव, त्वं परमे दूरस्थे उन्नते वा वृक्षे वटादौ आयुधं त्रिशूलादिकं निधाय संस्थाप्य कृत्तिं वसानः चर्म परिदधानः सन् आचर आगच्छ तपश्चरेति वा। तथा आगच्छन्नपि पिनाकं धनुर्बिभ्रत् धारयन् सन् आगहि आगच्छ। ज्याशरहीनं धनुर्मात्रं शोभार्थं धारयन सन्निहागच्छेत्यर्थः॥ ५१॥

विकिरिद्र विलोहित नमस्तेऽअस्तु भगवः।
यास्ते सहस्रं हेतयोऽन्यमस्मन्निवपन्तु ताः॥ ५२॥

हे विकिरिद्र, विविधं किरिं घातद्युपद्रवं द्रावयति नाशयतीति विकिरिद्रस्तत्सम्बुद्धौ हे विकिरिद्र, हे घाताद्युपद्रवनाशक, तथा हे विलोहित, विगतं लोहितं कल्मषं यस्मात् स विलोहितस्तत्सम्बुद्धौ हे विलोहित, हे शुद्धस्वरूप तथा हे भगवः; भगः षड्विधैश्वर्य्यमस्यास्तीति भगवान् तत्सम्बुद्धौ "मतुवसो रु सम्बुद्धौ छन्दसि" इति रुत्वं तस्य 'खरवसानयोर्विसर्जनीयः" इति विसर्गश्चानुसन्धेयोऽत्र ) हे भगवः, अर्थात् हे षड्विधैश्वर्य्ययुक्त, हे रुद्र, ते तुभ्यं नमोऽस्तु नमस्कारोऽस्त्वित्यर्थः। तथा हे पूर्वोक्तविशेषणविशिष्ट, हे रुद्र, याः ते तव सहस्रं हेतयः असङ्ख्यानि आयुधानि सन्तीति शेषः। ता हेतयोऽस्मदन्यमस्मद्व्यतिरिक्तं जनं निवपन्तु घ्नन्तु माऽस्मान् हिंसन्त्वित्यभिप्रायः॥ ५२॥

सहस्राणि सहस्रशो बाह्वोस्तव हेतयः।
तासामीशानो भगवः पराचीना मुखा कृधि॥ ५३॥

भगः षड्विधैश्वर्य्यमस्यास्तीति भगवान् तत्सम्बुद्धौ हे भगवः, हे भगवन्, हे षड्विधैश्वर्य्यसम्पन्न, हे रुद्र, यास्ते तव बाह्वोः हस्तयोः सहस्राणि सहस्रसङ्ख्यकानि सहस्रशः हेतयः आयुधानि सन्तीति शेषः। तासां हेतीनां मुखा मुखानि शल्यानि बाणाग्राणि पराचीना पराचीनानि अस्मत्तः पराङ्मुखानि त्वं कृधि कुर्कित्यर्थः। ( करोतेः शपि लुप्ते "श्रुश्रृणुपृकृवृभ्यश्छन्दसि" इति पाणिनीयसूत्रेण हेर्धिः तेन लोण्मध्यमपुरुषैकवचने "कृधि" इति रूपं भवति तदिहानुसन्धेयम्। ) कुत एवमुच्यते इत्यपेक्षायामतिरिक्तमिति कारिकया हीनपदाध्याहारेण तत्प्रदर्श्यते। तद्यथा हे रुद्र, यतस्त्वमासां हेतीनां आयुधानाम् ईशानः ईष्टे इतीशानः ईश्वरोऽसीति शेषः। अत एवं ब्रवीमि यत्त्वं स्वहस्तस्थितानां हेतीनां मुखान्यस्मत्तः पराङ्मुखानि कुर्वित्याशयः। धनुः खड्गः शूलं वर्मेत्यादिभेदेन हेतिशब्दवाच्यानामायुधानां सहस्रसङ्ख्यत्वं प्रसिद्ध्यति। तत्रापि सहस्रं सहस्रमिति सहस्रशः "संख्यैकवचनाच्चवीप्सायाम्" इति पाणिनीयसूत्रेण वीप्सार्थे शस्प्रत्यये कृते सहस्रश इति पदं सम्पद्यते। वीप्सा च सर्वसंग्रहार्था भवति। धनुरादीनां प्रत्येकं सहस्रसहस्रसंख्यत्वाभिप्रायेणैवमुक्तं भवति यत् "सहस्राणि सहस्रशः" इति। हे रुद्र, यानि यान्यसङ्ख्यान्यायुधानि तव हस्तयोर्वर्त्तन्ते तन्मुखान्यस्मत्तो झटित्येव पराङ्मुखानि त्वं कुरु। यथा तद्दर्शनेनास्माकं किञ्चिदपि भयं न स्यादित्यभिप्रायः। पराचीना, मुखा, इत्युभयत्र "शेश्छन्दसि बहुलमि"ति शेर्लोपे प्रत्ययलक्षणेन "नपुंसकस्य झलचः" इति नुमागमे "सर्वनामस्थाने चासम्बुद्धौ"इति दीर्घे "न लोपः प्रातिपदिकान्तस्य" इति नकारलोपे च कृते अथवा "निशब्दो बहुलम्" इति प्रातिशाख्यसूत्रेण निलोपे कृते पराचीना मुखा इत्युभयं पदं सिद्ध्यति॥ ५३॥

असङ्ख्याता सहस्राणि ये रुद्राऽअधि भूम्याम्।
तेषांᳬसहस्रयोजनेऽव धन्वानि तन्मसि॥ ५४॥

अनया ऋचा भूमिस्था रुद्रा उच्यन्ते तथाहि असङ्ख्याता असङ्ख्यातानि सहस्राणि अमिता ये रुद्राः भूम्यामधि भूमेरुपरि स्थिताः सन्तीति शेषः। तेषां भूमिस्थानां रुद्राणां

धन्वानि धनूंषि सहस्रयोजने सहस्रं योजनानि यस्मिंस्तादृशे पथि अर्थात् सहस्रयोजनव्यवहिते मार्गे वयमवतन्मसि वयमवतन्मः अवतारयामः अपज्यानि कृत्वा स्वेभ्यो दूरे क्षिपाम इत्यर्थः । अवतन्मसीत्यत्र व्यवहितोपसर्गसम्बन्धः "छन्दसि परेऽपि, व्यवहिताश्चे"ति पाणिन्युक्तेः । "इदन्तोमसि"इति सूत्रेण मस इगागमे 'तन्मः' इत्यस्य स्थाने तन्मसीत्येवं पदं सिद्ध्यति, तदिहावगन्तव्यम् । "बहुलं छन्दसी"ति सर्वविधिनां वैकल्पिकत्वात् "धनुषश्च" इति बहुव्रीहौ प्राप्तोऽनङादेश इहाबहुव्रीहावपि बोद्धव्यः ॥ ५४ ॥

अस्मिन्महत्यर्णवेऽन्तरिक्षे भवाऽअधि ।
तेषाᳬसहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५५ ॥

इदानीमनया ऋचा अन्तरिक्षस्था अपि रुद्रा उच्यन्ते । तत्रोत्तरार्द्धे तेषामिति तच्छब्दोपादानात्पूर्वार्द्धेऽपि 'ये इति यच्छब्दोऽध्याहर्त्तव्यः, यत्तदोर्नित्यसम्बन्धत्वात् । एवमग्रेतनेष्वपि मन्त्रेष्ववगन्तव्यम् । ये भवाः भवन्ति भूतान्येभ्य इति भवाः सृष्ट्यादौ ब्रह्मरूपेण रजोगुणेन जगदुत्पादकाः ये रुद्रा ईदृशे अस्मिन् उपरि दृश्यमाने अन्तरिक्षे अधि अधिश्रित्य अर्थात् अन्तरिक्षलोकमाश्रित्य तत्र स्थिताः सन्तीति शेषः। तेषां मन्तरिक्षस्थानां रुद्राणां धन्वानि धनूंषि सहस्रयोजने सहस्रयोजनव्यवहिते मार्गे वयमवतन्मसि वयमवतन्मः अपज्यानि कृत्वा स्वेभ्यो बहुदूरे प्रक्षिपाम इत्यर्थः । कीदृशेऽन्तरिक्षे इत्यपेक्षायामुच्यते । महति विशाले बहुविस्तीर्णे इत्यर्थः । तथा अर्णवे अर्णः पानीयं जलमित्यर्थः "अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरमि"त्यमरसिंहोक्तेः, तद्विद्यते यत्र तदर्णवं मेघाधारत्वात्, "अर्णलोपश्चे"ति वप्रत्ययोऽन्तलोपश्चात्रावगन्तव्यः, तस्मिन् अर्णवे जलवति एतादृशेऽन्तरिक्षे इत्यर्थः ॥ ५५ ॥

नीलग्रीवा ᳬ शितिकण्ठा दिवᳬ रुद्राऽउपश्रिता ᳬ ।
तेषाᳬसहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५६ ॥

साम्प्रतञ्चात्र द्युस्था अर्थात्स्वर्गलोकस्थिता रुद्रा उच्यन्ते । तथाहि ये ईदृशा रुद्राः दिवं द्युलोकम् उपश्रिताः स्वर्गलोकमुपाश्रित्य तत्र ये स्थिता रुद्राः सन्तीति शेषः। तेषां स्वर्गस्थानांरुद्राणां धन्यानि धनूंषि सहस्रयोजने सहस्रयोजनव्यवहिते मार्गे अवतन्यसि वयमवतन्मः अपज्यानि कृत्वा स्वेभ्यो दूरे प्रक्षिपाम इत्यर्थः। कीदृशा रुद्रा इत्यपेक्षायामुच्यते । नीलग्रीवाः नीला विषधारेण श्यामा ग्रीवा कण्ठो येषां ते नीलग्रीवाः नीलकण्ठाः । तथा शितिकण्ठाः शितिः श्वेतः कण्ठो येषां ते शितिकण्ठाः श्वेतकण्ठा इत्यर्थः । विषग्रासात्कियान्कण्ठभागः कृष्णः कियांश्च श्वेतोऽभूत् । अतो रुद्राणामुभयविशेषणत्वं युक्तमुपपद्यतेऽत्र एवम्भूता ये रुद्रा द्युलोके स्थिता वर्त्तन्ते तेषां धन्वानि धनूंषि सहस्तयोजने सहस्रयोजनव्यवहिते मार्गे अवतन्मसि वयमवतन्मः स्वेभ्यो दूरे प्रक्षिपाम इत्यर्थः ॥ ५६ ॥

नीलग्रीवा ᳬ शितिकण्ठा ᳬ शर्वा ऽअधः क्षमाचरा ः ।
तेषाᳬसहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५७ ॥

अधुनाऽनयर्चा पातालस्था रुद्रा उच्यन्ते। तथाहि ये ईदृशाः शर्वाः "शॄ हिंसायाम् (क्र्या० प०)" शृणन्ति तमोगुणित्वात् हिंसन्ति भूतानि महाप्रलये विनाशयन्तीति शर्वाः महाप्रलये तमोगुणेन जगन्नाशका ये रुद्राः अधःक्षमाचराः क्षमाया अधः इति अधः क्षमा तस्यामधःक्षमायाम् अधःपृथिव्यां चरन्ति गच्छन्तीति अधःक्षमाचराः क्षमायाः भुवोऽधोभागे सञ्चरणशीला अर्थात्पाताले वर्तमानाः सन्तीति शेषः। तेषां पातालस्थानां रुद्राणां धन्वानि धनूंषि सहस्रयोजने सहस्रयोजनव्यवहिते मार्गे वयमवतन्मसि अवतन्मः स्वेभ्यो दूरे प्रक्षिपाम इत्यर्थः। कीदृशाः शर्वा रुद्रा इत्यपेक्षायामुच्यते। नीलग्रीवाः नीलकण्ठाः तथा शितिकण्ठाः श्वेतकण्ठा इति विशेषणद्वयं पूर्ववदिहाप्यनुसन्धेयम्॥ ५७॥

ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः।
तेषाᳫं सहस्रयोजनेऽव धन्वानि तन्मसि॥ ५८॥

ये ईदृशा रुद्राः वृक्षेषु अश्वत्थादिषु स्थिता इति शेषः। तरूणां पत्ररूपेण तरूणामधिष्ठातृरूपेण वा कीटपतङ्गादिरूपेण वा तत्र ये रुद्रा वर्त्तन्ते इति भावः। तेषां वृक्षस्थानां रुद्राणां धन्वानि धनूंषि सहस्रयोजने सहस्रयोजनव्यवहिते मार्गे अवतन्मसि वयमवतन्मः स्वेभ्यो दूरेक्षिपाम इत्यर्थः। कीदृशा इत्यपेक्षायामुच्यते शष्पिञ्जरा शष्पं बालतृणं तद्वत्पिञ्जराः हरितवर्णा इत्यर्थः। तरूणां पत्ररूपत्वेन तत्रावस्थाने सति रुद्राणां शष्पिञ्जरा इत्येतद्विशेषणं साधूक्तं भवति। तथा नीलग्रीवाः नीला विषधारणेन श्यामा ग्रीवा कण्ठो येषां ते नीलग्रीवाः नीलकण्ठा इत्यर्थः। वृक्षाधिष्ठातृरूपत्वेन नीलकण्ठनामकपक्षिस्वरूपेण वा तत्रावस्थानत्वे सति रुद्राणां नीलग्रीवा इत्येतदपि विशेषणं युक्तमुक्तं भवति। तथा विलोहिताः विशेषेण लोहिता विलोहिताः विशेषेण रक्ताः अर्थात् रक्तवर्णा इत्यर्थः। लोहितपदमन्यत्रापि रक्ताभिधानमिति तदुक्तममरसिंहेनापि "रोहितो लोहितो रक्तः शोणः कोकनदश्छविः।" इति, अथवा 'वि' इत्युपसर्गोभिन्नपर्य्यायै लोहितशब्दश्च धातूपलक्षकः, धातवश्चाष्टौ त्वग्लोहितमज्जादयः प्रसिद्धा एव। ततश्चायमर्थः। 'वि' विविधाः लोहिताः धातवो यत्र ते विलोहिताः त्वग्लोहितमज्जादिविविधधातुमन्तः स्थूलशरीरिण इत्यर्थः। विलोहिता इत्येतदपि विशेषणं कीटपतङ्गादिबहुविधक्षुद्रजीवरूपेण वृक्षावस्थानत्वे सति रुद्राणां कृते साधूक्तं भवति। अथवा 'वि' इत्युपसर्गो विगतार्थे लोहितं रुधिरं तच्चेह मांसादीनामुपलक्षणं ततोऽयमर्थः 'वि' विगतं लोहितं रुधिरं येषां येभ्यो वा ते विलोहिताः अथवा 'वि' विगताः-लोहिताः धातवः त्वग्लोहितमज्जादयो येषां येभ्यो वा ते विलोहिताः एवमत्र केवलं बिग्रहवाक्यमेव भिद्यते। अर्थाभिधानन्तु विग्रहवाक्यद्वयेऽपि सममेव। विलोहिताः विगतकलुषभावाः त्वग्लोहितमज्जादिविमुक्तास्तेजोमयशरीराइत्यर्थः। वृक्षाधिष्ठातृरूपत्वेन तत्रावस्थानत्वे सति रुद्राणामेतदपि विशेषणं सम्यगेवोपपद्यते। एवं भूता येरुद्रास्तेषां रुद्राणां धन्वानि धनूंषि सहस्रयोजने सहस्रयोजनव्यवहिते मार्गे वयमवतन्मसि अवतन्मः स्वेभ्योदूरे प्रक्षिपाम इत्यर्थः॥ ५८॥

ये भूतानामधिपतयो विशिखासः कपर्दिनः।
तेषाᳫं सहस्रयोजनेऽव धन्वानि तन्मसि॥ ५९॥

भूतानामधिपतयो ये रुद्राः सन्तीति शेषः। "भूतोऽमी देवयोनयः" इत्यमरसिंहोक्तेः अन्तर्हितशरीराः सन्तो मनुष्योपद्रवकरा देवयोनिविशेषा भूता उच्यन्ते, तेषां भूतानां देवविशेषाणामधिपतयः पालकाः ये रुद्रा वर्त्तन्ते। तत्र केचिद्विशिखासः, विगता शिखा येषां येभ्यो वा ते विशिखाः विशिखा एव विशिखासः ( "आज्जसेरसुगि"ति जसोऽसुगागमः ) शिखा शब्दः केशोपलक्षकः, अतोऽयमर्थः विशिखासः मुण्डितमुण्डाः सन्तीत्यर्थः। तथा केचिच्च कपर्दिनः कपर्दो जटाजूटः सोऽस्ति येषां ते कपर्दिनः जटाजूटधारिणः जटिलाः सन्तीत्यर्थः। तेषां भूताधिपतीनां भूतेशानां रुद्राणां धन्वानि धनूंषि सहस्रयोजने सहस्रयोजनव्यवहिते मार्गे वयमवतन्मसि अवतन्मः स्वेभ्यो दूरे प्रक्षिपाम इत्यर्थः ॥ ५९ ॥

ये पथां पथिरक्षयऽऐलबृदाऽआयुर्य्युधः।
तेषां ᳞ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६० ॥

ईदृशाः पथामधिपतयो ये रुद्राः सन्तीति शेषः। अधिपतय इति पूर्वमन्त्रादिहाप्यनुषज्यते। पथां श्रुत्युक्तानां दक्षिणादिमार्गाणां लौकिकवैदिकतान्त्रिकमार्गाणाञ्चाधिपतयः पालका ये रुद्राः वर्त्तन्ते, तेषां मार्गाधिपतीनां रुद्राणां धन्वानि धनूंषि सहस्रयोजने सहस्रयोजनव्यवहिते मार्गे वयमवतन्मसि अवतन्मः स्वेभ्यो दूरे प्रक्षिपाम इति पूर्ववद्व्याख्या। कीदृशा इत्यपेक्षायामुच्यते। पथिरक्षयः पथः पूर्वोक्तानन्यानपि पुराणोक्तादिमार्गान् रक्षन्ति पालयन्तीति पथिरक्षयः। ( "छन्दसि वनसनरक्षिमथाम्" इति पाणिनीयसूत्रेण कर्म्मण्युपपदे इन्प्रत्ययोऽत्रावगन्तव्यः। ) पुनः कीदृशाः अत्रोच्यते ऐलबृदाः "इलेति पृथ्वीनामे"ति निघण्टुः। इला पृथ्वी तस्या इदमैलमन्नं तद्बिभ्रतीति ऐलभृताः त एव सुप्तिङ्स्यादिकारिकया हलोर्व्यत्ययेन परोक्षवृत्त्या ऐलबृदा इत्युच्यन्ते, अन्नैर्जन्तूनां पोषका इत्यर्थः। तथा आयुर्य्युधः आयुषा जीवनेन युध्यन्ते ये ते आयुर्य्युधः, जीवनपर्य्यन्तं युद्धकरा इत्यर्थः। अथवा आयुर्जीवनं तदेव पणीकृत्य युध्यन्ते ते आयुर्युधः, पणीकृत्य युद्धकर्त्तार इत्यर्थः। ये एवम्भूता रुद्रास्तेषां धन्वानि धनूंषि सहस्रयोजने सहस्रयोजनव्यवहिते मार्गे वयमवतन्मसि अवतन्मः स्वेभ्यो दूरे प्रक्षिपाम इत्यर्थः ॥ ६० ॥

ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः।
तेषां᳞सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६१ ॥

ये ईदृशा रुद्रास्तीर्थानि काशीप्रयागादीनि प्रचरन्ति गच्छन्ति नानारूपेणेति शेषः। तेषां रुद्राणां धन्वानि धनूंषि सहस्रयोजने सहस्रयोजनव्यवहिते मार्गे वयमवतन्मसि अवतन्मः स्वेभ्यो दूरे प्रक्षिपाम इत्यर्थः। कीदृशा रुद्रा इत्यपेक्षायामुच्यते—सृकाहस्ताः "सृकेत्यायुधनामे"ति निघण्टुः। सृका आयुधानि हस्ते येषां ते सृकाहस्ता आयुधहस्ता इत्यर्थः। तथा निषङ्गिणः निषज्यन्ते इति निषङ्गाः खड्गास्ते विद्यन्ते येषां ते निषङ्गिणः खड्गवन्त इत्यर्थः। सृकाहस्तत्वेऽपि निषङ्गित्वोक्तिः खड्गप्राधान्यार्थमेव। केचन रुद्राः सृकाहस्ता

आयुधहस्ताः तथा केचन रुद्रा निषङ्गिणः खड्गधारिणः इत्येवं वाक्यभेदेन योजना। यदा सुकृतिनः कुम्भोपरागादिविशिष्टपर्वसु प्रयागकाश्यादीनि तीर्थानि यान्ति तदा सुकृतिनां रक्षार्थं जनैरलक्षितानि नानाविधानि रूपाणि कृत्वा केचन आयुधानि गृहीत्वा केचन खड्गांश्च गृहीत्वा तत्र तत्र प्रचरन्ति यत्र यत्र तीर्थे सुकृतिनो गच्छन्ति तत्र एतेऽपि भक्तरक्षार्थं प्रचरन्तीत्यभिप्रायेणैवमुक्तं "येतीर्थानि प्रचरन्ति सृकाहस्तानिषङ्गिणः" इति। अतः पर्वसु यत्र यत्र तीर्थेषु जनसङ्घः सञ्जायते तत्र तत्र तीर्थेषु महामारीप्रभृतिनानोपद्रवाश्च दरीदृश्यन्ते। वयमपि यदा तदा केषुचित्पर्वसु कुत्रचित्तीर्थेषु गच्छामो गमिष्यामो वा अतः प्रथममेव तेषां रुद्राणामायुधानि सहस्रयोजनव्यवहिते मार्गे स्वेभ्यो दूरे क्षिपाम इत्यभिप्रायः। अन्येऽपि वा ये रुद्राः प्रकटचौरादिहृदयेषु तदभिमानित्वेनानुप्रविष्टाः सन्तः पर्वसु नानादेशतः समागतानां जनानां मध्ये तदीयद्रव्याद्यपहर्त्तुकामनया काशीप्रयागादीनि तीर्थानि प्रचरन्ति तत्र तत्र चौर्य्यादिकर्त्तुं गच्छन्ति। तेषां रुद्राणां धन्वानि चर्म्मचक्षुषा मादृशैरदृश्यान्यप्यायुधानि मनसैव प्रत्यक्षाणि कृत्वा तानि सहस्रयोजनव्यवहितमार्गे वयमवतन्मः स्वेभ्यो दूरे प्रक्षिपाम इति वाऽऽशयः॥ ६१॥

येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्।
तेषांᳬसहस्रयोजनेऽव धन्वानि तन्मसि॥ ६२॥

ये रुद्राः अन्नेषु भुज्यमानेषु स्थिताः सन्तः जनान् विविध्यन्ति विशेषेण ताडयन्ति। जनानिति वहुवचनान्तत्वेनोक्तं सदन्यदपि प्राणिजातमुपलक्षयति, तेनायं भावः। अद्यन्ते इत्यन्नानि, तेषु अन्नेषु तत्तत्प्राणिनां तत्तत्खाद्यपदार्थेषु तत्तत्प्राणिभिर्भुज्यमानेषु सत्सु तत्तत्प्राणिनां धातुवैषम्येन रोगानुत्पाद्य तान्विनाशयन्तीत्यभिप्रायः। तथा पात्रेषु पात्रस्थक्षीरोदकादिषु स्थिताः सन्तः पिबतः क्षीरादिपानं कुर्वतो जनान्विविध्यन्ति विशेषेण ताडयन्ति, अन्नोदकभोक्तॄन् प्राणिनो व्याधिभिर्ये रुद्राः पीडयन्तीत्याशयः। तेषां रुद्राणां धन्वानि धनूंषि सहस्रयोजनव्यवहिते मार्गे वयमवतन्मः स्वेभ्यो दूरे क्षिपाम इत्यर्थः॥ ६२॥

यऽएतावन्तश्च भूयांᳬसश्च दिशो रुद्रा वितस्थिरे।
तेषांᳬसहस्रयोजनेऽव धन्वानि तन्मसि॥ ६३॥

ये रुद्रा एतावन्तः एतत्प्रमाणं येषां ते एतावन्तः। एतत्प्रमाणका अतिशयेन बहवः भूयांस उक्तेभ्योऽतिबहवश्च ये रुद्रा दिशो दश दिशः वितस्थिरे आश्रिता इत्यर्थः। प्राच्याद्याश्चतस्रो दिशः आग्नेय्याद्या उपदिशश्च उर्द्धमधश्चेति दशदिशस्ता अभिव्याप्य स्थिता ये रुद्रा इत्याशयः। तेषां रुद्राणां धन्वानि धनूंषि सहस्रयोजने सहस्रयोजनव्यवहिते मार्गे वयमतन्मसि, अवतन्मः स्वेभ्यो दूरे क्षिपाम इत्यर्थः॥ ६३॥

नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः। तेभ्यो दश प्राचीर्दश दक्षिणा

दश॒ प्र॒तीची॒र्दश॒ोदी॑ची॒र्दशो॒र्ध्वाः। तेभ्यो॒ नमो॑ऽअस्तु॒ ते नो॑ऽवन्तु॒ ते नो॑ मृडयन्तु॒ ते यन्द्वि॒ष्मो यश्च॑ नो॒ द्वेष्टि॒ तमे॑षां॒ जम्भे॑ दध्मः ॥ ६४ ॥

अनया कण्डिकया द्युलोकस्था रुद्रा उच्यन्ते। तथाहि दिवि द्युलोके ये रुद्रा वर्त्तन्ते इति शेषः। तथा येषां च रुद्राणां वर्षं वृष्टिरेव इषवः बाणाः सन्तीति शेषः। येषां रुद्राणां वृष्टिरेवायुधस्थानीयेत्यर्थः। ये रुद्राः अतिवृष्ट्यादिभिः प्राणिनो घ्नन्तीत्यभिप्रायः। तेभ्यः वर्षरूपायुधधारिभ्यो रुद्रेभ्यो नमोऽस्तु अस्मदीयनमस्कारोऽस्त्वित्यर्थः। तस्य नमस्कारस्यायं क्रमस्तथाहि तेभ्यो वर्षरूपायुधधारिभ्यो रुद्रेभ्यो दश दशसङ्ख्यकाः प्राचीः प्रागभिमुखीः अङ्गुलीः कुर्म्म इति शेषः। प्राङ्मुखाञ्जलिकरणे हि प्राच्यो दशाङ्गुलयो भवन्तीति सकलजनानुभवप्रसिद्धिरेवास्ति। अत एवमुक्तं भवति यत् 'दश प्राचीः' अर्थात् दशसङ्ख्यका अङ्गुलीः प्राचीः कुर्म्म इति, प्राङ्मुखा भूत्वा तेभ्यो वर्षरूपायुधधारिभ्यो रुद्रेभ्यो नमस्कुर्म्म इति भावः। एवमग्रेऽपि सर्वत्रानुसन्धेयम्। तथा हि तेभ्यो रुद्रेभ्यो दक्षिणाः दक्षिणाभिमुखीः दशाङ्गुलीः कुर्म्म इति शेषः। दक्षिणाभिमुखा भूत्वा तेभ्यो रुद्रेभ्यो नमस्कुर्म्म इत्याशयः। तथा तेभ्यो रुद्रेभ्यो प्रतीचीः प्रत्यङ्मुखीः दशाङ्गुलीः कुर्म्म इति शेषः। प्रत्यङ्मुखा भूत्वा तेभ्यो रुद्रेभ्यो नमस्कुर्म्म इत्यभिप्रायः। एवमुदीचीः उदङ्मुखीः दशाङ्गुलीः कुर्म्म इति शेषः। उदङ्मुखा भूत्वा तेभ्यो रुद्रेभ्यो नमस्कुर्म्म इति भावः। तथा तेभ्यो रुद्रेभ्यो ऊर्ध्वाः उपरि दशाङ्गुलीः कुर्म्म इति शेषः। ऊर्ध्वमवलोक्य उपरि अञ्जलिं बद्ध्वा तेभ्यो रुद्रेभ्यो नमस्कुर्म्म इत्याशयः। एवमञ्जलिं बद्ध्वा सर्वासु दिक्षु नमस्कृत्वा साधकः पुनर्नमस्करोतीति प्रदर्श्यते। तद्यथा तेभ्यो नमोऽस्तु तेभ्यो रुद्रेभ्योऽञ्जलिपूर्वकमस्माकं नतिरस्त्विति भावः। "दश वा अञ्जलेरङ्गुलयो दिशि दिश्येवैभ्य एतदञ्जलिं करोती"ति श्रुतेः। तथा ते रुद्राः नोऽस्मानवन्तु रक्षन्तु। तथा ते एव रुद्रा नोऽस्मान् मृडयन्तु सुखयन्त्वित्यर्थः। तथा इह लोके सुखयित्वा ते एव रुद्रा इतः संसारादस्मानुद्धरन्त्विति शेषः। यद्वा येभ्यो रुद्रेभ्यः सर्वासु दिक्षु अस्माभिर्नमस्कारः कृतः येभ्यश्च रुद्रेभ्यः सकाशादिह नमस्कारोत्तरं स्वभार्य्यापुत्रादीनां रक्षणाद्यभिप्रायेण ते नोऽवन्तु ते नो मृडयन्तु इति मन्त्रैकदेशेन नोऽस्मानितिबहुवचनाभिधायिना वाक्येन स्वानां कृते रक्षणं सुखञ्चास्माभिः प्रार्थितं, ते रुद्राः तमस्मच्छत्रुं द्विषन्त्वितिशेषः। किञ्च वयमपि तेषां पूर्वोक्तानां रुद्राणां जम्भे दंष्ट्राकराले मुखे तमुभयात्मकं शत्रुं दध्मः स्थापयामः। तं कमुभयात्मकं शत्रुं रुद्राणां मुखे दध्मः, इत्यपेक्षायामुच्यते—यं देवदत्तादिनामकमैहिकं शत्रुमालस्याश्रद्धादिरूपं पारलौकिकं वा शत्रुं वयं द्विष्मः यस्य द्वेषं कुर्म्म इत्यर्थः। तथा यश्च नो द्वेष्टि यः पुनः शत्रुर्देवदत्तादिरालस्याश्रद्धादिर्वाऽस्मान् द्वेष्टि अस्मद्विषये द्वेषं करोति ऐहिकामुष्मिकञ्चास्मदिष्टकार्य्यं विनाशयति तमेवंविधं शत्रुं तेषां पूर्वोक्तानां रुद्राणां मुखे वयं प्रक्षिपाम इत्यभिप्रायः। अस्मद्द्विषमस्मद्द्वेष्यञ्च देवदत्तादिनरमालस्याश्रद्धादिकं वा पूर्वोक्ता रुद्रा भक्षयन्तु तद्राहित्येन चास्मानवन्तु तथास्मान् सुखयन्त्विति समस्तार्थः। ते एव सुखं जीवन्ति येषां नारयो न चाऽऽलस्याश्रद्धादयो वा सन्ति। येषाञ्चैव ते भवन्ति ते पुनश्चिन्तया वर्त्तमाना जीवन्तोऽपि मृता एव दरीदृश्यन्ते, अतः शत्रुराहित्यपूर्वकमेव स्वानां रक्षणं सुखं संसारतः समुद्धरणञ्चेह प्रार्थ्यतेऽस्माभिरित्यभिप्रायः ॥ ६४ ॥

नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषाँ वात इषवः । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमोऽअस्तु तेनोऽवन्तु तेनो मृडयन्तु ते यन्द्विष्मो यश्चनो द्वेष्टि तमेषाञ्जम्भेदध्मः ॥ ६५ ॥

अनया कण्डिकयाऽन्तरिक्षस्था रुद्रा उच्यन्ते। तथा हि ये रुद्रा अन्तरिक्षे वर्तन्ते इति शेषः । तथा येषाञ्च रुद्राणां वात इषवः बाणाः सन्तीति शेषः । येषां रुद्राणां वायुरायुधस्थानीय इत्यर्थः । कुवातेनान्नं विनाश्य वातरोगं वोत्पाद्य ये रुद्रा जनान् घ्नन्तीत्यभिप्रायः । तेभ्योऽन्तरिक्षस्थेभ्यो वातायुधधारिभ्यो रुद्रेभ्यो नमोऽस्तु अस्मदीया नतिरस्त्वित्यर्थः । शिष्टन्तु पूर्वकण्डिकायामेव व्याख्यातं तद्वदिहाप्यनुसन्धेयम् ॥ ६५ ॥

नमोऽस्तुरुद्रेभ्यो ये पृथिव्याँय्येषामन्नमिषवः । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमोऽअस्तु तेनोऽवन्तु तेनो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६६ ॥

अनया कण्डिकया पृथिवीस्था रुद्रा उच्यन्ते । तथाहि ये रुद्राः पृथिव्यां भूमौ वर्त्तन्ते इति शेषः । येषाञ्च रुद्राणामन्नमिषवः बाणाः सन्तीति शेषः । अद्यते यत्तदन्नमदनीयं वस्तु तदेवायुधस्थानीयं येषाञ्च रुद्राणामित्यर्थः । अयथान्नभक्षणे कदन्नभक्षणे वा प्रवर्त्य रोगमुत्पाद्य ये रुद्रा जनान् घ्नन्तीत्यभिप्रायः । तेभ्यः पृथिवीस्थेभ्योऽन्नरूपायुधधारिभ्यो रुद्रेभ्यो नमोऽस्तु अस्माकं नमस्कारोऽस्त्वित्यर्थः । शिष्टमन्यत्पूर्ववत्समानमेव । एतच्च प्रत्यवरोहसंज्ञकं मन्त्रत्रयं वर्त्तते । तच्च धृतिच्छन्दस्कं बहुरुद्रदेवत्यञ्चावधेयम् । एतदध्यायेन श्रौतीयहोमप्रकरणे एतन्मन्त्रत्रयकरणकहोममुद्दिश्य "अथ प्रत्यवरोहान् जुहोती"ति श्रुत्याऽभिहितम् । एतत्संज्ञाकरणञ्च संव्यवहारार्थम् ॥ ६६ ॥

वयँ सोम व्रते तव मनस्तनूषु बिभ्रतः ।
प्रजावन्तः सचेमहि ॥ १ ॥ ( ६७ )

एतस्यापि सूक्तस्य ऋष्यादिकं पूर्वमेवोक्तं तत्तु रुद्राध्यायस्य प्रथममन्त्रव्याख्यायां द्रष्टव्यम् । इह तु केवलं मन्त्रार्थ एव प्रतिपाद्यते मया । तथा हि, उमा गौरी पार्वतीत्यर्थः । "उमा कात्यायनी गौरी काली हैमवतीश्वरी । शिवा भवानी रुद्राणी शर्व्वाणी सर्वमङ्गला । अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिका । आर्य्या दाक्षायणी चैव गिरिजा मेनकात्मजा" इत्यभिधानदर्शनात् , अतोऽयमर्थः । उमा गौरी पार्वती तया सहितः सोमः तत्सम्बुद्धौ हे सोम, हे पार्वतीसहित, रुद्र, वयं त्वदुपासकाः तवार्चकाः त्वदीयस्नपनहवनादिकर्म्मकर्तारो यजमानाः तव व्रते "व्रतमिति कर्म्मनामे"ति निघण्टुः । तव व्रते तव कर्म्मणि त्वदीययजनादौ वर्त्तमानाः सन्तः तनूषु भवच्छरीरेषु मनः स्वकीयं चित्तं बिभ्रतः धारयन्तो वर्त्ता-

महे इति शेषः। सदा वयं त्वन्मूर्तिध्यानतत्पराः स्म इत्यर्थः। अतस्त्वत्प्रसादाद्वयं प्रजावन्तः पुत्रपौत्रादिसम्पन्नाः सन्तः सचेमहि सेवितव्यानि वस्तूनीति शेषः। तस्माद्भूयोऽपि प्रत्यहं त्वां वयं यजामहे। अतस्त्वयापि अस्मत्पुत्रादिसंरक्षणपूर्वकमस्मत्सेवितव्यानि वस्तूनि प्रत्यहमेव दातव्यानीत्यभिप्रायः॥ १॥ (६७)

एष ते रुद्रभागः सह स्वस्राऽम्बिकया तञ्जुषस्व स्वाहैष ते रुद्र भाग आखुस्ते पशुः॥ २॥ (६८)

रोदयति विरोधिनां शतमिति रुद्रः यद्वा रोदयति पापिनो नरान् दुःखभोगेनेति रुद्रस्तत्सम्बुद्धौ हे रुद्र, विरोधिनां पापिनां वा रोदयितः हे शिव, एषोऽस्माभिर्दीयमानः स्नपनपक्षे स्नपनद्रव्यरूपः, होमपक्षे होमद्रव्यरूपः, पाठमात्रपक्षे वाङ्मयस्तुतिरूपः पदार्थः ते तव भागः तवांशोऽस्तीति शेषः। योऽयं दीयमानः पदार्थोऽस्माभिस्तवाग्रे स्थापितः स तवैवास्तीत्यर्थः। अत एव तं भागं त्वम् अम्बिकया स्वस्रा अम्बिकानाम्न्या भगिन्या सह जुषस्व सेवस्व तया सह तं भागं त्वं स्वीकुर्वित्याशयः। स्वाहा अम्बिकानाम्न्या भगिन्या सहिताय तुभ्यमयं भागोऽस्माभिः स्वाहाकारेण दत्त इत्यर्थः। हननं हा सुष्ठु आहा स्वाहा सुपरित्यागोऽस्त्विति भावः। देवमुद्दिश्य त्यागार्थे स्वाहाशब्दः प्रवर्त्तते "द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारञ्चे"ति श्रुतेः। योऽयं रुद्राख्यः क्रूरो देवस्तस्य विरोधिनं पापिनं वा हन्तुं यदा इच्छा भवति, तदा अनया भगिन्या सह क्रूरदेवतया साधनभूतयाऽम्बिकया सह तं हिनस्ति। सा चाम्बिका शरद्रूपं प्राप्य ज्वरादिकमुत्पाद्य तं विरोधिनं पापिनं वा हन्ति। अतः शरदि विशेषतया ज्वरादेरुपद्रवः सम्भवति। अत एवमभिधीयते "वैद्यानां शारदी माता पिता तु कुसुमाकरः"इति। तदुक्तं श्रुत्या "अम्बिका ह वै नामाऽस्य स्वसा तयाऽस्यैष सह भागः (श० ब्रा० २।६।२।९।)" इति। "एष ते रुद्रभागः सह स्वस्राऽम्बिकयेत्याह शरद्वा अस्याम्बिका सा भिया एषा हिनस्ति यठं हिनस्ति तयैवैनठं० हिनस्ति सह शमयती"ति (तैत्ति० श्रु०) च। किञ्च हे रुद्र, एषोऽस्माभिर्दीयमानः पूर्वोक्तः पदार्थः ते तव भागः तवांशः स त्वया स्वीकर्त्तव्य इत्यर्थः। इयञ्च पुनरुक्तिरादरातिशयद्योतनार्था "अभ्यासे भूयांसमर्थं मन्यन्ते"इति यास्कोक्तेः। ते इति चतुर्थ्यन्तं वा पदं तत्पक्षेऽयमर्थः। हे रुद्र, एषः पुरः स्थापितः पूर्वोक्तभागस्ते तुभ्यं समर्प्यतेऽस्माभिरिति शेषः। ननु भूयो भूयः कुतोऽयं भागः समर्प्यते युष्माभिरिति चेत्तत्रोच्यते आखुस्ते पशुरिति। हे रुद्र, यतस्ते तव पशुः आखुरस्तीतिशेषः। "खुर छेदने (तु० प०)" आसमन्तात् खुरतीति आखुः आङ्पूर्वात्खुरतेः क्विप् सर्वतोभावेन छेदकः हिंसकोऽस्तीत्यर्थः। अष्टमूर्तेः शिवस्यैतादृशः पशुरपि प्रसिद्धः एवास्ति "अवेहि मां किङ्करमष्टमूर्त्तेः कुम्भोदरं नाम निकुम्भमित्रम्"इति दिलीपं प्रति सिंहोक्तेः। यस्मात्तवपशुः कुम्भोदराख्यः सिंहः आखुः अर्थात् हिंसकोऽस्ति स कदाचिदपि फलपुष्पाद्यानयनार्थमरण्ये सञ्चरतोऽस्मान् न हिंस्यादिति हेतोः भूयो भूयोऽप्यस्माभिरेषस्त्वदीयो भागस्तुभ्यं समर्प्यते इत्यभिप्रायः। यद्वा हे रुद्र, आखुः मूषिकः ते तव पशुः सोऽपि हिंसकोऽस्तीति शेषः, सर्वाणि कार्योपयोगिवस्तूनि दन्तैश्छिनत्ति, प्लेगाख्यसाङ्क्रामिकरोगप्रारम्भे प्रथमतो मूषिक एव पतति ततो जना ज्वरपीडिताः सन्तो म्रियन्ते, इत्यभिप्रायेण वा आखुस्ते पशुरित्युक्तं भवति।

यद्वा हे रुद्र, ते तव पशुः नन्दिनामा वृषभः सोऽपि शृङ्गादिना जनान् हिनस्ति। अतस्ते तव पशुः आखुः हिंसकोऽस्तीत्येतदभिप्रायेण भूयो भूयोऽप्यस्माभिरेषस्त्वदीयोभागस्तुभ्यं समर्प्यते। येन त्वदीयो हिंसकः पशुरस्मान् न हिंस्यादिति भावः। "मृडानी चण्डिकाम्बिके"त्यमरसिंहोक्तेः 'अम्बिका'इति रुद्रपत्नीनाम प्रतीयते। "अम्बिका ह वै नामाऽस्य स्वसा"इत्यादि श्रुतेः 'अम्बिका' इति रुद्रभगिनी नामाऽभिगम्यते। एवं हि तत्र सन्दिह्यते या स्वसा सा स्त्री कथं या स्त्री सा स्वसा कथमिति। तदेतस्य समाधानमभिगम्यते यथा "श्रुतिस्मृति विरोधे तु श्रुतिरेव गरीयसी"इति विशेषवाक्योपलब्धेरिह श्रुतेरेव प्राबल्यमित्यवगन्तव्यम्। अपिच इह संसारे यथा श्रुतिस्मृतिपुराणेतिहासादिप्रसिद्धो वेदवेदान्तप्रतिपाद्यः पुरुषः एक एवास्ति नापरः कश्चिदिति, तथैव प्रकृतिरप्येकैव नान्या काचिदपरा प्रकृतिरप्यस्ति। अतः प्रकृत्यन्तराभावाद्या एव स्त्री सा एवैका प्रकृतिः कार्यान्तरे स्वसृवत्साहाय्यकारिणी भूत्वा स्वसापि, इति श्रुतेराशयो भवितुमर्हति। यथाहि कृष्णावतारे परमात्मा पुरुषो धर्म्मसंस्थापनार्थं कृष्णरूपेण इहावततार। तथैव तदंशभूता परा शक्तिरपि तदीयकार्य्यमात्रे साहाय्यकरणाय योगमायारूपेण इहावततार। रुक्मिणीप्रमुखा बह्व्यः श्रीकृष्णचन्द्रस्य धर्म्मपत्न्योऽपि तस्याः पराप्रकृतेरेवांशभूता आसन्। अनादिकालतः शक्त्येकत्वेऽपि कार्य्यवशात्तत्र यथा बह्व्यः शक्तयः समभवँस्तथैवात्रापि एकैवाम्बिका परमात्मनः शिवस्य "मृडानी चण्डिकाम्बिके"त्यभिधानात्स्त्री, सैव विरोधिनां पापिनां वा हनने प्रवृत्तस्य शिवस्य साहाय्यं कृत्वा स्वसृवच्छिवमुपकरोति, अतः स्वसापि। एतदभिप्रायेणैव "अम्बिका ह वै नामास्य स्वसा०—" इत्यादिश्रुत्याऽप्युक्तम्। एक एव पुरुषः एका एव प्रकृतिश्चेति तदुक्तञ्च श्रुत्या "आत्मा वा इदमग्र आसीन्नान्यत्किञ्चन सोऽकामयत एकोऽहं बहुस्यां प्रजायेयं"इत्यादि-बृहदारण्यकश्रुतिः। "यस्मान्नजातः परोऽअन्योऽअस्ति यऽआविवेश भुवनानि विश्वा। (शु०य० वे० सं० ८।३६)"इति तु पुरुषैकत्वे माध्यन्दिनीयश्रुत्याभ्युक्तम्। प्रकृत्येकत्वे यथा— "अजामेकां लोहितकृष्णशुक्लां बह्वीः प्रजाः सृज्यमाना स्वरूपा। अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥ ( कृ० य० वे० तैत्ति० श्वे० ४।४।२। )" इति। तथा तत्रैव "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च। ( ४। ४।५। )" इति। प्रकृतिशब्दार्थानुक्रमणे श्रीदेवीभागवते भगवता व्यासेनोक्तं "प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः। सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता॥ ९॥४॥" इति। एवमन्यत्राप्युक्तं यथाहि "एकैव शक्तिः परमेश्वरस्य भिन्ना चतुर्द्धा व्यवहारकाले। भोगे भवानी हननेऽम्बिका च समरे च दुर्गा प्रलये च काली॥" इति। एवं श्रुतिस्मृतिपुराणवाक्यैः प्रकृतेः पुरुषस्य चैकत्वमवसीयते। अतः प्रकृतिपुरुषाभ्यां सृष्टिरितिवाक्यञ्च सङ्घटते। अत एवं हि श्रूयते "न चक्राङ्का न पद्माङ्का न वज्राङ्काकचित्प्रजा। लिङ्गाङ्का च भगाङ्का च तस्मान्माहेश्वरी प्रजा॥" इति एवं परामर्शतस्तदानीं सृष्ट्यादौ शक्त्यन्तराभावात् या एव "मृडानी चण्डिकाम्बिका" सा एव "अम्बिका हवै नामास्य स्वसा" इत्यत्र नास्ति कश्चित्सन्देहः॥ २॥

**अवं रु॒द्रम॑दीम॒ह्यव॑ दे॒वं त्र्य॑म्बकम्। यथा॑ नो॒ वस्य॑स॒स्कर॒द्यथा॑ नः॒ श्रेय॑स॒स्कर॑द्यथा॑ नो व्यवसा॒यया॑त्॥ ३ ( ६९ )॥**

अवरुद्रमिति। अदीमहीत्यत्र णिचो लोपश्छान्दसः। तथा अवेत्युपसर्गाल्ल्यबन्तं क्रियापदश्चाध्याहर्त्तव्यम् "अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेदि"त्युक्तेः। अतोऽयमर्थः। त्रीणि अम्बकानि नेत्राणि यस्यासौ त्र्यम्बकस्तं त्र्यम्बकं त्रिनेत्रं वक्त्रं वक्त्रं प्रति लोचनत्रयोपेतमीदृशं रुद्रं देवमवयुत्य अवगम्य वा अन्यदेवताभ्यो रुद्रं पृथक्कृत्य अथवा अन्यदेवतापेक्षया रुद्रमेव श्रेष्ठं ज्ञात्वा वयमदीमहि आदयामः रुद्रं भोजयाम इत्यर्थः। कुत इति चेत्तत्रोच्यते। यथा (हेतौ थाल्प्रत्ययः) यस्मात् नोऽस्मान् वस्यसः वस्तृतरान् वसनशीलान् करत् कुर्य्यादसौ रुद्र इति शेषः। एवं यथा च नोऽस्मान् श्रेयसः करत् ज्ञातिषु प्रशस्यतरानस्मान् कुर्य्यादयं रुद्र इति शेषः। किञ्च यथा नोऽस्मान् व्यवसाययात् सर्वेषु कार्य्येषु निश्चययुक्तान् कुर्य्यादसौ रुद्र इति शेषः। यतोऽस्मान् रुद्र एवं कुर्य्यात्, अतो वयं रुद्रमदीमहि आदयामः। रुद्रोऽस्मानेवं कुर्य्यादित्यवगम्य ज्ञात्वैनं रुद्रं भोजयामः। स्नपनपक्षे एतत्स्नपनीयद्रव्यमितिशेषः, हवनपक्षे एतद्धवनीयद्रव्यमिति शेषः, जपपक्षे एतत्स्तुतिरूपं शब्दजातमितिशेषः, अस्मिन्पक्षे अदीमहि आदयाम इत्यस्य 'श्रावयामः' इत्यूहोऽनुसन्धेयः धातूनामनेकार्थत्वात्, स्तुतिरूपशब्दजातस्य भोजनक्रियायामर्थानुपपत्तेश्च। आशीर्वादाभिप्रायोऽनयर्चा प्रकटीक्रियतेऽर्चकैरिति तत्सर्वमिदं भगवतः श्रीरुद्रप्रसादादभिसम्पद्यत एवेति सकलजनानां पुरतः प्रत्यक्षमिवावभाति किमन्यत्। अदीमहीत्यत्र "छन्दस्युभयथा" इत्यार्धधातुकत्वाल्लिङि "णेरनिटि" इति णिचो लोपः। वस्यस इत्यत्र वसतीति वस्ता तृन्प्रत्ययः, अतिशयेन वस्ता वसीयान् 'तुश्छन्दसि" इति इयसुनि कृते "तुरिष्ठेमेयःसु" इति तृनो लोपे द्वितीयाबहुवचने वसीयस इति प्राप्ते ईलोपश्छान्दसो बोध्यः। करदित्यत्र "छन्दसि लुङ्लङ्लिटः"इति लिङर्थे लङ्, विकरणव्यत्ययेन शपि गुणः। "बहुलं छन्दस्यमाङ्योगेऽपि"इत्यडभावः। व्यवसाययादित्यत्र लेटि "लेटोऽडाटावि"त्याडागमे "इतश्च लोपः परस्मैपदेषु" इति इलोपे विपूर्वस्य ण्यन्तस्य स्यतेः व्यवसाययात्' इति रूपम्॥ ३॥ (६९)॥

भे॒ष॒जम॑सि भेष॒जं ग॒वेऽश्वा॑य॒ पुरु॑षाय भेष॒जम्।
सु॒खं मे॒षाय॑ मे॒ष्यै॥ ४॥ (७०)॥

हे रुद्र, त्वं भेषजमसि औषधवत्सर्वोपद्रवनिवारकोऽसीत्यर्थः। अतस्त्वं गवे अश्वाय च भेषजं भैषज्यं देहीति शेषः। केवलमस्माकं गवे अश्वायेत्येव न, किन्तु पुरुषाय च अस्माकं पुत्राद्यर्थञ्च भेषजं भैषज्यं देहीति शेषः। सर्वव्याधिनिवारकमौषधं देहीत्यर्थः। न केवलमेतावदेव किन्तु मेषाय मेष्यै च सुखं देहीति भावः। सु सुष्ठु शोभनं वा हितं खेभ्यः प्राणेभ्य इति सुखम्। अनेन मन्त्रेण गृहपशूनां क्षेमप्राप्तिर्भवतीत्याशयोऽत्र स्फुटीभवति॥ ४॥ (७०)॥

त्र्यं॑म्बकंयजामहे सु॒ग॒न्धिम्पु॑ष्टि॒वर्द्ध॑नम्। उ॒र्व्वा॒रु॒कमि॑व॒ बन्ध॑नान्मृ॒त्योर्मु॑क्षीय॒ मामृता॑त्॥ त्र्यं॑म्बकंयजामहे सु॒ग॒न्धिम्प॑तिवेद॑नम्। उ॒र्व्वा॒रु॒कमि॑व॒ बन्ध॑नादि॒तो॒मु॑क्षीय॒ मामु॒त॑ः॥ ५॥ (७१)॥

सुगन्धिं दिव्यगन्धोपेतं मर्त्त्यधर्म्महीनं पुष्टिवर्धनं धनधान्यादिपुष्टेर्वर्द्धयितारं त्र्यम्बकं त्रिनेत्रं प्रतिवक्त्रं नेत्रत्रयोपेतं रुद्रं वयं यजामहे पूजयाम इत्यर्थः। "वयं यजामहे"इति बहुवचनं स्वभार्य्यापुत्राद्यपेक्षया "अस्मदो द्वयोश्चे"ति पाणिनिवचनाभिप्रायेण वा। ततो रुद्रप्रसादान्मृत्योर्मुक्षीय एकवचनमिह बह्वर्थे, "सुपां सुपो भवन्ती"ति वचनात्, वयं मुक्षीमहि अपमृत्योः संसारमृत्योश्च सकाशान्मुक्ता भूयास्मेत्यर्थः। तथा रुद्रप्रसादादमृतान्मा मुक्षीय मा मुक्षीमहि स्वर्गरूपान्मुक्तिरूपाच्चामृतान्मा मुक्ता भूयास्मेत्यर्थः। अभ्युदयनिःश्रेयसरूपात्फलद्वयादस्माकं कदापि भ्रंशो मा भूयादित्यभिप्रायः। न कदाचिद्भवत्वित्याशयः। मृत्योर्मोचने दृष्टान्तः—'उर्वारुकमिव बन्धनादिति' बन्धनादुर्वारुकमिव यथोर्वारुकं कर्कन्ध्वादेः फलमत्यन्तं पक्वं सत् बन्धनात् स्वस्य वृन्तात् प्रमुच्यते न पुनस्तत्र तेन सह संयुज्यते, तथा वयमपि मृत्योः अपमृत्योः संसारमृत्योश्च सकाशान्मुक्ताः सन्तः पुनस्तत्र न संयुक्ता भूयास्मेत्यर्थः। एतदभिप्रायेणैव वयं रुद्रं यजामहे इत्यभिप्रायः। याजकसम्बन्धिन्यः कुमार्य्योऽपि पुरुषवदुत्तरेण त्र्यम्बकमन्त्रेण तं रुद्रं परिचरन्ति। अतोऽस्मिन्मन्त्रे पाठभेदोऽप्यस्ति। तथाहि सुगन्धिं दिव्यगन्धोपेतं मर्त्त्यधर्म्महीनं पतिवेदनं पतिं वेदयतीति पतिवेदनस्तं पतिवेदनं, "विद्लृ लाभे"इत्यस्य रूपं, भर्त्तुर्लम्भयितारं त्र्यम्बकं त्रिनेत्रं प्रतिवक्त्रं नेत्रत्रयोपेतं रुद्रं वयं याजकसम्बन्धिन्यः कुमार्य्यो यजामहे पूजयाम इत्यर्थः। कुत इत्याशङ्क्योच्यते। ततो रुद्रप्रसादादितो मुक्षीय अत्रापि वचनव्यत्ययो बोध्यः, "बहुलं छन्दसी"ति पाणिन्युक्तेः। कुमार्य्येकत्वे आत्मनो गुरुत्वात्पूजार्थं बहुवचनम्। इतो मातृपितृभ्रातृवर्गान्मुक्षीय मुक्षीमहि मुक्ता भूयास्मेत्यर्थः। तथा रुद्रप्रसादाद्वयं कुमार्य्योऽमुतो मा मुक्षीय मा मुक्षीमहि विवाहादूर्ध्वं भविष्यतः पत्युः सकाशान्मा मुक्ता भूयास्मेत्यभिप्रायः। जनकस्य गोत्रं गृहं च परित्यज्य पत्युर्गोत्रे गृहे च त्र्यम्बकरुद्रप्रसादाद्वसाम इत्यर्थः। "सा यदित इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाहेति (२।६।२।१४।)"इति श्रुतेरितोऽमुतः शब्दाभ्यां पितृपतिवर्गौ ग्राह्यौ। "सा यदित इत्याह—"इति श्रुतौ सेति प्रथमैकवचनश्रवणान्मुक्षीयेति युक्तमेवैकवचनं केवलं 'यजामहे' इत्यत्रैव व्यत्ययो बोध्यः, "बहुलं छन्दसी"ति पाणिनिवचनादेव। सुगन्धिं दिव्यगन्धोपेतं पतिवेदनं भर्त्तुर्लम्भयितारं त्र्यम्बकं त्रिनेत्रोपेतं रुद्रं यजामहे अर्थादहं यजे पूजयामीत्यर्थः। ततश्च रुद्रप्रसादादितो मुक्षीय इतः पितृकुलात्पित्रादेः सकाशान्मुक्ता भूयासम्। तथाऽमुतो मा मुक्षीय विवाहादूर्ध्वं भविष्यतः पत्युः सकाशान्मा मुक्ता भूयासम्। जनकस्य गोत्रं गृहं च परित्यज्य पत्युर्गोत्रे गृहे च सर्वदा त्र्यम्बकरुद्रप्रसादाद्वसामीत्येकवचनान्तत्वेनेयं व्याख्या। कुमारीणां बहुत्वे तु 'यजामहे'इति बहुवचनान्तत्वेन या व्याख्या सा इहैव प्रथमतः प्रदर्शिता मया। न स्त्री शूद्रौ वेदमधीयातामिति श्रुतेः कुमारीपित्रैव कुमार्य्याः सुपतिलाभार्थं त्र्यम्बको रुद्र इज्यते। तत्पक्षे प्रयोगसमये यथावस्थ एव मन्त्रः पठनीयः। अर्थानुसन्धाने तु क्रियाफलस्य परगामित्वात् 'यजामहे' मुक्षीय' इत्युभयत्र "सुप्तिङुपग्रहे"ति कारिकया "व्यत्ययो बहुलमि"तिसूत्रेण च परस्मैपदादिव्यत्ययोऽवगन्तव्यः। सुगन्धिं दिव्यगन्धोपेतं पतिवेदनं भर्त्तुर्लम्भयितारं त्र्यम्बकं त्रिनेत्रं रुद्रमहं यजामहे यजे यजामि पूजयामीत्यर्थः। कुत इत्याशङ्क्यैवं ब्रवीमि "इतो मुक्षीये"ति, इतः पितृकुलान्मुक्षीय मुच्यात् मदीयाकन्येति शेषः। अस्मदादेः सकाशान्मुक्ता भूयादमुकनाम्नी मदीया कन्येत्यभिप्रायः। तथा अमुतो मा मुक्षीय विवाहादूर्ध्वं भविष्यतः पत्युः सकाशान्मा मुच्यान्मा मुक्ता भूयान्मदीया कन्येत्याशयः। तत्र दृष्टान्तः—उर्वा-

रुकमिव बन्धनादिति। व्याख्यातश्चैतत्कण्डिकायामेव तद्वदिहाप्यवगन्तव्यम्। स्नपनादिप्रक्षेऽपि यदयं मन्त्रः पठ्यते तत्रापि स एवाभिप्रायोऽवसीयते। मद्गृहस्थितायाः कुमार्य्याः कृते एवम्भवतु यदिहाभिहितम्, "सा यदित इत्याह—"इत्यादिश्रुतेः॥ ५॥ (७१)॥

**एतत्ते॑ रुद्रावसन्तेन॑ प॒रो मू॑जव॒तोऽती॑हि।**
**अव॑ततधन्वा॒ पिना॑कावसः॒ कृत्ति॑वासा॒ ऽअहि॑ꣳसन्नः॒ शि॒वोऽती॑हि॥६॥ ७२॥**

तेनेति तच्छब्दश्रवणादिह यच्छब्दोऽप्यध्याहर्त्तव्यः, यत्तदोर्नित्यसम्बन्धत्वात्। तदुक्तं याज्ञवल्क्येन "तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः। उदाहृते तु यच्छब्दे तच्छब्दस्यादुदाहृतः॥" इति। तथाहि हे रुद्र, यदेतत् ते तव अवसं पाथेयं मार्गे भोक्तव्यं भोज्यान्नमिदमस्तीति शेषः। अवसशब्देन देशान्तरं गच्छतः पुरुषस्य मार्गमध्ये केषाञ्चिज्जलाशयादीनां समीपे भोक्तव्य ओदनविशेष उच्यते। तेन अवसेन पाथेयेन सहितस्त्वं मूजवतोऽतीहि मूजवान्नामकः कश्चित्पर्वतो रुद्रस्य वासस्थानसमीपेऽस्ति, तस्मान्मूजवन्नामकात्पर्वतात्परः परभागवर्त्ती सन् अतिक्रम्य गच्छ। कीदृशः सन्नतीहीत्यपेक्षायामुच्यते। अवततधन्वा अवरोपितधनुष्कः सन्नतीहि। अस्मद्विरोधिनां त्वया निवारितत्वादित ऊर्ध्वं धनुषि ज्यासमारोपणस्य प्रयोजनाभावादवरोपणमेवेदानीं युक्तमिति भावः। तथा पिनाकावसः पिनाकाख्यं स्वकीयं धनुरावस्ते सर्वत आच्छादयतीति पिनाकावसः धनुर्दृष्ट्वा प्राणिनो यथा न बिभ्येयुस्तथा पिनाकाख्यं स्वकीयं धनुर्वस्त्रादिना प्रच्छाद्य त्वं गच्छेत्यभिप्रायः। तथा हे रुद्र, कृत्तिवासाः चर्म्माम्बरस्त्वं नोऽस्मानहिंसन् अस्मद्विषये हिंसामकुर्वन् शिवोऽस्मत्पूजया परितुष्टः सन् कोपरहितो भूत्वा अतीहि पर्वतमतिक्रम्य गच्छेत्यर्थः॥ ६॥ ७२॥

**त्र्या॒यु॒षञ्ज॒मद॑ग्नेः क॒श्यप॑स्य त्र्यायु॒षम्।**
**यद्दे॒वेषु॑ त्र्यायु॒षन्तन्नो॑ऽअस्तु त्र्यायु॒षम्॥ ७॥ ७३॥**

अत्रापि तच्छब्दश्रवणाद्यच्छब्दोऽध्याहर्त्तव्यः, यत्तदोर्नित्यसम्बन्धत्वात्। तद्यथा—हे रुद्र, जमदग्नेः जमदग्निनामकस्य मुनेः यत् त्र्यायुषं त्रयाणां बाल्ययौवनस्थाविराणामायुषां समाहारस्त्र्यायुषं सुखजीवनं, तथा कश्यपस्य कश्यपनामकस्य प्रजापतेः सम्बन्धि यत् त्र्यायुषं सुखजीवनं, तथा देवेषु यत् त्र्यायुषं देवेषु इत्यत्र षष्ठ्यर्थे सप्तमी जमदग्नेः, कश्यपस्य, इत्युभयत्र षष्ठ्यन्तसाहचर्य्यात्। देवानामिन्द्रादीनां सम्बन्धि यत् त्र्यायुषं सुखजीवनमित्यर्थः। तत्सर्वं त्र्यायुषं सुखजीवनं नोऽस्तु त्वत्प्रसादात्त्वदुपासकानामस्माकं भवतु। जमदग्न्यादीनां बाल्यादिषु यादृशं सुखजीवनं यादृशं वा चरितं तादृशमस्माकं भूयादित्यर्थः॥ ७॥ ७३॥

**शि॒वो नामा॑सि॒ स्वधि॑तिस्ते पि॒ता नम॑स्तेऽअस्तु॒ मा मा॑हिꣳसीः। निव॑र्त्तया॒म्यायु॑षेऽन्नाद्या॑य प्र॒जन॑नाय रा॒यस्पोषा॑य सुप्रजा॒स्त्वाय॑ सु॒वीर्य्या॑य॥८॥७४॥**

"अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे रुद्र,

यदाहं कदाचित्क्षौरादिकं कारयिष्ये तदा त्वत्प्रसादात्क्षुराधिष्ठात्री देवता मा मां मा हिंस्यादित्यभिप्रायेणेदानीं त्वद्यजनावसरे त्वां प्रति मदीयेयं प्रार्थनास्तीतिवाक्यशेषः। कुत इति चेत् यतस्त्वं महादेवोऽसि सर्वेषां देवानां मध्ये यतस्त्वमेव महानसि अतः सर्वा अपि देवतास्त्वदधीना एव वर्त्तन्ते। तस्मात्क्षुराधिष्ठात्री देवतापि त्वदाज्ञाविरुद्धं न करिष्यति एतदभिप्रायेणैवेयं प्रार्थना क्रियते मयेत्यभिप्रायः। रुद्रं प्रत्युक्त्वेदानीं रुद्रार्चनप्रसङ्गेऽविद्यमानमपि क्षुरमभिधावृत्त्या मनो विषयीकृत्य क्षुरं प्रत्युच्यते। हे क्षुर, यद्यपि स्वधितिस्ते- पिता त्रस्त्रं तव पितास्तीति शेषः। तथापि त्वं शिवो नामासि ("सुपां सुलुगि"त्यादिना नामशब्दात्तृतीयाविभक्तेर्लुक्) नाम्ना त्वं शिवः शान्तोऽसीत्यर्थः। अतो नमस्तेऽस्तु तादृशाय ते तुभ्यं नमोऽस्तु मदीयनमस्कारोऽस्त्वित्यर्थः। स त्वं मया नमस्कृतः सन् मदीयनमस्कारेण सन्तुष्टो भूत्वा मा मां मा हिंसीः मां मा विनाशयेत्यर्थः। ननु हिंस्यहिंसकयोः संस्पर्शे सत्येव हिंसासम्भावना भवति तदावयोः कुत्र संस्पर्शो भविता यदर्थमेवं ब्रवीषि मा मां हिंसीः इति चेत्तत्रोच्यते। हे क्षुर, यदा कदाचिदहं त्वया सहकृतेन केनचिन्नापितेन स्वकीयं शिरः निवर्त्तयामि निवर्त्तयिष्यामि निपूर्वो वृत्तिर्मुण्डनार्थः। स्वकीयं शिरो नापितद्वारा त्वया कृत्वा यदाहं मुण्डयिष्यामि तदाऽऽवयोः संस्पर्शो भविष्यति, तदवसरे त्वं मां मा हिंसीः मा विनाशयेत्यभिप्रायः। निवर्त्तयामीत्यत्र "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" इति सूत्रेण लृडर्थे लट्। बाहुलकाद्व्यत्ययेन वा लृडर्थे लट् "व्यत्ययो बहुलम्" "बहुलं छन्दसि" इत्यादि पाणिन्युक्तेः। किञ्च मां मा हिंसीरिति किमर्थमेवं ब्रवीषीतिचेत्तत्रोच्यते। हे क्षुर, आयुषे जीवनाय तथा अन्नाद्याय अन्नभक्षणाय तथा प्रजननाय सन्तानाय तथा रायस्पोषाय रायः धनस्य पोषाय पुष्ट्यै तथा सुप्रजास्त्वाय शोभनापत्यतायै तथा सुवीर्य्याय शोभनसामर्थ्याय त्वं मा मां मा हिंसीः मा विनाशयेत्यर्थः। जीवनसंरक्षणे सत्येव पुरुषः आयुरादीनि सुवीर्य्यान्तानि सर्वाणि वस्तुजातानि प्राप्नोति। अतोऽहमप्याशासे यन्मम जीवनमस्तु स्वजीवनस्य संरक्षणे सति अहमप्यायुरादीनि सुवीर्य्यान्तानि सर्वाणि वस्तुजातानि प्राप्स्यामीत्यभिप्रायेणैव हे क्षुर, त्वां प्रत्येवं ब्रवीमि यन्मां मा हिंसीरिति॥ शतरुद्रियेऽस्य मन्त्रस्य पठितत्वाद्रुद्रार्चनोपयोगित्वेनेयं व्याख्या कृता। प्रकरणान्तरे त्वन्यथैव व्याख्या प्रदर्शयिष्यते। सा च चूड़ाकरण प्रकरणेऽग्रे द्रष्टव्या॥ ८॥ ७४॥

'नमस्ते' इत्यादिषोड़शर्चोऽनुवाकोऽस्मिन्नेव प्रकरणे रुद्राध्याये व्याख्यातः। तथा एष ते द्वे अस्मिन्नेव प्रकरणे नीलसूक्ते व्याख्याते तत्र ते द्रष्टव्ये। एवं नमस्ते द्वे इति तु रुद्राध्याये व्याख्याते तत्र द्रष्टव्ये॥ ९४॥

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति॥ ९५॥

"अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि हे रुद्र, यतस्त्वं प्रजापतिरूपेण "एकोऽहं बहुस्यां प्रजायेयमि"त्याद्यभिप्रायेण सृष्ट्यादौ सर्वमिदं जगत्स्रष्ट्वा स्वयमपि स्वीयं ब्रह्मरूपमन्तर्धाय ऋषिरूपः सन् जीवान्प्रत्येवमुपदिष्टवानसि।

अतो वयं त्वामेवं प्रार्थयामहे यदस्मभ्यमीश्वरतत्वज्ञानं देहीति यतस्त्वं रुद्रोऽसि रुगतौ ये गत्यर्थास्ते ज्ञानार्था इत्युक्तत्वादिह ज्ञानार्था एव। रवणं रुत् ज्ञानं राति ददातीति रुद्रः ज्ञानप्रदोऽसि अतोऽस्मभ्यमीश्वरतत्वज्ञानं दत्वा स्वनामसार्थक्यं कुर्विति वाक्यशेषः। किमुपदिष्टवानसीत्यपेक्षायामुच्यते। हे जीवाः, यः विश्वकर्म्मा विश्वानि समस्तानि जगदुत्पत्त्यादीनि कर्म्माणि यस्य स विश्वकर्म्मा महाप्रलये विलुप्तस्यास्य जगतः सृष्टिसंहारकर्त्ता परमात्मा पुरुषः इमा इमानि भूतानि जजान उत्पादितवान् य एकोऽसहायः परमात्मा स्वसामर्थ्येनैव साधनान्तरमन्तरा स्वविभूत्यैव इमानि सर्वाणि चतुर्दशभुवनानि सृष्टवानिति भावः। तं विश्वकर्माणं यूयं न विदाथ न जानीथेत्यर्थः। विदाथेत्यत्र "लेटोऽडाटावि"त्याडागमो बोध्यः। ननु देवदत्तोऽहं यज्ञदत्तोऽहमिति वयमात्मानं जानीम इति चेन्न, नह्यहं प्रत्ययगम्यं जैवं रूपं परमेश्वरतत्वं वर्त्तते यद्‌ज्ञानेन युष्माकमात्मज्ञानं भवेत्। अतो जीवरूपस्य परमेश्वरतत्वभिन्नत्वाद्देवदत्तादिजीवज्ञाने सति न युष्माकमात्मज्ञानमित्याशयः। युष्माकन्तु अहंप्रत्ययगम्यजीवत्वसद्भावाद्युष्मत्तोऽन्यत् अहंप्रत्ययादतिरिक्तं सर्वावदानं ज्ञानैकवेद्यं सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिवेदान्तप्रतिपाद्यमीश्वरतत्वं बभूव अस्तीत्यर्थः। अत्र लडर्थे लिट्, "छन्दसि लुङ्लङ्लिटः" इति पाणिन्युक्तेः। अतएव युष्माकमहंप्रत्ययगम्यानां जीवानामन्तरमभ्यन्तरं वास्तवस्वरूपेश्वरतत्वतो महदन्तरमस्तीत्यभिप्रायः। तस्माज्जीवतत्वज्ञानेन नेश्वरतत्वज्ञानं युष्माकं विद्यते इति भावः। जीवरूपवत्तदपि कुतो न विद्म इति चेत्तत्रोच्यते नीहारेण प्रावृता इति। यतो यूयं नीहारेण नीहारसदृशेनाज्ञानेन प्रावृताः प्रकर्षेण आवृताः अवगुण्ठिता आच्छादिताः सन्तश्चरन्ति चरथ। अत्र व्यत्ययेन मध्यमपुरुषस्थाने प्रथमपुरुषः "सुप्तिङ्ङुपग्रहे"त्यादिवचनात् "व्यत्ययो बहुलं, बहुलं छन्दसी"ति पाणिन्युक्तेश्च। यथा नीहारो नात्यन्तमसन् दृष्टेरावरकत्वात्। नाप्यत्यन्तं सन् काष्ठाश्मादिवद्बोधयितुमयोग्यत्वात्। एवमज्ञानमपि नात्यन्तमसत् ईश्वरतत्वावरकत्वात्। नापि सत् बोधमात्रनिवर्त्यत्वात्। अतोऽज्ञानस्य नीहारसादृश्यमिहाभिहितम्। हे जीवाः, सर्वेऽपि यूयम् ईदृशेनानिर्वचनीयेनाज्ञानेन प्रवृताः सन्तश्चरथ। न केवलं नीहारेणैव प्रावृताः यूयं किन्तु जल्प्या च प्रावृताः जल्पनं जल्पिस्तया जल्प्या देवदत्तोऽहं यज्ञदत्तोऽहं ममेदं धनं ममेदं गृहं ममेदं क्षेत्रमित्यादि बहुविधानृतजल्पनेन मिथ्याभाषणेनापि प्रावृताः व्याप्ताः सन्तश्चरथेत्यर्थः। जल्पनप्रवृत्ता हेतुपक्षदृष्टान्तैः आत्मज्ञानप्रजल्पकाः केवलं यूयं तार्किका एवेति भावः। किञ्च हे जीवाः, यूयमसुतृपश्च भूत्वा चरथ असुषु तृप्यन्तीति असुतृपः, असून् तर्प्पयन्तीति वा असुतृपः केनापि प्रकारेण प्राणान्भृत्वा तावतैव तृप्यन्ति न तु परमेश्वरतत्वं विचारयितुं प्रवर्त्तन्ते ये जनास्ते असुतृप इत्युच्यन्ते। तथा भूताः प्राणपोषणपरा देहालङ्करिष्णवो यूयमिति भावः। न केवलमैहिकभोगमात्रेणैव युष्माकं तृप्तिः, किन्तु यूयमुक्थशासोऽपि भूत्वा चरथ। यज्ञेषु उक्थानि शंसन्तीति उक्थशासः अत्र शंसेः क्विपि "अनिदिताम्" इति नलोपः संहितायां दीर्घश्च बोध्यः। परलोकभोगानपि सम्पादयितुं यज्ञेषु उक्थशासः शस्त्रस्तोतारो भूत्वा चरथेत्यर्थः। अत एवैहिकामुष्मिकभोगप्रवृत्तानामज्ञानमिथ्याज्ञानपराधीनानां युष्माकं नास्तीश्वरतत्वज्ञानमिति भावः। एवं यतो विश्वकर्म्मरूपेण जीवान्प्रत्युपदिष्टवानसि। अतोवयमीश्वरतत्वज्ञानोपलब्ध्यर्थं हे रुद्र, त्वामेवं प्रार्थयामहे यदस्मभ्यमीश्वरतत्वज्ञानं देहीत्याशंसावाक्यार्थः॥ ९५॥

विश्वकर्म्मा ह्यजनिष्ट देवऽआदिद्गन्धर्वोऽअभवद्द्वितीयः ।
तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा ॥ ९९ ॥

अनया ऋचा ब्रह्माण्डमध्यगतानां जीवानामुत्पत्तिरुच्यते । तथाहि विश्वं सर्वं कर्म्म सृष्ट्युत्पादनादिकं यस्य स विश्वकर्म्मा देवतिर्य्यगादिजगदुत्पादकः सत्यलोकवासी चतुर्मुखो ब्रह्मा अजनिष्ट ब्रह्माण्डमध्ये आदित्यान्तरपुरुषरूपेण प्रथममेव सञ्जात इत्यर्थः । "हिरण्यगर्भः समवर्त्ततात्रे०—" इत्यादि माध्यन्दिनीयश्रुतेः । आत् इत् अनन्तरमेव तत्पश्चादित्यर्थः तदपेक्षया द्वितीयो गन्धर्वः अभवत् गां वाचं पृथिवीं वा धरतीति गन्धर्वः, यद्वा "अथो एवाहुरग्निरेवास्यै पृथिव्यै पृष्टे सर्वः कृत्स्नो मन्यमानोऽगात्" इत्यादिश्रुतेः गानाद्गन्धर्वः अग्निरुत्पन्नोऽभूदित्यर्थः । तत्पश्चात् पिता सर्वस्यास्य जगतः पालयिता तथा ओषधीनां जनिता जनयिता उत्पादकः पर्ज्जन्यः तृतीयोऽभवत् तत्पूर्वोक्तद्वयापेक्षया तृतीयोऽयं सञ्जातः संबभूवेत्यर्थः । स एव पर्ज्जन्य उत्पन्नः सन्नपामाहुतिपरिणामभूतानां गर्भं व्यदधात् धारयति करोतीति वा । कीदृशं गर्भमित्यपेक्षायामुच्यते । पुरुत्रा पुरून् बहून् त्रायते रक्षतीति पुरुत्रः तं पुरुत्रमिति प्राप्ते विभक्तेराकारः, पुरुत्रं बहुरक्षकमित्यर्थः, बहुप्रकारं वा । जनितेत्यत्र "जनिता मन्त्रे" इति इडादौ तृचि णिलोपो निपातितः । योऽयं रुद्ररूपो विश्वकर्म्मा सोऽनेन अभिषेकादिकर्म्मणा सन्तुष्टः सन्मां सुखं गमयत्वित्याशंसावाक्यार्थः ॥ ९९ ॥

मीढुष्टमेति मन्त्रचतुष्टयञ्च अस्मिन्नेव प्रकरणे रुद्राध्याये व्याख्यातं तत्र द्रष्टव्यम् ॥ १०० ॥ एवं षडङ्गशतरुद्रियमन्त्रान्व्याख्याय पुनरन्ते शान्तिमन्त्रार्थं विवृणोमि । तथा हि—

ॐ उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च ।
सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा ॥ १ ॥

"अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । तत्रास्य मन्त्रस्य परमेष्ठी प्रजापतिर्ऋषिर्गायत्रीच्छन्दो मरुद्देवता इह शान्तिकर्म्मणि जपे विनियोगः । अथ मन्त्रार्थः । "वायुर्वै क्षिप्रेष्ठादेवते"तिश्रुतेर्वायुदेवतायाः क्षिप्रफलप्रापकत्वात् "मनसस्पतऽइमन्देव यज्ञ ँ स्वाहा व्वाते धाः स्वाहा" इति श्रौतीयसमिष्टयजुर्होमे स्मार्त्तीयहोमे च कृतस्य कर्म्मणो वायौ प्रतिष्ठापनदर्शनादन्यत्रापि "तस्मिन्नपो मातरिश्वा दधाती"ति श्रुत्यन्तरदर्शनाच्चेदानीमेकोनपञ्चाशत्सङ्ख्यकानां वायूनां मध्येऽतीव क्षिप्रेष्ठाः शीघ्रफलदायकाः उग्रादिनामकाः ये सप्त मरुतस्तेऽनेन मन्त्रेण स्तूयन्ते । तथाहि य एते उग्रादिनामकाः सप्तमरुतः सन्तीति शेषः । तेभ्यः मरुद्भ्यः स्वाहा एतदस्माभिर्दीयमानं स्नपनपक्षे जलरूपं हविः, होमपक्षे होमीयद्रव्यरूपं हविः, पाठमात्रपक्षे वाङ्मयस्तुतिमात्रं हवि. सुहुतमस्तु हानं हा सुष्ठु आहा स्वाहा सुपरित्याग इति स्वाहाशब्दार्थः सुपरित्यक्तमस्त्वित्यर्थः । "तिस्र एव देवता इति नैरुक्ताः, अग्निः पृथिवीस्थानो वायुर्वेन्द्रोऽन्तरिक्षस्थानः सूर्य्योद्युस्थानस्तासां महाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्तो"ति यास्कोक्तेरन्तरिक्षस्थानस्य वायोर्देवताकत्वात्स्वाहाकारेण दत्तमस्माभिरिति भावः । "तस्या द्वौ स्तनौ देवाऽउपजीवन्ति स्वाहाकारञ्च वष-

ट्कारश्च्चे"ति श्रुतेः। ते मरुतोऽस्मत्कृतस्यास्य कर्म्मणो न्यूनातिरिक्तदोषशान्तिं कृत्वाऽनुष्ठित-कर्म्मफलेनास्मान् संयोजयन्तु। न्यूनातिरिक्तदोषपरिहारपूर्वकं झटित्यस्मभ्यं कर्म्मफलं ददत्वित्याशंसावाक्यार्थः। ते मरुत इदानीं नामतो निर्दिश्यन्ते तेषामर्थाश्च नामानुपूर्व्या यथा—उग्रः उत्कृष्टः भीमः बिभेत्यस्मादसौ भीमः भयङ्कर इत्यर्थः। "भीमादयोऽपादाने" इति निपातः। तथा ध्वान्तः ध्वान्तयति शत्रूनन्धीकरोतीति ध्वान्तः शत्रूणामन्धकारक इत्यर्थः। (ध्वान्तशब्दात् "तत्करोति तदाचष्टे" इति णिच्, ततो णिजन्तात्पचाद्यच्।) यद्वा ध्वनति शब्दङ्करोतीति ध्वान्तः शत्रुभयार्थमतीव शब्दकारक इत्यर्थः। अथवा ध्वनति शब्दं करोतीति ध्वान्तः शब्दकारकः स हि तस्य स्वभावः। अतो वेण्वादेः सकाशाद्वायुद्वारैव शब्दोत्पत्तिर्दृश्यते। तथा धुनिः धूनयति कम्पयति शत्रूनिति धुनिः, शत्रूणां कम्पयितेत्यर्थः। तथा सासह्वान् सहते शत्रूनभिभवतीति सासह्वान् शत्रूणामभिभवकर्त्तेत्यर्थः। "क्सुश्च" इति सहतेः क्सुप्रत्ययः, संहितायामभ्यासदीर्घश्च छान्दसः। तथा अभियुग्वा अभियुनक्ति अस्मत्संमुखं योगं प्राप्नोतीति अभियुग्वा ("अन्येभ्योऽपि दृश्यन्ते" इत्यभिपूर्वाद्युजेः कनिप्प्रत्ययः) भक्तानां सुखयोक्ता इत्यर्थः। तथा विक्षिपः विविधं क्षिपति प्रेरयति शत्रूनिति विक्षिपः ("इगुपध०"—इति कप्रत्ययः) शत्रूणां क्षेप्तेत्यर्थः। चकाराः सर्वे समुच्चयार्था अवगन्तव्याः॥ १॥

ॐ स्वस्तिनः २, ॐ पयः पृथिव्याम् ३, ॐ विष्णोरराटम् ४, ॐ गणानान्त्वा ५, ॐ अम्बेऽअम्बिके ६, ॐ श्रीश्चते ७, एते सप्त मन्त्राः इहैव प्रकरणे षडङ्गशतरुद्रियस्यादौ शान्तिमन्त्रजपे व्याख्यातास्तत्र व्याख्या द्रष्टव्या अर्थजिज्ञासुभिः॥७॥

**ॐ दीर्घायुस्तऽओषधे खनिता यस्मै च त्वा खनाम्यहम्।**
**अथोत्वन्दीर्घायुर्भूत्वा शतवल्शा विरोहतात्॥ ८॥**

कृतस्यास्यानुष्ठानकर्म्मणः फलाभिप्रायेणानेन मन्त्रेणौषधिं प्रकृत्योच्यते। हे ओषधे, ते तव खनिता खननकर्त्ता पुरुषः दीर्घायुर्भूयादितिशेषः। दीर्घमायुर्यस्य स दीर्घायुश्चिरजीवीत्यर्थः तथा भवत्विति भावः। तथा हे ओषधे, यस्मै च आतुराय नरायाहं त्वा त्वां खनामि सोऽपि दीर्घायुरस्त्विति भावः। सोऽपि चिरजीवी भवत्वित्यर्थः। अथो अपि च हे ओषधे, त्वं दीर्घायुरखण्डितजीवना भूत्वा शतवल्शा बह्वङ्कुरा सती विरोहतात् विरोह बह्वङ्कुरा भूत्वा त्वमुत्पद्यस्वेत्यर्थः। "तुह्योस्तातङ्०—" इति तातङादेशः। वल्शशब्दोऽङ्कुरवाची, शतं वल्शाः यस्याः सा शतवल्शा बह्वङ्कुरेत्यर्थः। तथा त्वमपि भवेत्यभिप्रायः। ननु हवनात्मकमहारुद्राद्यनुष्ठानपक्षे हवनीयद्रव्यादीनामोषधित्वसद्भावात्ताम्प्रकृत्य युक्तमेतद्वचः। स्नपनपक्षे तथा जपमात्रपक्षे त्वनिर्वाह एवेति चेन्न, स्नपनादिपक्षेऽपि द्रव्यादीनामाहुतिपरिणामाभिप्रायेण कथनत्वात्। यत्र कुत्र चिद्धवनीयौषधिद्रव्यजातं हूयते तद्धूमो भूत्वाऽभ्रं भवति, अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति, ततश्चेह व्रीहियवतिलमाषाद्या नाना वानस्पत्याद्याश्चौषधयो-जायन्ते इति प्रणाल्या सर्वमप्यौषधिजातं जले वर्त्तत एव, तदभिप्रायेण स्नपनद्रव्यान्तर्भावितौषधिं प्रकृत्यैवमुच्यते। एतदभिप्रायेणैव श्रुतिस्मृतिभ्यामपि प्रतिपादितमन्यत्रापि। तद्यथा—"यदग्नौ हूयते तदादित्यमुपतिष्ठते ततोऽभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति

तत इह व्रीहियवाद्या ओषधिवनस्पतयस्तिलमाषा जायन्ते ॥" इति श्रुतिः, तथा च स्मृतिः "अग्नौ प्रस्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ।" इति । अपां मध्ये ओषधेः सद्भावत्वे प्रमाणभूतं हि "अप्स्वन्तरमृतमप्सु भेषजमि"तिश्रुत्यन्तरञ्च दृश्यते । अतोऽप्सु सर्वं प्रतिष्ठितमिति सर्वैरेव निबन्धकारैः सिद्धान्तितं तदभिप्रायेणैवात्रापि स्नपनपक्षे स्नपनीयद्रव्यादावप्योषधित्वस्य सद्भावादनेन मन्त्रेण कृतस्यानुष्ठानकर्म्मणः परिणामफलानुकथनम् । यथा स्तोत्रान्ते स्तोत्रफलकथनं तथात्रानुसन्धातव्यम् । रुद्राराधनकर्म्मणः फलं युक्त्याऽनेन शान्तिमन्त्रपाठेनोपासकेनाऽऽशास्यते, इत्यभिप्रायः । पाठमात्रपक्षे त्वित्थमनुसन्धेयं यत् शब्दस्य ब्रह्मरूपत्वाद्ब्रह्मणि च सर्वौषध्यादिपदार्थजातस्य सद्भावादिह शब्दब्रह्मस्थितामोषधिं प्रकृत्योच्यते, इति ॥ ८ ॥

ॐ अग्निदाहात्सुरापानादकृत्याचरणात्तथा ।
सुवर्णहरणाच्चैव वृषलीगमनात्तथा ॥९॥
ब्रह्महत्यादिकात्पापाच्छतरुद्रीयपाठतः ।
सुनिस्तीर्य्यैवगच्छन्ति ब्राह्मणाः शिवसन्निधौ ॥१०॥

शतरुद्रियफलप्रतिपादकौ श्लोकात्मकाविमौ मन्त्रौ वर्त्तेते । तयोरर्थश्च स्पष्ट एवास्ति । अत इह श्लोकात्मकाविमौ मन्त्रौ न व्याख्यायेते ॥ द्वितीयश्लोकस्य चतुर्थचरणे "ब्राह्मणाः शिवसन्निधौ" इत्यत्र ब्राह्मणपदं द्विजातीनामप्युपलक्षकं, तेन ब्राह्मणा इत्यत्र द्विजातय इत्यवगन्तव्यम् ॥ शेषमन्यत्स्पष्टमेव ॥

इतिश्री दामोदरशर्म्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये
षडङ्गशतरुद्रियव्याख्यात्मकोऽयं दशमः परिच्छेदः
समाप्तः ॥ १० ॥

॥ इति षडङ्गशतरुद्रियव्याख्या समाप्ता ॥



# अथैकादशपरिच्छेदः प्रारभ्यते ।



## ॥ तत्रादौ भोजनमन्त्राः ॥

यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति ।
एवं मण्डलभस्मैतत्सर्वभूतानि रक्षतु ॥ १ ॥

### ॥ मन्त्र व्याख्या ॥

अयं च मन्त्रः कात्यायनकृतभोजनसूत्रान्तर्गतो बोध्यः । पौराणिकोऽयं मन्त्र इत्येके, सौत्रो मन्त्र इत्यपरे । अतोऽस्य मन्त्रस्यावैदिकत्वादृष्यादिकमूह्यमनूह्यं वा । ऊह्यश्चेदस्य मन्त्रस्य प्रजापतिर्ऋषिः, प्रजापतिः सर्वमिदमपश्यदिति श्रुतेः। छन्दस्त्विह द्वात्रिंशदक्षरत्वादनुष्टुबेव, लिङ्गोक्ता देवता भोजनस्थाने मण्डलकरणे विनियोगः, "नीवारचूर्णैर्गोघृतभस्मोदकेन वा यथा चक्रा०–" इति भोजनसूत्रे कात्यायनोक्तेः । मन्त्रार्थस्तु स्पष्ट एव अतो नायं व्याख्यायते । द्विजातीनां कृते तु गायत्र्यैव मण्डलकरणमिति सर्वे याज्ञिकाः समामनन्ति । तत्पक्षे गायत्री-मन्त्रश्च सन्ध्याप्रकरणे द्रष्टव्यस्तत्रैव मया व्याख्यातः ॥ १ ॥

पितुं नु स्तोषं महो धर्म्माणन्तविषीम् ।
यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥ २ ॥

पितुं नु स्तोषमित्यस्यादित्ययाज्ञवल्क्यावृषी उष्णिक् छन्दो लिङ्गोक्ता देवताऽन्नस्तुतौ विनियोगः, "पितुं नु स्तोषमित्यन्नꣳ स्तुत्वा" इति कात्यायन वचनात् । अथ मन्त्रार्थः । तत्र पितुरित्यन्ननामेतिनिघण्टुः । तं पितुम् अन्नं स्तोषं स्तौमीत्यर्थः । किम्भूतं पितुं महो महतः तविषीं, तविषीति बलनामेति निघण्टुः । तत्रापि विभक्तिव्यत्ययश्च 'सुपां सुपो भवन्ती'ति वच-नात् 'व्यत्ययो बहुलं' 'बहुलं छन्दसी'ति पाणिनिवचनाच्चेत्यनुसंधेयम् । महत्याः तविष्याः महतो बलस्य धर्म्माणं धारयितारमित्यर्थः । तं कमित्यपेक्षायामुच्यते । यस्य पितोः ओजसा बलेन त्रितः त्रिस्थानः इन्द्रः वृत्रं तन्नामकं दैत्यं वृत्रासुरमिति यावत्, विपर्वं गतसन्धिबन्धनं कृत्वा वि अर्दयत् विविधमर्दितवानित्यर्थः । इन्द्रोऽन्नस्यैव बलेन वृत्रं हतवानिति भावः । अतोऽहमपि देवदत्तादिशत्रोः क्षुद्रूपस्य च शत्रोर्हननाय तद्बलं प्राप्तुमिच्छामि । तस्मादनेन मन्त्रे-णान्नं स्तौमीति वाक्यार्थः । नु इत्यनर्थको निपातः पादपूरणार्थः । स्तोषमिति स्तौतेर्लेडुत्तमै-कवचने 'इतश्चलोपः परस्मैपदेषु' इति इकारलोपे "लेटोऽडाटौ" इत्यडागमे "सिब्बहुलं

ळेटि" इति सिप्प्रत्यये सिप इकारपकारयोर्लोपे सस्य षत्वे धातोर्गुणे च रूपं बोध्यम्। मह इत्यत्र महच्छब्दस्य ङसि छान्दसष्टिलोपो लिङ्गव्यत्ययश्चानुसन्धेयः। धरतेर्मन्प्रत्ययः। तस्य कृदन्तत्वात्प्रातिपदिकत्वे द्वितीयैकवचने उपधाया दीर्घे नकारस्य णत्वे च कृते धर्म्माण-मिति रूपं ज्ञेयम्। विपर्वमित्यत्र तु विगतानि पर्वाणि यस्य स विपर्वस्तं विपर्वम् ड प्रत्यये टिलोपो बोध्यः। अर्दयदित्यत्र तु "बहुलं छन्दस्यमाङ्योगेऽपि"इत्यडभावः। 'व्यवहिताश्च' इति वेरुपसर्गस्य व्यवधानमित्यप्यवगन्तव्यम् ॥२॥

मानस्तोके नमोवः किरिकेभ्यो नमः शम्भवायेत्यभिमन्त्रयेति कात्यायनवच-नादेभिस्त्रिभिर्मन्त्रैरन्नमभिमन्त्रयेदिति सम्प्रदायविदां परामर्शः। तदेतन्मन्त्रत्रयं षडङ्गशतरुद्रियप्रकरणे व्याख्यातं तत्र व्याख्या द्रष्टव्या ॥ ३ ॥ ४ ॥ ५ ॥

सत्यं त्वर्त्तेन परिषिञ्चामि ॥ ६ ॥

ऋतं त्वा सत्येन परिषिञ्चामि ॥ ७ ॥

अनयोर्मन्त्रयोः प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो लिङ्गोक्ता देवताऽन्नप्रोक्षणे विनियोगः। प्रथमे व्यूहेन पादपूरणम्। द्वितीये तु एकादशाक्षरत्वादेव। एकादशाक्षरं यजुस्त्रिष्टुबित्युक्तेः। "मानस्तोके नमो वः किरिकेभ्यो नमः शम्भवायेत्यभिमन्त्र्येत्युपक्रम्य "प्रोक्षेत्सत्यं त्वर्त्तेन परिषिञ्चामीति प्रातर्ऋतं त्वा सत्येन परिषिञ्चामीति सायम्" इति कात्यायनोक्तेः। अथ मन्त्रार्थः। हे अन्न, सत्यं त्वा त्वां ऋतेन परिषिञ्चामि। सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः सत्यं ब्रह्म, ब्रह्म च अन्नम् "अन्नं वै ब्रह्मेति श्रुतेः" "अन्नं ब्रह्मा रसो विष्णुर्भोक्ता देवो महेश्वर"इति स्मृतेश्च। तथा "ऋतं सत्यं परं ब्रह्म"त्यादि श्रुतेः ऋतशब्दो ब्रह्मवाचकोऽपि सन् प्रकरणवशा-त्कचिदुदक वाचकोऽपि भवति निघण्टावुदकनामसु तस्य पठितत्वात्। ततोऽयमर्थः। हे अन्न, सत्यं ब्रह्म तत्स्वरूपमर्थाद्ब्रह्मरूपं त्वा त्वाम् ऋतेन ब्रह्मरूपेण उदकेन परिषिञ्चामि प्रोक्षामी-त्यर्थः। यथा पूर्वोक्तश्रुतिस्मृतितोऽन्नस्य ब्रह्मरूपत्वमभिहितं तथैवोदकस्यापि ब्रह्मत्वं सुस्पष्टमेव "तद्ब्रह्म ताऽआपः" इति श्रुतेः। तस्मात् यत् यादृशं वस्तु तस्य तादृशेनैव प्रोक्षणं युक्तम्। अतोऽत्र ब्रह्मरूपस्यान्नस्य ब्रह्मरूपेणोदकेन प्रोक्षणं श्रुत्यर्थसम्मतमिति वाक्यार्थः। अनेन प्रातरन्नप्रोक्षणं कर्त्तव्यं तत्र प्रातरिति दिवाभोजनस्य कालमुपलक्षयति, स च भोजनकालो मनुष्याणां कृते मध्याह्न एव। "पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणा-मि"ति श्रुतेः। तथैव द्वितीयमन्त्रे सायमिति रात्रिभोजनस्य कालमुपलक्षयति "सायङ्काले तु हे राजन् कर्म्म चत्वारि वर्जयेदि"त्यादिवचनेन भोजनस्यापि प्रतिषेधदर्शनात्। मन्त्रार्थ-विचारे यावान्भेदः स चेदानीं प्रदर्श्यते। तथाहि ऋतं सत्यं चेति ब्रह्मणो नामनीति श्रुत्या पूर्वमेव प्रतिपादितं, तथापीह प्रकरणवशात् ऋतमित्यन्ननामेति निघण्टुः। सत्यमित्युदकना-मेति च। ततोऽयमर्थः। हे अन्न, ऋतं ब्रह्म तच्च अन्नमेव अन्नं वै ब्रह्मेति श्रुतेः, तस्मात् ब्रह्मरूपं त्वा त्वाम् अन्नं सत्येन सत्यं ब्रह्म तच्च जलमेव अतो ब्रह्मरूपेण जलेन परिषिञ्चामि प्रोक्षामीत्यर्थः। शेषं सर्वमन्यत्समानम् ॥ ६ ॥ ७ ॥

तेजो॑ऽसि शुक्रम॑स्य॒मृत॑मसि॒ धाम॒नामा॑सि प्रि॒यं दे॒वाना॒मना॑धृष्टं देव॒य-ज॑नमसि ॥ ८ ॥

तेजोऽसीत्यस्य देवा ऋषयो गायत्री छन्दः शुक्रं दैवतमन्नाऽभिमर्शने विनियोगः। "तेजोऽसीति यजुषाऽन्नमभिमृश्ये"ति कात्यायनोक्तेः। सन्ध्याप्रकरणे व्याख्यातोऽपि प्रकरण-भेदाद्विनियोगभेदेनेह "अतिरिक्तम्"इति कारिकया हीनपदान्यध्याहृत्य पुनर्व्याख्यायतेऽयं मन्त्रः। तथा हि हे अन्न, त्वं तेजोऽसि "अन्नं वै ब्रह्मे"ति श्रुतेः अन्नस्य ब्रह्मरूपत्वाद्ब्रह्मणश्च तेजो-मयत्वात्त्वापि तेजस्त्वम्, अतस्तेजःस्वरूपत्वात्तेजः प्रकाशरूपमसीत्यर्थः। यद्वा "अन्न-मशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मा॑ꣳसं योऽणिष्ठ-स्तन्मनः"इति श्रुतेः अन्नस्य मनोहेतुत्वान्मनसश्च "यज्ज्योतिषां ज्योतिरेकन्तन्मे मनः"इति श्रुतिनिदर्शनेन ज्योतिष्ट्वावगतेस्तज्ज्योतिषश्च शरीरकान्तिहेतुत्वेन भासमानत्वात्सर्वोपादान-भूतस्यास्य अन्नस्य तेजस्त्वमभिप्रेत्येहान्नं प्रत्युच्यते। हे अन्न, त्वं तेजोऽसि तेजःस्वरूपत्वा-त्तेजः प्रकाशरूपं शरीरकान्तिहेतुभूतमसीत्यर्थः। तथा शुक्रमसि शुक्रं शुक्लं शुद्धं निर्मलं तदपि "अन्नं वै ब्रह्मे"ति श्रुतेः अन्नस्य ब्रह्मत्वादेव स्वभावसिद्धमिति भावः। यद्वाऽन्नस्य घृतादिमत्त्वा-त्स्निग्धरूपत्वेन दीप्तिमत्त्वमभिप्रेत्यान्नं प्रति शुक्रमसीत्युक्तं भवतीत्याशयः। तथाऽमृतमसि ब्रह्मरूपत्वादमरणधर्म्माऽसि। तथा धाम असि "धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः" इति हेमचन्द्रोक्तेरिह धामशब्दो देहवाचकः, देहेऽन्नमयकोशस्य विद्यमानत्वात्। तस्माद्देह-पोषकत्वाद्देहस्वरूपमसि। इह कारणे कार्य्यत्वोपचारो बोध्यः। यद्वा ब्रह्मरूपत्वाद्रश्मिरूपमसि प्रकाशस्वरूपमसीत्यर्थः। तथा त्वं नाम असि नामेति प्रसिद्धौ अदनीयपदार्थानां मध्ये त्वमेव प्रसिद्धमसीत्यर्थः। तथा देवानामिन्द्रादीनां प्रियमसि चरुपुरोडाशादिहविष्ट्वेनेत्यर्थः। तथा त्वम् अनाधृष्टमसि अनाधृष्यमसि ब्रह्मरूपत्वेन तेजःस्वरूपत्वात्तिरस्कर्त्तुमशक्यं, यद्वा अदनीयपदार्थानां मध्ये प्रसिद्धत्वेन कैश्चिदपि भोक्तृपुरुषैरतिरस्कृतमिति भावः। तथा देवयजनमसि देवा इज्यन्तेऽनेनान्नेनेति देवयजनं चरुपुरोडाशादिरूपत्वेन यागसाधनमि-त्यर्थः। ब्रह्मरूपत्वाद्वा वेदरूपत्वेन यज्ञसाधनमित्यर्थः। हे अन्न, यतस्त्वमीदृशमसि अतो मामपि स्वसदृशं कुरु। "यदन्नं यादृशं भुङ्क्ते तस्य तेजोऽपि तादृशम्" इति शिष्टानां वचो-ऽनुस्मरणादित्याशंसावाक्यार्थः॥ ८ ॥

अ॒ग्निर॑स्मि॒ जन्म॑ना जा॒तवे॑दा घृ॒तं मे॒ चक्षु॑रमृ॒तं॑ मऽआ॒सन्।
अ॒र्कस्त्रि॒धातू॒ रज॑सो वि॒मानोऽज॑स्रो घ॒र्म्मो ह॒विर॑स्मि॒ नाम॑ ॥९॥

अग्न्यद्वैतवादिनी त्रिष्टुप् देवश्रवोदेववातदृष्टा लिङ्गोक्तदेवत्या "अग्निरस्मीत्यात्मानं ध्यात्वा" इति कात्यायनोक्तेरिह अग्नित्वेनात्मध्याने विनियुक्ता ऋगियम्। प्राणाग्निहोत्रं (भोजनं) करिष्यमाणो भोक्तृपुरुष आत्मानमग्निरूपत्वेन ध्यायति। अथ मन्त्रार्थः। अहं भोक्ता पुरुषः जन्मना उत्पत्त्यैव अग्निरस्मि अग्निरूपोऽस्मीत्यर्थः। जठरे जाठराग्नेः सद्भावत्वात् "तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्द्धैव सुतेजाः" इत्यादि (छा०

५।१८) श्रुतेरात्मनो वैश्वानरत्वप्रतिपादनादिति वा। तथा नाम (सुपां सुलुगिति तृतीयाविभक्तेरिह लुक् बोध्यः) नाम्ना हविरपि अहमस्मि। अन्तेऽस्य देहावभासितस्यात्मनो देहस्येति यावत् "असौ स्वर्गाय लोकाय स्वाहा" इति मन्त्रेण क्रव्यादाग्नौ हूयमानत्वादिति भावः। कीदृशोऽहं जातवेदाः जातः जातः सन् विन्दते लभते कर्म्मफलानीति जातवेदाः जीवत्वेन पराधीनत्वादित्याशयः। पुनः कीदृशोऽहम् अर्कः अर्चनीयः, "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः "ममैवांशो जीवलोके जीवभूतः सनातनः" इति भगवद्वाक्याच्च स्वात्मनो ब्रह्मत्वावगतेरित्यर्थः। पुनः कीदृशोऽहं त्रिधातुः त्रयो धातवः शुक्रशोणितमज्जारूपा यस्मिन्निति त्रिधातुः जीवत्वेन पार्थिवदेहाद्यवच्छिन्नत्वादिति भावः। पुनः कीदृशोऽहं रजसो विमानः "रजस्तु ज्योतिरुदकलोकासृग्दिनवाचकम्" इति निघण्टुवचनादिह रजःशब्दो ज्योतिर्वाचकः। ज्योतिस्तेजः, तच्च वेदाध्ययनजमिहाभिप्रेतं ततोऽयमर्थः। रजसो ज्योतिषः अर्थाद्वेदाध्ययनजस्य तेजसो विमानः वेदाध्ययनादिना विनिर्मातेत्यर्थः। विमिमीते इति विमानः नन्द्यादित्वात्कर्त्तरि ल्युट्। तथा अजस्रः न जसति क्षीयते, इत्यजस्रः अनुपक्षीणः वेदोक्तकर्म्मानुष्ठानकर्तृत्वादित्याशयः। 'जसु उपक्षये' इत्यस्मान्नञ्पूर्वात् 'नमि कम्पि०-' इत्यादिना रप्रत्ययः। तथा घर्म्मः वेदाध्ययनतेजसा दीप्त इत्यर्थः। "घृ क्षरणदीप्त्योः" जिघर्त्तीति घर्म्मः औणादिको मप्रत्ययः। किञ्च यत ईदृशोऽहमग्निरस्मि अग्निरूपोऽस्मि, अतो घृतं मे मम चक्षुः नेत्रमस्तीति शेषः। "आयुर्वै घृतं तेजो वै घृतमि"त्यादि श्रुतेः घृतेन वर्धते वीर्यमित्यादि वचनान्तराच्च घृतभक्षणे शरीरे वीर्य्याधिक्ये सति तद्द्वारा चक्षुषि प्रकाशविशेषादिह घृते चक्षुष्ट्वारोपः कारणे कार्य्यत्वोपचारादित्याशयः। तथा अमृतं सुधारूपमिदमन्नं हविः मे मम आसन् आस्ये मुखेऽस्तु इति शेषः। आसन्नित्यत्र "पद्दन्न०"-इत्यादिना आस्यशब्दस्य आसन्नादेशः "सुपां सुलुगि"त्यादिना सप्तम्या लुक् च बोद्धव्यः। एवमनेन मन्त्रेण स्वात्मानमग्निरूपेण ध्यायामीति वाक्यार्थः॥९॥

**ॐ भुवपतये स्वाहा ॥१०॥ ॐ भुवनपतये स्वाहा ॥११॥ ॐ भूतानां पतये स्वाहा ॥१२॥ ॐ चित्राय नमः ॥१३॥ ॐ चित्रगुप्ताय नमः ॥१४॥ ॐ सर्वेभ्यो भूतेभ्यो नमः ॥१५॥**

एषां षण्णां मन्त्राणां मध्ये आद्यानि त्रिणि यजूंषि, तानि च प्रणवादिस्वाहान्तानि, अन्ये च त्रयो मन्त्रा यथाक्रमं प्रणवादि नमोऽन्ताः बलिहरणे विनियुक्ताः "भुवपतये इति प्रणवादिकैः स्वाहानमोऽन्तैर्मन्त्रैः प्रतिमन्त्रं बलीन्हरेत्" इति कात्यायनवचनात्। तत्र षण्णां मन्त्राणां प्रजापतिर्ऋषिः, प्रथमस्य यजुषः दैवी जगतीछन्दः, द्वितीयतृतीययोर्यजुषोः प्राजापत्या गायत्रीछन्दः, शेषाणां त्रयाणां वैदिकमन्त्राभावात्तेषां न छन्दःकल्पना। देवता तु सर्वेषां लिङ्गोक्तैव ग्राह्या। भुवपत्यादयस्त्रयोऽग्नेर्भ्रातरः, स्वाहाशब्दो निपातः स च देवान्प्रति दानवाची "स्वाहाकारं च वषट्कारं च देवा उपजीवन्ति" इति श्रुतेः। यद्यपि स्वाहाकारेण अग्नौ एव होमो भवति क्वचिदप्सु वा न तु भूमावपि, भूमौ तु बलित्वेन प्रणवादिनमोऽन्तचतुर्थ्यन्तै-

मन्त्रैरेव सर्वेषामपि प्रदानं युक्तं तथापि अग्नेर्भ्रातृविषये स्वाहाकारेणैव प्रदानस्य श्रुतिमूलत्वाद्भुवपत्यादिमन्त्राः प्रणवादिस्वाहाकारान्ताः; चित्रादिमन्त्रास्तु प्रणवादिनमोऽन्ता एव विधातव्या इति "प्रणवादिकैः स्वाहानमोऽन्तैर्मन्त्रैः" इत्यस्याभिप्रायं वर्णयन्त्येके। अपरे तु षट्स्वपि मन्त्रेषु प्रणवादिस्वाहानमोऽन्ततां व्यावर्णयन्ति। तत्पक्षे "ॐ भुवपतये स्वाहा नमः" इत्येवं प्रतिमन्त्रमेव वाक्यमूह्यमिति। तत्र याज्ञिकानामन्योन्यमतभेदे शिष्टाचार एव शरणम्। तत्रापि 'भुवपतये' इत्यत्र "भूपतये" इत्येवमपि केचित्पठन्ति, भोजनसूत्रे तथैव मन्त्रप्रदर्शनात्। किन्तु श्रुतिकथानुसारेण ("भुवपतये" इत्येव पाठो युक्तः, संहितायां तथैव मन्त्रपाठप्रदर्शनात्। संहितानुकूलपाठस्य छान्दसत्वाद्भोजनसूत्रस्थपाठस्य कात्यायनकृतत्वात् कात्यायनस्य चार्षेयत्वादत्रापि शिष्टाचार एव शरणम्। अन्यच्च स्पष्टार्थम्। ॥१०।११।१२।१३।१४।१५॥

अन्तश्चरसीत्युपस्तरणमन्त्रः स च सन्ध्या प्रकरणे व्याख्यातस्तत्रैवास्य व्याख्या द्रष्टव्या ॥ १६ ॥

तत्रोपस्तरणे विष्णुमन्त्रमभिध्यायन्नित्युक्तं कात्यायनेन। अतः स च मन्त्रः प्रदर्श्यते। तथाहि—

तद्विष्णोः॑ प॒र॒मं प॒दꣳ सदा॑ पश्यन्ति सू॒रयः॑ ॥
दि॒वी॑व॒ चक्षु॒रात॑तम् ॥ १७ ॥

तद्विष्णोरित्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दो विष्णुर्देवतोपस्तरणमन्त्रेण सह पाठे विनियोगः, "तद्विष्णोः परमं पदं०विष्णुमन्त्रमभिध्यायन्"इति कात्यायनोक्तेः। अथ मन्त्रार्थः, सूरयः विद्वांसो वेदान्तपारगाः नराः दिवि आकाशे निरावरणे चक्षुरिव आततं व्याप्तं विष्णोः वेवेष्टीति विष्णुः व्यापकः परमेश्वर इत्यर्थः, तस्य विष्णोः व्यापकस्य परमेश्वरस्य परमात्मनः "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादि वेदान्तप्रतिपाद्यम् अद्वैताख्यं परमम् उत्कृष्टं तुरीयाख्यं तत् पदं स्वरूपं सदा पश्यन्ति अवलोकयन्तीत्यर्थः। यद्वा यत् दिवि आकाशे चक्षुरादित्यमण्डलमाततं विस्तृतम् अस्मिन्पक्षे इवोऽनर्थकः। चक्षुःशब्देनान्यत्रापि आदित्यस्य मण्डलमेवोच्यते। "चक्षुर्मित्रस्य वरुणस्याग्नेः (शु० य० वे० अ० ७ क०४२)" तथा "तच्चक्षुर्देवहितम् (शु० य० वे० अ० ३६ क० २४।)" एवमनेन मन्त्रेण विष्णुमभिध्याय अहमाचामि। स च विष्णुर्ज्ञानप्रदानेन स्वीयं रूपं दर्शयत्वित्याशंसावाक्यार्थः॥१७॥

ॐ प्राणाय स्वाहा ॥ १८ ॥ ॐ व्यानाय स्वाहा ॥ १९ ॥ ॐ अपानाय स्वाहा ॥ २० ॥ ॐ समानाय स्वाहा ॥२१॥ ॐ उदानाय स्वाहा ॥२२॥

प्राणायेत्यादिपञ्चानां यजुषां प्रजापतिर्ऋषिः प्रथमद्वितीययोर्दैवीपङ्क्तिश्छन्दः तृतीयचतुर्थपञ्चमानां यजुषां दैवीत्रिष्टुप्छन्दः सर्वेषां लिङ्गोक्ता देवता प्राणाग्निहोत्रे (पञ्चग्रासे) विनियोगः; "मुखे पञ्चाहुतीर्जुहोति प्राणाय स्वाहादिपञ्चमन्त्रैः" इति कात्या-

यत्नवचनात् । अथ मन्त्रार्थः । योऽयं वैश्वानर आत्मा यस्य वैश्वानरस्यात्मनो हृदयमेवायतनं स्थण्डिलं लोमान्येव बर्हींषि स एव हि प्राणः पृथग्वर्त्माऽऽत्मा अग्निरिवैकोऽपि सन् हृदयाद्यायतनभेदेन प्राणादिनाम्ना पञ्चधा विभक्तः सर्वप्राणिनां हृदयेषु अवतिष्ठते । यथैकोऽग्निः आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यायतनभेदेन तत्तन्नाम्ना पञ्चधा भुवि प्रतीयते तथायमपि हृद्गुदनाभिकण्ठसर्वशरीरस्थानभेदाश्रयत्वेन प्राणादिनाम्ना पञ्चधा विभक्तोऽस्ति । तत्तृप्त्यर्थमेवाऽऽत्मनि वैश्वानरे जाठराग्नौ प्राणाय स्वाहादि पञ्चमन्त्रैः पञ्चाहुतीर्जुहोमीत्यर्थः । तदुक्तं श्रुत्या "तस्य हवा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्य्यपचन आस्यमाहवनीयः ( छा० ब्रा० ५ । १८ ।)" इति । तत्र "ॐ प्राणाय स्वाहा" इति प्रथमाहुतिमन्त्रः, प्राणः प्राणवायुः स च हृद्यवस्थितः यद्द्वारा श्वासनिःश्वासचेष्टां करोमि यस्मिन् हि प्राणे हृद्यवस्थिते सति अहं जीवामि तस्मै प्राणाय हृद्यवस्थिताय वैश्वानरात्मने वायवे स्वाहा स्वाहाशब्दोऽव्ययम् । अतः "अव्ययादाप्सुपः" इति सुलोपः । स च देवतोद्देशकत्यागे वर्त्तते, "तस्या द्वौ स्तनौ देवाऽउपजीवन्ति स्वाहाकारं च वषट्कारं च" इति श्रुतेः । हानं हा सुष्ठु आहा स्वाहा सुपरित्याग एतदन्नरूपं हविः सुहुतमस्त्वित्यर्थः । प्राणस्य वाय्वात्मकत्वेन देवताकत्वादिह तदर्थं स्वाहाकारेण स्वजाठराग्नौ जुहोमीत्यर्थः । अनया चाहुत्या प्राणस्तृप्यति, तृप्ते च प्राणे चक्षुस्तृप्यति, चक्षुषि च तृप्ते आदित्यस्तृप्यति, तथा आदित्ये तृप्ते द्यौस्तृप्यति, दिवि च तृप्तायां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठत स्तत्तृप्यति तस्मिंश्च तृप्ते सति तदनु अहं भोक्ता देवदत्तादिरपि प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेन च तृप्तः स्यामित्यभिप्रायेण प्राणाग्निहोत्रेऽनेन मन्त्रेण स्वजाठराग्नौ जुहोमि । तस्मात्तदुक्तयावदुक्तसमस्तफलं ममाप्यस्त्वनेन प्राणाग्निहोत्रेणेत्याशंसावाक्यार्थः । वेदेऽपि प्राणाग्निहोत्रं प्रकृत्य प्रथमाहुतिफलमभिहितं, तदुक्तं श्रुत्या "तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयꣳ स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति ॥१॥

प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यति आदित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति, तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ ( २ छां० ब्रा० १९ ) " इति ॥

## अथ द्वितीयाहुतिमन्त्रः 'ॐ व्यानाय स्वाहा' इति ॥

अस्यार्थस्त्वेवम् । व्यानः व्यानवायुः स च सर्वशरीरगः यद्द्वाराऽहं सर्वशरीरसञ्चालनं करोमि । यस्मिन् हि व्याने सर्वशरीरत्वावच्छिन्नव्यवस्थिते सति अङ्गप्रत्यङ्गस्पन्दनेन देवदत्तोऽयं जीवतीति ज्ञानं सर्वस्य भवति । एवं शरीरेऽस्मिन् यस्मिन् व्यानवायौव्यवस्थिते सति तत्सञ्चालनद्वाराऽहं स्वाङ्गप्रत्यङ्गैः तत्तत्कर्म्माणि करोमि तस्मै व्यानाय सर्वशरीरत्वावच्छिन्नव्यवस्थिताय वैश्वानरात्मने वायवे स्वाहा तदर्थमिदमन्नं स्वाहाकारेण स्वजाठराग्नौ जुहोमि तच्चैतद्धविःसुहुतमस्त्वित्यर्थः । अनया च द्वितीयाहुत्या व्यानस्तृप्यति, व्याने च तृप्यति सति श्रोत्रं तृप्यति, श्रोत्रे च तृप्यति सति चन्द्रमास्तृप्यति, चन्द्रमसि च तृप्यति सति दिशस्तृप्यन्ति, दिक्षु तृप्यन्तीषु च यत्किञ्च दिशश्चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति, तस्मिंश्च तृप्यति सति

तदनु भोक्ताऽहं देवदत्तादिरपि प्रजया पशुभिः अन्नाद्येन तेजसा ब्रह्मवर्चसेन च तृप्तः स्यामित्यभिप्रायेण प्राणाग्निहोत्रेऽनेन मन्त्रेण स्वजाठराग्नौ जुहोमि तस्मात्तदुक्तयावदुक्तसमस्तफलं ममाप्यस्त्वित्यनेन प्राणाग्निहोत्रेणेत्याशंसावाक्यार्थः। तथा च श्रुतिः "अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥ व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ ( छां० ५।२०। ) इति ॥

## अथ तृतीयाहुतिमन्त्रः ॥ 'ॐ अपानाय स्वाहा' इति ॥

अस्यार्थो यथा, अपानः अपानवायुः स च गुदाधिष्ठित एव "हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले। उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः" इत्यमरसिंहोक्तेः। यदपानवायुद्वारा मम गुदतः पुरीषोत्सर्गो भवति यस्मिंश्चापाने गुदान्निःसृते सति मम जठरवैकृत्यमुपशाम्यति तादृशोपकारकर्त्रे तस्मै अपानाय गुदाद्यवच्छिन्नव्यवस्थिताय वैश्वानरात्मने वायवे स्वाहा तदर्थमिदमन्नं स्वाहाकारेण स्वजाठराग्नौ जुहोमि। तदेतद्धविस्तदर्थं सुहुतमस्त्वित्यर्थः। अनया च तृतीयाऽऽहुत्या अपानस्तृप्यति अपाने च तृप्यति सति वाक् तृप्यति, वाचि च तृप्यन्त्यामग्निस्तृप्यति, अग्नौ च तृप्यति सति पृथिवी तृप्यति, पृथिव्यां हि तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिमेव अहमन्नभोक्ता देवदत्तादिरपि प्रजया पशुभिः अन्नाद्येन तेजसा ब्रह्मवर्चसेन च तृप्तः स्यामित्यभिप्रायेण प्राणाग्निहोत्रेऽनेन मन्त्रेण स्वजाठराग्नौ जुहोमि तस्मात्तदुक्तयावदुक्तसमस्तफलं मम भवत्वनेन प्राणाग्निहोत्रेणेत्याशंसावाक्यार्थः। "अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥ १ ॥

अपाने तृप्यति वाक्तृप्यति, वाचि तृप्यन्त्यामग्निस्तृप्यति, अग्नौ तृप्यति पृथिवी तृप्यति, पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति, तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ( २।छां०।५।२१। ) इतिश्रुतेः ॥

## अथ तुरीयाहुतिमन्त्रः ॥ 'ॐ समानाय स्वाहा' इति ॥

अथ मन्त्रार्थः ॥ समानः समानवायुः स च नाभिमण्डलस्थः। यस्मिन्हि समाननाम्नि वायौ नाभिमण्डलस्थे सति तद्द्वारा समिन्धितो जाठराग्निर्जठरस्थमशितपदार्थं जारयति। यत्समानवायुद्वारा भुक्तपदार्थं जारयित्वा सुखमनुभवामि तस्मै तादृशोपकारकर्त्रे नाभिमण्डलाद्यवच्छिन्नव्यवस्थिताय वैश्वानरात्मने वायवे स्वाहा तदर्थमिदमन्नं स्वाहाकारेण स्वजाठराग्नौ जुहोमि तदेतद्धविः सुहुतमस्त्वित्यर्थः। अनया च तुरीयाऽऽहुत्या समानस्तृप्यति, समाने च तृप्यति सति मनस्तृप्यति, मनसि तृप्यति सति पर्ज्जन्यस्तृप्यति, पर्ज्जन्ये च तृप्यति सति विद्युत्तृप्यति, विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्ज्जन्यश्चाधितिष्ठतस्तत्तृप्यति, तदनु अहं भोक्ता देवदत्तादिरपि प्रजया पशुभिः अन्नाद्येन तेजसा ब्रह्मवर्चसेन च तृप्तः स्यामित्यभिप्रायेण प्राणाग्निहोत्रेऽनेन मन्त्रेण स्वजाठराग्नौ जुहोमि तस्मात्तदुक्तयावदुक्तसम-

स्तफलं मम भवत्वनेन प्राणाग्निहोत्रेणेत्याशंसावाक्यार्थः ॥ तथा च श्रुतिः "अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति ॥१॥ समाने तृप्यति मनस्तृप्यति, मनसि तृप्यति पर्ज्जन्यस्तृप्यति पर्ज्जन्ये तृप्यति विद्युत्तृप्यति, विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्ज्जन्यश्चाधितिष्ठतस्तत्तृप्यति, तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ( २।छा० ५।२२। ) इति ॥

अथ पञ्चमाऽऽहुतिमन्त्रः ॥ 'ॐ उदानाय स्वाहा' इति ।

अस्य चार्थं विवृणोमि तथाहि उदानः उदानवायुः स च कण्ठाधिष्ठितः यद्वाराऽहं भक्षितमन्नपानादिकं गिरामि जृम्भणादिकं च करोमि, यस्मिँश्च उदाने कण्ठावस्थिते सति गलव्यापारः शब्दोच्चारणादिकञ्च सम्पद्यते तादृशोपकारत्रे कण्ठाध्यवच्छिन्नव्यवस्थिताय वैश्वानरात्मने वायवे स्वाहा तदर्थमिदमन्नं स्वाहाकारेण स्वजाठराग्नौ जुहोमि तदेतद्धविः सुहुतमस्त्वित्यर्थः । अनया पञ्चमाऽऽहुत्या उदानस्तृप्यति, उदाने च तृप्यति सति त्वक् तृप्यति, त्वचि तृप्यन्त्यां वायुस्तृप्यति, वायौ च तृप्यति सति आकाशस्तृप्यति, आकाशे च तृप्यति सति यत्किञ्च वायुराकाशश्चाधितिष्ठतस्तत्तृप्यति, तदनु अहमन्नभोक्ता देवदत्तादिरपि प्रजया पशुभिः अन्नाद्येन तेजसा ब्रह्मवर्चसेन च तृप्तः स्यामित्यभिप्रायेण प्राणाग्निहोत्रेऽनेन मन्त्रेण स्वजाठराग्नौ जुहोमि तस्मात् तदुक्तयावदुक्तसमस्तफलं मम भवत्वनेन प्राणाग्निहोत्रेणेत्याशंसावाक्यार्थः । तथा च श्रुतिः "अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥१॥ उदाने तृप्यति त्वक्तृप्यति, त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यति, आकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यति, तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ।२। (छा० ५।२३) इति ॥ १८॥१९॥२०॥२१॥२२॥

मद्भुक्तोच्छिष्टशेषं ये भुञ्जते पितरोऽधमाः ।
तेषामन्नं मया दत्तमक्षय्यमुपतिष्ठतु ॥ २३ ॥

प्राणाय स्वाहेत्यादिपञ्चमन्त्रैः पञ्चग्रासान् प्राणाग्निहोत्रविधिना कृत्वा यथारुचि भुक्त्वा भुक्तशेषमन्नमादायानेन मन्त्रेण पितृतीर्थेन दद्यात्, "यथारुचि भुक्त्वा भुक्तशेषमन्नमादाय भुक्तोच्छिष्टशेषमिति पितृतीर्थेन दत्वे"ति कात्यायनोक्तेः । मन्त्रोऽयं सौत्र इत्येके, पौराणिक इत्यपरे । मन्त्रस्यास्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता भुक्तोच्छिष्टशेषप्रदाने विनियोगः । "भुक्तशेषमन्नमादाय भुक्तो० पितृतीर्थेन दत्वे"ति कात्यायनवचनात् स्पष्टोऽर्थः ॥२३॥

ॐ अमृतापिधानमसि स्वाहा ॥ २४ ॥

सौत्रोऽयं मन्त्रः । मन्त्रेऽस्मिन् प्रणवस्वाहाकारयोर्मनसैवोच्चारणं विधेयं तदानी-

मुच्छिष्टमुखत्वात्तदुच्चारणे वेदाक्षरत्वेनानधिकारात्॥ अस्य मन्त्रस्य प्रजापतिर्ऋषिरेकपदं विराट्छन्दो लिङ्गोक्ता देवता उदकपानेन भुक्ताऽपिधाने विनियोगः, "अमृताऽपिधानमसि स्वाहेति हस्तगृहीतानामपामर्धं पीत्वे"ति कात्यायनोक्तेः। एतस्य ऋष्यादिकमपि मनसैव स्मर्त्तव्यं तदानीमुच्छिष्टमुखत्वादिति भावः। मन्त्रार्थस्त्वेवं तथाहि "पयः कीलालममृतं जीवनं भुवनं वनमि"त्यमरसिंहोक्तेः इहामृतशब्दो जलवाची ततोऽयमर्थः। हे अमृत! "तद्ब्रह्म ता आपः"इति श्रुतेर्जलस्य ब्रह्मत्वावगतेर्ब्रह्मत्वेनाविनश्वरत्वात् हे अविनश्वर! ब्रह्मरूपजल, त्वम् अपिधानमसि आच्छादनमसि "अपिधानतिरोधानपिधानाच्छादनानि चे"त्यमरसिंहोक्तेः। अयञ्च तव स्वभाव एव। अतस्त्वं मया भुक्तस्यान्नस्याच्छादनं भवेत्याशंसावाक्यार्थः। एतस्मादेव कारणात् स्वाहा स्वाहाकारेण त्वां पिबामीति वाक्यशेषः॥२४॥

रौरवे पूयनिलये पद्मार्बुदनिवासिनाम्॥
अर्थिनाꣳसर्वभूतानामक्षय्यमुपतिष्ठतु ॥ २५ ॥

अयमपि सौत्रो मन्त्र इत्येके, पौराणिक इत्यपरे, "अनुस्वारस्य ꣳ छन्दसि शषसहरेफेषु"इति कात्यायनीयसर्वानुक्रमसूत्रेण यद्यपि ꣳकारादेशश्च छन्दस्येव विहितस्तथापि "अर्थिनाꣳसर्वभूतानामित्यत्र छन्दोवत्सूत्राणि भवन्तीति वचनात्सकारपरत्वेऽनुस्वारस्य ꣳकारादेशो बोध्यः। मन्त्रस्यास्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता भूमौ पीतार्धोदकप्रक्षेपणे विनियोगः, "पीत्वाऽर्धं भूमौ क्षिपेत्"इति कात्यायनोक्तेः॥ स्पष्टोऽर्थः॥२५॥

ॐ अङ्गुष्ठमात्रः पुरुषो अङ्गुष्ठञ्च समाश्रितः।
ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुक्॥ २६ ॥

अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः परमात्मा देवता दक्षिणपादाङ्गुष्ठोपर्य्युदकसेचने विनियोगः, "आचान्तो दक्षिणपादाङ्गुष्ठे पाणिं निःस्रावयेत्"इति कात्यायनोक्तेः। अथ मन्त्रार्थः। पूर्य्यतेऽष्टाभिर्धातुभिरिति पूः शरीरं तत्र पुरि देहे शेते साक्षिचैतन्यरूपेण इति पुरुषः परमात्मा उच्यते, "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः"इति कृष्णयजुर्वेदीयकठश्रुतेः। स ईदृशः परमात्मा पुरुषः प्रीणातु प्रीतो भवतु अनेन हस्तनिःस्रावजलेनेति शेषः। कीदृश इत्यपेक्षायामुच्यते। अङ्गुष्ठमात्रः अङ्गुष्ठप्रमाणः आत्मनः सूक्ष्माभिप्रायेणेत्यर्थः। तथा अङ्गुष्ठञ्च समाश्रितः (चकारोऽप्यर्थे) शिरःप्रभृतीन् अवयवान् समाश्रित्य विशेषतश्च अङ्गुष्ठमपि समाश्रितः। एतेन सकलदेहव्यापकत्वे सत्यपि अङ्गुष्ठाश्रयत्वस्याधिक्यं द्योत्यते। पुनश्च कीदृशः, प्रभुः प्रभवतीति प्रभुः ईश्वरः देहस्येति शेषः। आत्माधिष्ठित एव देहः सर्वकार्य्येषु यतः प्रवर्त्तत इतिभावः। तथा सर्वस्य जगतः ईशः ईश्वरः "यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशदि"ति श्रुतेः। सर्वस्यास्य जगत आत्मविकारित्वादिति भावः। "तस्माद्वाऽऽत्मनऽआकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, ततो वा इमानि भूतानि जायन्ते"इति श्रुतेः। पुनः कीदृशः विश्वभुक् विश्वं जगदिदं भुङ्क्ते कर्म्मफलेन इति विश्वभुक् जीवरूपः। यद्वा विश्वं सर्वं भोग्यपदार्थं भुङ्क्ते इति विश्वभुक् पक्षेऽस्मिन्नपि

जीवरूप एव। यद्वा विश्वं सर्वं जगत् भुङ्क्ते महाकालरूपेण महाप्रलये आत्मनि संहरते इति विश्वभुक् संहारकर्त्तेत्यर्थः। यद्वा विश्वं भुनक्ति पालयतीति विश्वभुक् जगतः पालनकर्त्तेत्यर्थः। य ईदृशः परमात्मा पुरुषः इमं देहमभिव्याप्य विशेषतोऽङ्गुष्ठमपि समाश्रितः। अतोऽङ्गुष्ठे हस्तनिःस्रावजलं प्रक्षिपामि स चानेन हस्तनिःस्रावजलेन प्रभुः प्रीणातु इत्याशंसावाक्यार्थः॥ २६॥

श्वात्राः॑ पी॒ता भ॑वत यू॒यमा॑पोऽअ॒स्माक॑म॒न्तरु॒द॑रे सु॒शेवाः॑।
ताऽअ॒स्मभ्य॑मय॒क्ष्माऽअ॑नमी॒वाऽअना॑गस॒ स्वद॑न्तु दे॒वीर॒मृता॑ऽऋता॒वृधः॑ ॥२७॥

अस्य मन्त्रस्य प्रजापतिर्ऋषिर्जगतीछन्द आपो देवता नाभ्यभिमन्त्रणे विनियोगः, "श्वात्राःपीता इति नाभिमभिमन्त्रयते" इति कात्यायनोक्तेः। भोजने या आपः पीतास्ता आपो नाभौ स्थिता वर्त्तन्ते। ता अपः प्रति इदानीमुच्यते। तत्र तदानीमुच्छिष्टमुखत्वाद्वेदमन्त्रोच्चारणेऽनधिकारान्मनसैव मन्त्रोच्चारणङ्कर्त्तव्यमित्यूह्यम्। अथ मन्त्रार्थः। हे आपः! यूयं मया पीताः सत्यः श्वात्राः क्षिप्रपरिणामाः शीघ्रं जीर्णा भवत, "श्वात्रमिति क्षिप्रनामाऽऽशु अतनं भवति (निरु० ५।३।)" इति यास्कोक्तेः। किञ्च हे आपः, यूयम् अस्माकमपः पीतवतामन्तरुदरे जलपाकस्थाने सुशेवाः शोभनसुखा भवतेत्यनुषङ्गः। सुष्ठुशेवं याभ्यस्ताः सुशेवाः "शेवमिति सुखनामे"ति निघण्टुः। किञ्च हे आपः, तास्तथाविधा भवत्यः अस्मभ्यम् अस्मदुपकारार्थं स्वदन्तु अस्मद्भुक्तमन्नमितिशेषः। अस्माभिर्यदन्नादिकं भुक्तं तदास्वादयन्त्वित्यर्थः। किंभूता भवत्य इत्यपेक्षायामुच्यते। अयक्ष्माः यक्ष्मा प्रबलरोगः क्षयरोगः "थाइसिस"इति भाषायां प्रसिद्धः। नास्ति यक्ष्मा याभ्यः पीताभ्यः सकाशात् ता अयक्ष्माः यासामपां पाने कृते यक्ष्मा न भवति प्रत्युत स्थितोऽपि यक्ष्मा विनश्यतीतिभावः, एवम्भूता भवत्य इत्यर्थः। तथा अनमीवाः अमीवा सामान्यव्याधिः नास्ति अमीवा याभ्यः सकाशात् ता अनमीवाः सामान्यव्याधिनिवर्त्तिका अपीत्यर्थः। तथा अनागसः आगोऽपराधः नास्ति आगः याभ्यस्ता अनागसः अपराधहारिण्य इत्यर्थः। तथा ऋतावृधः "ऋतमिति यज्ञनाम" ऋतं यज्ञं वर्द्धयन्तीति ऋतवृधः इति प्राप्ते तस्य संहितायां दीर्घः "अन्येषामपि दृश्यते" इति पाणिनिवचनात्। यज्ञवृद्धिकारिण्य इत्यर्थः। तथा देवीः दीव्यन्तीति देव्यः इति प्राप्ते "वा छन्दसि" इति पूर्वसवर्णदीर्घे देवीरिति देवीः देव्यः द्योतमानाः। तथा अमृताः नास्ति मृतं मरणं याभ्यः सकाशात् ताः अमृताः मरणनिवर्त्तिका इत्यर्थः। एवम्भूता भवत्यः स्वदन्त्वित्यर्थः। यद्वा ता इति द्वितीया बहुवचनं तेनायमर्थः। अमृताः अमरणधर्मिणो देवाः पूर्वोक्ताः प्राणादयो वागाद्यधिष्ठातारः ता अपः स्वदन्तु (णिलोपश्छान्दसः।) आस्वादयन्तु। ताः कीदृशीः अस्मभ्यमयक्ष्माः। अस्मभ्यमस्माकं वा यक्ष्मनाशिनीः। शेषं पूर्ववत्॥ २७॥

अगस्त्यं वैनतेयं च शनिं च वडवानलम्।
आहारपरिणामार्थं स्मरणीयं च पञ्चमम्॥ २८॥

सौत्रोऽयं मन्त्र इत्येके, पौराणिक इत्यपरे। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो-

लिङ्गोक्ता देवता भोजनान्ते उदराभिमर्शने विनियोगः, "अगस्त्यं०-पञ्चममित्युदरमालभ्येत्"ति कात्यायनोक्तेः। स्पष्टोऽर्थः ॥ २८ ॥

शार्य्यातिं च सुकन्यां च च्यवनं शक्रमश्विनौ।
भोजनान्ते स्मरेन्नित्यं तस्य चक्षुर्न हीयते॥ २९ ॥

सौत्रोऽयं मन्त्र इत्येके, पौराणिक इत्यपरे। अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता भोजनान्ते शार्य्यात्यादिस्मरणे विनियोगः "शार्य्यातिं च० हीयते" इति स्मृत्वा मुखशुद्धिं कुर्य्यादितिकात्यायनोक्तेः। स्पष्टोऽर्थः ॥ २९ ॥

इति श्रीदामोदरशर्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये
एकादशोऽयं भोजनपरिच्छेदः समाप्तः ॥

॥ इति भोजनमन्त्रव्याख्या ॥



# ॥ अथ द्वादशपरिच्छेदः प्रारभ्यते ॥

## ॥ तत्र शयनमन्त्रौ यथा ॥

चित्रावसो स्वुस्ति ते पारमशीय ॥ १ ॥

❀ मन्त्रव्याख्या ❀

'चित्रावसो' इति रात्रिदेवत्यं यजुर्ऋषिदृष्टं रात्रिप्रार्थनायां विनियुक्तं "रात्रिर्वै चित्रावसुस्तामिह प्रार्थयते" इति सम्प्रदायविदामुक्तेः। अथ मन्त्रार्थः। "रात्रिर्वै चित्रावसुः सा हीयठं. सङ्गृह्येव चित्राणि वसति" इति श्रुतेश्चित्रावसुशब्देन रात्रिरुच्यते। तां प्रति ब्रूते शयनकर्त्ता। हे चित्रावसो! चित्राणि विविधानि चन्द्रनक्षत्रान्धकाररूपाणि वसन्ति यस्यां रात्रौ सा चित्रावसुस्तत्संबुद्धौ हे चित्रावसो! हे रात्रे! त्वत्प्रसादादहं स्वस्ति क्षेमं यथा स्यात्तथा ते तव पारं समाप्तिम् अशीय व्याप्नवानीत्यर्थः। अश्नोतेः "बहुलं छन्दसि" इति शपो लुकि लिङ्युत्तमैकवचने रूपं बोध्यम्। रात्रौ मनुष्येषु सुप्तेषु चौराः गृहे प्रविशन्ति तदानीं शयनावस्थायां शरीरे इन्द्रियगणव्यापारहीनत्वे सति तस्मिन्नवसरे मम पुनर्जागृतिर्यथाभवेत्तथा भवत्या रात्र्या अर्थाद्रात्र्यधिष्ठातृदेवतया कर्त्तव्यमित्यभिप्रायेण भवतीं प्रार्थये इत्याशयः॥ १ ॥

ॐ अग्ने त्वꣳ सुजागृहि व्वयꣳ सुमन्दिषीमहि।
रक्षाणो ऽअप्रयुच्छन्प्रबुधे नः पुनस्कृधि ॥२॥

अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दोऽग्निर्देवता शयने विनियोगः, "अग्नेत्वमित्युक्त्वा स्वपिती"ति कात्यायनोक्तेः। अथ मन्त्रार्थः। हे अग्ने! त्वं सुजागृहि सुष्ठु निद्रारहितो भव। वयं सदारापत्याः सुमन्दिषीमहि साधु स्वप्स्यामः। "मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु" इत्युक्तं तदत्र स्वप्नार्थः। आशीर्लिङ्युत्तमबहुवचने रूपं बोध्यम्। किञ्च हे अग्ने! नः अस्मान् रक्ष पाहि किं कुर्वन् अप्रयुच्छन् "युच्छ प्रमादे" प्रमादोऽनवधानतेत्यमरसिंहोक्तेः प्रमादोऽनवधानता तदत्र अप्रमाद्यन् प्रमादमकुर्वन्नित्यर्थः। अतिसावधानतयाऽस्मानभिरक्षेत्याशयः। "द्व्यचोऽतस्तिङः" इति संहितायां दीर्घः। "नश्चधातुस्थोरुषुभ्यः" इति नस्य णत्वम्। नोऽअप्रयुच्छन्नित्यत्र "एङः पदान्तादति" इति पूर्वरूपे प्राप्ते "प्रकृत्यान्तःपादमव्यपरे" इति प्रकृतिभावः। अर्धाकारचिह्नन्तु द्वयोः स्वरयोर्मध्ये संध्यभावसंसूचनार्थमिति साम्प्रदायिकाः। किञ्च हे अग्ने! नोऽस्मान् पुनः प्रबुधे प्रबोधाय कृधि कुरु प्रबोधनं प्रबुत् तस्यै प्रबुधे संज्ञायै पुनर्जागरणायेत्यर्थः। प्रबुधे इत्यत्र सम्पदादित्वाद्भावे क्विप्प्रत्ययो बोध्यः। शयनसमयेऽग्निप्रार्थनं रक्षसामपहत्यर्थमेव। तदुक्तं तित्तिरिणा "अग्निमेवाधिपं कृत्वा स्वपिति रक्षसामपहत्यै" इति। एवमनेन मन्त्रेणाग्निं सम्प्रार्थ्य ये शेरन्ते नहि तेषां रक्षसादिभयं कदाचिदपि सम्भवतीति वाक्यार्थः॥ २ ॥

इति श्रीदामोदरशर्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये
द्वादशोऽयं शयनपरिच्छेदः समाप्तः।
इति शयनमन्त्रव्याख्या।

## ॥ अथ त्रयोदशपरिच्छेदः प्रारभ्यते ॥



### ॥ तत्रादौ मेधाप्राप्तिमन्त्राः ॥

सदसस्पतिमद्भुतम्प्रियमिन्द्रस्य काम्म्यम्।
सनिम्मेधामयासिषꣳ स्वाहा ॥ १ ॥

स्वयम्भूब्रह्मदृष्टा गायत्री लिङ्गोक्तदेवत्या मेधाप्राप्त्यर्थे जपे विनियुक्ता ऋगियम्। ईदृशमग्निं सनिं द्रव्यदानं मेधां बुद्धिं च अयासिषं याचे द्विकर्मकोऽयं धातुः दुह्याच्पच्दण्ड्रुधीत्यादिवचनादकथितंचेतिपाणिनीयसूत्रेणाग्निशब्दे द्वितीया, अन्यत्र तु "कर्म्मणि द्वितीया" इत्यनेन कर्म्मणि द्वितीया 'बलिं याचते वसुधामि'तिवदिहाप्यनुसन्धेयम्। अग्नेः सकाशादहं सनिं द्रव्यदानं मेधां बुद्धिं च अयासिषं याचे इत्यर्थः। कीदृशमग्निमित्यपेक्षायामुच्यते। सदसः यज्ञगृहस्य पतिं पालकं सीदन्त्युपविशन्ति कर्माणि कर्तुमृत्विजोऽस्मिन्निति सदः तच्च सोमयज्ञे प्रसिद्धं सदोनामकं (मण्डपाख्यं) यज्ञगृहमित्यर्थः, सद इति गृहमात्रस्योपलक्षकम् 'अग्ने गृहपते' इत्यादिगृहमात्रपालकत्वप्रतिपादकश्रुतिबलात् अतोऽग्नेर्गार्हपत्यगृह्यादि नामाऽपि सङ्गच्छते। नह्यग्निं विना किमपि श्रौतं स्मार्त्तं वा कर्म्म भवितुमर्हति। लोकेऽपीह दृश्यते यदग्निं विना किमपि गृहकार्य्यं दिवा नक्तं वा न सिद्ध्यति। अतो गृहमात्रस्य संरक्षकमित्यभिप्रायः। तथा अद्भुतमाश्चर्यजनकमित्यर्थः। न ह्येतादृशी शक्तिरन्यस्य कस्यचिद्वर्त्तते यदुत्पन्नमात्रःसन्नेव तादृशो महान् भवेन्महत्तरकार्य्यमपि कुर्य्यादतोऽचिन्त्यशक्तिमित्यभिप्रायः। तथा इन्द्रस्य प्रियं मित्रम् इन्द्रस्येति पदमन्यदेवतानामप्युपलक्षकं तन्मुखेनैव सर्वदेवतानां हविर्भोक्त्वात् सर्वदेवतानां सुहृद्भूतमित्यभिप्रायः। तथा काम्यं कमनीयं धनमेधार्थिभिः प्रार्थनीयमित्यभिप्रायः। ईदृशमग्निं सनिं मेधां च अयासिषम् ईदृशादग्नेः सकशाद्द्रव्यदानं बुद्धिं च याचे, अग्निर्मह्यं धनं विद्यां च ददात्वित्याशंसावाक्यार्थः। अयासिषमिति 'टुयाचृ याञ्चायाम्' (भ्वा० उ० प०) इत्यस्य लुङि परस्मैपदे उत्तमपुरुषैकवचने रूपम्। अत्र स्वगामिनि क्रियाफले आत्मनेपदं भवितव्यं तत्र सुप्तिङ्ङुपग्रहेति कारिकया व्यत्ययेन परस्मैपदं सञ्जातं "व्यत्ययो बहुलं, बहुलं छन्दसी"ति पाणिनिवचनात्। लुङ्लकारश्चात्र लडर्थेऽवगन्तव्यः। "छन्दसि लुङ्लङ्लिटः" इति पाणिन्युक्तेः। स्वाहेति द्व्यक्षरं यजुस्तच्चाग्रिममन्त्रे व्याख्यास्यते। तत्रैव तस्यार्थो द्रष्टव्यः ॥ १ ॥

याम्मेधान्देवगणाः पितरश्चोपासते।
तया मामद्य मेधयाग्ने मेधाविनङ्कुरु स्वाहा ॥ २ ॥

स्वयम्भूब्रह्मदृष्टा एकाधिकानुष्टुप् लिङ्गोक्तदेवत्या मेधाप्राप्त्यर्थेहोमे जपे च विनियुक्ता

ऋगियम्। अग्नेः सकाशादनयर्चा मेधां याचते साधकः, तथा हि हे अग्ने, तया मेधया बुद्ध्या अद्य मां मेधाविनं बुद्धियुक्तं कुरु स्वाहा तस्मै तथाविधोपकारकाय तुभ्यं सुहुतमस्तु मद्दत्तमेतद्धविरिति शेषः, त्वदर्थं मद्दत्तमेतद्धविः सुपरित्यक्तमस्त्विति भावः, इति तु होम पक्षे, जपपक्षे तु "तस्या द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारञ्चे"ति श्रुतेः स्वाहाशब्दस्य त्यागार्थत्वान्मदीयस्तुतिरूपं शब्दजातं त्वदर्थं सुहुतमस्तु सुपरित्यक्तमस्त्वित्यर्थः । मेधाविनमित्यत्र "अस्मायामेधास्रजोविनिः" इति पाणिनीयसूत्रेण विनिप्रत्ययो बोद्धव्यः। तया कया मेधयेत्यपेक्षायामुच्यते, यां मेधां बुद्धिं देवगणाः देवसमूहाः पितरः पितृगणाश्च उपासते पूजयन्ति तया देवपितृमान्यया बुद्ध्या मां मेधाविनं कुरु देवपितृसम्मान्या बुद्धिरस्माकमस्त्विति भावः ।।२।।

मेधाम्मे वरुणो ददातु मेधामग्निः प्रजापतिः ।
मेधामिन्द्रश्च वायुश्च मेधान्धाता ददातु मे स्वाहा ।। ३ ।।

स्वयम्भूब्रह्मदृष्टा एकाधिकानुष्टुप् लिङ्गोक्तदेवत्या मेधाप्राप्त्यर्थे होमे जपे च विनियुक्ता ऋगियम् । वरुणः यादसां पतिः "प्रचेता वरुणः पाशी यादसां पतिरप्पतिरि"त्यमरसिंहोक्तेः । स प्रकृष्टचेतनावान् वरुणो मे मह्यं मेधां बुद्धिं ददातु । तथा अग्निः प्रजापतिश्च मे मह्यं मेधां बुद्धिं ददातु । तथा इन्द्रः वायुश्च मे मह्यं मेधां बुद्धिं ददातु । तथा धाताऽब्जयोनिर्ब्रह्मापि मे मह्यं मेधां बुद्धिं ददातु स्वाहा तथाविधोपकारकेभ्यो वरुणादिभ्यो देवेभ्यः स्वाहा मद्दत्तमेतद्धविः सहुतमस्त्वित्यर्थः । जपपक्षे तु मदीयप्रार्थनारूपं तद्वाक्यमेव सुहुतमस्तु मया सुपरित्यक्तमस्त्वित्यर्थः । अत्र कण्डिकायां प्रजापतिशब्देन कश्यपो दक्षो वाऽनुसन्धेयः, तयोः प्रजापतित्वेनाभिधानात्। धातृपदञ्च ब्रह्मोपलक्षकं "धाताऽब्जयोर्निद्रुहिणो विरिञ्चिः कमलासनः" इत्यमरसिंहोक्तेः वरुणादयो धात्रन्ताः सर्वेऽपि देवा मह्यं धनं ददत्विति भावः ।।३।।

॥ इति मेधाप्राप्तिमन्त्रव्याख्या ॥

## ॥ अथधनप्राप्तिमन्त्रो यथा ॥

इदम्मे ब्रह्म च क्षत्रञ्चोभे श्रियमश्नुताम् ।
मयि देवा दधतु श्रियमुत्तमान्तस्यै ते स्वाहा ।। १ ।।

स्वयम्भूब्रह्मदृष्टानुष्टुप् लिङ्गोक्तदेवत्या धनप्राप्त्यर्थे होमे जपे च विनियुक्ता ऋगियम्। श्रीकामोऽनयर्चा श्रियं याचते। अतिरिक्तमिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । तथाहि हे श्रीः, त्वत्प्रसादात् इदं ब्रह्म अर्थाद्ब्राह्मणजातिः क्षत्रं क्षत्रियजातिश्च मे मम श्रियमश्नुतां मदीयां श्रियमुपजीवतामित्यर्थः। उभे ब्रह्मक्षत्रे मे मम श्रियमश्नुवातामितिशेषः, इयञ्च पुनरुक्तिरादरातिशयद्योतनार्था "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः । तथा हे श्रीः, त्वदनुगामिनो धनाधिष्ठातारो देवाः मयि उत्तमां श्रियं दधतु स्थापयन्तु यया श्रिया सत्याऽहं सर्वजनाश्रयो भूयासं तादृशीमुत्कृष्टां श्रियं मह्यं देवा ददत्विति भावः। हे श्रीः, या त्वमेवं 'सर्वजनैरभिलष्यसे' इति शेषः, तस्यै तादृश्यै श्रियै सर्वाश्रयभूतायै ते तुभ्यं स्वाहा सुहुतमस्तु मद्दत्तमेतद्धविरितिशेषः, इतितु होमपक्षे । जपपक्षे तु स्वाहाशब्दस्य त्यागार्थत्वात्

मदीयस्तुतिरूपं शब्दजातं सुहुतमस्तु सुपरित्यक्तमस्त्वितिभावः। चकारौ समुच्चयार्थौ। एतन्मन्त्रजपादिना धनप्राप्तिर्भवतीत्यनुसन्धेयम् ॥ १ ॥

॥ इति धनप्राप्तिमन्त्रव्याख्या ॥

## ॥ अथ धारणास्थिरीकरणमन्त्राः ॥

प्रतीकं मे विचक्षणं जिह्वा मे मधु यद्वचः।
कर्णाभ्यां भूरि शुश्रुवे मात्वꣳ हार्षीः श्रुतं मयि ॥१॥
ब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोऽसि सनिरसि
शान्तिरस्यनिराकरणमसि ब्रह्मकोशं मे विश ॥ २ ॥
वाचा त्वापि दधामि वाचा त्वापिदधामीति
[तिष्ठ प्रतिष्ठ] स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्य-
ग्रहणधारणोच्चारणशक्तिर्मयि भवतु ॥ ३ ॥
आप्यायन्तु मेऽङ्गानि वाक् प्राणश्चक्षुः श्रोत्रं यशो बलम्।
यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठतु ॥४॥

छात्रैरधीत्याधीत्य प्रतीकं मे इत्यादिभिश्चतुर्भिर्निगदाभिधैर्मन्त्रैरनिराकरणं कर्त्तव्यं, तदुक्तं पारस्करेण "अधातोऽधीत्याधीत्यानिराकरणम्" इति। अथेदानीमनिराकरणमविस्मरणं तन्निमित्तं कर्म्म विधीयते, इति शेषः, कुत इति चेदत्रोच्यते–यतो द्विजानां प्रतिदिनमध्ययनं विहितमतः कारणादधीत्याधीत्य पठित्वा पठित्वाऽनिराकरणमविस्मरणं येन कर्मणा स्यात्तत्कर्म्म कर्त्तव्यमिति सूत्रार्थः। अथ मन्त्राणामृष्यादि, तत्र प्रतीकं मे इत्यादि चतुर्णां मन्त्राणां परमेष्ठी ऋषिर्वेदपुरुषो देवता प्रथममन्त्रस्यानुष्टुप्छन्दो द्वितीयमन्त्रस्य एकाधिका त्रिष्टुप्छन्दस्तृतीयमन्त्रस्य ब्राह्मी गायत्रीछन्दश्चतुर्थमन्त्रस्य बृहतीछन्दोऽधीताऽनिराकरणार्थे जपे विनियोगः।

अथ मन्त्रार्थः। तत्र "अतिरिक्त"मिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। प्रथममन्त्रस्य द्वितीयचरणे यच्छब्दोपादानात्तच्छब्दोऽध्याहर्त्तव्यः, यत्तदोर्नित्यसम्बन्धत्वात्। तद्व्याख्यायां स्फुटीभविष्यति। तथाहि—भो ब्रह्मन्, वेदपुरुष, त्वत्प्रसादान्मे मम प्रतीकं मुखं विचक्षणं विशिष्टवर्णोच्चारणसमर्थमस्त्वितिशेषः, साधुशब्दोच्चारणसमर्थं भवत्वित्यर्थः। तथा मधु मधुरं यद्वचः यद्वचनं भवेत्तन्मधुरं वचो मे मम जिह्वा जिह्वायामस्त्वितिशेषः। जिह्वाशब्दात्सप्तमीविभक्तेर्लुगिह "सुपां सुलुक्-०" इत्यादिपाणिन्युक्तेः। जिह्वेति प्रथमैकवचनं वा, तत्पक्षे इत्थं वाक्ययोजना तथाहि यद्वचः यद्वचनं मधु मधुरं भवेत् तदेव मधुमद्वचो मे मम जिह्वा वक्त्वितिशेषः, मदीया जिह्वा कदाचिदपि कटुभाषिणी मा भवत्वित्यभिप्रायः। तथा कर्णाभ्यां भूरि बहु शुश्रुवे शृणुयां कर्णाभ्यां बहुकालं वा शृणवानि चिरकालपर्य्यन्तं मम श्रवणशक्तिर्भवत्वित्यभिप्रायः। तथा मयि विषये श्रुतमधीतं पठितं यच्छास्त्रं वर्त्तते तत्त्वं मा हार्षीः माऽपनय यच्छास्त्रं मयाऽधीतम् अर्थाद्यन्मया पठितं तज्ज्ञानं च त्वं मा हरेत्यभिप्रायः। तदर्थं त्वामनेन मन्त्रेण स्तौमीत्याशयः ॥ १ ॥

तथा हे ब्रह्मन्, हे वेदपुरुष, ब्रह्मणो वेदस्य प्रवचनमध्ययनमध्यापनञ्च त्वमसि प्रवचनं व्याख्यानं वा तदपि त्वमेवासीत्यर्थः । ब्रह्मणः अधीतस्य वेदस्य प्रतिष्ठानं प्रतिष्ठा स्थितिराधार इति यावत्, तदपि त्वमेवासि न केवलं वेदमात्रस्यैवेति किन्तु शब्दस्य ब्रह्मरूपत्वाद्ब्रह्मणः अर्थाच्छब्दमात्रस्यापि त्वमेव प्रतिष्ठानमसि आश्रयो भवसीत्यभिप्रायः "भूतं भव्यं भविष्यञ्च सर्वं वेदात्प्रसिद्ध्यति" इति मनूक्तेः । तथा ब्रह्मकोशोऽसि ब्रह्म वेदः, शब्दमात्रं वा तस्य कोशः गोपनगृहं गुप्तिस्थानं तदपि त्वमेवासीत्यर्थः । तथा सनिरसि "षण सम्भक्तौ" ( भ्वा० प० ) सनति सम्भजतीति सनिः भक्तानामभीष्टफलप्रदानद्वारा तत्सम्भजनशीलोऽसि भक्तैः सम्भजनीयोऽसीति वा, तथा शान्तिरसि अनिष्टस्य अनिष्टहेतोश्च शमनं त्वमसि । तथा अनिराकरणमसि निराकरणं परित्यागः न निराकरणमनिराकरणमर्थादप्रमादः "प्रमादोऽनवधानता" तद्रहितस्त्वमसीत्यर्थः । एतादृशस्त्वं मे मम ब्रह्मकोशं हृदयं विश मदीयं वेदाशयं प्रविशेत्यर्थः, "सर्वेषां वेदानाᳬ हृदयमेकायनम्" इति श्रुतेः ॥ २ ॥

किञ्च हे ब्रह्मन्! वेदपुरुष, वाचा गिरा त्वा त्वां हृत्प्रविष्टमपिदधामि आच्छादयामीत्यर्थः, "अपिधानतिरोधानपिधानाच्छादनानि च" इत्यभिधानात् । तथा अहं वाचा गिरा त्वा अपिदधामि, तथा त्वा त्वां वाचा सत्यवाण्या अपिदधामि आच्छादयामि अर्थात् त्वां गोपयामि यथा त्वं कदाचिदपि मत्तोऽपगतो मा भूया इत्यभिप्रायः । इति हेतोः तिष्ठ प्रतिष्ठ मद्धृदये इतिशेषः । द्विरुक्तिरुभयत्रादरार्थो "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः । किञ्च हे ब्रह्मन् ! वेदपुरुष, त्वत्प्रसादात्स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्मयि भवतु । स्वराः उदात्तानुदात्तस्वरिताः, करणानि शब्दोत्पत्तेः शब्दाभिव्यक्तेर्वा साधनानि संवृतादीनि, कण्ठ्याः कण्ठे भवाः कण्ठ्याः अकुहविसर्जनीयाः, औरसाः उरसि भवा औरसाः सहकाराः वर्गपञ्चमान्तस्थाः, दन्त्याः दन्ते भवाः दन्त्याः लृतुलसाः, ओष्ठ्याः ओष्ठे भवा ओष्ठ्याः उपूपध्मानीयाः, तेषां ग्रहणमुपादानम्, धारणं स्थिरीकरणम्, उच्चारणं प्रयोगः, ग्रहणं च धारणं च उच्चारणं च इति ग्रहणधारणोच्चारणानि तेषु या शक्तिः सा स्वकरणकण्ठ्यौरसदन्त्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्मयि भवतु स्वरादीनां धारणादिसामर्थ्यं मय्यस्त्वितिभावः ॥ ३ ॥

किञ्च हे ब्रह्मन्! वेदपुरुष, त्वत्प्रसादान्मे मम अङ्गानि गात्राणि आप्यायन्तु ( परस्मैपदं छान्दसम् ) आप्यायन्तां वर्द्धन्तामित्यर्थः । न केवलमङ्गान्येवाप्यायन्तु किन्तु वागादीन्यपि आप्यायन्त्वित्यनुषङ्गः । तद्यथा—वाक् गीः वागिन्द्रियमित्यर्थः, प्राणः प्राणवायुः सूत्रात्मेत्यर्थः, चक्षुर्नयनेन्द्रियम् अर्थान्नेत्रबलम्, नेत्रेन्द्रियपाटवमितिभावः, श्रोत्रं श्रवणेन्द्रियं श्रवणेन्द्रियपाटवमित्यर्थः, यशः कीर्त्तिः, बलं शारीरमोजः, एतान्यपि वागादीनि मे मम आप्यायन्त्वित्यभिप्रायः । यन्मे श्रुतं यन्मया श्रुतं मीमांसादि, अधीतमृगादि, तृतीयार्थे षष्ठी विभक्तिव्यत्ययेन "व्यत्ययो बहुलमि" तिपाणिनिवचनात्, "सुपां सुपो भवन्ती" त्युक्तेश्च । यद्वाऽयमर्थः, यन्मे श्रुतं यन्मया श्रुतं शास्त्रादिकं गुरुमुखान्मया श्रुतमितिभावः । तथा यन्मया अधीतम् अभ्यस्तम् अधिगतं वा शास्त्रजातं तत्सर्वं मे मम मनसि तिष्ठतु तत्सर्वं मन्मनसि सुस्थिरमस्तु माऽपयात्वित्यर्थः । वीप्सात्रार्थभूयस्त्वप्रतिपादनपरा "वीप्सासर्वसंग्रहार्थे" त्युक्तेः ॥

इति श्रीदामोदरशर्म्मकृते मन्त्रार्थचन्द्रोदयनाम्नि मन्त्रभाष्ये विद्यालक्ष्मीलाभमन्त्रव्याख्यात्मकोऽयं त्रयोदशः परिच्छेदः समाप्तः ॥

# ॥ अथ चतुर्दशपरिच्छेदः प्रारभ्यते ॥



## ॥ तत्रादौ विवाहमन्त्राः ॥

यद्यपि आवसथ्याधानादिबहुतरकर्म्मोपयोगिनोऽन्यशाखीयाः पारस्कराचार्य्यकृतगृह्यसूत्रसन्दर्भपठिता मन्त्राः सन्ति, तेषामर्थाश्च गृह्योक्तविनियोगानुसारेण जयरामरामकृष्णगदाधराद्याचार्य्यकृतगृह्यभाष्येषु स्पष्टा एव वरीवर्त्तन्ते; नहि तत्र कुत्रचिदर्थविरोधोऽप्यस्ति यत्परिहारार्थमस्माभिर्यतितव्यमिति, अतोऽस्मिन् ग्रन्थे ग्रन्थबाहुल्यभियाऽऽवसथ्याधानादिबहुतरकर्मोपयोगिनामन्यशाखीयानां पारस्कराचार्य्यकृतगृह्यसूत्रसन्दर्भपठितानां सर्वेषामपि मन्त्राणां व्याख्यास्माभिर्न क्रियते। किन्तु विवाहादिकर्म्मोपयोगिनां कतिपयमन्त्राणामर्थज्ञानं सर्वसाधारणतया सर्वेषामपि जनानामतीवावश्यकं विद्यते, अतोऽस्माभिरपि तेषां विवाहादिकर्म्मोपयोगिनामेव कतिपयमन्त्राणामिह व्याख्या प्रदर्श्यते। तत्र "षडर्घ्या भवन्त्याचार्य्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति" इतिपारस्करवचनादादौ मधुपर्कार्च्चनमन्त्राः। ते चाचार्य्यादीनां षण्णामपि कृते समा एव ज्ञातव्याः। वैवाह्यो वरः जामातेत्यर्थ इति सर्वभाष्यकृतां परामर्शः। अत्र विवाहप्रसङ्गाद्वरस्य मधुपर्कार्च्चनं प्रस्तुतं, तच्च सर्वेषामपि सममेव। तत्रासनादिपदार्थक्रमेण एकैकशो मन्त्रा इह द्रष्टव्याः। तथाहि—

वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्य्यः।
इमन्तमभितिष्ठामि यो मा कश्चाभिदासति ॥ १ ॥

अस्य मन्त्रस्याथर्वण ऋषिरनुष्टुप्छन्दो विष्टरो देवता विष्टरोपवेशने विनियोगः, "वर्ष्मोऽस्मि० योमाकश्चाभिदासतीत्येनमभ्युपविशती"ति पारस्करोक्तेः। विष्टरादीनामचेतनत्वेऽपि तदभिमानिनीनां देवतानां सत्त्वाद्देवतात्वम्, "अभिमानिव्यपदेशस्तु" इति व्याससूत्रोक्तेः; "मृदब्रवीदापोऽब्रुवन्" इति श्रुतेश्च। तस्माद्विष्टरादीनामपि देवतात्वमित्यवगन्तव्यम्।

अथ मन्त्रार्थः—अनेन मन्त्रेणात्मानमर्घ्यत्वायार्घ्यः स्तौति। अहम् अर्घ्यः समानानां समानजातीयानां मध्ये वर्ष्मोऽस्मि कुलज्ञानाऽऽचारविचारवपुर्वयोगुणैः श्रेष्ठो भवामीत्यर्थः। केषां मध्ये क इव ? अत्रोच्यते, उद्यतां मध्ये सूर्य्य इव उद्यतामुदयगामिनामुदयं प्रकाशं कुर्वतां चन्द्रतारकादीनां ज्योतिषां मध्ये यथा सूर्य्यः श्रेष्ठस्तथाहमपि स्वसमानजातीयानां मध्ये श्रेष्ठोऽस्मीत्यर्थः। यथा सूर्य्यो ग्रहनक्षत्रादीनां छादको भवति तथाहमपि स्वसमानजातीयानामाच्छादको भवामीत्यभिप्रायः। किञ्च इमं विष्टरं तं पुरुषमुद्दिश्य अर्थाद्विष्टरवद्रुद्धमभिलक्षीकृत्य तिष्ठामि अधःकृत्वा उपर्युपविशामीत्यर्थः। तं कमित्यपेक्षायामुच्यते। यः कश्च यः कश्चिन्मा माम् अभिदासति उपक्षीणं कर्त्तुमिच्छतीत्यर्थः। "दसु उपक्षये" (दि०प०) तस्य दस्यतीति रूपं भवति, अत्र तु विकरणव्यत्ययेन छान्दसत्वादुपधादीर्घे च

दासतीति पदं सिद्ध्यति, "उभयगतिरिह भवती"त्युक्तेः "व्यत्ययो बहुलमिति" पाणिनिवचनाच्च। यद्वा "अभिपूर्वो दासतिर्हिंसायां वर्त्तते" इति कर्कोक्तेरिह दासतिर्हिंसार्थो वा ततयश्चामर्थः। यः कश्च यः कश्चन नरो मा मामभिदासति हिंसति तमिमं विष्टररूपतापन्नमभितिष्ठामि तमभिभूय तमधःकृत्वा तदुपरि उपविशामीत्यर्थः ॥१॥

विराजो दोहोऽसि विराजो दोहमशीय।
मयि पाद्यायै विराजो दोहः ॥ २ ॥

यजुरिदम्, अस्य मन्त्रस्य प्रजापतिर्ऋषिरनिर्दिष्टं छन्द आपो देवता पादप्रक्षालने विनियोगः, "सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति, ब्राह्मणश्चेद्दक्षिणं प्रथमम्, विराजो० मयि पाद्यायै विराजो दोहः" इति पारस्करोक्तेः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। पादार्थमुदकं पाद्यं पादप्रक्षालनजलं तत्प्रत्युच्यते—हे जलपदार्थ, त्वं विराजो दोहोऽसि प्राणधारणादिगुणैः सकलसौहित्येन विविधतया राजते इति विराट् अन्नं तस्य विराजोऽन्नस्य दोहः परिणामसारो रसः स त्वं भवसि। यद्वा पूर्वोक्तव्युत्पत्त्या विराडन्नं तस्य दोहः पूरकोऽसीत्यर्थः, जलपदार्थस्य शस्योत्पत्तिहेतुत्वात्। अथवा विविधं राजन्ते वस्तून्यत्रेति विराट् विराड्देही समस्तब्रह्माण्डाभिमानी पुरुषो हिरण्यगर्भस्तस्य दोहः पूरकोऽसीत्यर्थः, तत्र गर्भरूपत्वेन तस्यावस्थानत्वात्। अप्सु हिरण्यगर्भस्यावस्थानमिति श्रुतिस्मृतिभ्यामन्यत्रापि श्रूयते। तद्यथा—"आपो ह वा इदमग्रे सलिलमेवास" (११।१।६।१) 'सलिलमेवाग्रऽइदमासीत्तत्र संवत्सरमुषित्वा हिरण्यगर्भः समवर्त्तत' इति शाखान्तरीयश्रुत्यन्तरम्। तन्निदानभूतः शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनशाखीयमन्त्रश्चायं दृश्यते "आपो ह यद्बृहतीर्विश्वमायन्गर्भन्दधाना जनयन्तीरग्निम्। ततो देवानाꣳसमवर्त्ततासुरेकः कस्मै देवाय हविषा विधेम॥" इति (शु०य०वे०अ०२७।कं०२५।) तथा च "अप एव ससर्जादौ तासु बीजमवासृजत्। तदण्डमभवद्धैमं कोटिसूर्य्यसमप्रभम्॥" इति (मनु० अ० १। श्लो० ८) ॥ असीति मध्यमपुरुषयोगात् वाक्यस्य निराकाङ्क्षार्थमिह यत्तच्छब्दौ त्वेतियुष्मच्छब्दश्चैतत्त्रितयमध्याहर्त्तव्यं "हीनं वाक्ये निवेशयेदि"त्युक्तेः। तद्यथा हे जलपदार्थ, यस्त्वमीदृशोऽसि तं त्वां विराजो दोहमन्नस्य परिणामरसभूतमन्नस्योत्पत्तिहेतुभूतं वा; विराजो हिरण्यगर्भस्य दोहं गर्भपूरकं वा अशीय अश्नुवीय त्वत्प्रसादात्त्वत्सदृशविशिष्टदीप्तिमत्त्वमहमपि प्राप्नुयामित्यर्थः। "अशू व्याप्तौ (स्वा० आ०)" ततो लिङि आत्मनेपदोत्तमपुरुषैकवचने "बहुलं छन्दसीति सर्वविधीनां बाहुलकादिह विकरणलोपे "लिङः सलोपोऽनन्त्यस्ये"ति सीयुटः सकारलोपे "इटोऽदि"त्यकारे च कृते अशीयेति रूपं बोद्धव्यम्। अतः स्वपादप्रक्षालनार्थं त्वामभिमन्त्रयामीति वाक्यशेषः। स एतादृशस्त्वं मयि विषये पाद्यायै विराजो दोहो भवेतिशेषः। मयि विषये या पाद्या पादयोः साध्वी सपर्य्या तस्यै तदर्थं विराजो दोहः पूर्वोक्तत्रितयस्य पूरको भवेत्यर्थः। स्वमाहात्म्यवैशिष्ट्येन मन्त्रसंस्कृतं पाद्यं भवेति भावः, एतन्मन्त्राभिमन्त्रितजलेन पादप्रक्षालने कृते सति त्वत्प्रसादान्मत्पादद्वयस्य विशिष्टदीप्तिमत्त्वं यथा स्यात्तथा त्वं कुर्वित्याशंसावाक्यार्थः। यद्वा अशीयेति "अस गतिदीप्त्यादानेषु (भ्वा०

उ० प०)" इत्यस्माद्वडर्थे लिङि आत्मनेपदोत्तमपुरुषैकवचने "व्यत्ययो बहुलमि"ति पाणिनिवचनादिह विकरणव्यत्ययेन अदादित्वाच्छपि लुप्ते "लिङः सलोपोऽनन्त्यस्ये"ति सीयुटः सकारलोपे "इटोऽदि"त्यकारे कृते "सुप्तिङुपग्रहे"तिकारिकया हलो व्यत्ययेन दन्त्यसकारस्थाने तालव्यशकारे च कृते अशीयेति रूपं बोध्यं ततोऽयमर्थः। हे जलपदार्थ, यस्त्वमीदृशोऽसि तं त्वां विराजो दोहम् अन्नस्य परिणामरसभूतम् अन्नस्योत्पत्तिहेतुभूतं वा विराजो हिरण्यगर्भस्य दोहं गर्भपूरकं वा अशीय असे आददे स्वपादप्रक्षालनार्थं त्वां गृह्णामीत्यर्थः। त्वं मयि पाद्यायै विराजो दोहो भवेतिशेषः। ममेतिषष्ठ्येकवचनस्थाने "सुपां सुपोभवन्ती"तिवचनान्मयीति सप्तम्येकवचनं तेनायमर्थः। मम पाद्यायै मदीयपाद्यार्थमितिभावः, विराजो दोहः पूर्वोक्तत्रितयस्य विशिष्टदीप्तेरिति यावत्, पूरको भवेत्यभिप्रायः। शेषमस्मिन्पक्षेऽपि समानम् ॥२॥

**आपः स्थ युष्माभिः सर्वान् कामानवाप्नवानीति ॥३॥**

यजुरिदम्, अस्य मन्त्रस्य प्रजापतिर्ऋषिरनिर्दिष्टं छन्द आपो देवता अर्घ्यादाने विनियोगः,"अर्घं प्रति गृह्णात्यापःस्थ०–कामानवाप्नवानीति" इति पारस्करोक्तेः। "अतिरिक्तमि"ति कारिकया संबुद्धिपदमध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे आपः, यूयम् आपः स्थ आप्नुवन्तीत्यापः प्राप्तिहेतुभूता भवथ। अतो युष्माभिः कृत्वा सर्वान् अशेषान् कामानभीष्टान् अहमवाप्नवानि प्राप्नुयां लभेयेत्यर्थः। एतदभिप्रायेणैव हस्तार्घ्यत्वेन युष्मानहमाददे इति वाक्यशेषः। आप्नवानीति "आप्लृ व्याप्तौ" इत्यस्य धातोर्लोडुत्तमपुरुषैकवचने रूपम्। आप इति आप्नोतेरेव क्विप्प्रत्यये क्विपः सर्वापहारलोपे प्रथमाबहुवचने रूपम् ॥ ३ ॥

**समुद्रं वः प्रहिणोमि स्वाँय्योनिमभिगच्छत।**

**अरिष्टास्माकं वीरा मा परासेचि मत्पयः ॥ ४ ॥**

अस्य मन्त्रस्याथर्वण ऋषिरनुष्टुप्छन्द आपो देवता अर्घ्योदकनिनयने विनियोगः, "निनयन्नभिमन्त्रयते, समुद्रं वः मा परासेचि मत्पयः" इति पारस्करोक्तेः। व इति युष्मच्छब्दोपादानादतिरिक्तमिति कारिकया संबुद्धिपदमध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे आपः, वः युष्मान् समुद्रं प्रहिणोमि समुद्रं प्रति प्रस्थापयामि। मया प्रहिता यूयं स्वां योनिमभिगच्छत स्वोत्पत्तिकारणभूतं समुद्रमभिलक्ष्य तं प्रति गच्छतेत्यर्थः। अश्विनामकसूर्यरश्मिद्वारा समुद्रिया एव आपो ग्रीष्मे आदित्यं प्रति गच्छन्ति। ता एव वर्षासु आदित्याज्जायन्ते। अतः 'आदित्याज्जायते वृष्टिः' इति मनुनापि प्रतिपादितम्। एतदभिप्रायेणैव अपां योनिः समुद्रोऽभिधीयते। अयञ्च समुद्रः पार्थिवः स एव कदाचित्केनचिच्छापेन कुरुवंशे ऋष्टिषेणस्य राज्ञः पुत्रो बभूव। स एव शन्तनुनाम्ना पुरा लोके प्रसिद्धोऽभूत्, तस्य धर्म्मपत्न्यपि तदानीं गङ्गाऽभूत्। या पूर्वस्मिन्काले नदीरूपा गङ्गासीत्, सैव केनचिच्छापेन मर्त्यलोकेऽवततार, एवं दैवयोगाद्गङ्गासमुद्रयोरिहापि मर्त्यावतारे दम्पतीत्वेन सङ्गतिरभूत्तत्रैव गङ्गायां शन्तनोः पुत्रो भीष्मो जातः, स एव हि गाङ्गेय इति नाम्नाऽपि तदानीं प्रख्यातोऽभूत्। सोऽतीव तेजस्वी महाबली आबालब्रह्मचारी रत्नाकर इव ज्ञानरत्नाकरो महारथो युद्ध-

विद्याविशारदो महाभारतीयसङ्ग्रामान्ते युद्धयज्ञावभृथस्नात इव शरशय्यायां शयानोऽनेकशरविद्धोऽप्यर्णव इवाक्षोभ्यो धैर्य्यधीरो द्वन्द्वसहिष्णुर्दिवाकर इव रश्मिजालैः स्वज्ञानोपदेशवाक्यैर्युधिष्ठिरादीनां हृद्यन्तमो विनाशयन् तदीयान्तःकरणानि च प्रकाशयन् महापुरुषस्य विष्णोर्भगवतः श्रीकृष्णचन्द्रस्य परमचरित्रमनुवर्णयन् गङ्गायां स्वशरीरं तत्याजेति इतिहासपुराणैरवसीयते। तस्यानपत्यत्वात्तस्मै "वैयाघ्रपदगोत्राय साङ्कृतिप्रवराय च। अपुत्राय ददाम्येतत्सलिलं भीष्मवर्म्मणे" इति मन्त्रेण प्रत्यब्दं भीष्माष्टम्यामिदानीन्तनैः कतिपयजनैर्जलं दीयते। एतदप्रासङ्गिकमपि वृत्तं प्रासङ्गिकमिव मयात्राभिहितम्। न च तद्विरुध्यते। यथा जलाहरणस्य मत्स्याहरणं न विरुध्यते, पुष्पाहरणस्य फलाहरणञ्च न विरुध्यते, तद्वदिहाप्यवगन्तव्यम्। वस्तुतस्तु समुद्रः पार्थिव अन्तरिक्षश्चेत्येवं द्विविधः स उभयविधोऽपि समुद्र अपां योनिरेव, तत्रोत्तरसमुद्रोऽन्तरिक्षम्, अधरश्चापरः पार्थिवः समुद्रः तत्राधस्तात्समुद्रादुत्थिता वायुप्रेरिता आपः सूर्य्यरश्मिद्वारा सूर्य्यं प्राप्ताः, इतरत्र तूत्तरात्समुद्रादन्तरिक्षाद्वर्षभावेन भूमिं प्राप्ताः उभयविधावप्यापः समुद्रियाः कथ्यन्ते। अत्र समुद्रशब्दस्य निर्वचनप्रसङ्गे (नि० अ० २ पा० ३ खं० १) यास्केनाप्यभिहितं—तद्यथा—"समुद्रः कस्मात्समुद्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः सम्मोदन्तेऽस्मिन् भूतानि समुदको भवति समुनत्तीति वा तयोर्विभागः" इति। तदिदं व्याख्यातं च निरुक्तभाष्यकृता भगवता दुर्गाचार्य्येण तद्यथा—"समुद्रः कस्मात्" इति। उच्यते—'समुद्रवन्त्यस्मादापः' वीचितरङ्गशीकरादिभावेन। "समभिद्रवन्त्येनमापः" सर्वा एव ह्यापो निम्नानुसारित्वात् समुद्रमेवाभिमुख्येन द्रवन्ति; स हि निम्नो भवति। "सम्मोदन्तेऽस्मिन् भूतानि" संहृष्यन्ति जलचराणि सत्त्वानि वहूदकत्वात्। "समुदको भवति" उद्र इत्युदकनाम तदस्मिन् संहतमिति समुद्रः। "समुनत्तीति वा" सङ्क्लेदयतीत्यर्थः। अतो हि प्रसृतैरम्भोभिः सर्वमिदं संक्लिद्यते। इति "तयोर्विभागः" (नि० अ० २ पा० ३ खं० १) "तत्रेतिहासमाचक्षते देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः स शन्तनुः कनीयानभिषेचयाञ्चक्रे देवापिस्तपः प्रतिपेदे ततः शन्तनो राज्ये द्वादशवर्षाणि देवो न ववर्ष तमूचुर्ब्राह्मणा अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितं तस्मात्ते देवो न वर्षतीति स शन्तनुर्देवापि शिशिक्ष राज्येन तमुवाच देवापिः पुरोहितस्तेऽसानि या जयानि च त्वेति तस्यैतद्वर्षकामसूक्तं तस्यैषा भवती"ति यास्कः। सा चेयं श्रुतिः—"आर्ष्टिषेणो होत्रमृषिर्निषीदन्देवापिर्देवसुमतिंचिकित्वान्। स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि"। इति, अत्र चोत्तरः समुद्रोऽन्तरिक्षम्, अधरश्च पार्थिवः, एष विभागः समुद्रयोः॥ किञ्च समुद्र इत्यन्तरिक्षनामेति निघण्टुः। समुद्रशब्दार्थश्चैवं समुद्रवन्ति सङ्गता उर्द्ध्वं द्रवन्ति वाच्छन्त्यस्मादापो रश्मिभिराकृष्यमाणा आदित्यमण्डलम्। समुत्पूर्वाद्द्रवतेर्गत्यर्थात् "अन्येष्वपि दृश्यते" (३, २, १०१) इति, अपादाने डप्रत्यये टिलोपे च रूपम्। यद्वा संहता अभिद्रवन्त्येनमापो भौमरसलक्षणा वायुना प्रेर्य्यमाणा आदित्यमण्डलाद्वा वर्षाकाले रश्मिभिः प्रावर्त्तमानाः। अत्र उदित्येष उपसर्गोऽभीत्यर्थे वर्त्तते, कर्म्मणि डप्रत्यय इति विशेषः। सम्मोदन्तेऽस्मिन् भूतानि अन्तरिक्षचारीणीति वा। सम्पूर्वात् 'मुद हर्षे' (भ्वा०आ०) इत्यस्मात् "स्फायितञ्चिवञ्चि (२।२।१२) इत्यादिना अधिकरणे रक्प्रत्यये समो मलोपे च रूपम्, यद्वा "सम्" इत्येकीभावे, उदकात् उच्छब्दः रो मत्वर्थीयः। एकीभूतमुदकमस्मिन् विद्यते वर्षास्विति उदकशब्दस्योद्भावश्छान्दसः,

यद्वा सम्पूर्वात् "उन्दी क्लेदने" ( रु० प० ) इत्यस्मात् स्फायितञ्चिवञ्चि (३।२।१२) इत्यादिना कर्तरि रक्प्रत्यये कित्वान्नलोपे च समुद्रः। समुनत्ति वर्षेण भुवनमिति समुद्रः। "एकः सुपर्णः स समुद्रमा विवेश। ( ऋ०सं०८।६।१६।४ )" इति निगमः। एवमुभयार्थस्य समुद्रशब्दस्य निर्वचनद्वारा समुद्रोऽन्तरिक्षम्, समुद्रः पार्थिवश्च उदधिरितियावत्। स उभयविधोऽपि समुद्रः अपां योनिरुत्पत्तिस्थानमितिभावः, एतदभिप्रायेणैव अपः प्रत्युच्यते, यत् हे आपः, मया प्रेरिताः सत्यो यूयं स्वां योनिं स्वोत्पत्तिस्थानं समुद्रम् अन्तरिक्षम् सूर्य्यरश्मिद्वारा आभिमुख्येन गच्छत्। अथवा पार्थिवं वा समुद्रमभिलक्ष्य तं प्रति गच्छत। यूयं हि निम्नगमनशीलाः अतस्तत्र यूयं गच्छतेत्यभिप्रायः। यत्र कुत्र चिदप्यापः पृथिव्यां निक्षिप्यन्ते तत्र ताः प्रचुराश्चेत्तर्हि स्वानां निम्नगमनस्वभावान्नद्यादिपरम्परया स्वां योनिं पार्थिवं समुद्रं प्रत्येव ता अभिद्रवन्त्यापः। ता एव स्वल्पाश्चेत्तर्हि सूर्य्यरश्मिद्वारा सूर्य्यमभिगम्य ताः प्रावृट्काले रश्मिभिरादित्यमण्डलात्प्रावर्तमानाः भौमरसलक्षणा वायुना प्रेर्यमाणा वा ता आपः स्वां योनिमन्तरिक्षं समुद्रमभिगच्छन्तीतिश्रुतिस्मृतिसर्वसिद्धान्तः। अतोऽर्घ्ये इदानीमपः प्रत्येवं ब्रूते स्वां योनिमभिगच्छत इति। किञ्च हे आपः; युष्मत्प्रसादादस्माकं वीराः पुत्राः अरिष्टाः अनुपहताः सन्त्वितिशेषः। अनुपहिंसिता भवन्त्वित्यर्थः। "वीरो वै पुत्र" इति श्रुतेरिह वीरशब्दः पुत्रवाचकः, ननु–अर्घ्यस्य प्रथमविवाहव्यतिरिक्ते मधुपर्कार्चनप्रसङ्गे वीरो वै पुत्र इति श्रुतेर्वीरशब्दस्य पुत्रवाचत्वं युक्तं, किन्तु तस्य वरत्वे सति प्रथमविवाहपक्षे तदानीं पुत्रस्याविद्यमानत्वाच्छुत्यर्थस्यासामञ्जस्यं स्यादितिचेन्न "ज्येष्ठो भ्राता पितुः समः" इति वचनात्कनिष्ठे भ्रातरि सुतरां पुत्रभावत्वात्सति तादृशे भ्रातरि तत्र वीरशब्दस्य भातृवाचकत्वावगमात्। तत्र भ्रात्रेकत्वे बहुत्वमार्षत्वाद्व्यत्ययेन "व्यत्ययो बहुलमि"ति पाणिनिवचनात्। सति भ्रातृबहुत्वे तु युक्तमेव बहुवचनम्। ननु वरस्य कनिष्ठो भ्रातैव नास्ति तत्र कथं निर्वाह इति चेत्, अत्रोच्यते। तथा सति जनिष्यमाणा एव पुत्रा वीरशब्देन तत्राक्षेप्तव्याः यथान्यत्रापि भाविनोऽपि बुद्ध्या व्यक्तिराक्षिप्यते, तद्वदत्राप्यवगन्तव्यम्। अस्माकमित्यत्र तु स्वस्मिन्पूजार्थं बहुवचनं स्वात्मीयबान्धवाद्यपेक्षया वा। अरिष्टास्माकमित्यत्रार्षत्वात्सन्धिर्बहुलं छन्दसीति पाणिन्युक्तेश्छन्दसि सर्वविधीनां वैकल्पिकत्वादिह यलोपस्यासिद्धत्वाभावान्न स्वरसन्धिनिषेध इत्यूह्यम्। अरिष्टाऽस्माकं वीरा इत्यस्यार्थान्तरं वेत्थम्–हे आपः, यूयं वीराः वीरकर्मणा उत्कृष्टाः स्थेतिशेषः। "युष्माऽइन्द्रोऽवृणीत वृत्रतूर्य्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य्ये" इति श्रुतेर्वृत्रवधादिकार्य्ये इन्द्रसहकारिणीत्वेनापां वीरत्वप्रतिपादनादित्यर्थः। अतोऽस्माकमपि कृते यूयमरिष्टा अस्मच्छत्रुभिरनुपहिंसिताः सत्योऽस्मान् सुखयत मद्विरोधिनश्च नानादुःखैः संयोजयतेत्याशंसावाक्यार्थः, "सुमित्रियानऽआपऽओषधयः सन्तु। दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च व्वयन्द्विष्मः"॥ इत्यन्यत्राप्युक्तत्वात्। किञ्च हे आपः, या यूयमेवं भूताः स्थ ताभिरितिशेषः, ताभिर्युष्माभिः मत्पयः मा परासेचि मत् मत्तः सकाशात् पयः अर्घ्यादिमङ्गलजलं मा परासेचि न पराक्षेप्तव्यं तादृशमर्घ्यादिमङ्गलजलमपगतं मास्तु, युष्मत्प्रसादात्सदैवाहमर्घ्योभवानीत्यर्थः। "असेचि" इति सिञ्चतेः कर्म्मणि लुङि रूपं लुङ्चात्र लोडर्थे एव "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनात्। मदीयपानयोग्यातिरिक्ताः सर्वा अप्यापो ममाऽहिंसकाः सत्यः समुद्रं गच्छन्तु मत्पानयोग्यञ्च पयोऽत्रैव तिष्ठत्वित्याशयः॥ ४॥

आ मागन्यशसा सꣳ सृजव्वर्च्चसा ।
तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम् ॥५॥

अस्य मन्त्रस्य परमेष्ठी ऋषिर्बृहती छन्दः आपो देवता आचमने विनियोगः, "अथाचामति आमा० तनूनाम्" इति पारस्करोक्तेः । तत्र 'अतिरिक्तम्' इति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । यतो वरुणोऽपामधिष्ठाताऽस्ति अतस्तं प्रत्युच्यते । हे वरुण, योऽहमिमा अप आचामामीति शेषः । तं कृताचमनं मा मामेवं कुर्वीति शेषः । तदेव स्पष्टीक्रियते । तत्र आङुपसर्गः अगन्निति क्रियापदेन सह संबद्ध्यते । अत्र व्यवहितोपसर्गसंबन्धो ज्ञेयः, व्यवहिताश्चेतिपाणिनिवचनात् । तद्यथा हे वरुण, त्वं तं मा मां यशसा आऽगन् आगमय यशो मां प्रापयेत्यर्थः । यशसेत्यत्र "सुपां सुलुगि"ति द्वितीयाविभक्तेराकारः "सुपां सुपो भवन्ती"ति द्वितीयार्थे तृतीया वा । तथा वर्चसा ब्रह्मवर्च्चसेन वेदाध्ययनजन्यतेजसा च मा मां संसृज सँय्योजय मां वर्च्चस्विनं कुर्वित्यभिप्रायः । तथा तं मा माम् प्रजानां पुत्रपौत्रादीनां श्रेष्ठजनानां वा प्रियं कुरु "प्रजास्यात्सन्ततौ जने" इत्यमरसिंहोक्तेः प्रजाशब्दोऽत्र सन्तानवाची जनवाची च बोद्धव्यः । तथा पशूनां गवाश्वादीनामधिपतिं स्वामिनं च कुरु । तथा तनूनां मम देहावयवानां भार्यापुत्रादीनां शरीराणां वा अरिष्टिं रिषतिर्हिंसार्थः रेषणं रिष्टिर्हिंसा न रिष्टिः अरिष्टिस्तामरिष्टिमहिंसां कुर्वित्यर्थः । हे वरुण, त्वं मम शरीराणां मदीयदेहावयवभूतानां भार्य्यापुत्रादीनां वा कदाचिदपि हिंसां मा कुर्वितिभावः । अगन्निति गम्धातोरन्तर्भावितण्यन्तस्य "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनादिह लोडर्थे लुङि मध्यमपुरुषैकवचने "मन्त्रे घसह्वर०"इत्यादिना च्लिलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे इतश्चेति सिप इकारलोपे"हल्ङ्याब्भ्यो०"इति सलोपे च कृते'मोनो धातोः'इति मकारस्य नकारे सति रूपं भवति । अरिष्टिं तनूनामित्यस्यार्थान्तरं वा हे वरुण, त्वं तनूनां स्वदेहावयवानां शरीराणां वा अरिष्टिमहिंसकं मा मां कुर्वितिशेषः। "अनभ्यासेन वेदानामाचारस्य च वर्जनात्। आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति ॥" इत्यादिमनुप्रदर्शिता या हिंसा सा मत्कृता कदाचिदपि मम मा भूयात्सर्वदा वेदाभ्यासनिरतो भूयासमित्यभिप्रायेण इह तनूनां स्वशरीराणामहिंसा प्रार्थ्यते, शरीरस्वास्थ्ये वेदाभ्यासस्य सद्भावात् । देहावयवभूतानां भार्य्यापुत्रादीनां पक्षे तदीयापद्राहित्यव्याजेन तद्वियोगाभाव एव इह अपेक्ष्यते, इति यथासम्भवमूह्यम् । तेनाऽस्मिन्पक्षे अरिष्टिशब्दोऽनापद्वाचको वोध्यः । रिष्टिः आपत् न रिष्टिः अरिष्टिः अनापत् , ततोऽयमर्थः । मम तनूनां देहावयवभूतानां भार्य्यापुत्रादीनाम् अरिष्टिम् अनापदं कुरु मम भार्य्यापुत्रादीनां कृते आपद्राहित्यं कुर्वितिभावः ॥ ५ ॥

मित्रस्य त्वा चक्षुषा प्रतीक्षे ॥ ६ ॥

पाङ्क्तं यजुरिदं, इहास्य मन्त्रस्य प्रजापतिर्ऋषिः पङ्क्तिश्छन्दो मित्रो देवता मधुपर्कप्रतीक्षणे विनियोगः । हे मधुपर्क, अहं मित्रस्य सूर्य्यस्य चक्षुषा नेत्रेण त्वा त्वां प्रतीक्षे अवलोकयामि "दधिमधुघृतमपिहितं काꣳस्ये काꣳस्येन" इति यन्मधुपर्कस्वरूपं सूत्रकारेणोक्तं तद्रूपं दातृकरस्थमेव त्वामहं पश्यामीति वाक्यार्थः ॥ ६ ॥

देवस्य॑ त्वा सवि॒तुः प्र॑स॒वेऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् ॥ ७ ॥

देवस्यत्वेति सावित्रं यजुः, इहास्य मन्त्रस्य परमेष्ठी ऋषिर्गायत्री च्छन्दः सूर्य्यो देवता मधुपर्कग्रहणे विनियोगः। देवस्यत्वेति मन्त्रे क्रियापदस्यासद्भावाद्वाक्यस्य च क्रियापदाकाङ्क्षत्वादाक्षिप्तेन केनचित्क्रियापदेनावश्यं भवितव्यम्। तत्र "देवस्यत्वेति प्रतिगृह्णाति" इति सूत्रकारप्रस्थानादिह प्रतिगृह्णामीत्येव क्रियापदमध्याहर्त्तव्यं तद्यथा—हे मधुपर्क, सवितुः सुवति स्वस्वकर्म्मणि जगत्प्रेरयतीति सविता तस्य सवितुः सति सूर्य्योदये स्वस्वव्यापारे सर्वप्राणिनां प्रवर्त्तमानत्वात्सर्वप्रवर्त्तयितुः देवस्य दीव्यतीति देवस्तस्य देवस्य दानादिगुणविशिष्टस्य दीप्तस्यादित्यस्य प्रसवेऽभ्यनुज्ञायां वर्त्तमानः सति सूर्य्योदये तेन प्रेरित इति भावः। अहमर्घ्यः अश्विनोः अश्विनीकुमारयोः बाहुभ्यां पूष्णः हस्ताभ्यां च त्वा त्वां प्रतिगृह्णामीति शेषः, अंसमणिबन्धयोर्मध्यभागो दीर्घदण्डाकारो बाहुः, आमणिबन्धात्पञ्चाङ्गुलियुक्ताग्रभागो हस्तः, इति बाहुहस्तयोश्चात्र विभागो द्रष्टव्यः। उभयत्र द्विवचनं सव्यदक्षिणहस्तद्वयापेक्षयावगन्तव्यम्। "सत्यं देवा अमृतं मनुष्याः" (१।१।२।१७) इति श्रुतेर्देवानां सत्यरूपत्वात्तदनुस्मृतिपूर्वकं मधुपर्कग्रहणानुष्ठानस्य फलपर्यवसायित्वात्तदपि सत्यं स्यात्, देवतास्मृत्यभावे तु मनुष्याणामनृतरूपत्वात्तत्कृतमधुपर्कग्रहणानुष्ठानस्य निष्फलत्वात्तदप्यनृतं स्यादिति हेतोरेव देवतास्मरणार्थमिष्टग्रहणसाधनयोः स्वबाहो रश्मिबाहुभावना स्वहस्तयोः पूषहस्तभावना च क्रियते इति भावः॥ ७॥

नमः श्यावास्यायान्नशने यत्तऽआविद्धं तत्ते निष्कृन्तामि ॥ ८ ॥

यजुरिदम्, अस्य मन्त्रस्य प्रजापति ऋर्षिर्गायत्रीच्छन्दो मधुपर्को देवता मधुपर्कस्यामिश्रणे निरुक्षयणे च विनियोगः, "सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायान्नशने० निष्कृन्तामिति (१।३।१८) अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति"(१।३।१९) इतिपारस्करोक्तेः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तत्र वर्णागमो वर्णविपर्य्ययश्चेति दन्त्यसकारस्य स्थाने तालव्यशकारश्छान्दसत्वाद्विसर्गागमश्च। ततोऽयमर्थः। मधुपर्कं प्रत्युच्यते, हे नमःश्य, हे नमस्य, नमस्कारार्ह, मधुपर्क, अवास्यायान् मिश्रयामि त्वामितिशेषः। किञ्च हे मधुपर्क, ते तव अशने त्वत्सम्बन्धिनि भोजने यत् आविद्धं यदुपहितं यद्वा ते इति सप्तम्येकवचनस्थाने व्यत्ययेन व्यत्ययो बहुलमितिपाणिनिवचनात् षष्ठ्येकवचनं तत्रैवं योजना, अशने भोजनरूपे त्वयि यदाविद्धं भोजनविषयकानन्दप्रतिबन्धकं भोज्यभोजकयोर्व्यवधायकं भोजनांशादन्यत्तृणादिकम् अमेध्यमन्यद्वस्तु वा यत्किञ्चित्त्वयि'वर्त्तते' इति शेषः। तत् भोजनांशव्यतिरिक्तममेध्यं तृणादिकं वा ते तव निष्कृन्तामि अपसारयामीत्यर्थः। यद्वा"ते" इति संबन्धवाचकषष्ठ्यन्तपदस्य व्यत्ययेन सप्तम्यन्तस्थानीयस्य वा एकत्र सद्भावत्वादपरत्रापि तेनैव निर्वाहत्वे सति द्वितीयं "ते" इति पदं त्वदिति पञ्चम्यन्तत्वेन विपरिणमितव्यं तेन त्वत् त्वत्तः सकाशान्निष्कृष्य बहिः प्रक्षिपामीत्यर्थः। अवास्यायानित्यत्र "श्यैङ् गतौ" (भ्वा०आ०) इत्यस्मादवपूर्वादाङ्पूर्वाच्च लडर्थे लोट् "व्यत्ययो बहुलमि"तिपाणिन्युक्तेः। तत्र सुप्तिङुपग्रहेत्यादि कारिकयाऽऽत्मनेपदस्थाने व्यत्ययेन परस्मैपदं तस्योत्तमपुरुषैकवचने शपि शकारपकारयोर्लोपे "मेर्नि" रितिन्यादेशे "आडुत्तमस्य पिच्च" इत्याडा-

गमे टकारलोपे शप अकारेण सह दीर्घे "एचोऽयवायावः" इत्यायादेशे बहुलमेतन्निदर्शन-मित्यादि वचनादिह तालव्यशकारस्थाने हलो व्यत्ययेन दन्त्यसकारे "बहुलं छन्दसी" ति पाणिनिवचनाच्छन्दसि सर्वविधीनां बाहुलकत्वादिह इतश्चेति इकारलोपे अवास्यायानिति पदं सिद्ध्यति । "अवस्यायान्नशने" इत्यत्र संहितायां ङमुडागमच्छान्दसो ज्ञेयः । तथा गत्य-र्थोऽप्ययं धातुरिहोपसर्गवशान्मिश्रणार्थः, "सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायानि" ति सूत्रारम्भसामर्थ्यात् । अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति इति सूत्रे चकारग्रहणान्निरुक्षयणेऽपि मन्त्रपाठोऽवसीयते, तत्र मधुपर्कदेवताकत्वादस्य मन्त्र-स्येयं व्याख्या ।

तस्य त्रिः प्राश्नातीत्यनेन मधुपर्कप्राशनस्याग्रे वक्ष्यमाणत्वात्प्राशितस्य च पदार्थस्य जाठराग्निसाहाय्येनैव जीर्णत्वसम्भवात्तदर्थप्रार्थनाऽपेक्षयाऽग्निदेवताकत्वमप्यस्य मन्त्र-स्येति केषाञ्चिन्मतं तन्मतेन व्याख्यान्तरमप्यूह्यम् । तद्यथा हे जाठराग्ने, ते तुभ्यं नमः नमस्का-रोऽस्त्वित्यर्थः । किं भूतायेत्यपेक्षायामुच्यते, श्यावास्याय "श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहितौ" इत्यभिधानात् श्यावः कपिश इत्यवगम्यते, श्यावमास्यं मुखं यस्य स श्यावा-स्यस्तस्मै श्यावास्याय कपिशमुखायेत्यर्थः । किञ्च हे जाठराग्ने, ते तव अन्नशने अद्यते-यत्तदन्नं तस्य अशनमित्यन्नाशनमिति प्राप्ते छान्दसत्वात्सवर्णदीर्घाभावे पूर्वरूपे अन्न-शनं तस्मिन् अन्नशने अन्नभोजने त्वत्संबन्धिनि अदनीयपदार्थे त्वद्भोजनार्थं समुपस्था-पितेऽस्मिन्मधुपर्के इति भावः, यत् आविद्धं संश्लिष्टम् अनदनीयं "वर्त्तते" इति शेषः । तत् ते तव सम्बन्धिनोऽस्मादन्नाशनादहं निष्क्रन्तामि निरस्यामि निष्कृष्य बहिः प्रक्षि-पामीत्यर्थः । अतः शुद्धमन्नं मधुपर्करूपं गृहाणेत्याशंसावाक्यार्थः ॥ ८ ॥

**यन्मधुनो मधव्यं परमꣳ रूपमन्नाद्यं तेनाहं मधुनो मधव्येन परमेण रूपेणा-न्नाद्येन परमो मधव्योऽन्नादोऽसानि ॥ ९ ॥**

अस्य मन्त्रस्य कुत्स ऋषिर्जगती छन्दो मधुपर्को देवता मधुपर्कप्राशने विनियोगः । हे मधुपर्क, मधुनः मकरन्दस्य पुष्परसस्य माक्षिकस्येतियावत् । मधव्यं मधुनि साधु मधव्यं माधुर्य्यं परममुत्कृष्टम् अन्नाद्यं लुप्तोपमानमेतत् अन्नाद्यमिव यथा अन्नाद्यमुपभुक्तं सद्बलादिकमादधाति तद्वत् अर्थात् व्रीह्यादिवत्प्राणधारकम् अन्नादिरसकदम्बं वा तद्वत् बलादिकाख्यं यत् त्वदीयं रूपं रूपयति प्रकाशयति देहसंघातमिति रूपं कान्ति-प्रकाशकं स्वरूपं "वर्त्तते" इति शेषः । तेन तादृशेन मधुनः मधव्येन परमेण अन्नाद्येन रूपेण अर्थात् सर्वरूपापन्नेन उक्तगुणविशिष्टेन रसेनाहमपि परमः उत्कृष्टः सर्वेभ्यो गुणा-धिकः सर्वापेक्षयाऽतीवकान्तिशाली मधव्यः रूपलावण्येनातीव मधुरः असानि भवानीत्ये-तदभिप्रायेणैव त्वदीयमदनीयमंशमश्नामीति शेषः । त्वामनुज्ञाप्य अहं भक्षयामीत्यर्थः । तेनेत्युक्ते सत्येव तद्ग्रहणत्वेऽपि यत्पुनः "मधुनः मधव्येन परमेण रूपेण अन्नाद्येन" इत्यभि-हितं तदादरातिशयद्योतनार्थमेव "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः ॥ ६ ॥

"मधुमतीभिर्वा प्रत्यृचम्" इति सूत्रकारप्रस्थानात् "मधुव्वाता०" इत्यादिभिस्तिसृभि-ऋग्भिरपि वैकल्पिकं मधुपर्कप्राशनमायाति । तदृक्त्रयं षोडशोपचारान्तर्गतपञ्चामृतस्नाने

व्याख्यातं तत्र व्याख्या द्रष्टव्या। इह तु केवलमृष्यादिकं प्रदर्श्य वैशिष्ट्यमात्रं निर्दिश्यते। अन्यत्पूर्ववदगन्तव्यम्। ऋष्यादिकञ्चेत्थं, तद्यथा–मधुव्वाता इत्यादि तिसृणामृचां गौतमऋषि र्गायत्रीछन्दोवातादयो लिङ्गोक्ता देवता मधुपर्कदेवता वा मधुपर्कप्राशने विनियोगः। दधिमधुघृतमिश्रितः पदार्थो यद्यप्यचेतनस्तथापि तत्र तदभिमानिन्या देवतायाः सत्त्वान्मधुपर्कस्य देवतात्वं ततो वक्ष्यमाणाभ्यर्थनञ्चेत्यनुसन्धेयम्। मधुपर्के यन्मधु वर्त्तते तस्य मधुनो मकरन्दस्य पुष्परसस्य माक्षिकस्येतियावत्, माधुर्य्यं मम सर्वदास्त्वित्यभिप्रायेण मधुपर्कं प्रत्युच्यते। यत् हे मधुपर्क; त्वदीयमदनीयमंशमहं प्राश्नामीति वाक्यशेषः, अतस्त्वदीयस्यादनीयांशस्य प्राशनाद्वातादयोऽपि मदर्थे मधुमन्तो भवन्त्वित्यभ्यर्थनम्। वातादिषु यन्माधुर्य्यमस्ति तत्सर्वमपि माधुर्य्यं त्वदीयमेव वर्तते, अतोऽस्मिन्मधुपर्कप्राशनावसरे इयं प्रार्थना त्वत्सविधे मया क्रियते इति भावः। शेषं स्पष्टमेव। शब्दार्थस्तु पञ्चामृतस्नानोक्त एवात्रापि॥ १०॥

**वाङ्मऽआस्येऽस्तु॥ नसोर्म्मे प्राणोऽस्तु॥ अक्ष्णोर्म्मे चक्षुरस्तु॥ कर्णयोर्म्मे श्रोत्रमस्तु॥ बाह्वोर्म्मे बलमस्तु॥ ऊर्व्वोर्म्मे ओजोऽस्तु॥ अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु॥ १०॥**

एषां मन्त्राणां प्रजापतिर्ऋषिः (अनिर्दिष्टानिच्छन्दांसि) तत्तदिन्द्रियाधिष्ठात्र्यो देवता तत्तदिन्द्रियायतनस्पर्शने विनियोगः। वाङ्मऽआस्येऽस्त्वित्येवमादिभिर्मन्त्रैर्यथालिङ्गं संमर्शनं जलेन कर्त्तव्यं, तच्चाचमनपूर्वकमेव विधेयं तदुक्तं सूत्रकृता पारस्कराचार्य्येण "आचम्य प्राणान्त्संमृशति वाङ्मऽआस्ये०–सन्तु" अथ मन्त्रार्थः। मे मम आस्ये मुखे वाक् वचनं वागिन्द्रियमस्तु वाक्शक्तिर्भवत्वित्यर्थः। तथा मे मम नसोः नासिकयोः प्राणः नासिकाप्रभवः प्राणवायुरस्तु। तथा मे मम अक्ष्णोर्नेत्रयोर्नेत्रगोलकयोश्चक्षुः चक्षुरिन्द्रियमस्तु नेत्रेन्द्रियपाटवं वार्द्धक्येऽप्यवलोकनशक्तिर्भवत्वित्यर्थः। तथा मे मम कर्णयोः श्रोत्रयोः श्रोत्रविवरयोरिति यावत् श्रोत्रमस्तु श्रवणेन्द्रियं श्रवणशक्तिरिति यावत् अस्तु भवतु मम वार्द्धक्येऽपि श्रवणसामर्थ्यमास्तामित्यर्थः। तथा मे मम बाह्वोः भुजयोः बलमस्तु भुजसामर्थ्यं भवत्वित्यर्थः। तथा मे मम ऊर्व्वोः जङ्घयोः ओजोऽस्तु गमनसामर्थ्यं भवत्वित्यर्थः। तथा मे मम अङ्गानि अनुक्तान्यपि शिरःप्रभृतीनि मम गात्राणि अरिष्टानि सन्तु। रिषतिर्हिंसार्थः रेषणं रिष्टिः हिंसा नास्ति रिष्टिर्येषां तान्यरिष्टानि अहिंसितानि व्याध्यादिभिरनुपद्रुतानि आपद्रहितानि वा भवन्त्वित्यर्थः। तथा मे मम तनूः (अत्र "वाछन्दसी"ति पूवसवर्णदीर्घश्छान्दसः) तन्व इति भावः। मम तन्वः शरीराणि अर्थाच्छरीरावयवाः तन्वा शरीरेण सह सन्तु अरिष्टा इति शेषः। मदीयास्तन्वः शरीरावयवा अपि सर्वदा व्यध्यादिभिरनुपद्रुता भवन्त्वित्यर्थः। तत्तदिन्द्रियाधिष्ठात्र्याः देवतायाः प्रसादान्मम मुखाद्यङ्गेषु तत्तदिन्द्रियपाटवानि सर्वदा तिष्ठन्तु, यैरहं यावज्जीवं वार्द्धक्येऽपि पारतन्त्र्यं न प्राप्नुयामीत्याशंसावाक्यार्थः॥ ११॥

**माता रुद्राणां दुहिता वसूनाᳪस्वसादित्यानाममृतस्य नाभिः।**
**प्रणुवोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट॥**

मम चामुष्य च ( उभयोः ) पाप्मा हतः ।
ॐ उत्सृजत तृणान्यत्तु ॥ १२ ॥

अस्य मन्त्रस्य ब्रह्मऋषिस्त्रिष्टुप्छन्दो गौर्देवता मधुपर्के गवाभिमन्त्रणे विनियोगः । "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । तत्र "प्र" इत्ययमुपसर्गो वोचमिति क्रियापदेन सह संबध्यते । तद्यथा–हे अर्हणाकर्तृपुरुषाः, युष्मान्प्रत्यहमेवं प्रवोचं प्रब्रवीमीत्यर्थः । "नु" इति वितर्के, सु विचार्य्य कथयामीत्यर्थः । "नु" इत्यस्य प्रोपसर्गपूर्वकत्वादिह णत्वम् । तथा प्रवोचमित्यत्र व्यवहितोपसर्गसम्वन्धः क्रियापदेन सहाऽस्ति "छन्दसि परेपि, व्यवहिताश्च" इति पाणिनिवचनात् । वोचमिति "ब्रूञ् व्यक्तायां वाचि ( अ० उ० प० )" इत्यस्मादिह लडर्थे लुङ्युत्तमपुरुषैकवचने रूपम् । लडर्थे लुङ् चात्र, "छन्दसि लुङ्लङ्लिटः" इति पाणिन्युक्तेः । अडभावश्चात्र छान्दसत्वादेव "बहुलं छन्दस्यमाङ्योगेऽपि" इति पाणिनेः सूत्रप्रस्थानात् । किं प्रब्रवीमीत्यपेक्षायामुच्यते । यत इयं गौः रुद्राणामेकादशसङ्ख्यकानां गणदेवविशेषाणां माता जननीस्थानापन्ना रुद्रार्चनादौ स्वीयदुग्धादिप्रदानेन रुद्राणां मातृवत्पालयित्रीत्यर्थः । "पयोमिश्रं चरुं निर्वपेत्पशुकामः" इति श्रुतेः रुद्राभिषेकप्रसङ्गे काम्यद्रव्यं प्रकृत्य रुद्रचिन्तामणिमहाकालसंहितादौ "दध्ना च पशुकामाय श्रिया इक्षुरसेन च । मध्वाज्येन धनार्थी च मुमुक्षुस्तीर्थजलेन च ॥ राजा राज्यमवाप्नोति शीघ्रमाम्ररसेन च । पुत्रार्थी पुत्रमाप्नोति पयसाञ्चाभिषेचनात् ॥" इत्यादिदर्शनाञ्च । तथा वसूनामष्टसङ्ख्यकानामन्येषां गणदेवविशेषाणां दुहिता कन्या दुहितृस्थानीया दुहितृवत्पालनीयेत्यर्थः, तत्र इयं गौरस्तीतिशेषः । तथा आदित्यानां द्वादशसङ्ख्यकानामितरेषाञ्च गणदेवविशेषाणां स्वसा भगिनी भगिनीस्थानीया भगिनीवदनुकम्प्येत्यर्थः । एते रुद्रवस्वादित्या गणदेवा इत्यन्यत्राप्युक्तं यथा "रुद्रा एकादश ख्याता वसवोऽष्टौ तथा स्मृताः । आदित्याद्वादश प्रोक्ता विश्वेदेवा दश स्मृताः ।" इति । तेषां गणदेवानां मध्ये केषाञ्चिद्देवविशेषाणां माता, केषाञ्चिच्च देवविशेषाणां दुहिता, केषाञ्चिच्च देवविशेषाणां स्वसा, इयं गौरस्तीत्युक्तं भवतीत्यर्थः । तथा अमृतस्य देवानां भक्षस्य अमृतस्य प्रसिद्धस्य क्षीरस्य वा नाभिः आश्रयः उत्पत्तिस्थानमित्यर्थः । एतावता सर्वथाऽहिंस्येतिभावः । अत एव हे अर्च्चकपुरुषाः, युष्मानेवं प्रब्रवीमि यत् चिकितुषे चेतनावते जनाय पुम्मात्राय मह्यं मां तोष्टुमीदृशीं गां यूयं मा वधिष्ट माङुपपदत्वादेव "माङि लुङ्" इति सर्वलकारापवादत्वेन इह लुङ्लकारो बोध्यः । वस्तुतस्तु लोडर्थ एवेहाभिप्रेतस्तेनायमर्थः । ईदृशीं गां यूयं न हिंसत मामुद्दिश्य गवालम्भनरूपां हिंसां मा कुरुतेत्यर्थः । अत्राऽपि व्यवहितोपसर्गसम्बन्धः पूर्ववदवगन्तव्यः । ईदृशीं गामित्युक्तं, तत्र कीदृशीं गामित्यपेक्षायामुच्यते । अनागामनागसमनपराधिनीमित्यर्थः । तथा अदितिं दितिः खण्डनं हिंसा सा नास्ति यस्याः सा अदितिस्तामदितिमदीनामखण्डितामहिंस्यामित्यर्थः, वृथात्वेन गोवधस्योपपातकहेतुत्वात् । अदितिं देवमातरं वा "अदितिरदीना देवमाता" इति यास्कोक्तेः, "अदितिर्देवमातास्यादि"त्यभिधानाच्च । देवमातृत्वञ्चास्या गोः देवेभ्योऽर्थाय दध्यादिप्रदानादेव, तच्चौपचारिकम् "ऐन्द्रं दध्यैन्द्रं पयो माहेन्द्रं वा भवति" इत्यादौ दर्शेष्टयामिन्द्रोद्देशतया गव्यदधिपयसोरभिधानं श्रूयते । अन्यत्राऽपि इष्टि-

मात्रे पुरोडाशनिर्म्माणप्रसङ्गे "पिष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यम्" इति कात्यायनोक्तेः पिष्यमाणेषु तण्डुलेषु महीनां पयोऽसीत्याज्यं निर्वपत्यन्यो ब्रह्मेति सूत्रकाराभिप्रायः। महीतिगोनामेति निघण्टुः। हे आज्य, त्वं महीनां गवां पयोऽसि क्षीरमसि क्षीरोत्पन्नत्वाद्घृतमपि पयःशब्देनोच्यते, इति महीनां पयोऽसीति मन्त्रस्यार्थः। चातुर्मास्येऽप्येवं श्रूयते, वैश्वदेव्यामिक्षा भवतीति प्रकृत्य 'विश्वेभ्यो देवभ्यऽआमिक्षां वाजिभ्यो वाजिनम्' इत्यादि। तान्येतानि दध्यादीनि तस्या गोर्वीर्य्याण्युच्यन्ते "गोवैं प्रतिधुक् तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनम्" इति श्रुतेः। प्रतिधुक् तत्कालदुग्धम्, शृतमुष्णं तत्, शरो दुग्धमण्डः, दधि तु प्रसिद्धमेव, मस्तु दधिरसः, आतञ्चनं दधिपिण्डः, नवनीतमेतदपि प्रसिद्धमेव, तथा घृतं तदपि सुप्रसिद्धमेव, आमिक्षा स्फुटितदुग्धम्, वाजिनमामिक्षाजलम्, इति श्रुत्यर्थः। देवतोद्देशतया दध्यादिदशपदार्थप्रदानत्वेनैवात्र देवमातृत्वोपचारोऽभिहितः। एवम्भूतां गां मदर्थं मा वधिष्ट न हिंसत किन्तु "नत्वेवामाꣳसोऽर्घः स्यादि"तिवचनाच्छास्त्रीयविधिमुद्दिश्य गोपशुं विधातुं चेत्तर्हि हिंसतेतितात्पर्य्यार्थः। तदन्ते च "मम चामुष्य च पाप्मानꣳ हनोमि" इति प्रयोगः कार्य्यः। "मम चामुष्य च पाप्मानꣳ हनोमीति यद्यालभेत"इति पारस्करवचनात्, इतित्वालम्भपक्षेऽवगन्तव्यम्। पक्षेस्मिन्मन्त्रांशार्थस्त्वेवम्, तथाहि—अहमर्हणीयः मम च अमुष्य च (अमुष्येति षष्ठ्यन्तेन यजमाननाम ग्राह्यमित्यन्यत्राप्यभिहितत्वादिहापि अर्हणाकर्त्तुर्यजमानस्य नाम गृहीतव्यम्, अमुष्य अमुकनाम्नो यजमानस्य (अमुकशर्मणोऽमुकवर्मणोऽमुकगुप्तस्येति वा) अर्हणाकर्त्तुः पाप्मानं हनोमि इह "व्यत्ययो बहुलं, बहुलं छन्दसी"त्यादिपाणिन्युक्तेर्विकरणव्यत्ययः, तत्र अन्तर्भूतो णिजर्थोऽप्यूह्यः। हन्मि स्वस्य यजमानस्य च पापमर्हणाकर्तृयजमानपुरुषद्वारा घातयामि नतु स्वार्थं गामित्यभिप्रायः।

"अथ यद्युत्सिसृक्षेन्मम चामुष्य च पाप्मा हतः ॐ उत्सृजत तृणान्यत्त्विति ब्रूयादि"ति सूत्रारम्भसामर्थ्यादुत्सर्गपक्षे तु मागामनागामदितिं वधिष्टेत्युक्त्वा तदन्ते "मम चामुष्य च पाप्मा हतः ॐ उत्सृजत तृणान्यत्तु" इति प्रयोगो विधेयः। अस्मिन्पक्षे मन्त्रांशार्थस्त्वेवम्, तथाहि–अहमर्हणीयः मम च अर्हणीयस्य अमुष्य च अर्हणाकर्त्तुश्च (अमुकनाम्न इत्यादिपूर्ववदिहापि योज्यम्) पाप्मा हतः पापं हतम् ॐ इति स्वीकारे हे अर्हणाकर्तृपुरुषाः, यूयमिमां गामुत्सृजत "अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्नतु" इति याज्ञवल्क्यादिस्मृतिषु निषेधदर्शनान्मुञ्चतेत्यर्थः। इति ॐ मोक्तव्येयं गौरित्यहं स्वीकरोमीत्यर्थः। तदनन्तरं तृणान्यत्तु मुक्ता सती इयं गौस्तृणानि खादत्वित्यभिप्रायः।

"नत्वेवामाꣳसोऽर्घः स्यादि"ति वचनात्, "अधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयात्" इति सूत्रारम्भसामर्थ्याच्च यज्ञविवाहयोरेवाऽऽलम्भस्यावश्यकत्वेन विधानावगतेः कलौ च गवालम्भस्यैव प्रतिषेधाद्गोप्रतिनिधित्वेन पश्वन्तरमग्नीषोमीयादि स्मार्त्तं पायसं वा विधेयमिति राद्धान्तः॥ १२॥

**जरां गच्छ परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावा॥ शतं च जीव शरदः सुवर्च्चा रयिं च पुत्राननु संव्ययस्वायुष्मतीदं परिधत्स्व वासः॥ १३॥**

अस्य मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दस्तन्तवो देवताः कन्यायाः परिधानीयवासः-परिधापने विनियोगः। कन्याया वस्त्रपरिधानकर्त्रीत्वेऽपि सति मन्त्रपाठे वरस्यैव कर्तृत्वम्, "अथैनां वासः परिधापयति जरां गच्छ० परिधत्स्व वासः" इति पारस्करवचनात् "आयुष्मतीदं परिधत्स्व वासः" इति मन्त्रलिङ्गाच्च। अथ मन्त्रार्थः। हे आयुष्मति! हे कन्ये, त्वं जरां गच्छ निर्दुष्टं वार्द्धक्यं मया पत्या सह प्राप्नुहि चिरजीविनी भवेत्यर्थः। एतेन सर्वदा तव विद्यमानत्वमेव मयाऽऽशास्यत इति भावः, "प्रियाविरहजं दुःखं जानात्येको हि राघवः" इत्युक्तेः। तथा च हे कन्ये, त्वं वासः परिधत्स्व परिधेहि कदाचिदपि त्वं सधवोपलक्षकरक्तादिशोभनवस्त्रविमुक्ता मा भवेत्याशयः। तथा एतद्वस्त्रपरिधानेन आकृष्टीनाम् अभिशस्तिपावा भव, आकृष्यन्ते कामादिभिरित्याकृष्टयो मनुष्यास्तेषां कृते अभिशस्तिपावा भव अभिशस्तिर्वैकल्यनिमित्तमभिशापादि तस्मात्पातीति अभिशस्तिपावा वैकल्यनिमित्ताद-भिशापात्पापात्पालयित्री भवेत्यर्थः। अनेन तव सार्वदिकपातिव्रत्यं मयाऽऽशास्यते। साध्वीनां नामस्मरणेन पापनाशनमित्यन्यत्राऽप्युक्तं "अहिल्या०—पञ्चकन्याः स्मरेन्नित्यं महापातकनाशनम्" इत्यादि। यद्वा अत्र प्रथमार्थे षष्ठी "सुपां सुपो भवन्ती"ति वचनात्। आकृष्यते मनो यया सा आकृष्टिः रूपलावण्येन अतीव सुन्दरी भवेत्यर्थः। अत एव अभिशस्तिपावा च भवेत्यनुषङ्गः। शंसतिर्यद्यपि हिंसार्थस्तथापि अभ्युपसर्गयोगादिह शयनार्थः "अभिशस्तिः शयनमि"ति क्षीरस्वामी। शयनं शय्या तल्पमिति यावत्, तत्र पावा ( पूञ् पवने इत्यस्य रूपम्। ) पवित्रा भवेत्यर्थः। इत ऊर्द्धं यावज्जीवनं शोभनवस्त्रपरिधानस्याशास्यमानत्वात्सत्यवसरे कदाचिच्छोभनवस्त्रपरिधानेनातीव कान्तिमत्यास्तवावलोकनेन मदीयकाम-चेष्टाया अवश्यसम्भावित्वात्तदानीं सम्भोगप्रतिबन्धकरजस्वलादिव्युदासार्थमभिशस्तिपावा भवेत्युच्यते मया। नोपगच्छेद्रजस्वलामित्यादिस्मृतिवाक्येन रजस्वलासम्भोगस्य प्रतिषेध-दर्शनादिति भावः। यद्वा अभिपूर्वः शंसतिर्गर्हायां वर्त्तते, इति यास्कः। तेन अभिशस्ति-र्गृहिणां परस्परविरोधेन निन्दनं तस्याः पातीति अभिशस्तिपावा भव विपत्तौ बुद्धिप्रदानेन निन्दाजनककार्य्यजातेः सकाशात्पालयित्री भवेत्यर्थः।"रतौ वेश्या गृहे दासी भोजने जननी समा। विपत्तौ बुद्धिदात्री च सा भार्या भुवि दुर्लभा" इत्यादिवचनेन विपत्तौ धर्मपत्न्याः बुद्धिदात्रीत्वदर्शनादित्याशयः। किं च हे कन्ये, त्वं शतं शरदः जीव ( शतशब्दस्य बहुत्व-वाचकत्वेऽपि औत्सर्गिकैवचनत्वादिहैकवचनश्रुतिः ) शतपरिमितानि वर्षाणि त्वं जीवेत्यर्थः। शतवर्षपर्य्यन्तं तवायुर्भवत्विति भावः। "हायनोऽस्त्री शरत्समाः" इत्यमरसिंहोक्तेः शर-च्छब्दः संवत्सरवाचकः। संवत्सरो वत्सरोऽब्दो वर्षमित्यादयः सर्वेऽप्येकपर्य्यायाः। के-चिदत्र शरद इति षष्ठ्यन्तं वर्णयन्ति। तत्पक्षे हे कन्यके, त्वं शरदः शतं जीव वर्षाणां शतं प्राणिहि शतवर्षपर्य्यन्तं जीव शतायुषी भवेत्यभिप्रायोऽत्रापि पूर्ववदेवावगन्तव्यः। तथा सुवर्चाः शोभनदीप्तियुक्ता पातिव्रत्यतेजसोपेता भूत्वा रयिं धनं पुत्रांश्च अनु संव्ययस्व उत्पाद्य राशीकुर्वित्यर्थः। हे आयुष्मति, कन्ये, इदं वासः मयाऽऽनीतं वस्त्रं त्वं परिधत्स्व परिधेहि। एतद्वस्त्रपरिधानेन त्वं यावदुक्तसमस्तमन्त्रोक्ताभिप्रेतफलोपबृंहिता सती मया पत्या सह यावज्जीवं सुखेन क्रीडिष्यसीत्यभिप्रायः। जरां गच्छ परिधत्स्व वास इत्यत्र परिधत्स्व वास इत्युक्ते पुनरिह 'आयुष्मतीदं परिधत्स्व वासः' इति पुनरुक्तिरादरातिशयद्योतनार्था, "अभ्यासे भूयांसमर्थम्मन्यन्ते" इति यास्कोक्तेः॥ १३॥

याऽअकृन्तन्नवयन्याऽअतन्वत याश्च देवीस्तन्तूनभितोऽततन्थ।
तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः॥१४॥

अस्य मन्त्रस्य प्रजापतिर्ऋषिर्गायत्री छन्दो वस्त्रविधात्र्यो देव्यो देवताः कन्याया उत्तरीयवस्त्रपरिधापने विनियोगः, "अथोत्तरीयं याऽअकृन्तन्०–परिधत्स्व वासः" इति पारस्करवचनात्। हे आयुष्मति! हे कन्ये, या देवीः या देव्यः तन्तून् सूत्राणि अकृन्तन् कर्त्तितवत्यः। तथा याश्च देव्यः तन्तून् अवयन् वीतवत्यः तन्तुसन्तानं कृतवत्यः ओतवत्य-इत्यर्थः। तथा याश्च देव्यः तन्तून् सूत्राणि अतन्वत प्रोतवत्यः तिर्यक् तन्तून् विस्तारितवत्य इत्यर्थः। तथा चकारात् या देव्यः ओतान् प्रोतांश्च तन्तून् अभितः उभयपार्श्वयोरपि अततन्थ (अत्र पुरुषव्यत्ययश्छान्दसः) अततन् तेनुः तुरीवेमादिव्यापारेण प्रथितवत्य इत्यर्थः। ताः देवीः तत्तत्सामर्थ्यवहास्तत्तत्सामर्थ्यदात्र्यश्च ता देव्यः त्वा त्वां जरसे दीर्घकालपर्य्यन्तं निर्दुष्टजीवनाय संव्ययस्व (इहोपग्रहपुरुषवचनव्यत्ययश्छान्दसः) संव्ययन्तु स्वकल्पितेनानेन वस्त्रेण त्वामाच्छादयन्तु, अर्थात्त्वां स्वस्वव्यापारद्वारा सम्पादितं रूपवदिदं वासः परिधापयन्त्वित्यभिप्रायः। अत एवमुच्यते हे आयुष्मति, हे कन्यके, ताभिः सम्पादितं परिधापनीयञ्च इदमेतादृशं वासः परिधत्स्व परिधेहि उत्तरीयत्वेन वृणीष्वेत्यर्थः। देवीरिति प्रथमाबहुवचने "वा छन्दसी" तिदीर्घे रूपम्। अकृन्तन्निति "कृती छेदने" इत्यस्य लङि प्रथमपुरुषबहुवचने रूपम्। अवयन्निति "वेञ् तन्तुसन्ताने" इत्यस्य लङि प्रथमपुरुषबहुवचने रूपम्। अतन्वतेति "तनु विस्तारे" इत्यस्य लङि आत्मनेपदे प्रथमपुरुषबहुवचने रूपम्। अततन्थेति "तनु विस्तारे" इत्यस्यैव लङि परस्मैपदे प्रथमपुरुषबहुवचनस्थाने "सुपां सुपो भवन्ती"ति वचनान्मध्यमपुरुषबहुवचनादेशे "व्यत्ययो बहुलमि"ति विकरणव्यत्ययेन शपि "बहुलं छन्दसी" तिबाहुलकाच्छपः श्लौ द्वित्वेऽभ्यासकार्य्येऽडागमे च रूपम्। संव्ययस्वेत्यत्र सम्पूर्वस्य "व्येञ् संवरणे" इत्यस्य लोटि परस्मैपदीयप्रथमपुरुषबहुवचनस्थाने "तिङां तिङो भवन्ती"ति आत्मनेपदीयमध्यमपुरुषैकवचनम्॥१४॥

परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि।
शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये॥१५॥

अस्य मन्त्रस्याथर्वण ऋषिर्यजुष्ट्वादनिर्दिष्टं छन्दः लिङ्गोक्ता देवता वासःपरिधाने विनियोगः। परिधास्यै, इति परिपूर्वाद्दधातेर्बहुलंछन्दसीति सर्वविधीनां बाहुलकत्वादिह लडर्थे लेट्। तस्योत्तमपुरुषैकवचने आत्मनेपदे "सिब्बहुलं लेटी"ति सिप्, सिप इकारपकारयोरित्संज्ञात्वे तयोर्लोपे च ततो "व्यत्ययो बहुलमि"ति विकरणव्यत्ययेन श्यन्प्रत्ययश्च। श्यनः शकारनकारयोरित्संज्ञात्वे तयोर्लोपे च कृते "टित आत्मनेपदानां टेरे" इति इट एत्वं विधाय पश्चात् "वैतोऽन्यत्रे"ति लेट एकारस्यैकारश्चेति बोद्धव्यम्। अनया शब्दसाधनप्रणाल्या परिधास्यै इति परिपूर्वकस्य दधातेर्विकरणव्यत्ययेनात्मनेपदे लेडुत्तमपुरुषैकवचने रूपमिति

वक्तुं शक्यते। एवं यशोधास्यै इत्यत्रापि रूपसाधनप्रकारोऽवगन्तव्यः। तत्रानुपसर्गपूर्वस्यैव दधाते रूपमित्यूह्यम्। केवलं तत्र यश इतिपदं कर्मत्वेनानुसन्धेयम्। तथा लेट्लकारश्च लृडर्थे इत्येव विशेषः। दीर्घायुत्वायेति चतुर्थ्यन्तसाहचर्यादेव ये पुनः "परिधास्यै" अनेकशु-भवस्त्रपरिधानाय तथा "यशोधास्यै" कीर्त्त्याधानाय इत्येवं चतुर्थ्यन्तत्वेनानुवर्णयन्ति त एव प्रष्टव्या यत् "परिधास्यै" "यशोधास्यै" इत्युभयत्र सर्वनामसंज्ञामन्तरेणापि कथं स्याडागम इति। नहि स्याडागमं विना केनापि प्रकारेण "परिधास्यै, यशोधास्यै" इति पदं सिध्यति। परिधासी, यशोधासी, इति चेच्छब्दस्तर्हि नदीत्वे सत्याडागमे तादृशं रूपं चतुर्थ्ये-कवचने भवितुमर्हति। किन्तु नहि तत्रैवंविधः कश्चित्प्रत्ययो वा श्रूयते, तस्मात् 'परिधास्यै' इत्यस्य वस्त्रं परिदधे, 'यशोधास्यै' इत्यस्य कीर्त्तिं धास्ये, इत्येतावानेवार्थः साधुतरोऽवसीयते। एकत्र वस्त्रपरिधानमन्यत्र यशोधारणञ्च स्पष्टमायाति। तत्रैकं साधनमपरञ्च साध्यमर्थाद्वस्त्रं परिदधे, एतद्वस्त्रपरिधानेन यशोऽपि धास्ये एतावतैवोभयोः साध्यसाधनभावोऽपि प्रतीयत एव। वस्त्रधारणेन सम्मानमवस्त्रस्य चापमानमित्यन्यत्रापि श्रूयते। यथा क्षीरसमुद्रमथनावसरे तदैव लक्ष्म्याः स्वयंवरे "किं वाससेत्थं न विचारणीयं वासो हि मूलं किल योग्यतायाः। पीताम्बरं वीक्ष्य ददौ तनूजां चर्म्माम्बरं वीक्ष्य विषं समुद्रः॥" इति। वस्त्रादिप्रशंसापरं वाक्यान्तरं च यथा—"विद्यया वपुषा वाचा वस्त्रेण विभवेन च। वकारैः पञ्चभिर्युक्तो नरः प्राप्नोति गौरवम्॥" इति। अत इदानीमपि लोके अयोग्यस्याऽपि पुरुषस्य शोभनवस्त्रवत्त्वे सति प्रतिष्ठा वस्त्रहीनस्य च नरस्य योग्यतासत्त्वेऽप्यप्रतिष्ठेत्युभयं दरीदृश्यते। अतः श्रुत्या साधूक्तं "परिधास्यै यशोधास्यै" इति। तदिदं यजुः "अतिरिक्तम्—०" इति कारिकया हीन-पदान्यध्याहृत्य व्याख्यायते। तद्यथा हे वासोदेवते, अहं परिधास्यै परिदधे इदं वास इति शेषः। एतद्वस्त्रपरिधानं करोमीत्यर्थः। अनेन वस्त्रपरिधानेन तव किं स्यादिति चेदत्रोच्यते। यशोधास्यै यशः परिधास्ये अस्य वस्त्रस्य परिधारणेनेति शेषः। एतद्वस्त्रपरिधानेन यशस्वी स्यामिति भावः। यशोऽर्थमिदं वासः परिदधे इत्यभिप्रायः। नैतावदेव प्रयोजनं वस्त्रपरिधानस्य, किन्तर्हीत्याशङ्क्य एतद्वस्त्रपरिधानस्य प्रयोजनान्तरञ्च प्रदर्श्यते। तद्यथा—दीर्घायुत्वाय इदं वस्त्रं परिदधे इति शेषः। (दीर्घञ्च तदायुरिति दीर्घायुस्तस्य भावो दीर्घायुष्ट्वं तस्मै दीर्घायुष्ट्वायेतिप्राप्ते षकारलोपश्छान्दसो बोद्धव्यः) दीर्घायुत्वाय दीर्घायुष्ट्वाय चिरजीवनाय च वस्त्रं परिदधे चिरकालपर्य्यन्तं निर्दुष्टजीवनार्थमप्येतद्वस्त्रपरिधानमिति भावः। वस्त्राभावे स्वदैन्येनात्मग्लानेः सद्भावत्वादात्मनिन्दाकरणादिनाऽऽयुषः परिक्षीणत्वेऽल्पायुष्ट्व-सम्भावनया तन्निरासार्थमिदमुक्तं भवति यत् "दीर्घायुत्वाय इदं वस्त्रं परिदधे" इति। यद्वा वस्त्रहीनस्य दैन्यजीवनमप्यजीवनमेव। तदिदमन्यत्राप्युक्तं—"तदेव जीवनं मन्ये विना दैन्येन जीवनम्" पद्यांशेऽस्मिन् यत्पदाध्याहारेणार्थयोजना "तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः। उदाहृते तु यच्छब्दे तच्छब्दः स्यादुदाहृतः॥" इति योगियाज्ञवल्क्य-वचनात्। इति हेतोर्दैन्यजीवनं मम कदाचिदपि न स्यादित्यभिप्रायेण इह एवमुक्तं यत् "दीर्घायुत्वाय इदं वस्त्रं परिदधे" इति। अपि चान्यत्प्रयोजनमप्यस्ति वासःपरिधानस्य, तदुच्यते "रायस्पोपम्" अत्र सुपां सुपो भवन्तीति चतुर्थ्यर्थे द्वितीया रायस्पोषम् अर्थात् रायस्पोपाय धनपुष्ट्यै च इदं वासः परिदधे एतद्वस्त्रपरिधानेन मम धनवृद्धिरप्य-स्त्वित्यभिप्रायः। किञ्च हे वासोदेवते, त्वत्प्रसादादहं जरदष्टिरस्मि 'अस्मि' इत्याशीर्लि-

ङर्थे लट् जरामश्नुते व्याप्नोतीति जरदष्टिः यद्वा जरन्ती जरां प्राप्ता अष्टिः शरीरं यस्य स जरदष्टिः वृद्धशरीरोपबृंहितः आयुःपरिपाकवानित्यर्थः, त्वत्प्रसादादहं तथा भूयासमिति भावः। तथा त्वत्प्रसादादेव अहं पुरूचिर्भूयासमितिशेषः, "पुरु" इति बहुनामेति निघण्टुस्तस्य छान्दसो दीर्घः। "उच समवाये" इत्यस्य उचः समवायः संयोग इति यावत्। पुरुभिर्बहुभिः पुत्रधनादिभिरुचः संयोगोऽस्याऽस्तीति पुरुचिः (अस्त्यर्थे इप्रत्ययः) ततः पुरुचिशब्दात्प्रथमैकवचने सकारस्य रुत्वे रेफस्य रेफे परे लोपे च कृते "ढ्रलोपे०" इति दीर्घे पुरूची रायस्पोषमभि संव्ययिष्ये इत्येवं मन्त्रपाठोऽवगन्तव्यः। हे वासोदेवते, त्वत्प्रसादादहं बहुपुत्रधनादिभिर्युक्तो भूयासमिति हेतोस्त्वत्संबन्धि इदं वासः अहं परिदधे इत्यभिप्रायः। एतावद्भिः प्रयोजनैः अभि संव्ययिष्ये (अत्र लडर्थे लृट् व्यत्ययो बहुलमिति पाणिन्युक्तेः।) अभि सर्वतो भावेन संव्यये सन्धारये इदं वास इति शेषः। "परिधास्यै" इत्युक्ते पुनरिह धात्वन्तरेण तदेवार्थस्योक्तत्वादादरातिशयो द्योत्यते। एतदभिप्रायेण यास्केनाभिहितं निरुक्तशास्त्रे "अभ्यासे भूयांसमर्थं मन्यन्ते" इति। किंच हे वासोदेवते, त्वदीयैतद्वस्त्रपरिधानसंबन्धेनाहं शतं शरदो वर्षाणि जीवामि (अत्र लृड्विषये लट्) जीविष्यामीत्यर्थः। एतत्सर्वं त्वत्प्रसादादेव मम स्यादित्यभिप्रायेण हे वासोदेवते, त्वदग्रे वासःपरिधानस्य सर्वोऽप्यभिप्रायो मया दर्शित इति, अतो यावदुक्तसमस्तमन्त्रोक्ताभिप्रायो यथा सफलतामियात्तथा त्वयावश्यमेव यतितव्यं त्वदीयप्रयत्नेन सर्वमपि मम स्यादित्याशंसावाक्यार्थः॥ १५॥

यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती।

यशो भगश्च माविदद्यशो मा प्रतिपद्यताम्॥ १६॥

अस्य मन्त्रस्याथर्वण ऋषिर्यजुष्ट्वादनिर्दिष्टं छन्दः लिङ्गोक्ता देवतोत्तरीय वासःपरिधाने विनियोगः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथा हि-हे वासोदेवते, अहं त्वामनुज्ञाप्य इदमुत्तरीयं वासः परिदधे इति वाक्यशेषः। अतो मा मां द्यावापृथिवी द्यावापृथिव्यौ यशसा आच्छादयेतामिति शेषः। किञ्च इन्द्राबृहस्पती च मा मां यशसा आच्छादयेतामित्यनुषङ्गः। इन्द्रः त्रिलोकेशः, बृहस्पतिः इन्द्रपुरोहितः देवगुरुरिति यावत्, तावुभावपि मां यशसाऽऽच्छादयेतामित्यर्थः। किञ्च यशो भगश्च मा माम् अविदत् अविन्दत् विन्दत्वित्यर्थः। ("विद्लृ लाभे तु० उ० प०") इत्यस्य लङि प्रथमपुरुषैकवचने रूपम्। अत्र लोडर्थे लङ् बोध्यः, "छन्दसि लुङ्लङ्लिटः" इति पाणिन्युक्तेः 'आगमशास्त्रमनित्यमि'ति वचनादिह नुमागमाभाव इति चानुसन्धेयम्। जीवितस्य पुरुषस्य गुणोत्कीर्त्तनं यशः, तथा भगः सौभाग्यं च तदुभयं मां प्राप्नोत्वित्यभिप्रायः। किञ्च हे वासोदेवते, त्वत्प्रसादात् यशो मा प्रतिपद्यताम् 'प्रति' इत्ययमुपसर्गोऽत्र "अप" इत्युपसर्गस्यार्थेऽवगन्तव्यः, ततोऽयमर्थः मत्तो यशो माऽपपद्यतां माऽपगच्छतु मयि सर्वदा तिष्ठत्वित्यर्थः॥ १६॥

समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ।

सं मातरिश्वा सं धाता समुदेष्ट्री दधातु नौ॥ १७॥

अस्य मन्त्रस्याथर्वण ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता वधूवरयोः परस्पराऽभिवीक्षणपूर्वकमैत्रीकरणे विनियोगः, "अथैनौ समञ्जयति समञ्जन्त्वि"त्यादिपारस्करोक्तेः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। मन्त्रेऽस्मिन् समित्युपसर्गावृत्त्या क्रियापदाभ्यावृत्तिश्च सर्वत्रानुसन्धेया। तथा व्यवहितोपसर्गसंबन्धश्चात्र, तेन "सम्" इत्युपसर्गो दधात्विति क्रियापदेन सह संबध्यते। "छन्दसि परे, व्यवहिताश्चे"तिपाणिन्युक्तेः। तथाहि–कन्यां प्रति वरो वक्ति, हे कन्ये ! नौ आवयोः हृदयानि हृदयादीनि मनोऽन्तानि सर्वाणि इन्द्रियाणि अथवा "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरसिंहोक्तेः हृदयानि प्रसिद्धान्येव मनांसि तद्धर्मान् वा सङ्कल्पादीन् विश्वेदेवाः सर्वे देवाः समञ्जन्तु गुणातिशयाऽऽधानेन संस्कुर्वन्त्वित्यर्थः। किञ्च हे कन्ये, आपः अवधिष्ठात्र्यो देवताश्च नौ आवयोः हृदयानि समञ्जन्त्वित्यनुषङ्गः। सम्यगेकीकुर्वन्त्वित्यर्थः। तथा सति जलेनोत्सर्गपूर्वकं कन्यादानं सफलं स्यादिति भावः। तथा मातरिश्वा मातरि अन्तरिक्षे श्वसिति निःश्वासवच्चेष्टां करोतीति मातरिश्वा अनुकूलो वायुः आवयोः प्राणयोः नौ आवां सन्दधात्वित्यनेन सम्बन्धः। मम प्राणे त्वां तव प्राणे मामेवं प्रकारेण नौ आवां स्थापयत्वित्यभिप्रायः। तथा धाता दधाति धारयति सर्वमिति धाता अनुकूलः प्रजापतिरिति यावत्। सोऽपि नौ आवां सन्दधातु सन्तानोत्पादनकर्मणीतिशेषः। आवयोः परस्परानुकूल्यं विधाय नौ आवां सन्तानोत्पादनसमर्थौ करोत्विति भावः। तथा उदेष्ट्री उत्कृष्टम्भोगजातमिच्छतीति उदेष्ट्री इच्छाकर्त्री कामाधिष्ठात्री देवता यद्वा दिशतीति देष्ट्री उ इत्यप्यर्थे धर्माद्युपदेशकर्त्री वाग्देवतापि नौ आवां संदधातु सम्यक् प्रकारेण स्थापयतु सर्वेषु गार्हस्थ्यधर्म्मेष्विति शेषः। सर्वकार्य्येषु सर्वधर्म्मेषु च आवयोर्हृदयानि सुस्थिराणि कर्त्तुमावामन्योन्यासक्तौ करोत्वित्यर्थः। उदेष्ट्रीत्यत्र उत्पूर्वादिच्छतेः केवलं दिशतेर्वा तृच्प्रत्ययः। तत्रेच्छतेस्तृच्पक्षे "तीषसहलुभरुषरिषः" इति इटो विकल्पविधानादिड्भावपक्षेऽपि छान्दसत्वादिह इड् न भवति। ततो देवताभिप्रायेण स्त्रीत्वविवक्षायां ङीप्प्रत्ययोऽनुसन्धेयः॥ १७॥

कोऽदात्कस्माऽअदात्कामोऽदात्कामायादात्।
कामो दाता कामः प्रतिग्रहीता कामैतत्ते॥ १८॥

अस्य यजुर्मन्त्रस्य प्रजापतिर्ऋषिरनिर्दिष्टं छन्दः कामो देवता कन्यारूपदानद्रव्यग्रहणे विनियोगः, "कोऽदादित्यन्यदिति" कात्यायनोक्तेः। वरोऽनेन मन्त्रेण पित्रा प्रत्तां कन्यां प्रतिगृह्णाति। तत्र "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। दातुर्दानाभिमानव्युदासार्थं स्वस्य च प्रतिग्रहजन्यदोषपरिहारार्थं देहेन्द्रियात्मसङ्घाते इदानीमत्रानेन कामं विविनक्ति। तद्यथा–कोऽदात् को मनुष्यो दत्तवानित्यर्थः, देयद्रव्यमितिशेषः। तथा कस्मै मनुष्याय अदात् दत्तवान्, देयद्रव्यमितिशेषः। इति वाक्यद्वयेन स्वयमेव शङ्कामुत्थाप्य एतत्प्रश्नद्वयस्योत्तरं स्वयं वक्ति। कामः अदात् दातृपुरुषनिष्ठः कामो दत्तवान् देयद्रव्यमिति शेषः। तथा कामायादात् प्रतिग्रहकर्तृपुरुषनिष्ठाय कामाय दत्तवान् देयद्रव्यमितिशेषः। अत एव हे कन्याप्रद (अन्यत्र हे यजमान) इदानीमपि न त्वं दाता नाहं प्रति-

ग्रहीता च, किन्तु त्वत्कामाभिमानी देवो मत्कामाभिमानिने देवाय इदं कन्यारूपं द्रव्यं ( अन्यत्र तु इदममुकद्रव्यं ) ददाति, मत्कामाभिमानी देवः प्रतिगृह्णाति । एवं च सति "काम एव दाता, काम एव प्रतिग्रहीता, न त्वं दाता नाहं प्रतिग्रहीतेत्युक्तं भवति । एवं कन्याप्रदं प्रति ( अन्यत्र तु यजमानं प्रति ) उक्त्वा ततः कामं प्रत्युच्यते । हे काम, एतत्कन्यारूपं द्रव्यम् ( अन्यत्र तु अमुकद्रव्यम् ) ते तवास्तीति शेषः, सर्वत्र तवैव दातृत्व-प्रतिग्रहीतृत्वादितिभावः । कामशब्देनाऽत्रेच्छाभिधीयते । यत इच्छायामेव सत्यां दीयते प्रतिगृह्यते च , अतस्तत्प्राधान्यप्रतिपादनाय दातृत्वं प्रतिग्रहीतृत्वं च कामस्यैवोक्तं तेन कामस्तुतिरियमितियाज्ञिकानां परामर्शः ॥ १८ ॥

## द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ॥१९॥

यजुरिदम्, अस्य च प्रजापतिर्ऋषिरनिर्दिष्टं छन्दो लिङ्गोक्ता देवता कन्याप्रतिग्रहणे विनियोगः । व्यक्तार्थमेवैतद्यजुस्तथाप्यत्र "अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । हे कन्ये, कमनीय, द्यौस्त्वा ददातु मह्यं तव पितेति शेषः । लुप्तोपमानमेतत् । द्यौः आकाश इव विशिष्टोपकारकस्तवायं पिता त्वा त्वां ददातु मह्यमितिभावः । तथा पृथिवी त्वा प्रतिगृह्णातु पृथिव्याः पञ्चभूतेष्वन्तःपातित्वात्सर्वप्राणिदेहादेश्च पाञ्चभौतिकत्वान्मद्देहान्तर्गता सर्वाश्रया पृथिवी त्वा त्वां प्रतिगृह्णात्वित्यर्थः । यद्वात्रापि लुप्तोपमानं तथाहि तत्र "द्यौः पिता पृथिवीमाते"ति श्रुतेरिह द्यौरिति पिता पृथिवीति माता, तत्रैकत्र वृष्ट्यादिप्रदानेन सर्वोपकारकत्वम्, अपरत्र सर्वाधिकरणत्वेन सर्वाश्रयत्वम् , तदुभयं यथाक्रममाक्षिप्यते । तत्र प्रतिपूर्वाद्ग्रह्णातेर्लडर्थे लोट् तस्योत्तमपुरुषैकवचनस्थाने प्रथमपुरुषैकवचनं च व्यत्ययेनेत्यनुसन्धेयम् । ततोऽयमर्थः पृथिवी इव विशिष्टाश्रयोऽहं त्वा त्वां प्रतिगृह्णामीत्यर्थः । यथाऽऽकाशो वृष्ट्यादिप्रदानद्वारा सर्वोपकारकस्तथायं तव पितापि त्वद्दानादिद्वारा ममोपकारकः, एवं यथा पृथिवी सर्वाश्रया तथाहमपि तवाश्रयो भवामीत्याशयो ध्वन्यतेऽत्रेति भावः ॥ १९ ॥

## यदैषि मनसा दूरं दिशोऽनु पवमानो वा ।
## हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोतु ॥ २० ॥

अस्य मन्त्रस्याथर्वण ऋषिरनुष्टुप्छन्दः पवमानादयो देवताः पित्रा प्रत्तायाः कन्याया हस्तग्रहणपूर्वकं पितुः सकाशान्निष्क्रामणे विनियोगः, "पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति यदैषि० करोतु" इति पारस्करवचनात् । तत्र "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । तथाहि-हे कन्ये, यत् यस्मात् "सुपां सुलुगि"ति विभक्तिलोपश्छान्दसः । त्वं दूरम् एषि पितृगोत्रं परित्यज्य मद्गोत्रम्प्राप्य पितुः सकाशान्मत्समीपमागच्छसीत्यर्थः । अतस्त्वं मनसा दूयसे इति शेषः । जन्मत एतावद्दिनपर्य्यन्तं पितृगृह एवाहमासम्, अद्य पितृकुलाद्बहिर्भूत्वा कुत्र केन नीयते इति मनसा परितप्यसे इति भावः । तत्र दिशः प्राच्याद्या दिशः, अनु पश्चात्पवमानो वा वाशब्दः समुच्चये पवमानश्च वायुरपीत्यर्थः । तथा हिरण्यपर्णः हिरण्यं पर्णम् अर्थात् हिरण्मयो रथो यस्य स हिरण्यपर्णः सूर्य्यः "हिरण्य-

येन सविता रथेना देवो याति भुवनानि पश्यन्नि"ति श्रुतेः, तथा वैकर्णः विकर्णे कोटरे तिष्ठतीति वैकर्णोऽग्निः स "सुपां सुपो भवन्ती"तिवचनादिह तच्छब्दस्य प्रथमाबहुवचनस्थाने प्रथमैकवचने 'सः' इति प्राप्ते संहितायां "सुपां सुलुगि"ति विभक्तिलोपे स इति, 'ते' इत्यवगन्तव्यम्। ते दिग्वायुसूर्य्याग्नयः त्वा त्वां मन्मनसां करोतु ("तिङां तिङो भवन्ती"ति वचनादिह करोतेः प्रथमपुरुषबहुवचनस्थाने प्रथमपुरुषैकवचनं कुर्व्वन्त्विति बोद्धव्यम्) मद्गतहृदयां कुर्वन्तु येन तवोत्कण्ठानिवृत्तिः स्यादिति भावः ॥ २० ॥

**अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्च्चाः ।**
**वीरसूर्देवकामा स्योना शन्नो भवद्विपदे शं चतुष्पदे ॥ २१ ॥**

अस्य मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता कन्यासमीक्षणे विनियोगः, "अथैनौ समीक्षयति, अघोरचक्षुरि"ति पारस्करोक्तेः। तत्र "अतिरिक्तम्" इति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि हेकन्ये, त्वम् अघोरचक्षुरेधि न घोरमघोरम् अर्थात् सौम्यं चक्षुर्नेत्रं यस्याः सा अघोरचक्षुः सौम्यदृष्टिः अपापदृष्टिर्भवेत्यर्थः। अर्थान्मद्विषये त्वं सर्वदैव सौम्यनेत्रा भव क्रूरदृष्टिः कदाचिदपि मा भवेत्यभिप्रायः। तथा त्वम् अपतिघ्नी एधीत्यनुषङ्गः। पतिं हन्तीति पतिघ्नी न पतिघ्नी अपतिघ्नी तथा भवेत्यर्थः। कदाचिदपि अकार्य्यकरणेन पत्यर्थघातिनी त्वं मा भवेत्याशयः। तथा पशुभ्यः गवादिभ्यः अथवा पशुभ्यः अर्थात्पशुवदाश्रितेभ्यो भृत्येभ्यः शिवा एधीत्यनुषङ्गः, हितैषिणी च भवेत्यर्थः। तथा सुमनाः शोभनो मनो यस्याः सा सुमनाः एधीत्यनुषङ्गः, शोभनमनस्का च भवेत्यर्थः। सर्वदा त्वं सुप्रसन्नचित्ता च भवेत्यभिप्रायः। तथा सुवर्चाः एधीत्यनुषङ्गः, सुष्ठु शोभनं वर्चो यस्याः सा सुवर्चाः सुप्रभावयुक्ता च त्वं भवेत्यर्थः। तथा त्वं वीरसूः एधीत्यनुषङ्गः, "वीरो वै पुत्रः" इतिश्रुतेरिह वीरशब्दः पुत्रवाचकस्ततोऽयमर्थः। वीरान्पुत्रान् सूते इति वीरसूः पुत्रप्रसवित्री च भवेत्यर्थः। त्वं चिरजीविसुपुत्रजननी च भवेत्यभिप्रायः। तथा त्वं देवकामा च एधीत्यनुषङ्गः, देवानग्न्यादीन् कामयते सेवार्थमीहते इति देवकामा, देवं देवनं क्रीडां कामयते इति देवकामा इति वा, तादृशी च त्वं भवेत्यर्थः। तथा स्योना एधीत्यनुषङ्गः, सुखवती सुखकारिणीति वा भवेत्यर्थः। तथा हे कन्ये, त्वं नः अस्माकं द्विपदे द्वौ पादौ यस्य स द्विपात् तस्मै, (इह "पादस्य लोपोऽहस्त्यादिभ्यः" इत्यकारलोपे "पादः पत्" इति पाच्छब्दस्य पदादेशोऽवगन्तव्यः) द्विपादयुक्ताय मनुष्यवर्गाय शं सुखहेतुर्भवेत्यर्थः। यथा चतुष्पदे चत्वारः पादा यस्य स चतुष्पात् तस्मै, चतुष्पादयुक्ताय पशुवर्गाय च शं सुखहेतुर्भवेत्यनुषङ्गः। अस्मदीयमनुष्यवर्गस्य पशुवर्गस्य चोपकारार्थं सर्वदैव कल्याणकारिणी भवेत्यभिप्रायः ॥ २१ ॥

**सोमः प्रथमो विविदे गन्धर्वो विविदऽउत्तरः ।**
**तृतीयोऽअग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ २२ ॥**

अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता कन्यासमीक्षणे विनियोगः।

तत्र "अतिरिक्तम्" इति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि—हे कन्ये, सोमश्चन्द्रो विविदे त्वामितिशेषः। जन्मसमये त्वां लब्धवानित्यर्थः। अतस्ते तव प्रथमः आद्यः पतिः स एव सोमो बभूवेति वाक्यशेषः। पातीति पतिः एषस्तव प्रथमो रक्षकोऽभूदित्यभिप्रायः। तत्पश्चात् गन्धर्वः गवां किरणानां धाता सूर्य्यो विविदे त्वामितिशेषः। वर्षद्वयानन्तरं त्वां लब्धवानित्यर्थः। अत उत्तरः तव द्वितीयोऽयं पतिः स एव सूर्य्यो बभूवेति वाक्यशेषः। सोमापेक्षया द्वितीयो रक्षकस्तव सूर्य्योऽभूदित्यभिप्रायः। ततोऽग्निरपि विविदे त्वामितिशेषः। तावत्कालेन त्वां लब्धवानित्यर्थः। अतोऽयं तव तृतीयः पतिः स एवाग्निर्बभूवेतिवाक्यशेषः। सोमसूर्य्यापेक्षया तृतीयो रक्षकस्तवायमग्निरभूदित्यभिप्रायः। तदुक्तं स्मृत्या—"पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः" इति। भुक्ता इत्यत्र भुजतिरिह पालनार्थः, तादृश्याऽतिबालिकया सह तेषां भोग्यव्यवहारासम्भवात्। अत एव "सोमः शौचं ददौ स्त्रीणां गन्धर्वश्च शुभां गिरम्। पावकः सर्वभक्षित्वं तेन शुद्धा हि योषितः"॥ इति। अत एव ज्योतिर्निबन्धकर्त्रा व्यलेखि "षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः। सोमो भुङ्क्ते ततस्तद्वद्गन्धर्वश्च तथाऽनलः॥" इति। तथैव यमस्मृतौ यमेनोक्तं "सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः। कन्यायाः शस्यते राजन्नन्यथा धर्मगर्हितः॥" इति। किं च हे कन्ये, सोमाद्यपेक्षया तुरीयश्चतुर्थश्चिरकालसम्भोगाय मनुष्यजाः मानुषः ते तव पतिः अहमेव संजातोऽस्मीति वाक्यशेषः। मनुष्यजा इति "जनी प्रादुर्भावे" इत्यस्मात् "जनसनखनक्रमगमो विट्" इति विट् प्रत्ययस्तस्य च सर्वापहारलोपे कृदन्तत्वात्प्रातिपदिकत्वे स्वाद्युत्पत्तौ विभक्तिकार्य्ये च कृते "विड्वनोरनुनासिकस्याऽऽत्" इत्यात्वे प्रथमैकवचने रूपं भवतीत्यवगन्तव्यम्॥ २२॥

सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये।
रयिं च पुत्राँश्चादादग्निर्मह्यमथोऽइमाम्॥ २३॥

अस्य मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवताः कन्यासमीक्षणे विनियोगः। ननु पूर्वमन्त्रेण अस्याः कन्यायाः पतित्वेन सोमादीनामभिधानात्सन्दिह्यते किमिदानीं चतुर्णामपि इयं पत्नी उत एकस्यैव, एकस्यैव चेत्तर्ह्यपि कस्यैकस्येयं पत्नीतिविचिकित्सायामविशेषाच्चतुर्णामपि इयं पत्नीतिचेन्न, सोमादीनां मनुष्यपत्यर्थप्रदानपरश्रुतिदर्शनात्। सा चेयं श्रुतिः "सोमोऽददद्गन्धर्वाय०" इति। अपरश्चायं हेतुः। सोमसूर्य्याग्नीनां देवत्वादेवत्वे च सति तेषामाप्तकामत्वान्न यज्ञेऽधिकारः कुत्रचिच्छ्रूयते, नहि यज्ञमन्तरेण पत्नीत्ययं प्रयोगः सिध्यति। यज्ञसंयोग एव पत्नीत्ययं प्रयोग उपलभ्यते, "पत्नीवेदं प्रतिमुञ्चति वेदोऽसि" इति। यज्ञेन सह संवन्धो यत्र दृश्येत तत्रैव पतिशब्दस्य नकारादेशो भवति नान्यत्रेति तदुक्तं च पाणिनिना—"पत्युर्नो यज्ञसंयोगे (४।१।३३)" इति। तस्मान्मनुष्यस्यैव पत्नीतिराद्धान्तः, "यत्कर्त्तव्यं तदनया सह" इतिश्रुतेः पत्न्या सहैव यज्ञेऽधिकारदर्शनात्। अतः कात्यायनेनापि तथैव सूत्रं सूत्रितं "स्त्रीणां चाऽविशेषात्" इति। अथ वृषलस्य पत्नीति व्यस्ते कथमितिचेत्? तत्रोच्यते पत्नीव पत्नीत्युपचारात्। यद्वा आचारक्विबन्तात् कर्त्तरि क्विप्। अथ मन्त्रार्थः। सोमश्चन्द्रः वर्षद्वयपर्य्यन्तमिमां कन्यां भुक्त्वा तत्पश्चात् गन्धर्वाय

गन्धर्वः गवां किरणानां धाता सूर्यस्तस्मै अददत् ददावित्यर्थः । ( अददिति "दद दाने (भ्वा० आ०)" इत्यस्माल्लङि "सुप्तिङुपग्रहे" त्युपग्रहव्यत्ययेन परस्मैपदे प्रथमपुरुषैकवचने शपि शकारपकारयोर्लोपे "इतश्चेति" इकारलोपे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे च तादृशं रूपं भवतीति बोध्यम् । ) गन्धर्वः सूर्यः सोऽपि तावत्कालपर्य्यन्तमिमां कन्यां भुक्त्वाऽग्नयेऽददत् ददावित्यर्थः । अग्निश्च अथोऽनन्तरमिमां कन्यां मह्यमदात् दत्तवानित्यर्थः । न केवलं कन्यामात्रं मह्यमदात्किन्तु रयिं धनं पुत्रान् सुतान् चकाराद्धर्मादि चाददिति संबन्धः, अतो हे कन्ये, तव पिताप्यग्निसन्निधावेव त्वां मह्यमदादिति वाक्यशेषः । अत एव तत्त्वमप्यनुजानीहि यदयं मनुष्यस्तुरीयः सोमाद्यपेक्षया चतुर्थश्चिरकालसंभोगाय मम पतिः सम्भूतः इति । तथात्वे च सति "ततो जाते वर्षे जगदिदमभूत्तन्मयमि"ति, एवं त्वयापि भवितव्यमिति भावः ॥ २३ ॥

सा नः पूषा शिवतमा मेरय सा नऽऊरू उशती विहर ।
यस्यामुशन्तः प्रहराम शेपं यस्यामुकामा बहवो निविष्ट्यै ॥२४॥

अस्य मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता कन्यासमीक्षणे विनियोगः । तत्र मन्त्रार्थविचारदशायां यस्यां यस्यामिति वारद्वयेनोक्तस्य यस्यामुशन्त इत्यत्र पठितस्य यच्छब्दस्य तच्छब्देन ( तस्याः ) एवं विपरिणामेन वाक्ययोजना विधातव्या यत्तदोर्नित्यसंबन्धात् । तत्रापि षष्ठ्यर्थे सप्तमी "सुपां सुपो भवन्ती"ति वचनात् । तथा उशन्तः प्रहराम इत्युभयत्रात्मनो गुरुत्वादिह पूजार्थं बहुवचनं, सुपां सुपो भवन्तीति प्रथमैकवचनस्थाने प्रथमाबहुवचनं वा । तथैव "तिङां तिङो भवन्ती"ति हरतेर्लङर्थे लोडुत्तमपुरुषैकवचनस्थाने उत्तमपुरुषबहुवचनमिति च बोद्धव्यम् । तथा यद्यपि "शेपो वैतस इति पुंसः प्रजनस्य, शेपः शपतेः स्पृशति कर्म्मणो वैतसो वितरतं भवति, यस्यामुशन्तः प्रहराम शेपम् , त्रिःस्म माह्नः श्नथयो वैतसेनेत्यपि निगमौ भवतः ।" इति यास्कोक्तेः शेप इति पुरुषोपस्थेन्द्रियस्य नामेत्यवसीयते । किन्तु "उशन्तः प्रहराम शेपम्" इति यत्तत्रोदाहृतं तत्तु ऋग्वेदिनां गर्भाधानप्रकरणे पठितस्य "तां पूषञ्छिवतमा मेरयस्व यस्यां बीजं मनुष्या ३ वपन्ति । या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम् ॥" ( ऋ० सं० ८, ३, २७, २-८, ५, १, ५, ) इति मन्त्रस्यार्थमभिप्रेत्य "उशन्तः प्रहराम शेपम्" इति तत्र प्रदर्शितम् । वस्तुतस्तु तत्र शेपशब्दः पुंसः प्रजननार्थकः शिश्नवाचको भवितुमर्हति । अत्र तु प्रकरणभेदादर्थविरोधाच्च तादृशार्थस्याऽसामञ्जस्यं प्रतीयते । तत्र "तां पूषञ्छिवतमा०" इति मन्त्रस्य गर्भाधानप्रकरणे पाठः । इह तु "सा नः पूषा शिवतमा०" इति मन्त्रस्य विवाहप्रकरणे पाठः । तथा प्रकरणभेदादेव मन्त्रभेदोऽप्यस्ति । नहि केवलं मन्त्रभेदः किन्तु शब्दपरिपाट्याऽपि पाठभेदो दृश्यत एव । प्रकरणभेदो दृश्यते यथा—तत्र हि गर्भाधानप्रसङ्गवशात् "यस्यां स्त्री योनौ उशन्तः पुत्रान् सुखं चेच्छन्तः शेपं शिश्नं प्रहरामः प्रवेशयामः इत्येवमर्थः ( "यस्यामुशन्तः प्रहराम शेपम्" इत्येतन्मन्त्रांशस्य ) साधुतर एव । इह तु विवाहप्रकरणवशादेव चतुर्थीकर्म्मणः प्राक् पत्न्या सह भार्य्यात्वस्यानुपपत्तित्वात्तदानीं शिश्नप्रहरणक्रियायाः सुतरामसम्भवाद्विवाहमण्डपे तदानीं कन्यावरयोः स्वरव-

पितृभ्रातृपितृव्यप्रभृति बहुलतरगुरुजनसङ्घस्य सद्भावाच्च "यस्यामुशन्तः प्रहराम शेपम्" इत्येतन्मन्त्रांशविशिष्टस्य "सा नः पूषे"ति वैवाहिकमन्त्रस्य गर्भाधानप्रकरणपठितस्य "तां पूषञ्छिवतमा०" इति मन्त्रस्यार्थवदिहाप्यर्थकरणे सुतरां तादृशार्थस्य प्रयोजनाभावादसामञ्जस्याच्च तादृशोऽर्थो विरुध्यत एवेत्यर्थविरोधोऽस्ति तस्मादिह शेपशब्दः स्वप्नार्थवाची "शेपः स्वप्नस्तथा शिश्नः शेपः शेवं च कुत्रचिदि" तिवाचस्पत्यभिधानात्। शेप इत्यत्र "शीङ् स्वप्ने" इत्यस्मात् "घृञ्शीभ्यां रूपस्वाङ्गयोः पुट् चे" त्यौणादिकोऽसुन्प्रत्ययस्तस्य पुडागमश्च बोध्यः। अयं शेपशब्दः क्वचिदच्प्रत्ययान्तोऽपि छन्दसि दृश्यते। तत्र बाहुलकादच्प्रत्ययः पुडागमश्च बोध्यः। "अर्थो नित्यः परीक्षेत न संस्कारमाद्रियेते"तियास्कोक्तेः। अत उक्तं भाष्यकारेण "छन्दसि दृष्टानुविधयः" इति। अतो वैवाहिकप्रकरणक्रमेण विनियोगानुसारेण च "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि हे कन्ये, उशन्तस्त्वदीयकल्याणमिच्छन्तो वयं यस्यामर्थात् तस्यास्तव शेपं शेते इति शेपस्तं शेपं स्वप्नं प्रहरामः ( उशन् त्वदीयकल्याणमिच्छन् अहं यस्यास्तव शेपं स्वप्नं प्रहरामि प्रक्षिपामीत्यर्थः। सुपां सुपो भवन्ति तिङां तिङो भवन्तीति व्यत्ययपक्षे एवं हि वाक्यार्थोऽप्यवगन्तव्यः)। हे कन्ये, सर्वदाहं तव प्रत्यक्षमेव कामये न तु कदाचिदपि तवाऽप्रत्यक्षं सोढुमहमलम्, अतस्तव स्वप्नं दूरीकरोमीत्यभिप्रायः। अप्रत्यक्षे हि वस्तुनि स्वप्नो भवति नतु प्रत्यक्षे वस्तुनि। अतो मया पत्या सह सदा त्वं विद्यमाना भव, चिरजीविनी भवेत्याशंसावाक्यार्थः। ननु मम चिरजीवनेन तव किं स्यादिति चेत्तत्रोच्यते। यस्यां त्वय्येव चिरजीविन्यां सत्यां मम निविष्ट्यै अग्निहोत्राद्युपासनयाऽन्तःकरणशुद्धिद्वारा सायुज्यमुक्तये बहवः कामाः अग्निहोत्रादिद्वारा धर्म्मपुत्ररतिसुखरूपा नानाविधा अपि अभिलाषाः सम्पत्स्यन्ते इति वाक्यशेषः, गर्भाधानादिसंस्कारसंस्कृतस्याधीतवेदस्य कृतयज्ञस्य जनितपुत्रस्य निष्पापस्य निःस्पृहस्यैतादृशस्यैव पुरुषस्य ज्ञानकाण्डेऽधिकारात्। कृतयज्ञत्वे सत्येव निष्पापत्वं निष्पापत्वे च सति निःस्पृहत्वं निःस्पृहत्वे च सत्यां मुक्तिर्भवतीति सिद्धान्तः, "ऋते ज्ञानान्न मुक्तिरि"ति वचनात्। तत्सर्वकर्म्मसाधनस्याग्निहोत्रादेस्त्वज्जीवनेनैव सद्भावः, "यत्कर्त्तव्यं तदनया सह" इति श्रुत्या दम्पत्योः सहाधिकारदर्शनात्। एवं हि त्वयि विनष्टायां यदाऽग्निहोत्रादिकमपि सर्वं विनष्टं स्यात्तन्माभूदेतदर्थं "यस्यामुशन्तः प्रहराम शेपं यस्यामुकामा बहवो निविष्ट्यै" इति त्वां प्रत्युच्यते। "दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः। आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन्।" इति स्मृत्या पत्न्यां विनष्टायां पुनर्दारान्तरग्रहणानन्तरमेवाग्निहोत्रादावधिकारदर्शनादिति भावः। किं च हे कन्ये, यस्यां त्वयि विद्यमानायां सत्यां मम सर्वा अप्यग्निहोत्रादिरूपाः अनुष्ठान क्रियाः प्रवर्त्तिष्यन्ते। धर्मपुत्ररतिसुखरूपा नानाविधाः सर्वे कामाश्च सम्पत्स्यन्ते सा त्वं नोऽस्माकं पूषा पोषणकर्त्री भवेति वाक्यशेषः। (एवं सर्वत्र क्रियापदमध्याहर्त्तव्यं वाक्यस्य साकाङ्क्षत्वात्)। तथा च हे कन्ये, त्वं शिवतमा च भव अतिशयेन शिवा शिवतमा अतिकल्याणकर्त्री भवेत्यभिप्रायः। तथा च हे कन्ये, त्वं मा ईरय ("ईर गतौ" इत्यस्य लोण्मध्यमपुरुषैकवचने रूपम्।) मत्तः पृथङ्मा भव मय्यनुरक्ता भवेत्याशयः। तथा च हे कन्ये, नोऽस्मान् उशती कामयमाना सती त्वम् ऊरू विहर ('ऊरू' इत्यत्र सुप्तिङुपग्रहेति

कारिकयाऽचो व्यत्ययो बोध्यः तेन ह्रस्वस्थाने दीर्घो नियुक्तः। 'उरु' इति बहुनामेति निघण्टुः, ततोऽयमर्थः) मया पत्या सह बहु विहर बहु रमस्व सर्वदाऽतिक्रीडां कुर्वित्याशंसावाक्यार्थः। नोऽस्माकं नोऽस्मानित्युभयत्र वचनव्यत्ययो ज्ञेयः, बहुलं छन्दसीति सर्वे विधीनां छन्दसि वैकल्पिकत्वात्। आत्मनः पूजार्थं गुरुत्वाद्वा बहुवचनमित्यनुसन्धेयम् ॥ २४ ॥

सर्वप्रायश्चित्तहोमान्तर्गताश्चत्वारो मन्त्राः स्नानप्रकरणे व्याख्यातास्तेषां व्याख्या तत्रैव द्रष्टव्या। "अयाश्चाग्ने" इति तु होममन्त्रप्रकरणेऽग्रे व्याख्यास्यते तत्र द्रष्टव्यम्। तत्तत्प्रकरणापेक्षया होमप्रकरणे यद्यद्वैशिष्ट्यं तत्तन्मन्त्रार्थविषये तत्तदूह्यम्। हे अमुकदेव, य एवं भूतस्त्वं तस्मै तुभ्यं स्वाहा एतद्धविः सुहुतमस्तु, कुत्रचिद्बहुवचनान्तेन विपरिणेयं कुत्रचित्परोक्षवृत्या यत्तच्छब्दाभ्यां वा, ये एवम्भूता अमुकदेवास्तेभ्यः स्वाहा मद्दत्तमेतद्धविः सुहुतमस्त्वित्याद्येवं प्रकारेणेत्यर्थः। "सर्वप्रायश्चित्तप्राजापत्यान्तरमेतदावापस्थानं विवाहे, राष्ट्रभृत इच्छन्, जायाभ्यातानाँश्च जानन्, येन कर्म्मणेर्त्सेदिति वचनात्" इति पारस्करोक्तेः, आवापस्यान्यत्र विहितस्य जायादे राष्ट्रभृतश्च होमस्य सर्वप्रायश्चित्तप्राजापत्ययोर्मध्य एव विहितत्वात्सर्वप्रायश्चित्तहोमानन्तरमिह राष्ट्रभृत्संज्ञकहोममन्त्रा व्याख्यायन्ते। तत्र मूलमन्त्राः ऋताषाडित्यादयस्ते च यथा —

ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम।
स नऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥२५॥

यद्यपि शुक्लयजुर्वेदमाध्यन्दिनसंहितायामेवमेव पाठो दृश्यते, तथापि "द्वादशगृहीतं विग्राहं जुहोत्यृताषाडिति" "प्रतिस्वाहाकारऽठं राष्ट्रभृतो वाट्कारान्तः पूर्वः पूर्वो मन्त्र" इति कात्यायनोक्तेः आज्यस्थालीतो द्वादशगृहीतमाज्यं विगृह्य तच्च द्वादशधा विभज्य प्रत्येकमंशं प्रतिमन्त्रं यथा स्यात्तथा ऋताषाडित्यादिद्वादशमन्त्रैः प्रतिस्वाहाकारं राष्ट्रभृत्संज्ञा आहुतयो होतव्याः। तत्र व्यतिषक्तेषु द्वादशमन्त्रेषु पूर्वो मन्त्रः स्वाहावाडित्यन्तः, उत्तरस्तु ताभ्यः स्वाहेत्यन्तो ज्ञेयः। ततो मन्त्रे यानि पुँल्लिङ्गानि सनऽइदं ब्रह्मेत्यादीनि पदानि तानि व्यवहितपठितान्यप्यपकृष्य लिङ्गक्रमेण पठित्वा पूर्वो मन्त्रः सम्पाद्यः। एवं यानि च स्त्रीलिङ्गानि तस्यौषधयोऽप्सरस इत्यादीनि पदानि तान्युत्कृष्य लिङ्गक्रमेण पठित्वोत्तरश्च मन्त्रः सम्पाद्यः। तन्मन्त्रस्वरूपञ्चेत्थं "ऋताषाडृतधामाग्निर्गन्धर्वः। सनऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्" इति। वाडन्तः पूर्वः पूर्वो मन्त्रः प्रथमः। द्वितीयश्च "तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा" इति स्वाहान्त उत्तर उत्तरो मन्त्रः। पूर्वो गन्धर्वदेवत्यः, उत्तरोऽप्सरो देवत्यः, एवं पञ्चकण्डिकास्वप्यग्रे मन्त्रविभागो द्रष्टव्यः। तथा च श्रुतिः—"पुऽसे पूर्वस्मै जुहोत्यथ स्त्रीभ्यः पुमाऽसं तद्वीर्येणादधात्येकस्मा इव पुऽसे जुहोति बह्वीभ्य इव स्त्रीभ्यस्तस्मादप्येकस्य पुऽसो बह्वयो जाया भवन्त्युभाभ्यां वषट्कारेण च स्वाहाकारेण च पुऽसे जुहोति स्वाहाकारेणैव स्त्रीभ्यः पुमाऽसमेव तद्वीर्येणादधाति" (९।४।१।६) इति। तथा चैवम्, ऋताषाट्, संहितः, सुषुम्णः, ईषिरः, भुज्युः, प्रजापतिः, इति षण्णां पूर्वमन्त्राणामृताषाडित्यादिनामका गन्धर्वा देवताः। तस्यौषधयः, तस्य मरीचयः,

तस्य नक्षत्राणि, तस्यापः, तस्य दक्षिणाः, तस्य ऋक्सामानि, इति षण्णामुत्तरमन्त्राणामोषध्यादिनामका अप्सरसो देवताश्चावगन्तव्याः। मन्त्राश्चैते यजुःस्वरूपाः तेषामृषिश्च प्रजापतिरेवानुसन्धेयः,"अनिर्दिष्टेषु सर्वत्र ऋषिश्चापि प्रजापतिरि"ति वचनात्। चकरादनिर्दिष्टदेवताकेषु मन्त्रेषु देवतापि प्रजापतिरेवेति स्मृत्यर्थो बोध्यः। "प्रजापतेरिदं जातमन्ते तत्रैव लीयते। भूतं भव्यं भविष्यच्च प्राजापत्यं ततः स्मृतम्"॥ इति विशेषवचनात्सर्वत्रान्यत्राप्यनिर्दिष्टदेवताकत्वेऽनिर्दिष्टार्षेयत्वे च प्रजापतिरेव ऋषित्वेन देवतात्वेन च गृह्यते। यजुषामनियताक्षरानियतपादावसानत्वान्नास्त्येव छन्दःकल्पनेति बहूनां विदुषां परामर्शः। ननु "दैव्येकम्" इत्यादिसर्वानुक्रमसूत्रे कथमुक्तं कात्यायनेन, एकाक्षरं यजुर्दैवी गायत्रीनामकं भवतीत्यादि तद्वृत्तिकृतापि कथमभिहितमिति चेदत्रोच्यते। अस्तु तर्हि छन्दःकल्पनेति तानि कात्यायनोक्तछन्दांस्यक्षरपरिगणनया सर्वानुक्रमत एवावगन्तव्यानि। इह ग्रन्थविस्तारभिया तानि नोच्यन्ते। अथ प्रकृतमनुसरामः। ऋताषाडित्याद्यारभ्य षट्कण्डिकापर्य्यन्तं प्रतिकण्डिकान्तर्गतं हि मन्त्रद्वयमिति निश्चितं पूर्वोक्तश्रुतिवाक्यात्कात्यायनवचनाच्च। तत्र तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहेत्येतन्मात्रपाठे कस्यौषधयोऽप्सरसो मुदो नामेत्याकाङ्क्षोत्पत्तेः सम्भवात्तद्व्युदासार्थमेव "ऋताषाडृतधामाग्निर्गन्धर्वः" एतन्मन्त्रांशं पूर्वमन्त्रादपकृष्य तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहेत्यनेनोत्तरमन्त्रेण सह योजयित्वा "ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहेत्ये"वं मन्त्रं सम्प्रदायविदो याज्ञिकाः पठन्ति। एवमग्रेऽपि सर्वत्र बोद्धव्यम्। तदनुसारेणैव तत्तन्मन्त्रविभागं प्रदर्श्य तत्तदर्थञ्च विवृणोमि। तत्र सर्वत्र मन्त्रेषु "स न इदं० तस्मै स्वाहा०, तथा 'तस्य, ताभ्यः' इत्यादिषु तच्छब्दोपादानात्तत्तन्मन्त्रांशेषु प्रथममेव यच्छब्दोऽध्याहर्त्तव्यः, यत्तदोर्नित्यसंबन्धात्। तदुक्तं योगियाज्ञवल्क्येनापि "तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः। उदाहृते तु यच्छब्दे तच्छब्दः स्यादुदाहृतः॥" इति। एवमग्रेऽपि सर्वत्रानुसन्धेयम्॥२५॥

ऋ॒ता॒षाडृ॒तधा॑मा॒ग्निर्ग॑न्ध॒र्वः।
स नं॑ऽइ॒दं ब्रह्म॑ क्ष॒त्रं पा॑तु॒ तस्मै॒ स्वाहा॒ वाट्॥ २६॥

ऋताषाडित्यादिद्वादशमन्त्राणां प्रजापतिर्ऋषिरनिर्दिष्टानि छन्दांसि लिङ्गोक्ता देवता राष्ट्रभृत्संज्ञकाऽऽज्यहोमे विनियोगः। अथ मन्त्रार्थः—"अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। य ईदृशोऽग्निर्गन्धर्वोऽस्तीतिशेषः। योऽग्निर्गन्धर्वरूपो वर्त्तते इत्यर्थः। सोऽग्निर्गन्धर्वो नोऽस्माकमिदं ब्रह्म ब्राह्मणजातिं ब्रह्मज्ञानं वा तथा क्षत्रं क्षत्रजातिं वीर्य्यं वा पातु रक्षत्वित्यर्थः। कीदृशोऽग्निर्गन्धर्व इत्यपेक्षायामुच्यते। ऋताषाट् ऋतं सत्यं सहते इति ऋताषाट् सत्यमेव सहते असत्ये तु कुपितो भवतीत्यर्थः। "सहेः साडः सः" इति षत्वं तथा पूर्वपदस्य छान्दसो दीर्घश्चेत्यनुसन्धेयम्। पुनः कीदृशः ऋतधामा ऋतं सत्यमविनश्वरं ब्रह्म अवश्यम्भाविफलोपेतं यज्ञाख्यं वा धाम स्थानं यस्य स ऋतधामा ब्रह्मतेजःस्वरूपः सत्यप्रतिष्ठो यज्ञाधिष्ठितो वेति यावत्। धामशब्दोऽत्र स्थानवाची "धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः" इति हैमचन्द्रोक्तेः। य ईदृशोऽग्निर्गन्धर्वस्तस्मै अग्नये गन्धर्वाय

गन्धर्वरूपायाग्नये इति यावत् । स्वाहा वाट्, स्वाहा कारेण वषट्कारेण चास्माभिर्हविर्दीयते इति शेषः। तन्मद्दत्तं हविस्तदर्थं सुहुतम्भवत्वित्यर्थः। "तस्या द्वौ स्तनौ देवाऽउपजीवन्ति स्वाहा कारञ्च वषट्कारञ्चे"ति श्रुतेः। अग्रे ओषधीनामप्सरस्त्वारोपस्य वक्ष्यमाणत्वादिहाग्नेर्गन्धर्वत्वारोपोऽनुसन्धेयः। एवमग्रेऽपि सᳬहितो व्विश्वसामेत्यादिषु मन्त्रेष्वपि बोद्धव्यम् ॥२६॥

ऋ॒ता॒षाडृ॒तधा॑मा॒ग्निर्ग॑न्ध॒र्वस्तस्यौष॑धयोऽप्स॒रसो॒
मु॒दो॒ नाम॒ ताभ्य॒ः स्वाहा॑ ॥ २७ ॥

अथ मन्त्रार्थः। तत्र "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। ऋताषाड्, तन्नामकः ऋतधामा सत्यप्रतिष्ठो योऽयं गन्धर्वरूपोऽग्निस्तस्याग्नेर्गन्धर्वस्य मुदोनाम ओषधयः या अप्सरसः सन्तीतिशेषः। मोदन्ते सर्वे जना आभिरिति मुदः सर्वेषां मोदयित्र्यः व्रीहियवेत्यादिनाम्ना प्रसिद्धा या ओषधयोऽप्सरसः स्त्रीत्वेनोपभोग्या इत्यर्थः। ताभ्यः व्रीहियवाद्योषधिरूपाभ्योऽप्सरोभ्यः अग्नेर्गन्धर्वस्य स्त्रीत्वेनोपभोग्याभ्यो व्रीहियवादिनाम्ना प्रसिद्धाभ्यो गन्धर्वपत्नीभ्यः स्वाहा एतदस्मत्प्रदत्तं हविः सुहुतमस्त्वित्यर्थः। नामेत्यत्र नामशब्दाद्विभक्तेः "सुपां सुलुगिति" लुक्। गन्धर्वाणामप्सरसो भवन्तीतिप्रसिद्धेरिह गन्धर्वरूपस्याग्नेः संभोगार्थं स्त्रीत्वेनाप्सरसोऽपि भवितुमुचिताः, अतस्तस्य सम्भोगार्थं स्त्रीत्वेन सम्भोग्या मुदोनाम व्रीह्याद्या ओषधय एवाप्सरसो वर्त्तन्ते। तदुक्तं च श्रुत्या "अग्निर्ह गन्धर्वऽओषधीभिरप्सरोभिर्मिथुनेन सहोच्चक्राम"इति। "ओषधयो वै मुदऽओषधीभिर्हीदᳬ सर्वं मोदते(९।४।१।७)"इति च। अतस्ताभ्योऽपि होमः क्रियते इति भावः। अत्र रूपकालङ्कार इति वक्तुं शक्यते "रूपकं रूपितारोपा (पो वि) द्विषये निरपह्नवे"इति विश्वनाथोक्तेः। इहाग्नेर्गन्धर्वत्वारोप एव ओषधीनामप्सरस्त्वारोपे निमित्तं तस्मादत्रापि श्लिष्टशब्दनिबन्धनं केवलपरम्परितं रूपकं हीदं "यत्र कस्यचिद्यारोपः परारोपणकारणम्। तत्परम्परितं श्लिष्टाऽऽश्लिष्टशब्दनिबन्धनम्। प्रत्येकं केवलं मालारूपं चेति चतुर्विधम् ॥" इति तत्रैव तदुक्तेः। एवं वक्ष्यमाणेष्वपि मन्त्रेषु सर्वत्रावगन्तव्यम्। रूपकशब्दार्थस्त्वेवं "रूपयत्युपमानोपमेययोरभेदारोपेणैकतां नयतीति रूपकम्। यथा "मुखं चन्द्रः" इत्यादौ मुखत्वचन्द्रत्वरूपधर्म्मवत्तयोपस्थितयोर्मुखचन्द्रयोरभेदारोपः। एवमग्निर्गन्धर्व इत्यादावपि बोद्धव्यम्। एतच्च साहित्यविनोदिनां विदुषां कृते दिङ्मात्रमिह दर्शितम् ॥ २७ ॥

स॒ᳬहि॒तो व्विश्वसा॑मा॒ सूर्यो॑ गन्ध॒र्वः ।
स न॑ऽइ॒दं ब्रह्म॑ क्ष॒त्रं पा॑तु॒ तस्मै॒ स्वाहा॒ व्वाट् ॥ २८ ॥

अथ मन्त्रार्थः—तत्र "अतिरिक्तम्" इति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि—संहितः सन्दधात्यहोरात्रे इति संहितः "असौ वा आदित्यः सᳬहितः एष ह्यहोरात्रे सन्दधाति" इति श्रुतेरहोरात्रयोः सन्धानकर्त्तायमादित्य एवेत्यवगम्यते। तथा विश्वसामा विश्वानि सर्वाणि सामानि प्रतिपादकत्वेन यस्य स विश्वसामा "यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि"इति श्रुतेः सर्वसामप्रतिपाद्यः स एवायमादित्य इत्य-

प्यवसीयते । यद्वा "विश्वसामेत्येष ह्येव सर्वꣳ साम" इति श्रुतेर्विश्वसामा सर्वसामरूपः सर्वसामवेदमयः स एवायमादित्य इत्यप्यवबुद्ध्यते । य एवम्भूतः सूर्य्यो गन्धर्वः सूर्य्यनामको गन्धर्वः सूर्य्य एव गन्धर्व इति यावत् । "सनऽइदमि"त्यादिकमन्यत्समानम् । अतस्तदर्थः पूर्ववदिहाप्यनुसन्धेय इत्याशयः ॥ २८ ॥

सुꣳहितो विश्वसामा सूर्य्यो गन्धर्वस्तस्य
मरीचयोऽप्सरसऽआयुवो नाम ताभ्यः स्वाहा ॥ २९ ॥

अथ मन्त्रार्थः-तत्र "अतिरिक्तम्" इति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । तथाहि-संहितनामा विश्वसामा सर्वसामवेदमयः सूर्य्य एव योऽयं गन्धर्वस्तस्य गन्धर्वरूपस्य सूर्य्यस्य आयुवो नाम मरीचयो या अप्सरसः सन्तीति शेषः । आसमन्तायुवन्ति मिश्रीभवन्तीत्यायुवः नामैकदेशे नामग्रहणमिति शिष्टानां वचःस्मरणादिह 'आ'इत्येकाक्षरेण आयुषो ग्रहणं तेन आ अर्थात् आयुः युवन्ति योजयन्तीत्यायुवः वृष्ट्यादिद्वारा जीवनहेतुभूता वा नाम तन्नाम्ना प्रसिद्धा मरीचयो या अप्सरसः स्त्रीत्वेनोपभोग्या वर्त्तन्ते इत्यर्थः । ताभ्यः स्वाहेत्यादिकमन्यत्समानम् । अतस्तदर्थः पूर्ववदिहाप्यवगन्तव्यः । गन्धर्वाणामप्सरसो भवन्तीतिप्रसिद्धेर्गन्धर्वरूपापन्नस्य सूर्य्यस्य सम्भोगार्थं स्त्रीत्वेनाप्सरसोऽपि भवितुं युक्ताः, अतस्तस्य सम्भोगार्थं स्त्रीत्वेन सम्भोग्या आयुवो नाम तेजस्त्रसरेणुरूपा मरीचय एवाप्सरसो विद्यन्ते । तदुक्तं च श्रुत्या "सूर्य्यो ह गन्धर्वो मरीचिभिरप्सरोभिर्मिथुनेन सहोच्चक्राम"—इति । तथा "आयुवाना इव हि मरीचयः प्लवन्ते" इति च । ( ९।४।१।८ ) अतस्ताभ्योऽपि मन्त्रेणानेन होमः क्रियत इत्यभिप्रायः ॥ २९ ॥

सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वः ।
स नऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥ ३० ॥

अथ मन्त्रार्थः । तत्र "अतिरिक्तम्" इति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । तथाहि-य ईदृशश्चन्द्रमा गन्धर्वः अथाद्गन्धर्वरूपापन्नो यश्चन्द्रो वर्त्तत इति शेषः । स नऽइदमित्यादिकमन्यत्समानम् । अतस्तदर्थोऽपि पूर्ववदिहाप्यवगन्तव्यः । कीदृशश्चन्द्रमा गन्धर्व इत्यपेक्षायामुच्यते । सुषुम्णः सूर्य्यरश्मिः सुषुम्णनामा सूर्य्यरश्मिरित्यर्थः । सुषुम्णः सुष्ठुसुख इति भावः । सहि नित्यं सर्वाणि भूतानि स्वीयाल्हादनसामर्थ्येन सुखयतीत्याशयः । सूर्य्यस्य रश्मिः सूर्य्यरश्मिः, सुषुम्णनामा एको हि सूर्य्यरश्मिः सूर्य्यान्निःसृत्य चन्द्रमसं प्रति गतः सन् सर्वान्प्राणिनो ह्लादयतीत्यर्थः । तदुक्तं यास्केन "अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यमादित्यतोऽस्य दीप्तिर्भवतीति" । 'सुम्नम्' सुखनामेति निघण्टुः । शोभनेन कर्म्मणा मीयते निमीयते,सुष्ठु मीयते परिच्छिद्यते भोगेनेति वा तच्च सुम्नं सुखम् सुष्ठु सुम्नं सुखं भवति यस्मात्सः सुषुम्न इति प्राप्ते तस्य छान्दसत्वाण्णत्वम् । अतः सुषुम्णः सुसुख इत्युक्तं भवति । यद्वा सुषुम्णः शोभनं सुम्नं सुखं यस्मात्स सुषुम्णः सुयज्ञियः यज्ञद्वारा सुखप्रद इत्यर्थः। तद्द्वारा याज्ञिकानां चन्द्रलोकाप्तेरुक्तत्वात् । तथा सूर्य्यरश्मिः सूर्य्यस्येव रश्मयः किरणा यस्येति विग्रहः । तथोक्तः एवम्भूतश्चन्द्रमा गन्धर्व

इत्यर्थः। तदुक्तं च श्रुत्या "सुषुम्ण इति सुयज्ञियऽइत्येतत्सूर्य्यरश्मिरिति सूर्य्यस्येव हि चन्द्रमसो रश्मयः" इति। शेषं पूर्ववदिहाप्यनुसन्धेयम्॥ ३०॥

सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य
नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वाहा॥ ३१॥

सुषुम्णः सुसुखप्रदः सुषुम्णनामा सूर्य्यरश्मिः सूर्य्यरश्मिसदृशः सूर्य्यरश्मिरेव वा यश्चन्द्रमा गन्धर्वः गन्धर्वरूपापन्नश्चन्द्र इति यावत्। तस्य चन्द्रमसो गन्धर्वस्य गन्धर्वरूपस्य चन्द्रस्येतियावत्। भेकुरयो नाम नक्षत्राण्येव या अप्सरसः सन्तीति शेषः, भां कान्तिं कुर्वन्तीति भेकुरयः पृषोदरादित्वात्साधुः, भेकुरिति नाम्ना प्रसिद्धा इतियावत्। नक्षत्राण्येव या अप्सरसः स्त्रीत्वेनोपभोग्या वर्त्तन्त इति भावः। ताभ्यः स्वाहेत्येतत्पूर्ववत्समानमेव, अतस्तदर्थः पूर्ववदेवात्राप्यनुसन्वेयः। गन्धर्वाणामप्सरसो भवन्तीतिप्रसिद्धेरिह गन्धर्वरूपस्य चन्द्रमसः सम्भोगार्थं स्त्रीत्वेनाप्सरसोऽपि भवितुं युक्ताः, अतस्तस्य सम्भोगार्थं स्त्रीत्वेन सम्भोग्या भेकुरितिनाम्ना प्रसिद्धाः नक्षत्ररूपा एवाप्सरसो विद्यन्ते इत्याशयः। तदुक्तं च श्रुत्या "चन्द्रमा ह गन्धर्वो नक्षत्रैरप्सरोभिर्मिथुनेन सहोच्चक्राम, ता भेकुरयो नामेति भाकुरयो ह नामैता भाᳬहि नक्षत्राणि कुर्वन्ति (९।४।१।९।)" इति। अतस्ताभ्योऽप्यनेन मन्त्रेण होमः क्रियते इत्यभिप्रायः॥ ३१॥

इषिरो विश्वव्यचा वातो गन्धर्वः।
स नऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्॥ ३२॥

अथ मन्त्रार्थः। तत्र "अतिरिक्तम्"इति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। य ईदृशो वातो गन्धर्वः अर्थाद्वायुरेव गन्धर्वः गन्धर्वरूपापन्नो योऽयं वायुरिति यावत्। सन इत्यादिकमन्यत्समानम्। अतस्तस्य स्पष्टोऽर्थ एव। कीदृशो वातः इषिरः "इष गतौ" दिवादिः, इष्यति गच्छतीति इषिरः, औणादिक इरप्रत्ययः शीघ्रगमन इत्यर्थः। पुनः कीदृशः विश्वव्यचाः विश्वस्मिन् व्यचो गमनं यस्य स विश्वव्यचाः सर्वतो गमनशील इत्यर्थः। "इषिर इति क्षिप्र इत्येतद्विश्वव्यचाः इत्येषहीदᳬ सर्व्वं व्यचः करोति" इति श्रुतेः। वायोः सर्वत्र गमनं च प्रसिद्धमेव "वायुः सर्वत्रगो महान्" इति स्मृतेः॥ ३२॥

इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽअप्सरसऽऊर्जो
नाम ताभ्यः स्वाहा॥ ३३॥

अथ मन्त्रार्थ.। तत्र "अतिरिक्तम्" इति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि—इषिरः शीघ्रगामी विश्वव्यचाः सर्वतो गमनस्वभावो यो वातो गन्धर्वः वायुरेवायं गन्धर्वस्तस्य वातस्य गन्धर्वस्य गन्धर्वरूपापन्नस्य वायोः ऊर्जोनाम आपः या अप्सरसः सन्तीतिशेषः। ऊर्जयन्ति जीवयन्ती धान्याद्युत्पादनेनेत्यूर्जः तन्नाम्ना प्रसिद्धाः आपः जलान्येव या अप्सरसः स्त्रीत्वेनोपभोग्या विद्यन्ते इति भावः। ताभ्य इति पूर्ववत्स-

मानमत्रापि। अतः पूर्ववदेवार्थोऽप्यवगन्तव्यः। गन्धर्वाणामप्सरसो भवन्तीति प्रसिद्धेरिह गन्धर्वरूपस्य वायोः सम्भोगार्थं स्त्रीत्वेनाप्सरसोऽपि भवितुं युक्ताः, अतस्तस्य संभोगार्थं स्त्रीत्वेनोपभोग्या ऊर्ज्ज इति नाम्ना प्रसिद्धा आपः एवाप्सरसो विद्यन्ते। तदुक्तं च श्रुत्या "आपो वा ऊर्जोऽद्भ्यो ह्यूर्ग् जायते" इति प्रक्रम्य तत्रैव "वातो ह गन्धर्वोऽद्भिरप्सरोभिर्मिथुनेन सहोच्चक्रामे"त्यादि। (९।४।१।१०) अतस्ताभ्योऽप्यनेन मन्त्रेण होमः क्रियते इत्यर्थः॥३३॥

भुज्युः सुपर्णो यज्ञो गन्धर्वः।
स नऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्॥ ३४॥

"अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि–य ईदृशो यज्ञो गन्धर्वोऽस्तीतिशेषः। योऽयं यज्ञ एव गन्धर्वरूपोऽस्तीत्यर्थः। स न इत्यादेर्व्याख्या तु पूर्ववदिहाप्यनुसन्धातव्या, नहि तत्र कश्चिद्विशेषो नवार्थभेदोऽप्यस्ति। कीदृशो यज्ञ इत्यपेक्षायामुच्यते। भुज्युः "भुज पालनाभ्यवहारयोः" भुनक्ति वृष्ट्यादिद्वारा पालयति सर्वाणि भूतानीति भुज्युः, यद्वा भुनक्ति परमापूर्वोत्पत्तिद्वाराऽनिष्टनिरसनेनारिष्टेः सकाशात्पालयति यजमानानिति भुज्युः। "यज्ञाद्भवति पर्जन्यः पर्जन्यादन्नसम्भवः। अन्नाद्भवन्ति भूतानि यज्ञः कर्म्मसमुद्भवः॥" इति भगवद्वाक्येन यज्ञस्य पर्जन्याद्युत्पत्तिकारणत्वेन वृष्ट्यादिद्वारा सर्वपालकत्वावगतेः भुज्युः अर्थाद्वृष्ट्यादिद्वारा सर्वपालको यज्ञ इत्यर्थः। तदुक्तं च श्रुत्या "यतो हि सर्वाणि भूतानि भुनक्ति"इति। एवं "पुत्रेष्ट्या यजेत पुत्रकामः" इत्यादि श्रुतेर्यज्ञस्य पुत्रोत्पत्तिनिमित्तकपरमापूर्वजनकत्वेन प्राक्तनदुरितक्षयद्वारा पुत्रप्राप्तिहेतुत्वात्पुत्रस्य च "पुंनाम्नो नरकात्त्रायते"इति पुत्रः, इति शब्दव्युत्पत्त्या "पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते। अथ पुत्रस्य पौत्रेण ब्रध्नः प्राप्नोति विष्टपम्॥" इत्यादिवचनेन च नरकत्राणहेतुत्वदर्शनात्। "अग्निहोत्रं जुहुयात्स्वर्गकामः, दर्शपौर्णमासाभ्यां यजेत स्वर्गकामः, ज्योतिष्टोमेन यजेत स्वर्गकामः, अग्नीषोमीयं पशुमालभेत स्वर्गकामः" इत्यादि श्रुतेः, "यज्ञात्प्राप्नोति स्वर्गतिम्" इत्यादिस्मृतेश्च स्वर्गादिप्राप्तिहेतुत्वाद्यज्ञस्य साक्षादपि नरकादिपरिहारपूर्वकस्वर्गादिप्राप्तिकारयितृत्वावगतेः भुज्युः अर्थात्स्वर्गादिफलप्रापकत्वेन यजमानपालको यज्ञ इत्याशयः। यज्ञो गन्धर्वः पुनः कीदृशः सुपर्णः शोभनं पर्णं पतनं स्वर्गमनं यस्य स सुपर्णः स्वर्गमनशील इत्यर्थः। यज्ञे हि स्वर्गे गते यजमानोऽपि स्वर्गं गच्छतीत्यभिप्रायः। य एवम्भूतो यज्ञो गन्धर्वः स नोऽस्माकं ब्रह्म इदं क्षत्रं च पातु तस्मै तादृशाय स्वाहा वाडित्यादि पूर्वोक्त एवार्थोऽत्राप्यवगन्तव्यः। यदत्र वैशिष्ट्यं तच्च "ऋताषाट्" इत्येतत्प्रथममन्त्रव्याख्यायां पूर्वमेव द्रष्टव्यम्॥ ३४॥

भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणाऽअप्सरसस्तावा
नाम ताभ्यः स्वाहा॥ ३५॥

"अतिरिक्त"मिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि–भुज्युः सर्वपालकः सुपर्णः स्वर्गमनस्वभावो यो यज्ञो गन्धर्वः गन्धर्वरूपो यज्ञः योऽयं यज्ञ एव गन्धर्वोऽस्तीतिवाक्यशेषः। तस्य यज्ञस्य गन्धर्वस्य गन्धर्वरूपस्य

यज्ञस्य स्तावानाम दक्षिणा एव या अप्सरसः सन्तीतिशेषः। स्तूयते यज्ञो यजमानश्च याभिस्ताः स्तावा यज्ञयजमानस्तुतिहेतुभूतास्तन्नाम्ना प्रसिद्धाः स्तावानाम्न्यो दक्षिणारूपा अप्सरसः स्त्रीत्वेनोपभोग्या वर्त्तन्ते इत्यर्थः। ताभ्यः स्वाहा, ताभ्यस्तावानाम्नीभ्यो दक्षिणारूपाभ्यो गन्धर्वरूपस्य यज्ञस्य स्त्रीत्वेनोपभोग्याभ्योऽप्सरोभ्यो गन्धर्वपत्नीभ्यः स्वाहा अस्माभिर्दत्तमेतद्धविः सुहुतमस्त्वित्यर्थः। गन्धर्वाणामप्सरसो भवन्तीति प्रसिद्धेर्गन्धर्वरूपस्य यज्ञस्यापि सम्भोगार्थं स्त्रीत्वेनाप्सरसोऽपि भवितुं युक्ताः, अतस्तस्य सम्भोगार्थं स्त्रीत्वेनोपभोग्याः स्तावानाम्न्यो दक्षिणारूपा एवाप्सरसो वर्त्तन्ते। तदुक्तं च श्रुत्या "दक्षिणाभिर्हि यज्ञः स्तूयतेऽथो यो वै कश्चन दक्षिणां ददाति स्तूयत एव सः" तत्र हि "यज्ञो ह गन्धर्वो दक्षिणाभिरप्सरोभिर्मिथुनेन सहोच्चक्राम" (९।४।१।११) इत्यादि, अतस्ताभ्यो़ऽनेन होमःक्रियत इत्याशयः॥ ३५॥

प्रजापतिर्व्विश्वकर्म्मा मनो गन्धर्वः।
स नऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्॥ ३६॥

"अतिरिक्त"मिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि–य ईदृशो मनोगन्धर्वः मनोरूपो गन्धर्वोऽस्तीति शेषः। स न इदमित्यादिपूर्ववदत्राप्यनुसन्धेयम्। कीदृशो मनो गन्धर्व इत्यपेक्षायामुच्यते। प्रजापतिः प्रजायाः पालकः। पुनः कीदृशः विश्वकर्मा विश्वं सर्वं करोतीति विश्वकर्म्मा सर्वकर्त्तेत्यर्थः "मनो वै प्रजापतिर्मन एव हीदꣳ सर्वं करोतीति तस्मान्मनो वै विश्वकर्मेत्याह"इति श्रुतेः। "सहीदꣳ सर्वमकरोदि"ति श्रुत्यन्तराच्च, विश्वकर्मेत्यत्र "अन्येभ्योऽपि दृश्यन्ते" इति करोतेर्मनिन्प्रत्ययोऽत्र गन्तव्यः॥ ३६॥

प्रजापतिर्व्विश्वकर्म्मा मनो गन्धर्वस्तस्य ऋक्सामान्यप्सरसऽएष्टयो नाम ताभ्यः स्वाहा॥ ३७॥

अत्रापि "अतिरिक्तम्" इति कारिकया यच्छब्दादि हीनपदाध्याहारेण वाक्ययोजना द्रष्टव्या। तथाहि–प्रजापतिः प्रजापालकः प्रजेश्वरो विश्वकर्म्मा सर्वप्राणिनां स्वस्वव्यापारेषु तद्द्वारैव प्रवृत्तिदर्शनात्सर्वप्राणिनां सर्वकर्म्मसु प्रवर्त्तकः, सर्वकर्त्ता वा "स हीदꣳ सर्वमकरोत्" इति श्रुतेः। एवम्भूतो यो मनोगन्धर्वोऽस्तीति वाक्यशेषः। तस्य मनसो गन्धर्वस्य मनोरूपस्य गन्धर्वस्येति यावत् एष्टयो नाम ऋक्सामान्यप्सरसो याः सन्तीति शेषः। आसमन्तादिष्यते काङ्क्ष्यतेऽभीष्टं याभिस्ता एष्टयः यज्ञसम्पादनद्वारा यजमानाभीष्टसाधने हेतुभूता ऋक्सामरूपाः स्त्रीत्वेनोपभोग्या या अप्सरसो वर्त्तन्ते इत्यर्थः। ताभ्यः स्वाहा ताभ्यः एष्टिनाम्नीभ्यः ऋक्सामरूपाभ्यो मनसो गन्धर्वस्य स्त्रीत्वेनोपभोग्याभ्योऽप्सरोभ्यो गन्धर्वपत्नीभ्यः स्वाहा अस्मद्दत्तं हविः सुहुतमस्त्वित्यर्थः। गन्धर्वाणामप्सरसो भवन्तीति प्रसिद्धेरत्रापि मनोगन्धर्वस्य सम्भोगार्थं स्त्रीत्वेनाप्सरसो भवितुं युक्ताः। अतस्तस्यसम्भोगार्थं स्त्रीत्वेनोपभोग्याः एष्टिनाम्न्यः ऋक्सामरूपा एवाप्सरसः सन्ति। तदुक्तं च श्रुत्या "मनो ह गन्धर्व ऋक्सामैरप्सरोभिर्मिथुनेन सहोच्चक्रामैष्टयो नामेत्यृक्सामानि वा

एष्टयऽऋक्सामैर्ह्याशासत इति नोऽस्त्वित्थं नोऽस्तु (९।४।१।१२)" इति। अतस्ताभ्योऽप्यनेन मन्त्रेण होमः क्रियते इत्यर्थः। एभिर्द्वादशमन्त्रैर्होमकरणे सति स्वस्वाप्सरोभिर्युक्तानामृताषाडित्यादिनामकानां षण्णामपि गन्धर्वाणां तृप्तिर्भवति। तथात्वे च सति विवाहकर्तुर्वरस्यापि सार्वदिकं दाम्पत्यसुखं सम्पत्स्यते, इति प्रयोजनमुपजीवताऽऽचार्य्येण 'राष्ट्रभृत इच्छन्'इत्यादि सूत्रं सूत्रितम्। अतोऽग्निचयनान्तर्गतस्यास्य राष्ट्रभृद्धोमस्याऽऽवापोऽत्र विहितः, जानन्येन कर्म्मणेत्स्येदिति वचनात्। एवमग्रे जयादिष्वपि बोद्धव्यम्॥३७॥

**चित्तं च चित्तिश्चाकूतं चाकूतिश्च विज्ञातं च विज्ञातिश्च मनश्च शक्करीश्च दर्शश्च पौर्णमासं च बृहच्च रथन्तरं च साम च॥ ३८।३९।४०।४१।४२।४३।४४। ४५।४६।४७।४८।४९॥**

चित्तञ्चेत्यादीनि द्वादश यजूंषि, तेषां परमेष्ठी ऋषिरनिर्दिष्टानि च्छन्दांसि लिङ्गोक्ता देवता जयहोमे विनियोगः। मन्त्रविभागस्त्वेवं बोध्यः "चित्तञ्च, चित्तिश्च, आकूतञ्च, आकूतिश्च, विज्ञातञ्च, विज्ञातिश्च, मनश्च, शक्करीश्च, दर्शश्च, पौर्णमासञ्च, बृहच्च, रथन्तरञ्च, साम च, इत्येवं प्रकारेण त्रयोदश यजूंषीति केषाञ्चित्सम्प्रदायविदां परामर्शः। तत्र साम चेति बृहच्चेत्यनेन सह रथन्तरञ्चेत्यनेन च साकं विशेष्यत्वेन संबध्यते। तथात्वे च सति द्वादशैव यजूंषीत्येके याज्ञिकाः समामनन्ति। तत्र साम्प्रदायिका एव प्रमाणम्। तत्रापि स्वस्वदेशीयपद्धतिरेवानुसरणीया। एवं हि केषाञ्चिन्मते द्वादशैव यजूंषि केषाञ्चिच्च मते त्रयोदश यजूंषीत्यायातम्। परञ्च पाठक्रमादर्थक्रमस्यैव बलीयस्त्वात् 'बृहच्च, रथन्तरञ्च' इत्युभयत्र विशेष्यत्वेन साम्नो युक्तियुक्ताभिधानाद्द्वादशैव यजूंषीति भाष्कृतां गदाधरभट्टाचार्य्यप्रभृतीनां मतं, मह्यमपि तदेव रोचते, पाठक्रमादर्थक्रमो बलीयानिति नियमस्य प्रमाणमन्तराऽतिक्रमणेऽनौचित्यप्रसङ्गात्। मन्त्राणां द्वादशत्वेऽप्ययं विशेषः स्वाहाकारः सर्वत्रानुषजति साकाङ्क्षत्वात्। एवं हि स्वाहाकारः प्रत्येकमभिसंबध्यते, इति वाक्यस्य फलितोऽर्थः प्रतीयते। ननु तर्हि "नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च" इति पाणिन्युक्तेः सर्वत्र चतुर्थी भवितुं युक्तेति चेन्न, वेदस्य रूपान्तरं कर्त्तुं न शक्यतेऽपौरुषेयत्वात्। छन्दसि दृष्टानुविधयो भवन्तीति प्रतिपादनात्सर्वत्र दृष्टानुविधित्वेनैव भवितव्यम्। अतो यथाश्रुता एव मन्त्राः प्रयोक्तव्याः। तथा हि ॐ चित्तञ्च स्वाहा, ॐ चित्तिश्च स्वाहा, ॐ आकूतञ्च स्वाहा, इत्येवं क्रमेण सर्वेऽप्यवगन्तव्याः। तत्र चकाराः सर्वे समुच्चयार्थाभिधायिनः। अथ मन्त्रार्थः। तत्र "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य मन्त्रार्थं विवृणोमि। तथा हि 'चित्तञ्च स्वाहा' चित्तं ज्ञानं ममाऽस्त्विति शेषः। अतश्चित्ताधिष्ठात्र्यै देवतायै स्वाहाकारेण जुहोमीति वाक्यशेषः। तच्चैतन्मद्दत्तं हविः तद्देवतार्थं सुहुतमस्त्वित्यर्थः। मन्त्रार्थे सर्वत्रैव एवमवगन्तव्यम्। तद्यथा चित्तिः परिच्छेदः, आकूतम् आभिमुख्यम्, आकूतिश्चात्मनो धर्म्मविशेषः येन सर्वव्यापारेषु मनः प्रेर्य्यते, इति भावः, विज्ञातं विज्ञानम्, विज्ञातिः विज्ञातार्थः मनः प्रसिद्धमेव सङ्कल्पविकल्पात्मकमिति यावत्। शक्करीः शक्वर्य्यः शकनशीलाः शक्वर्य्यः ऋचः ताश्च बहृचि प्रसिद्धाः, (वा छन्दसीति पूर्वसवर्णदीर्घः) दर्शः प्रसिद्ध एव अमावास्येति यावत्, पौर्णमासं प्रसिद्धमेव, एतदुभयञ्च कर्मपरं दर्शो दर्शप्रयोगः, पौर्णमासं पौर्णमास-

प्रयोगश्चेति भावः। बृहत् साम्नां मध्ये "त्वामिद्धि हवामहे" इत्यस्यामृच्युत्पन्नं बृहत्सामेति प्रसिद्धम्, तथा रथन्तरं साम्नां मध्ये "अभित्वा शूरनो नुमः" इत्यस्यामृच्युत्पन्नं रथन्तरं सामेति प्रसिद्धम्, सामशब्देन प्रगीतमन्त्रवाक्यमभिधीयते। एतत्सर्वं प्रत्येकं ममास्त्विवति वाक्यशेषः। तदेतत्सर्वमपि प्रत्येकं यद्यद्देवताप्रसादान्मम भूयात्तां तां देवतामुद्दिश्य होमः क्रियते। यस्यै यस्यै देवतायै स्वाहाकारेण जुहोमि तस्यै तस्यै देवतायै मद्दत्तं तत्तद्धविस्तत्तद्देवतायै सुहुतमस्त्वित्यर्थः ॥३८॥३९॥४०॥४१॥४२॥४३॥४४॥४५॥४६॥४७॥४८॥४९॥

प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाजयेषु ।
तस्मै व्विशः समनमन्त सर्व्वाः सऽउग्रः सऽइहव्यो बभूव स्वाहा ॥५०॥

प्रजापतिरिति मन्त्रस्य परमेष्ठिप्रजापतिर्ऋषिस्त्रिष्टुप्छन्द इन्द्रो देवता जयहोमे विनियोगः। "अतिरिक्त"मिति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। प्रजानां पतिः प्रजापतिः परमेश्वरः वृष्णे वर्षतीति वृषा तस्मै वृष्णे सेक्त्रे कामाभिवर्षुकाय इन्द्राय जगत्प्रसिद्धाय देवेशाय जयान् जयकर्तृकान् पूर्वोक्तान्मन्त्रान्प्रायच्छत् ददौ देवासुरसङ्ग्रामावसरे इति शेषः। ("दाण दाने" इत्यस्य लङि प्रथमपुरुषैकवचने "पाघ्राध्मे"त्यादिना यच्छादेशे रूपम्) अत एव इन्द्रः पृतनाजयेषु असुरसेनाविजयाख्यकर्म्मसु उग्रः उत्कृष्टः विपक्षतेजोऽभिभावी विपक्षतेजसस्तिरस्कर्त्तेतियावत् बभूव प्रजापतेर्जयमन्त्रप्रदानाद्देवासुरसङ्ग्रामेऽसुरसेनानां पराभवकर्त्ताऽभूदित्यर्थः। एतत्प्रजापतिप्रदत्तविजयमन्त्रप्रसादादेव तस्मै जगत्प्रसिद्धाय देवासुरसङ्ग्रामे प्रजापतेर्विजयमन्त्रप्रभावाल्लब्धविजयाय इन्द्राय सर्वाः विशः लोकत्रयनिवासिन्यः सर्वाः प्रजाः समनमन्त सम्यङ्नताः सम्यक् प्रणामं कृतवत्य इत्यर्थः। एतस्मादेवविजयकारणात् लब्धविजयः स इन्द्रः इ इह (अत्र हकारलोपश्छान्दसः।) इह लोके हव्यः होतुं योग्यः हव्यः होमार्होऽपि बभूवेत्यर्थः। तच्चान्यत्राप्युक्तं श्रुत्या "विश्वकर्म्मन्० तस्मै व्विशः समनमन्त पूर्वीरयमुग्रो व्विहव्यो यथा सत्" (शु. य. वे. मा. सं. ८।४६) अत इदानीमपि इह लोके सर्वाः प्रजाः तस्मै इन्द्राय जुहोति तमिन्द्रं प्रणमन्ति चेति वाक्यशेषः। इन्द्रोन्नतेः कारणं सर्वथा प्रजापतिरेवेत्याशयः। एवञ्च प्रजापतेर्विजयमन्त्रप्रभावादिन्द्रो देवमनुष्याद्यपेक्षया उग्रः लोकत्रयेऽपि सर्वोत्कृष्टो वर्त्तते। किन्तु प्रजापतिस्तु इन्द्रापेक्षयापि परमोत्कृष्टोऽस्तीत्यभिप्रायेण पुनरित्थमुच्यते। स उग्रोऽस्तीतिशेषः। स एव प्रजापतिः उग्रः अतीवोत्कृष्टोऽस्तीत्यर्थः इन्द्रपूज्य त्वादितिभावः। कोऽसौ प्रजापतिरित्यपेक्षायां यः प्रजापतिर्देवासुरसङ्ग्रामावसरे इन्द्राय जयकर्तृकान्मन्त्रान्प्रायच्छदित्येवं वाक्ययोजना, स एव प्रजापतिः सर्वापेक्षयातीवोत्कृष्टःनहि तत्सदृशः कश्चिदन्योऽस्तीतिभावः। तदुक्तं च श्रुत्या "यस्माज्जातं न पुरा किंच नैव यऽआवभूव भुवनानि व्विश्वा। प्रजापतिः प्रजया सꣳ० रराणस्त्रीणि ज्योतीꣳषि सचते स षोडशी ॥ (शु. य. वे. मा. सं. ३२।५॥)"। "यस्मान्न जातः परोऽअन्योऽअस्तियआविवेश भुवनानिव्विश्वा। प्रजापतिः प्रजया सꣳ० रराणस्त्रीणि ज्योतीꣳषि सचते स षोडशी ॥ (शु. य. वे. मा. सं. ८।३६॥)"। "यस्मात्परं नाऽपरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ (कृ. य. वे. तै. सं. श्वे. शा० ३) इति च। स्वाहा पूर्वोक्ताय सर्वोत्कृष्टाय प्रजापतये मद्दत्तमेतद्धविः सुहुतमस्त्वित्यर्थः। मद्धविषा च तुष्टः प्रजापतिर्मह्यमपि कामादिजयार्थं विज्ञानादि शत्रुजयार्थंमो-

जोनामकं बलं जयसामर्थ्यं च मह्यं ददात्वित्याशंसावाक्यार्थः। एभिस्त्रयोदशमन्त्रैर्होमे कृते सति होमकर्त्तुर्विजयो भवतीत्यभिप्रायेण जयहोम इत्यन्वर्थनाम। जयाय होमो जयहोमस्तस्य जयहोमस्य मन्त्रा इति जयहोममन्त्रास्ते पूर्वोक्तप्रकारेणेह मया व्याख्याताः। अतः परश्चा-भ्यातानसंज्ञकहोममन्त्रा व्याख्यास्यन्ते ॥ ५० ॥

**ॐ अग्निर्भूतानामधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याᳪ स्वाहा ॥ ५१ ॥**

अग्निर्भूतानामित्याद्यष्टादशानां मन्त्राणां प्रजापतिर्ऋषिः पंक्तिश्छन्दो लिङ्गोक्ता देवता अभ्यातानहोमे विनियोगः। "अतिरिक्तम्" इति कारिकया हीनपदान्यध्याहृत्य व्याख्याय-तेऽयं मन्त्रः। तत्र च 'स मा अवतु' इतिपदत्रयं बोद्धव्यम्। तथा तच्छब्दश्रवणात् यच्छब्द-श्चाध्याहर्त्तव्यः, यत्तदोर्नित्यसम्बन्धत्वात्। तथाहि भूतानामधिपतिः जाठराग्निरूपेण सर्व-प्राणिनां पालको योऽग्निरस्तीतिशेषः। सोऽग्निः मा मामवतु पालयत्वित्यर्थः। क्व क्व अवत्वि-त्यपेक्षायामुच्यते अस्मिन् ब्रह्मणि ब्राह्मणजातौ ब्रह्मज्ञाने वा, तथा अस्मिन् क्षत्रे क्षत्रिय-जातौ वीर्य्ये वा तथा अस्यामाशिषि आशास्येऽर्थे इति यावत्, तथा अस्यां पुरोधायां पौरो-हित्यक्रियायाम् अग्रेसरतायां वा, तथा अस्मिन्कर्म्मणि विवाहे, तथा अस्यां देवहूत्यां देवानां हूतिः देवहूतिस्तस्यां देवहूत्यां देवाह्वाने च मां रक्षत्वित्यर्थः। स्वाहा तथाविधाय पालकाय अग्नये मद्दत्तमेतद्धविः सुहुतमस्त्वितिभावः। एवं सर्वत्रानुसन्धेयम् ॥ ५१ ॥

**इन्द्रो ज्येष्ठानामधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ५२ ॥**
**यमः पृथिव्याऽअधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ५३ ॥**
**वायुरन्तरिक्षस्याधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ५४ ॥**
**सूर्य्यो दिवोऽधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ५५ ॥**
**चन्द्रमा नक्षत्राणामधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ५६ ॥**
**बृहस्पतिर्ब्रह्मणोऽधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ५७ ॥**

बृहस्पतिः सुराचार्य्यो ब्रह्मणः वेदस्याधिपतिः स्पष्टमन्यत् ॥ ५७ ॥

**मित्रः सत्यानामधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ५८ ॥**
**वरुणोऽपामधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ५९ ॥**
**समुद्रः स्रोत्यानामधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ६० ॥**

स्रोत्यानां नदीनामित्यर्थः। स्पष्टमन्यत् ॥ ६० ॥

**अन्नᳪ० साम्राज्यानामधिपति तन्मावत्वस्मिन्० स्वाहा ॥ ६१ ॥**

साम्राज्यानामैश्वर्य्याणामित्यर्थः। इहान्नविशेषणत्वेन पतिशब्दस्य क्लीबत्वमार्षं व्यत्ययो बहुलमिति निदर्शनात्। तथात्र यदित्यध्याहर्त्तव्यम्। स्पष्टमन्यत् ॥ ६१ ॥

सोमऽओषधीनामधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ६२ ॥

सविता प्रसवानामधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ६३ ॥

रुद्रः पशूनामधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ६४ ॥

त्वष्टा रूपाणामधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ६५ ॥

विष्णुः पर्वतानामधिपतिः स मावत्वस्मिन्० स्वाहा ॥ ६६ ॥

मरुतो गणानामधिपतयस्तेऽवन्त्वस्मिन्० स्वाहा ॥ ६७ ॥

अत्र ये इति पदमध्याहर्त्तव्यं स्पष्टञ्चान्यत् ॥ ६७ ॥

पितरः पितामहाः परेऽवरे ततास्ततामहाः।
इह मावन्त्वस्मिन्० स्वाहा ॥ ६८ ॥

पितरः पितामहाः, एते च प्रसिद्धा एव। तथा परे प्रपितामहा इत्यर्थः। तथा अवरे पितृपितामहप्रपितामहापेक्ष्या तर्प्पणपार्वणरूपपितृकर्म्मणि अवरकालीनाः पश्चात्कालीनाः पश्चाच्छ्राद्धार्हा इत्यर्थः, मातामहा इति यावत्। तथा ततः तस्मादपि पश्चात्कालीनाः, तस्मादपि पश्चाच्छ्राद्धार्हाः प्रमातामहा इत्यर्थः। तथा ततामहास्ततोऽपि पश्चात्कालीनाः तस्मादपि पश्चाच्छ्राद्धार्हाः वृद्धप्रमातामहा इत्यर्थः। एवं हि ये मत्पूज्यतमाः सन्तीतिवाक्यशेषः। एवमनेन षट् पुरुषा उक्ताः ( बहुवचनं च सर्वत्र पूजार्थं बोध्यम् ) ते इह अस्मिँल्लोके इह अस्मिन्विवाहकर्म्मणीति वा मामवन्तु मां पालयन्त्वित्यर्थः। अन्यत्समानं तस्य च स्पष्टोऽर्थ एव ॥ ६८ ॥

अग्निरैतु प्रथमो देवताना ँ सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्।
तदय ँ राजा वरुणोऽनुमन्यतां यथेय ँ स्त्री पौत्रमघन्न रोदात् स्वाहा ॥ ६९ ॥

अग्निरैत्वित्यादिचतुर्णां मन्त्राणां प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता आज्यहोमे विनियोगः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तत्र तच्छब्दयोगाद्यच्छब्दोऽप्यध्याहर्त्तव्यः, यत्तदोर्नित्यसम्बन्धात्। तथा हि योऽग्निरिमां कन्यां मह्यमदादिति वाक्यशेषः। सोऽग्निरैतु आसमन्ताद्भावेनागच्छतु। आगत्य च देवानामिन्द्रादीनां प्रथमो मुख्यः सोऽग्निः अस्यै "षष्ठ्यर्थे चतुर्थीति वाच्यमि"ति वार्त्तिकेन अस्यै इत्यत्र षष्ठ्यर्थे चतुर्थी अस्याः कन्यायाः प्रजां पुत्रादिसन्ततिं मृत्युपाशात् मृत्युः कालस्तस्य मृत्योः पाशः मृत्युपाशस्तस्मान्मृत्युपाशात्कालबन्धनान्मरणादिति यावत् मुञ्चतु मोचयत्वित्यर्थः। अत्रान्तर्भावितो ण्यर्थः। तदयं राजा वरुणः अनुमन्यतां स्वीकरोतु तत्प्रजामोचनमयं वरुणो राजाऽनुमोदयतु अभ्यनुजानात्वित्यर्थः। यथेयं स्त्री पौत्रमघं पुत्रस्य इदं पौत्रं पुत्रसंबन्धि इति यावत् पुत्रजन्यमघं दुःखं प्राप्य न रोदात् पुत्रशोकं प्राप्य न रोदेदिति भावः। 'रोदादिति, "रुदिर् अश्रुविमोचने" इत्यस्माल्लिङर्थे लेट्, तस्य प्रथमपुरुषैकवचने "लेटोऽडाटावि"त्याडागमे "इतश्च लोपः परस्मैपदेष्वि"तीकारलोपे च रूपम् ॥ ६९ ॥

इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः।
अशून्योपस्था जीवतामस्तुमाता पौत्रमानन्दमभिबुध्यतामियᳪं स्वाहा ॥७०॥

उक्तकारिकया हीनपदाध्याहारेणायमर्थः। गार्हपत्यः गृहाय हितो गार्हपत्यस्तन्नामाऽग्निः इमां कन्यां त्रायतां रक्षत्वित्यर्थः। तथा अस्यै कन्यायै प्रजां पुत्रादिसन्ततिं नयतु प्रापयतु एतत्कन्यार्थं पुत्रादिकं ददात्विति भावः। तथा सति इयं कन्या अशून्योपस्था अशून्यक्रोडा अवन्ध्या सफलप्रसवा भर्तृयुक्ता सती जीवतां दीर्घायुषां पुत्रादीनां माताऽस्तु जननी भवतु सर्वदा जीवभर्त्रिका जीवत्पुत्रिका चेयं कन्या भूयादितिवराभिप्रायः। तथा च इयं कन्या जीववत्सा सती पौत्रं पुत्रस्यायं पौत्रस्तं पौत्रं पुत्रसंबन्धिनमानन्दमभिबुद्ध्यताम्। इयं कन्या पुत्रजन्यं सुखं सर्वदा सर्वतो भावेनानुभवत्वित्यर्थः॥ ७०॥

स्वस्तिनोऽअग्ने दिवा पृथिव्या विश्वानि धेह्ययथा यजत्र।
यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रᳪं स्वाहा॥७१॥

यजन्तं त्रायते इति यजत्रस्तत्संबुद्धौ हे यजत्र, हे यजमानपालक, हे अग्ने, दिवा (विभक्तेराकारश्छान्दसः "सुपां सुलुक्०-" इति पाणिन्युक्तेः, एवं पृथिव्या इत्यत्रापि बोध्यम्) दिवा दिवि पृथिव्या पृथिव्यां च स्वस्ति कल्याणं यदस्तीति वाक्यशेषः। तत् द्यावापृथिव्यन्तर्गतं विश्वा (अत्रापि पूर्वसूत्रेणैव विभक्तेराकार;) विश्वं सर्वमपि स्वस्ति कल्याणं नोऽस्मभ्यं (आत्मनि गुरुत्वात्पूजार्थं बहुवचनं बोध्यम्) मह्यं वरायेत्यर्थः। अयथा अयथाक्रममेकदैव निधेहि नितरां देहीत्यर्थः (दधातिरिह दानार्थे डुधाञ् धारण-पोषणयोः, दानेऽपि इत्येके इत्युक्तत्वात्। तस्य निपूर्वकस्य दधातेर्लोण्मध्यमपुरुषैकवचने 'विधेहि' इति रूपम्।) किञ्च हे अग्ने, अस्यां दृश्यमानायां महि मह्यां पृथिव्यां दिवि अन्त-रिक्षे च तथा द्यावापृथिव्योः साहचर्य्यवशादेकं 'दिवि' इति सप्तम्यन्तं पदञ्चाध्याहर्त्तव्यं तेन दिवि स्वर्गे च जातमुत्पन्नं प्रशस्तं श्लक्ष्णं लोकत्रयेऽपि विख्यातं यत् द्रविणं धनमस्तीति शेषः। तत् लोकत्रयविख्यातं लोकत्रयस्थं च चित्रं नानाविधं गोभूहिरण्याश्वादिरूपं धनम् अस्मासु धेहि (अत्रापि पूर्ववद्बहुवचनं बोध्यम्) मयि वरे तत्पूर्वोक्तं धनं धेहि स्थापय (चतुर्थ्यर्थे वा सप्तमी सुपां सुपो भवन्तीति वचनात्) तद्धनमस्मभ्यं धेहि (अत्रापि दा-नार्थं एव) अस्मभ्यं तद्धनं देहीति भावः। (बहुवचनं पूर्ववत्पूजार्थं) तेन मह्यं वराय तत् लोकत्रयविख्यातं लोकत्रयस्थं नानाविधं गोभूहिरण्याश्वादिरूपं धनं त्वं देहीत्यभि-प्रायः॥ ७१॥

सुगन्नु पन्थां प्रदिशन्नऽएहि ज्योतिष्मद्ध्येह्यजरन्नऽआयुः।
अपैतु मृत्युरमृतं मऽआगाद्वैवस्वतो नोऽअभयं कृणोतु स्वाहा॥ ७२॥

'ज्योतिष्मध्ये' अत्रोत्तरपदलोपश्छान्दसो बाहुलकात्। हे ज्योतिष्मध्ये सारभूत, ज्योतिषां ग्रहनक्षत्रादीनां मध्ये अतितीक्ष्णतेजः, हे अग्ने, त्वं नोऽस्मान्प्रति एहि आगच्छ किं

कुर्वन्नेहीत्यपेक्षायामुच्यते। सुगं सुखेन गम्यत इति सुगस्तं सुगं सुखपूर्वकं यथास्यात्तथा गमनयोग्यं पन्थां ( छान्दसो नलोपः ) पन्थानं प्रदिशन् उपदिशन्, अस्मभ्यमिति वाक्यशेषः। अस्मभ्यं धर्ममार्गमुपदिशन्नेहीत्यभिप्रायः। नु अपि च हे अग्ने, त्वं नोऽस्माकम् आयुर्जीवनम् अजरत् ( विभक्तिलोपश्छान्दसः ) अजरन् जरारोगरहितं कुर्वन् सन्नेहीत्यर्थः, किञ्च धर्ममार्गोपदेष्टरि त्वयि आगते सति नोऽस्माकं मृत्युरपैतु संसारमृत्युरपगच्छतु इह संसारे गमनागमनं मास्त्वित्यर्थः। तथा अमृतं मोक्षञ्च मे मम आऽगात् लोडर्थे लुङ् आगच्छत्वित्यर्थः। तथा वैवस्वतो यमः नोस्माकमभयं कृणोतु इह विकरणव्यत्ययः करोत्वित्यर्थः ॥ ७२ ॥

परं मृत्योऽअनुपरेहि पन्थां यस्तेऽअन्यऽइतरो देवयानात्।
चक्षुष्मते शृण्वते ते ब्रवीमि मानः प्रजाᳬं रीरिषो मोत व्वीरान्त्स्वाहा ॥७३॥

संकुसुकदृष्टा मृत्युदेवत्या त्रिष्टुवियमृक्। अस्या विनियोगश्च तत्रैवाज्यहोमे पारस्करेणोक्तः "परंमृत्योइतिचैके प्राशनान्ते" इति। यतः पूर्वमन्त्रे "अपैतु मृत्यु० वैवस्वतो नोऽभयं कृणोतु"इत्युक्तमतोऽत्रापि मृत्युं प्रत्युच्यते। हे मृत्यो, त्वं परा मत्तः पराङ्मुखो भूत्वा परमन्यं पन्थां ( नलोपश्छान्दसः ) पन्थानम् अन्विहि अनुगच्छ मत्तः पराङ्मुखः सन् पश्चात्त्वं स्वमार्गमनुसृत्य स्वस्थानं गच्छेति भावः। कमन्यं पन्थानमिति चेदत्रोच्यते मया। हे मृत्यो देवयानात् देवा यान्ति गच्छन्ति यस्मिन्नसौ देवयानः पन्था तस्माद्देवयानात् देवानां गमनयोग्यात् पथः मार्गात् इतरः भिन्नः अन्यः पितृयानाख्यो यस्ते तव पन्थास्तीति वाक्यशेषः। तमन्यं पन्थानमित्यर्थः। तेन स्वकीयेन पितृयानाख्येन मार्गेण स्वस्थानमनुगच्छेत्यभिप्रायः। किञ्च हे मृत्यो, चक्षुष्मते तथा शृण्वते इह चतुर्थी च षष्ठ्यर्थे, चक्षुष्मतः सकलव्यवहारं दृष्टवतः शृण्वतः सकलव्यवहारं च श्रुतवतस्ते तव समीपे इदं ब्रवीमि किञ्चिदिदं वदामि। इदञ्चादरार्थं वचनं, वस्तुतस्तु नहि तवादृष्टमश्रुतं वा किमप्यस्ति। किं ब्रवीषीति चेत्तत्रोच्यते। हे मृत्यो, नोऽस्माकं प्रजां सन्ततिं वंशपरम्परां मा रीरिषः मा हिंसीरित्यर्थः। उत अपिच नोऽस्माकं वीरान् पुत्रांश्च मा रीरिषः मा वधीरित्यर्थः, वीरशब्दोऽत्र पुत्रवाचकत्वेन अभिहितस्तत्र श्रुतिः प्रमाणं "पुत्रो वै वीरः" इति। तथा माङुपपदत्वादेव "माङि लुङ्"इति सर्वलकारापवादत्वेन इह लुङ्लकारो बोध्यः। वस्तुतस्तु लोडर्थ एवेहाभिप्रेतस्तेन प्रजां पुत्रांश्च न हिंसयेतिभावः। मा रीरिष इति "रिष वधे" स्वार्थे णिजन्तस्य लुङि मध्यमैकवचने माङ्योगादडभावे रूपमवगन्तव्यम् ॥ ७३ ॥

अर्य्यमणं देवं कन्याऽअग्निमयक्षत।
स नोऽअर्य्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा ॥७४॥

स्वाहेति यजुरन्तस्य अर्य्यमणमित्यादिमन्त्रत्रयस्याथवर्ण ऋषिरनुष्टुप्छन्दोऽग्निर्देवता लाजाहोमे विनियोगः, "कुमार्य्या भ्राता शमीपलाशमिश्राल्लाँजानञ्जलिनाञ्जलावावपति ताञ्जुहोति सᳬंहतेन तिष्ठती, "अर्य्यमण० मियᳬंस्वाहे"ति पारस्करोक्तेः। स नोऽअर्य्यमेत्युत्तरार्धेऽस्मच्छब्दयोगात्पूर्वार्धेऽपि 'इयम्' इत्यत्र 'अहम्' इति भवितुं युक्तं किन्तु

"तिङां तिङो भवन्ती"ति वचनादिह 'अयक्षत्' इति यजतेर्लुङ्युत्तमपुरुषैकवचनस्थाने प्रथमपुरुषैकवचनम्। अतस्तदनुसारेणैव 'अहम्' इत्यस्य स्थाने 'इयम्' इति निर्देशः। लुङ्लकारश्चात्र लडर्थे द्रष्टव्यः "छन्दसि लुङ्लङ्लिटः" इति पाणिन्युक्तेः। अथ मन्त्रार्थः। इयं कन्या अग्निमयक्षत, (सुबन्ततिङन्तयोरिह व्यत्ययः) अहं कन्या ईदृशमग्निं यजे पूजयामि अनेन लाजाप्रदानेनेत्यर्थः। कीदृशम् अग्निम् अर्य्यमणं दिवा सूर्य्यरूपमित्यर्थः। "अयमादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे। उभे हि तेजसी संपद्येते उद्यन्तं वादित्यमग्निरनुसमारोहति तस्माद्धूम एवाग्नेर्दिवा ददृशे" इति तित्तिरिश्रुतेरग्निसूर्य्ययोरभेदप्रतिपादनादिति भावः। पुनः कीदृशं, देवं दीव्यतीति देवस्तं देवं द्युतिस्तुतिक्रीडादियुक्तमीदृशमग्निमहं कन्याऽनेन लाजाहोमेन पूजयामीत्यभिप्रायः। सोऽग्निरर्य्यमरूपो देवः अनेन मत्कृतलाजाहोमेन तुष्टः सन् 'इतः पतेः, (बाहुलकादिह घिसंज्ञा) इतः अस्मात् पतेः पत्युः सकाशात् मा मां नो मुञ्चतु नो इति निषेधार्थे णिलोपश्च छान्दसः न प्रमोचयतु मम पतिवियोगः कदाचिदपि न भवत्वित्यर्थः। यद्वा सोऽग्निरर्य्यमरूपो देवः अनेन मत्कृतलाजाहोमेन तुष्टः सन् इतः पितृकुलान्नोऽस्मान् मुञ्चतु पृथक्करोतु पतिकुलं प्रापयत्वित्यर्थः। तथा पतेः पत्युः सकाशात्तु नोऽस्मान्मा मुञ्चतु मा पृथक्करोतु मम पतिसान्निध्यं सर्वदैव विदधात्वित्यभिप्रायः। अस्मिन्पक्षे 'नो' नोऽस्मानित्यस्मदः शसि रूपम्, अत्रैकवचनेऽपि यद्बहुवचनं तच्च "अस्मदो द्वयोश्चे"ति पाणिनिवचनात्। इन्द्रियाद्यवयवगतबहुत्वस्यास्मच्छब्दार्थे समारोपाद्बहुवचनस्य सिद्धिरिति भाष्यादौ स्पष्टम्। 'नस्' इत्यस्य अर्य्यमेत्यकारपरे रुत्वे तस्योत्वे 'आद्गुणः' इति गुणे च कृते 'नो' इति प्रयोगः सिद्धति। 'मुञ्चतु मा' इत्यत्र 'मा' इत्युपसर्गस्य 'मुञ्चतु' इति क्रियापदात्परप्रयोगश्छान्दसः 'छन्दसि परेऽपि' इति पाणिनिवचनात्॥ ७६॥

इयं नार्य्युप ब्रूते लाजानावपन्तिका।
आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा॥ ७७॥

अस्य मन्त्रस्य कन्याकर्तृकलाजाहोमीमन्त्रपाठे प्रयोगदर्शनादस्य मन्त्रस्योत्तरार्द्धे मे, मम, इत्यस्मच्छब्दोपादानाच्च पूर्वार्द्धेऽपि इयमित्यत्र अहमिति भवितुं युक्तं किन्तु ब्रूते इति प्रथमपुरुषप्रयोगानुरोधत एव सर्वनामव्यत्ययश्छान्दसः 'ब्रूते'इत्यत्र उत्तमपुरुषैकवचनस्थाने व्यत्ययेन प्रथमपुरुषैकवचनं तु "तिङां तिङो भवन्ती"ति वचनात्। पुरुषादिव्यत्ययश्चात्र "बहुलं छन्दसी"ति पाणिन्युक्तेश्छन्दसि सर्वविधीनां वैकल्पिकत्वादवधार्य्यः। अथ मन्त्रार्थः-लाजान् आवपन्तिका लाजान् आवपन्ती अग्नौ प्रक्षिपन्ती नारी नरस्यापत्यं स्त्री नारी, नरस्य स्त्री नारीति वा मनुष्यस्य कन्या मनुष्यस्य स्त्रीति वा अहम् उप ब्रुवे अग्निसान्निध्यमुपेत्याग्निं प्रति वदामीत्यर्थः। किं वदामीत्यपेक्षायामुच्यते। (तत्र "अतिरिक्तम्" इति कारिकया 'हे अग्ने इति संबुद्धिपदमध्याहृत्य व्याख्यायते।) तद्यथा-हे अग्ने, मे मम पतिः आयुष्मानस्तु दीर्घायुर्भवत्वित्यर्थः। त्वत्प्रसादादिति वाक्यशेषः। तथा हे अग्ने, मम ज्ञातयः एधन्तां वृद्धियुक्ता भवन्त्वित्याशंसावाक्यं वदामीत्यर्थः। यद्वा 'इयन्नार्युपब्रूते' इति यथास्थितमेव व्याख्येयम्। तत्र "उपेत्युपसर्गवशात्क्रियापदं

कर्मपदञ्चाक्षिप्यते, अग्निमुपेत्येति यावत्। तद्यथा—इयं नारी उपब्रूते अग्निमुपेत्य उपगम्य वदति किं कुर्वन्ती लाजानावपन्तिका लाजान् आवपन्ती अग्नौ प्रक्षिपन्तीत्यर्थः। किं ब्रूते इत्यपेक्षायामाह—'हे अग्ने मे मम पतिः स्वामी आयुष्मानस्तु दीर्घायुर्भवतु तथा मम ज्ञातयः एधन्तां वृद्धियुक्ता भवन्तु' इति ब्रूते। अस्मिन्पक्षे एतदृचः कन्यापक्षीयस्य वरपक्षीयस्य वा यस्य कस्यचिच्छ्रेष्ठपुरुषस्य वरस्येति वा कल्पनीयं, किन्तु तन्नातीव युक्तमिव प्रतिभासते मन्त्रस्यास्य कन्याकर्तृकलाजाहोमीयत्वेन कन्याकर्तृकमन्त्रपाठत्वावगतेः। तस्मात्पूर्वपक्ष एव श्रेयान्॥ ७७॥

**इमाल्लाजानावपाम्यग्नौ समृद्धिकरणं तव।**

**मम तुभ्य च संवननं तदग्निरनुमन्यतामियꣳ स्वाहा॥ ७८॥**

"अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तत्र समृद्धिकरणमिति क्रियाविशेषणं "सुपां सुपो भवन्ती"ति द्वितीयाबहुवचनस्थाने प्रथमैकवचनं वा व्यत्ययेन, तेन लाजाविशेषणं वा बोद्धव्यं, पतिमुद्दिश्य इयं 'कन्या ब्रूते' इति शेषः। तद्यथा—हे पते, तव समृद्धिकरणं मया कृतमेतल्लाजाहोमाख्यं कर्म्म तव समृद्धिकारकं यथास्यात्तथाऽहम् इमान् लाजान् अग्नौ आवपामि प्रक्षिपामीत्यर्थः। यद्वा हे पते, तव समृद्धिकरणं तव समृद्धिकरणान् तव समृद्धिकारकान् इमान् लाजान् अग्नौ आवपामि पुरो दृश्यमानेऽस्मिन् वह्नौ प्रक्षिपामीत्यर्थः। तव पत्युः समृद्ध्यर्थमिदं लाजाहोमाख्यं कर्म्म मया क्रियते तत्त्वं जानीहीति भावः। किंच हे पते, मम कन्यायाः तुभ्य तुभ्यं तव पत्युश्च तत् संवननं वशीकरणं परस्परानुकूल्यम् आवयोः परस्परानुरक्तचित्तत्वम् अग्निः अनुमन्यताम् आवयोरेकचित्तमनुमोदयत्वित्यर्थः। अत्र वा इयमिति पदं योज्यं, तत्र "सुप्तिङुपग्रहे"ति कारिकया लिङ्गव्यत्ययश्च बोध्यः। ततोऽयमर्थः। हे पते, मम कन्यायाः तुभ्य तुभ्यं तव पत्युश्च तत्संवननं वशीकरणं परस्परानुकूल्यम् इयम् अर्थात् अयम् अग्निः अनुमन्यतां स्वीकरोत्वित्यर्थः। तुभ्येति षष्ठ्यर्थे चतुर्थी, तत्र "सुपां सुलुगि"त्यादिना विभक्तिलोपश्छान्दसो बोध्यः॥७८॥

**गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसः।**

**भगोऽअर्य्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्या यदेवाः॥७९॥ऋ.८।३।२७**

**अमोऽहमस्मि मा त्वं मा (सात्वꣳ सा) त्वमस्यमोऽअहम्।**

**सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवीत्वम्॥ ८०॥**

**तावेहि विवहावहै सहरेतो दधावहै।**

**प्रजां प्रजनयावहै पुत्रान्विन्द्या (न्दा) वहै बहून्॥ ८१॥**

**ते सन्तु जरदष्टयः सम्प्रियौ रोचिष्णू सुमनस्यमानौ।**

**पश्येम शरदः शतं जीवेम शरदः शतꣳ श्रृणुयाम शरदः शतम्॥८२॥**

गृभ्णामीत्यस्य याज्ञवल्क्यऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता, अमोऽहमित्यस्य तु भरद्वाजऋषिरुष्णिक्छन्दो विष्णुर्देवता, तावेहि, ते सन्तु० इत्युभयस्याथर्वण ऋषिरनुष्टुप्छन्दो विष्णुर्देवता चतुष्टयस्य वरकर्तृककन्यासाङ्गुष्ठदक्षिणहस्तग्रहणे विनियोगः,"अथाऽस्यै दक्षिणंठ० हस्तं गृह्णाति साङ्गुष्ठं गृभ्णामी"त्यादिपारस्करवचनात्। एताश्चतस्रः ऋचः ऋग्वेदे पठिताः सन्ति। ताश्चैताः "अतिरिक्तम्" इति कारिकया हीनपदान्यध्याहृत्य व्याख्यायन्ते। तत्र गृभ्णामीति प्रथममन्त्रे 'आसः' इत्यत्र आङ्पूर्वात् "अस भुवि" इत्यस्माल्लिङर्थे लेट्। तस्य मध्यमैकवचने "सिब्बहुलं लेटी"ति बाहुलकात्सिवागमाभावे "लेटोऽडाटावि"त्यडागमे "इतश्चलोपः०"—इत्यनेनेकारलोपे विभक्तिसम्बन्धिसकारस्य रुत्वे विसर्गे च कृते आसः इति पदं सिध्यति। भवेरित्यर्थ उक्तो भवतीति। तथाहि—हे कन्यके ते तव हस्तं गृभ्णामि गृह्णामीत्यर्थः। (गृभ्णामीत्यत्र "हृग्रहोर्भश्छन्दसी"ति हरतेर्हस्य भः।) किमर्थं मम हस्तं गृह्णाति भवानिति चेत्तत्रोच्यते। 'सौभगत्वाय' इति। अत्रापि 'ते' इत्यनुषज्यते साकांक्षत्वात्। ते तव सौभगत्वाय शोभनो भगः सुभगः सुभग एव सौभगः (स्वार्थेऽण्) सौभगस्य भावः सौभगत्वं तस्मै सौभगत्वाय सौभाग्यायेत्यर्थः। अपि च यथा त्वं मया पत्या सह जरदष्टिः आसः जरदष्टिर्भवेः जरामश्नुते व्याप्नोतीति जरदष्टिः यद्वा जरन्ती जरां प्राप्ता अष्टिः शरीरं यस्याः सा जरदष्टिः वृद्धशरीरेत्यर्थः। स्वाहा, यथेत्यत्र हेतौ थाल्प्रत्ययः, यथा अर्थात् यतः यस्माद्धेतोः अनेन हस्तग्रहणे त्वं मया पत्या सह चिरजीविनी भूत्वा वृद्धशरीरा स्याः, अतस्तव हस्तं गृह्णामीत्यभिप्रायः। मम हस्तग्रहणे कुतो भवतोऽधिकार इत्याकाङ्क्षायां पुनरुच्यते। हे कन्ये, भगः, अर्य्यमा, सविता, एते द्वादशान्तर्गतसूर्य्यविशेषाः देवाः गार्हपत्याय गृहस्वामिनीत्वाय पुरन्धिः (अत्र द्वितीयैकवचनस्थाने "सुपां सुलुगि"ति 'सु' इत्यादेशः "सुपां सुपो भवन्ती"ति वचनात्।) पुरन्धिः पुरन्धि पुरं दिव्यं रूपं दधातीति पुरन्धिस्तां पुरन्धिं दिव्यरूपां सुन्दरीमिति यावत्। यद्वा पुरम् अग्रमर्थाद् गृहपतेः कर्मेति यावत् तद्दधातीति पुरन्धिस्तां पुरन्धिं गार्हपत्याधिकारिणीमेवम्भूतां त्वा त्वां मह्यं वराय अदुः दत्तवन्तः। अतस्तव हस्तग्रहणे ममाधिकार इत्यनुजानीहीतिवाक्यशेषः। किंच हे कन्ये, तव हस्तग्रहणेऽयमप्यपरो हेतुः। तथा हि यतोऽहम् वरः अमोऽस्मि मा लक्ष्मीः (सा चेह लक्ष्मीः स्त्रीति यावत्) नास्ति मा अर्थात् गृहलक्ष्मीः स्त्री यस्य स अमः गृहलक्ष्मीरहितः भार्य्यारहितोऽस्मीत्यभिप्रायः। त्वं तु माऽसि मा लक्ष्मीस्तद्रूपासि त्वं साक्षाद् गृहलक्ष्मीरसीति यावत्, अहन्तु त्वया गृहलक्ष्म्या विना शून्योऽस्मि, अतस्तस्मादपि कारणादहं तव हस्तं गृह्णामीति त्वं विद्धीत्याशयः। अमोऽहमस्मि मा त्वमित्युक्ते तावतैव वाक्यार्थबोधे मा त्वमस्य मोऽहमिति पुनरुक्तिरादरातिशयद्योतनार्था "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः। किं च हे कन्ये, तव हस्तग्रहणेऽयमप्यपरो हेतुः, तथाहि अहं वरः सामाऽस्मि प्रगीत मन्त्रवाक्यं सामशब्देनोच्यते तद्रूपोऽहमस्मि त्वं च ऋगसि नियताक्षरा नियतपादावसाना ऋगित्युच्यते तद्रूपा त्वमसि "त्वामिद्धि हवामहे" इत्यस्यामृच्युत्पन्नं बृहत्सामेत्यादिप्रसिद्धेर्ऋक्साम्नोरेकत्रावस्थानप्रतीतेर्यज्ञादौ यथाहि ऋचं विना साम्नः सामत्वस्याऽसम्भवस्तथैव त्वां विना ममापि गार्हपत्यकर्मणि गार्हपत्यस्याऽसम्भवस्तस्मादावयोर्गार्हस्थ्यधर्मपरिपालनाय संयोगोऽतीव युक्तः, एतस्मादपि कारणात्तव हस्तं गृह्णामीति स्वहस्तग्रहणेऽपरं हेतुत्वं विद्धीत्यभिप्रायः। अतोऽहं तव हस्तं गृह्णामि त्वं च एहि अभिमुखीभव, तौ

आवां विवहावहै अत्राशंसायां लोट् । आवां मिलित्वा गार्हस्थ्यधर्म्मपरिपालनार्थं विवाहकर्म्म सम्पादयावहै इत्यर्थः । तथा सति आवयोर्विवाहे च सुसम्पन्ने तौ आवां रेतो दधावहै, अत्राप्यशंसायामेव लोट् । विवाहे च सुसम्पन्ने तौ आवां यथावसरं रेतः शुक्रं दधावहै इत्यर्थः । ततश्च रेतसो धारणानन्तरं तौ आवां प्रजां सन्ततिं प्रजनयावहै ( अत्रापि पूर्ववदेव लोट् ) उत्पादयावहै इत्यर्थः । एवं प्रजोत्पत्तावपि तौ आवां बहून्पुत्रान् विन्द्यावहै विन्दावहै लभावहै । ( इहाप्याशंसार्थे लोट् विकरणव्यत्ययश्छान्दसो "व्यत्ययो बहुलमि"ति पाणिनिवचनात् । ) किंच ते पुत्राः जरदष्टयः सन्तु जरदं वार्द्धकमश्नुवते इति जरदष्टयः वार्द्धकशरीरवन्तो भवन्तु इत्यर्थः । आवयोः पुत्राः दीर्घायुषो भवन्त्वित्यभिप्रायः । किं च हे कन्ये, आवां शरदः शतं पश्येम ( अत्र "तिङां तिङो भवन्ती"त्युक्तेर्द्विवचने बहुवचनं बोध्यम् ) शतं वर्षाणि पश्येव तथा शतं शरदः शतं वर्षाणि आवां जीवेम जीवेव तथा शतं शरदः शतं वर्षाणि शृणुयाम शृणुयावेत्यर्थः । तथा च हे कन्ये, आवां किम्भूतौ 'स्वः' इति वाक्यशेषः । सम्प्रियौ अन्योन्यानुरक्तौ इति भावः । तथा रोचिष्णू दीप्तियुक्तौ तथा सुमनस्यमानौ शोभनमनस्कौ ॥७९।८०।८१।८२॥

**आरोहेममश्मानमश्मेव त्वꣳ स्थिरा भव ।**

**अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायतः ॥ ८३ ॥**

आरोहेतिमन्त्रस्याथवण ऋषिरनुष्टुप्छन्दो वधूर्देवता अश्मारोहणे विनियोगः, "अथैनामश्मानमारोहयति—आरोहेम०—पृतनायतः" इतिपारस्करोक्तेः । अथ मन्त्रार्थः । हे कन्ये, त्वम् इमम् अश्मानमारोह आक्रम एतदश्मन उपरि पादारोपणं कुर्वित्यर्थः । तथानेनारोहणेन त्वम् अश्मा इव स्थिरा भव स्वात्मानं दृढीकुर्वित्यर्थः । किं च हे कन्ये, पृतन्यतः त्वत्प्रतिपक्षतया आत्मनः पृतनां सेनामिच्छतः पुरुषान् अभितिष्ठ आक्रम पादेनाक्रम्य तिष्ठेत्यर्थः । तथा पृतनायतः पृतनया सेनया सहायतः आगच्छतस्तादृशान् आत्मनः पृतनां सेनामिच्छतः पुरुषान् अवबाधस्व खण्डयेत्यर्थः । पृतनायत इति लोहितादिगणे पठितः पृतन्यत इति च ॥ ८३ ॥

**सरस्वति प्रेदमव सुभगे व्वाजिनीवति ।**

**यां त्वा व्विश्वस्य भूतस्य प्रगायाम्यस्याग्रतः ॥ ८४ ॥**

**यस्यां भूतꣳ समभवद्यस्यां व्विश्वमिदं जगत् ।**

**तामद्य गाथां गास्यामि या स्त्रीणामुत्तमँय्यशः ॥ ८५ ॥**

सरस्वतीत्यादि मन्त्रद्वयस्य विश्वावसुर्ऋषिरनुष्टुप्छन्दः सरस्वती देवता सरस्वतीदेवताकगाथागाने विनियोगः, "अथ गाथां गायति नियुक्तामप्येके सरस्वति०" इति पारस्करवचनात् । हे सुभगे, भगः षड्विधैश्वर्य्यं शोभनो भगः सुभगः शोभनमैश्वर्य्यमस्ति यस्याः सा सुभगा तत्संबोधने हे सुभगे, शोभनैश्वर्य्ययुक्ते, हे वाजिनीवति, वाजिनी घोटिका सा अस्या अस्तीति वाजिनीवती तत्सम्बुद्धौ हे वाजिनीवति, घोटिकायुक्ते,

हे सरस्वति ! अस्य विश्वस्य सर्वस्य भूतस्य प्राणिजातस्य अग्रतः ( अत्राग्रशब्दात्सप्तम्यर्थे तसिल्प्रत्ययः । ) अग्रे यां त्वा त्वां प्रगायामि उत्कीर्त्तयामि, सा त्वमिदं विवाहकर्म्म प्र अव प्रकर्षेण पालय। किञ्च हे सरस्वति, यस्यां सरस्वत्यां शब्दब्रह्मणः प्रकृतिरूपायां त्वयीतिशेषः भूतं जगदुत्पत्तिकारणभूतं पृथिव्यप्तेजोवाय्वाकाशात्मकं महाभूतं समभवत् सम्यगुत्पन्नमित्यर्थः । तथा यस्यां प्रकृतिरूपायां सरस्वत्यां त्वयि इदं विश्वं सर्वं जगच्च समभवत् सम्यगुत्पन्नमित्यर्थः । त्वमेकापि सती कार्य्यकारणयोर्द्वयोरप्यधिकरणभूताऽसीत्यभिप्रायः । किं च हे सरस्वति, या गाथा गीतिः स्त्रीणामुत्तमं यशः सुकीर्त्तिरित्यर्थः, अद्य तां गाथां गाथात्मिकां कीर्त्तिरूपां सरस्वतीं त्वामिदानीं गास्यामि ( "गै शब्दे" इत्यस्माल्लृडर्थे लृट् । ) गायामीत्यर्थः । सा त्वं ममेदं विवाहकर्म्म प्रमादकृताऽशुद्धमन्त्रपाठजन्यदोषात्पालयेत्याशंसावाक्यार्थः ॥ ८५ ॥

तुभ्यमग्ने पर्य्यवहन्त्सूर्य्याँवहतु ना सह ।
पुनः पतिभ्यो जायां दाग्ने प्रजया सह ॥ ८६ ॥

'तुभ्यमग्ने' इत्येतन्मन्त्रस्याथर्वणऋषिरनुष्टुप्छन्दोऽग्निर्देवताऽग्निप्रादक्षिण्ये विनियोगः । हे अग्ने, अग्ने प्रथमं सोमादिः सूर्य्यां सूर्य्यवत्कान्तिशालिनीमिमां कन्यां तुभ्यं त्वदर्थं पर्य्यवहन् ( "सुपां सुपो भवन्ती"ति वचनात्प्रथमपुरुषैकवचने तद्बहुवचनम् । ) पर्य्यवहत् [illegible] ग्राहितवानित्यर्थः । अतोऽस्यां कन्यायां तवाधिकार इत्यभिप्रायः । अतोऽस्यां तवाधिकारं ज्ञात्वा त्वामेव याचे इति वाक्यशेषः । तथाहि हे अग्ने, यतस्तवैवाधिकार इदानीमतस्त्वया सह त्वत्सहकृतेनेत्यर्थः । पुनः ना मनुष्य इमां कन्यां वहत्वित्यभिप्रायेण प्रजया सन्तत्या सह इमां जायां मह्यं मनुष्यायेतिशेषः, पतिभ्यः ( "सुपां सुपो भवन्ती"तिवचना"त्सुपां सुलुगि"ति पाणिन्युक्तेश्च पतिशब्दाच्चतुर्थ्येकवचने तद्बहुवचनं ) पत्ये त्वं दाः देहीत्यर्थः । ( दा इति लोडर्थे लेटि मध्यमपुरुषैकवचने "सिब्बहुलं लेटी"ति सिबागमे इतश्चेतीकारलोपे "हल्ङ्या०" इत्यादिना सकारलोपे सिपः सकारस्य रुत्वे विसर्गे च 'दाः' इति रूपं भवति ततश्च छान्दसः सन्धिः ॥ ८६ ॥

एकमिषे विष्णुस्त्वा नयतु ॥ ८७ ॥
द्वे ऊर्ज्जे विष्णुस्त्वा नयतु ॥ ८८ ॥
त्रीणि रायस्पोषाय विष्णुस्त्वा नयतु ॥ ८९ ॥
चत्वारि मायोभवाय विष्णुस्त्वा नयतु ॥ ९० ॥
पञ्च पशुभ्यो विष्णुस्त्वा नयतु ॥ ९१ ॥
षडृतुभ्यो विष्णुस्त्वा नयतु ॥ ९२ ॥
सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु ॥ ९३ ॥

'एकमिषे'इत्यादीनि सप्त यजूंषि। तेषां प्रजापतिर्ऋषिरनिर्दिष्टानि छन्दांसि लिङ्गोक्ता देवता सप्तपदीप्रक्रामणे विनियोगः, "अथैनाᳬ सप्त पदानि प्रक्रामयति, एकमिषे०" इत्या-

दिपारस्करवचनात् । अथमन्त्रार्थः । हे कन्ये, एकं पदं त्वा त्वां विष्णुर्नयतु प्रापयतु, किमर्थम् इषे अन्नाय अन्नप्राप्त्यर्थमित्यर्थः । तथा ऊर्जे बलाय बलप्राप्त्यर्थं द्वे पदे विष्णुः त्वा त्वां नयतु प्रापयत्वित्यर्थः । रायस्पोषाय धनपुष्ट्यै त्वा त्वां त्रीणि पदानि विष्णुर्नयतु प्रापयत्वित्यर्थः । तथा मायोभवाय सुखभवाय सुखोत्पादनार्थं त्वा त्वां चत्वारि पदानि विष्णुर्नयतु प्रापयत्वित्यर्थः । तथा पशुभ्यः पश्वर्थं त्वा त्वां पञ्च पदानि विष्णुर्नयतु प्रापयत्वित्यर्थः । तथा ऋतुभ्यः ऋत्वर्थं विष्णुस्त्वा त्वां षट् पदानि नयतु प्रापयत्वित्यर्थः । तथा त्वा त्वां विष्णुर्नयतु प्रापयतु मदनुवर्त्तनार्थं भूरादिसप्तलोकप्रख्यातार्थञ्च सप्त पदानीति वाक्यशेषः । तथाहि—हे सखे, ( पुंस्त्वमार्षं ) हे सखि, अस्मन्मित्रभूते, प्रिये, एवंप्रकारेण विष्णुक्रामिता त्वं मामनुव्रता भव मदनुवर्त्तिनी भवेत्यर्थः । तथा सप्तपदा भव भूरादिसप्तलोकप्रख्याता भवेत्यर्थः । स्त्रीणां प्रख्यातिस्तु भूरादिसप्तलोकेषु पातिव्रत्यप्रख्यापनेन धर्म्मात्मसन्तानोत्पादनेन च भवतीति प्रसिद्धं तदुभयमिहाऽऽशास्यते इत्यभिप्रायः ॥ इह सप्तमे हि पादप्रक्रममन्त्रे 'सखे' इति सम्बोधनं दृश्यते । अतोऽनुमीयते 'पत्या सहेह नारीणां मैत्री स्यात्सप्तमे पदे ।' इति यन्निबन्धकारवचनं तदपि साधुतरमेव ॥ ८७॥८८॥८९॥९०॥९१॥९२॥९३ ॥

आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम् ॥९४॥

आपः शिवा इत्यस्य प्रजापतिर्ऋषिरनिर्दिष्टं छन्दो लिङ्गोक्ता देवता वरकर्तृककन्याऽभिषेचने विनियोगः, "तत एनां मूर्द्धन्यभिषिञ्चति, आपः शिवाः" इति पारस्करवचनात् । मन्त्रेऽस्मिन्तच्छब्दश्रवणाद्यच्छब्दोऽप्यध्याहर्त्तव्यः यत्तदोर्नित्यसंबन्धात् । तथाहि—हे कन्ये, या आपः शिवाः कल्याणकारिण्यः, याश्च शिवतमाः अतिशयेन कल्याणकारिण्यः तथा याश्च शान्ताः अनुपद्रवाः अनुपद्रवकारिण्यः, एवं याश्च शान्ततमाः अतिशयेन शान्ताः अनुपद्रवकारिण्यः आपः सन्तीति शेषः। तास्तथाविधा आपः ते तव भेषजं रोगनाशकं भैषज्यं कृण्वन्तु कुर्वन्त्वित्यर्थः । एतदर्थं त्वामभिषिञ्चामीति वाक्यशेषः । कृण्वन्त्वित्यत्र "व्यत्ययो बहुलम्"ति विकरणव्यत्ययो बोध्यः ॥ ९४ ॥

'आपोहिष्ठेत्यादि तृचस्य सिन्धुद्वीप ऋषिर्गायत्रीछन्द आपो देवता वरकर्तृककन्याभिषेचने विनियोगः, "आपो हिष्ठेति च तिसृभिः" इति पारस्करवचनात् । तृचं स्नानप्रकरणे व्याख्यातम् ॥ ९५॥९६॥९७ ॥

'तच्चक्षुरिति दध्यङ्ङाथर्वण ऋषिः पुरउष्णिक्छन्दः सूर्यो देवता तदीक्षणे विनियोगः । तच्चेक्षणं प्रेषपूर्वकं, प्रेषश्च सूर्य्यमुदीक्षस्वेति । "अथैनाᳫं सूर्य्यमुदीक्षयति तच्चक्षुरिति पारस्करोक्तेः । मन्त्रश्चायं सन्ध्याप्रकरणे व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या ॥ ९८ ॥

मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं तेऽस्तु ।
मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम् ॥ ९९ ॥

'मम व्रते ते' इत्यस्य परमेष्ठी ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता वरकर्तृककन्याहृदयालम्भने विनियोगः, "अथास्यै दक्षिणाᳬंसमधिहृदयमालभते मम व्रते ते० मह्यमिति" पारस्करवचनात् । आलम्भनं चेह स्पर्शनम् (आङ्पूर्वो लभतिः स्पर्शनार्थेऽपीत्युक्तत्वात्) हे कन्ये, ते तव हृदयं "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरसिंहोक्तेः हृदयं मनः मम व्रते (व्रतमिति कर्म्मनामेति निघण्टुः) स्वीयकर्मणि दधामि स्थापयामि त्वदीयं मनः यथा मम निश्चेतव्यकर्म्मसु प्रवर्त्तेत तथाहं त्वदीयं मनः स्वायत्तं करोमीत्यर्थः । तदेव पुनरपि प्रकारान्तरेण दृढयता मयेदमुच्यते । हे कन्ये, ते तव चित्तं हृदयं त्वदीयं मनः मम चित्तमन्वस्तु मम वरस्य चित्तानुकूलं भवत्वित्यर्थः । अतस्तदर्थं मम वाचं मदीयं वचनं त्वम् एकमनाः एकाग्रचित्ता सती जुषस्व सेवस्व मदीयवचनकारिणी भवेत्यर्थः । तदर्थं च प्रजापतिर्ब्रह्मा त्वा त्वां मह्यं नियुनक्तु नियोजयत्वित्यर्थः । "चञ्चलं हि मनः कृष्णप्रमाथि बलवद् दृढम् ।" इत्यादि श्रीमद्भगवद्गीतायामर्ज्जुनवाक्यान्मनसश्चापल्यावगतेस्तद्दृढार्थमिह भृशमभिहितम् । "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः ॥९९॥

सुमङ्गलीरियं वधूरिमाᳬं समेत पश्यत ।
सौभाग्यमस्यै दत्त्वा यथास्तं विपरेतन ॥ १०० ॥

सुमङ्गलीरित्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो विवाहाधिष्ठात्र्यो देवता कन्याया अभिमन्त्रणे विनियोगः, "अथैनामभिमन्त्रयते सुमङ्गली०–" इति पारस्करोक्तेः । हे विवाहाधिष्ठात्र्यो देवताः, इयं वधूः सुमङ्गलीः शोभनमङ्गलयुक्ता सञ्जाताऽनेन विवाहकर्म्मणेति वाक्यशेषः । अतो यूयमिमामित्थम्भूतां शोभनमङ्गलयुक्तां वधूं प्रति समेत सङ्गच्छत । सङ्गम्य च यूयमिमां वधूं पश्यत सौम्यदृष्ट्या अवलोकयतेत्यर्थः । युष्माभिर्विवाहदेवताभिर्दृष्टा इयं वधूः सर्वदैव शोभनमङ्गलयुक्ता स्थास्यति, अतो यूयं पश्यतेत्यभिप्रायः । दृष्ट्वा च अस्यै वध्वै सौभाग्यं साधव्यं माङ्गल्यं दत्त्वा यथास्तं यथागतं स्वस्वस्थानं समेतेत्यनुषङ्गः, सङ्गच्छतेत्यर्थः । किंच यूयं विपरेतन नैवेति वाक्यशेषः, इदानीमत्रागता यूयं न विपरेतन विमुखतया मा परागच्छत किन्तु पुत्रादिमङ्गलमाशास्य पुनरागमनाय यूयं व्रजत अस्याः पुत्रोत्सवादि माङ्गल्यमाशास्य तथा गन्तव्यं युष्माभिर्यथास्याः पुत्रोत्सवादौ पुनरप्यागन्तव्यमित्याशयः । 'दत्वायाथास्तम्' इति पाठपक्षे 'दत्वाय–अथ–अस्तम्' इति पदत्रयं विभज्य व्याख्यातव्यं, तद्यथा अस्यै वध्वै सौभाग्यं पूर्वोक्तलक्षणं माङ्गल्यं दत्वाय दत्वा अथ सौभाग्यदानानन्तरमस्तं न विपरेतन अस्तं गमनास्तमपुनरागमनं यथास्यात्तथा न विपरेतन न विपरेत विमुखतया मा परेत मागच्छतेत्यर्थः । पक्षेऽस्मिन्दाधातोः क्त्वाप्रत्ययस्तस्मात्परो यगागमश्च 'क्त्वो यक्' इति पाणिनिवचनात् । विपरेतनेत्यत्र विपरेत्युपसर्गद्वयपूर्वस्य "इण् गतौ" इत्यस्य लोण्मध्यमपुरुषबहुवचने "तस्थस्थमिपां तान्तन्तामः" इति थस्य तकारः, ततश्च "तप्तनप्तनथनाश्च" इति 'त' इत्यस्य स्थाने 'तनप्' इत्यादेशो बोद्धव्यः । वधूरित्यत्र "वहोधश्च" इत्यौणादिकं ऊप्रत्ययो हकारस्य धकारश्च बोध्यः । तथा सुमङ्गलीरित्यत्र तु "छन्दसीवनिपौ च वक्तव्यौ" इति वार्तिकेन सुमङ्गलशब्दादीप्रत्ययः ॥ १००॥

इह गावो निषीदन्त्विहाऽश्वाऽइह पूरुषाः ।
इहो सहस्रदक्षिणो यज्ञऽइह पूषा निषीदतु ॥ १०१ ॥

इह गाव इत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता वध्वा उपवेशने विनियोगः, "तां दृढपुरुषऽउन्मथ्य प्राग्वोदग्वानुगुप्तागार आनडुहे रोहिते चर्मण्युपवेशयति इह गावो" इति पारस्करवचनात्। हे कन्ये, त्वमिहासने उपविशेति वाक्यशेषः। तथा त्वया सह इह स्थाने गावोऽपि निषीदन्तु उपविशन्त्वित्यर्थः। न केवलं गाव एव किन्तु अश्वा अपि इह निषीदन्त्वित्यनुषङ्गः। तथा पूरुषाः पुरुषाश्च निषीदन्त्वित्यनुषङ्गः। इहोपवेशनेन तव गावोऽश्वाश्च भवन्तु तथा परिजनमनुष्याश्च त्वया सहोपविशन्त्वित्यर्थः। 'इह उ' इत्यत्र उकारोऽप्यर्थीयः। सहस्रदक्षिणो बहुदक्षिणाको यज्ञ उ यज्ञोऽपि इह निषीदतु इहोपवेशनेन त्वं यज्ञाधिकारिणी च भवेत्यर्थः। तथा पूषा पुष्टिकारको द्वादशादित्यान्तर्गतः सूर्य्यविशेषः सोऽपि त्वया सह इहासने निषीदत्वित्यनुषङ्गः। "आरोग्यं भास्करादिच्छेदि"ति वचनादादित्येन सहोपवेशनात्तवारोग्यं भविष्यतीत्याशयः। यत एतैः सहासने उपविष्टायास्तव सर्वथा कल्याणं भविष्यति, अतस्त्वमेतैः सहास्मिन्नासने उपविशेत्याशंसावाक्यार्थः ॥ १०१ ॥

ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्ये मयि ।
मह्यं त्वादाद्बृहस्पतिर्मया पत्या प्रजावती सञ्जीव शरदः शतम् ॥१०२॥

ध्रुवमसीति मन्त्रस्य परमेष्ठी ऋषिः पङ्क्तिश्छन्दः प्रजापतिर्देवता ध्रुवनिरीक्षणे विनियोगः, "अस्तमिते ध्रुवं दर्शयति ध्रुवमसि०–" इति पारस्करोक्तेः। हे वधूः, त्वं ध्रुवमसि ( लुप्तोपमानमेतत् ) यथाऽऽकाशे ध्रुवनामको ज्योतिर्विशेषो निश्चलोऽस्तीति शेषः। तथा त्वमपि एतद्ध्रुवदर्शनेन ध्रुवमसि ( "सुप्तिङुपग्रहलिङ्गनराणामि"ति कारिकयात्र लिङ्गव्यत्ययो द्रष्टव्यः। ) ध्रुवासि तद्वन्निश्चला भवसीत्याशास्यते मया वरेण। अत एव त्वा त्वां ध्रुवं ( लिङ्गव्यत्ययः ) ध्रुवां निश्चलां पश्यामि अवलोकयामीत्यर्थः। किमर्थमिति चेत्तत्रोच्यते। त्वं मयि वरे ध्रुवा निश्चला सती पोष्ये पोष्या पोषणीया एधि भव, इत्येतदर्थं त्वां ध्रुवं ( लिङ्गव्यत्ययः ) ध्रुवां पश्यामीति पूर्वेणान्वयः। प्रथमैकवचने 'पोष्या' इति प्राप्ते 'सुपां सुलुगि'त्यादिना विभक्तेः 'शे' इत्यादेशे शकारलोपे "बहुलं छन्दसी"ति सर्वविधीनां वैकल्पिकत्वाद्वृद्ध्यभावे गुणे सति 'पोष्ये' इति पदं सिद्ध्यति। तथाहि–हे वधूः, त्वा त्वां बृहस्पतिर्मह्यं वराय अदात् दत्तवानित्यर्थः। अतस्त्वं मया पत्या सह प्रजावती पुत्रादिसहिता भूत्वा शरदः शतं शतवर्षपर्य्यन्तं सञ्जीव मया सह चिरजीविनी भवेत्यर्थः ॥ १०२ ॥

बर्हिर्होममन्त्रः पूर्णाहुतिमन्त्रश्चाग्रे होमप्रकरणे व्याख्यास्यते। त्र्यायुषमिति शतरुद्रिये व्याख्यातः ॥ ॥१०३॥१०४॥१०५॥

॥ इति विवाहमन्त्रव्याख्या ॥

## ॥ अथ चतुर्थीकर्ममन्त्राः ॥

अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वां नाथकामऽउपधावामि यास्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा ॥१॥

'अग्ने प्रायश्चित्ते' इत्यादीनां परमेष्ठी ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता चतुर्थीकर्म्मणि घृतहोमे विनियोगः, "चतुर्थ्यामपररात्रेऽभ्यन्यरतोऽग्निमुपसमाधाय० आज्याहुतीर्जुहोति, अग्ने प्रायश्चित्ते०"-इति पारस्करवचनात्। अथ मन्त्रार्थः। हे प्रायश्चित्ते, सर्वदोषापहारक, हे अग्ने, त्वं देवानामिन्द्रादीनां प्रायश्चित्तिरसि सकलदोषापहर्त्ता भवसि। अत एव नाथकामः याञ्चाकामः त्वा त्वामुपधावामि याञ्चार्थं त्वामुपसर्प्पामीत्यर्थः। कासौ याञ्चा यदर्थं त्वं मामुपसर्प्पसीत्याकाङ्क्षायामुच्यते। हे अग्ने, अस्यै (षष्ठ्यर्थे चतुर्थी "षष्ठ्यर्थे चतुर्थीति वाच्यम्" इति वार्त्तिककारोक्तेः।) अस्याः वध्वाः या पतिघ्नी तनूरस्तीतिशेषः, पतिं हन्तीति पतिघ्नी पतिघातिनी तनूरस्ति अस्यै अस्या वध्वास्तां पतिघ्नीं तनूं नाशय अस्याः यदङ्गं पतिहिंसकं वर्त्तते पतिनाशकं तदङ्गमर्थात्तदलक्षणमशुभचिह्नमस्याः सकाशात्त्वमपाकुर्वित्यर्थः। अतस्तदर्थं त्वामहमुपसर्प्पामीत्यभिप्रायः। स्वाहा तथाविधोपकारकाय तुभ्यमग्नये मद्दत्तमेतद्धविः सुहुतमस्तु, एतदर्थं स्वाहाकारेण इदमाज्यं जुहोमि तत्त्वं स्वीकुर्वित्याशंसावाक्यार्थः ॥१॥

वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वां नाथकामऽउपधावामि यास्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा ॥२॥

हे प्रायश्चित्ते, सर्वदोषापहारक, हे वायो, अस्यै अस्याः वध्वाः या प्रजाघ्नी सन्तानविरोधिनी तनूरस्तीति शेषः। अस्यै अस्याः वध्वास्तां प्रजाघ्नीं तनूं नाशय तदपलक्षणमशुभचिह्नमस्याः सकाशात्त्वमपाकुर्वित्यर्थः। शेषश्च स्पष्टार्थ एव। अतोऽत्रापि पूर्ववद्व्याख्यानुसन्धेया ॥२॥

सूर्य्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वां नाथकामऽउपधावामि यास्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा ॥३॥

हे प्रायश्चित्ते, सर्वदोषापहारक, हे सूर्य्य, अस्यै अस्याः वध्वाः या पशुघ्नी गवादिपशुनाशिनी तनूरस्तीतिशेषः। तां पशुघ्नीं तनूं नाशय तदपलक्षणमशुभचिह्नमस्याः सकाशात्त्वमपाकुर्वित्यर्थः। अन्यत्समानं पूर्ववदिहाप्यवगन्तव्यम् ॥३॥

चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वां नाथकामऽउपधावामि यास्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा ॥४॥

हे प्रायश्चित्ते, सर्वदोषापहारक, हे चन्द्र, अस्यै अस्याः वध्वाः या गृहघ्नी गार्हस्थ्यविरोधिनी तनूरस्तीत्यादि पूर्ववत् ॥४॥

**गन्धर्व प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वां नाथकामऽउपधावामि यास्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहा ॥५॥**

हे प्रायश्चित्ते, सर्वदोषापहारक, हे गन्धर्व, अस्यै अस्याः वध्वाः या यशोघ्नी यशोनाशिनी तनूरस्तीत्यादि पूर्ववत् ॥ ५ ॥

**या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नीं ततऽएनां करोमि सा जीर्य त्वं मया सह ॥६॥**

'या ते' इत्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता वध्वा अभिषेचने विनियोगः, "तत एनामभिषिञ्चति या ते पतिघ्नी०" इति पारस्करवचनात् । अथ मन्त्रार्थः । तत्र तच्छब्दोपादानाद्यच्छब्दोऽप्यध्याहर्त्तव्यः यत्तदोर्नित्यसम्बन्धात् । तथाहि—हे वधु, या ते तव तनूः यत् यस्मात् कारणात् पतिघ्नी पतिनाशिनी, प्रजाघ्नी सन्तानविरोधिनी, पशुघ्नी गवादिपशुनाशिनी, तथा गृहघ्नी गार्हस्थ्यविरोधिनी, एवं यशोघ्नी कीर्त्तिनाशिनी एवम्भूता निन्दिता दोषावहास्तीति शेषः । ततस्तस्मात्कारणात् तां दोषवहाम् एनाम् एतां तनूं जारघ्नीं जार उपपतिस्तद्घातिनीं करोमीत्यर्थः । अनेनाभिषेककर्म्मणेति शेषः । सा त्वं च निर्दुष्टशरीरा भूत्वा मया पत्या सह जीर्य जरां प्राप्नुहि दीर्घायुषी भवेत्यभिप्रायः ॥६॥

**प्राणैस्ते प्राणान्त्सन्दधाम्यस्थिभिरस्थीनि ।**
**माꣳसैर्माꣳसानि त्वचा त्वचमिति ॥७॥**

'प्राणैस्ते' इत्यस्य प्रजापतिर्ऋषिरनिर्दिष्टं छन्दो लिङ्गोक्ता देवता वध्वाः स्थालीपाकप्राशने विनियोगः, "अथैनाꣳ स्थालीपाकं प्राशयति प्राणैस्ते०" इति पारस्करोक्तेः । हे वधु, ते तव प्राणान् प्राणैः स्वकीयैः प्राणैः सह अहं सन्दधामि संयोजयामि अनेन स्थालीपाकप्राशनेन कर्मणा एकीकरोमीत्यर्थः । तथा अस्थिभिरस्थीनि त्वदीयान्यस्थीनि स्वकीयैरस्थिभिः सह सन्दधामीत्यनुषङ्गः । तथा मांसैर्मांसानि त्वदीयानि मांसानि स्वकीयैर्मांसैः सह सन्दधामीत्यनुषङ्गः । तथा त्वचा त्वचं त्वदीयां त्वचं स्वकीयया त्वचा त्वगिन्द्रियेण सह सन्दधामीत्यनुषङ्गः । एतत्स्थालीपाकप्राशनकर्म्मणाऽऽवयोरेकप्राणत्वैकाऽस्थित्वैकमांसत्वैकचर्मत्वानि सञ्जातानीत्यर्थः । अतस्त्वमद्य प्रभृति ममाऽर्द्धाङ्गिनी भवेत्याशंसावाक्यार्थः ॥७॥

॥ इति चतुर्थीकर्म्ममन्त्रव्याख्या ॥

## ॥ अथ गर्भाधानमन्त्रव्याख्या ॥

ॐ यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम्। वेदाहं तन्मां तद्विद्यात्। पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम् ॥ १ ॥

'यत्ते सुसीमे'इत्यस्य प्रजापतिर्ऋषिरनिर्दिष्टं छन्दो लिङ्गोक्ता देवता गर्भाधानकर्म्मणि वध्वा हृदयस्पर्शने विनियोगः, "अथास्यै दक्षिणाꣳसमधिहृदयमालभते यत्ते सुसीमे०" इति पारस्करवचनात्। हे सुसीमे, शोभना सीमा अवयवसन्धिर्यस्याः सा सुसीमा तत्सम्बुद्धौ हे सुसीमे, शोभनावयवसन्धे, हे वधु, ते तव तत् हृदयं चित्तमहं वेद जानामीत्यर्थः। किं तत् हृदयमित्यपेक्षायामुच्यते। यत्ते तव हृदयं चित्तं दिवि आकाशे चन्द्रमसि श्रितमर्थात्स्थितमित्यर्थः। चन्द्रचित्तयोराह्लादकसामान्यात्सर्वप्राणिनां चित्तावस्थितिः चन्द्रमस्येव वर्त्तते परमात्मनो मनसः सकाशाच्चन्द्रमस उत्पत्तिदर्शनात् "चन्द्रमा मनसो जातः" इतिश्रुतेः पञ्चतत्त्वावसानसमये सर्वप्राणिनां मनश्चन्द्रे विलीयते। अतः प्राणिनामुत्पत्तिसमये चन्द्रमसः सकाशादेव मन आकृष्य तत्तत्प्राणिदेहे धात्रा स्थाप्यते। एतदभिप्रायेणैव 'दिवि चन्द्रमसि श्रितम्' इत्युक्तं भवति। अतः कामाकृष्टस्य मनसश्चन्द्रदर्शनेन कामजागृतिर्भवतीतिसकलजनानुभवसिद्धिः। अतः साहित्यशास्त्रे चन्द्रादीनामुद्दीपनविभावत्वेनाभिधानं दृश्यते। "चन्द्रचन्दनयो रोलं रुताद्युद्दीपनं मतम्" इति। यत्तु कैश्चिदन्यथाभिहितम्, प्रथमतो हि स्त्रीणां चन्द्रः स्वामीतिनियमः "पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः।" इति स्मृतेः, अतस्तदाहृतं ते चित्तम् इति, तदतीवाऽसामञ्जस्यं, चन्द्रमसः स्वाम्युत्तरं गन्धर्ववह्नयोः स्वामित्वदर्शने चन्द्रमसि मनसोऽनवस्थानात्तादृश्या बालिकया सह चन्द्रादेः सम्भोगत्वासम्भवाच्च "पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिरि"त्यत्र भुक्तिः पालनार्थे नतु सम्भोगार्थे। "सोमः प्रथमो विविदे गन्धर्वो विविदऽउत्तरः॥ तृतीयोऽअग्निष्टे पतिरि"ति वेदमन्त्रे पतिशब्दोपादानात्पातीति पतिः रक्षक इत्यर्थावगतेश्च सोमगन्धर्ववह्नयो जन्मप्रभृति षड्वर्षपर्य्यन्तं "षडब्दमध्ये नोद्वाह्ये"त्यादि ज्योतिर्निबन्धस्थवचनस्वरसात्, तथा "सार्धसप्ताब्दमध्ये तु कन्योद्वाहो विगर्हितः। तत उर्ध्वञ्च कन्याया विवाहस्तु प्रशस्यते" इति स्मृत्यन्तरवचनानुग्रहाच्च सार्धसप्तवर्षपर्य्यन्तं स्त्रीणां रक्षकत्वेन भवन्तीत्येवायातमतः पूर्वोक्तार्थ एव श्रेयान्। किञ्च हे वधु ते तव तत् हृदयं मां विद्यात् पतित्वेन मामनुजानीयादित्यर्थः। एवं परस्परहृद्यसंवेद्यत्वेन आवामविकलेन्द्रियौ भूत्वा शरदः शतं शतवर्षपर्यन्तं पश्येम पश्येव (तिङां तिङो भवन्तीतिवचनादुत्तमपुरुषद्विवचनस्थाने बहुवचनादेशो बोध्यः। एवमग्रेऽपि सर्वत्रानुसन्धेयः।) "अस्मदो द्वयोश्चे"ति आवामित्यत्र द्विवचनेऽपि बहुवचनं तदभिप्रायेण वा पश्येम शरदः शतमित्यादि यथास्थितमेव व्याख्येयम्। एवमग्रेऽपि बोद्धव्यम्। तथा शरदः शतं शतवर्षपर्यन्तं जीवेम जीवेव, शरदः शतं शतवर्षपर्यन्तं शृणुयाम शृणुयाव, एवं वधूं प्रत्युक्त्वा तदीयहृदयालम्भनपूर्वकं गर्भाधानपर्य्यन्तं यभेत। "तामुदुह्य यथर्तु प्रवेशनं, यथाकामी वा, काममाविजनितोः सम्भवामेति वचनात्, अथास्यै दक्षिणाꣳसमधिहृदयमालभते यत्ते सुसीमे० एवं ततऽर्द्धमि"तिपारस्करोक्तेः॥ १ ॥

॥ इति गर्भाधानमन्त्रव्याख्या ॥

## ॥ अथगर्भस्थिरीकरणमन्त्रव्याख्या ॥

इयमोषधी त्रायमाणा सहमाना सरस्वती ।
अस्या बृहत्याः पुत्राः पितुरिव नाम जग्रभम् ॥ १ ॥

इयमोषधीत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता गर्भस्थिरीकरणार्थं वधूनासिकायामोषध्यासेचने विनियोगः, "सा यदि गर्भं न दधीत सिᳪंह्याः श्वेतपुष्प्या उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चति इयमोषधी त्रायमाणा०–"इति पारस्करवचनात् । अथमन्त्रार्थः । इयमोषधी ओषति दहति दोषान् धत्ते गुणानित्योषधी त्रायमाणा यथोपयोगं प्रयुक्ता सती रक्षमाणा सहमाना उत्पन्नदोषानभिभवन्ती आकर्षयन्तीति वा गर्भधारणप्रतिबन्धकदोषजातेर्नाशयन्तीत्यर्थः, तथा सरस्वती सरति कारणतयाऽनुगच्छतीति सरस्तद्वती तत्संबद्धास्तीतिवाक्यशेषः । यद्वा सरस्वती वाक् तत्प्राप्तिहेतुत्वाद्वाग्रूपाऽस्तीत्यर्थः । सरस्वतीप्राप्तौ बृहतीकल्पप्रयोगदर्शनात् अस्याः पूर्वोक्तगुणविशिष्टायाः बृहत्याः बृंहयति वर्द्धयति पुत्रादिप्रदानेनेति बृहती तस्याः बृहत्याः महत्याः कण्टकारिकायाः ओषध्याः प्रभावादस्याः मद्धर्मपत्न्याः अहं पुत्रः अयं पुत्रः भाविन्या वृत्त्याऽयमितिनिर्देशः, अयमित्यस्य स्थाने "व्यत्ययो बहुलमि"तिव्यत्ययेन 'अहम्' इति । अहमर्थादयमित्यर्थः । पितुरिव नाम जग्रभम् जग्रभत् पितुः सदृशं नाम गृह्णातु पितृनामवदस्यापि नाम प्रख्यातं भवतु यथास्य पिताऽहं प्रख्यातनामास्मि तथायमपि अस्याः बृहत्याः कृपया प्रख्यातनामा भवत्वित्यर्थः। यद्वा पितुरिव नाम जग्रभत् अर्थात् यथा पितुर्नाम नाथान्तं धरान्तमीश्वरान्तं कान्तान्तं वास्ति । तथैवायं पुत्रोऽपि तादृशं नाथान्तादिविशिष्टं नाम गृह्णात्वित्यर्थः । पुत्रे हि सञ्जाते तस्य नाम सम्भवितुमर्हति । अत इदानीं पुत्रस्याविद्यमानत्वेऽपि पुत्रनामव्याजेन प्रकारान्तरेण भार्य्यासम्मितवचनन्यायेन पुत्रोत्पत्तिरेवाकाङ्क्ष्यते । यद्वा अस्याः बृहत्याः प्रभावादहं पितुरिव "सुपां सुपो भवन्ती"ति विभक्तिव्यत्ययः, पिता इव पुत्र इति नाम जग्रभम् लभेय प्राप्नुयामित्यर्थः । यथा मयि सञ्जाते मम पिता "आत्मा वै जायते पुत्रः" इति वेदानुशासनात्पुत्र इति नाम अग्रहीष्ट, तथाहमपि पुत्रे सञ्जाते सति पूर्वोक्तवेदानुशासनात्पुत्र इति नाम गृह्णीयेत्याशासे । पितुः पुत्रो यथाहमभवं तथा ममापि पुत्रो भूयादित्यभिप्रायेण पितुरिव नाम जग्रभमित्युक्तं भवति । पितुरयं पुत्रः, पुत्रस्यायं पिता, इति मद्विषये लोका जल्पन्त्वित्यभिप्रायः । अत्र पूर्वार्द्धेन बृहतीस्तुतिः, उत्तरार्द्धेन स्वधर्म्मपत्न्याः पुत्रप्राप्त्याभिप्रायेण स्वाभिमतार्थप्रकाशनं च स्पष्टीक्रियते मया भर्त्रेत्याशंसावाक्यार्थः । जग्रभमित्यत्र गृह्णातेर्लिङर्थे लेट्, तस्य प्रथमपुरुषैकवचनस्थाने "तिङां तिङो भवन्ती"तिवचनादुत्तमपुरुषैकवचनादेशः, तत्र "व्यत्ययो बहुलमि"ति विकरणव्यत्ययेन शपि "बहुलं छन्दसी"तिशपः श्लौ द्वित्वेऽभ्यासकार्य्ये "इतश्च लोपः पदस्मैपदेष्वि"तिमिप इकारलोपे "लेटोऽडाटावि"त्यडागमो "हृग्रहोर्भश्छन्दसी"तिगृह्णातेर्हकारस्य भकारश्चेत्यनुसन्धेयम् । अर्थान्तरपक्षे तु गृह्णातेर्लिङर्थे लेटि तदुत्तमपुरुषैकवचने पूर्वोक्तरीत्या यथास्थमेव पदं सिद्ध्यतीत्यवगन्तव्यम् ॥ १ ॥

---

## ॥ अथ पुंसवनमन्त्रव्याख्या ॥

ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत्।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥ १ ॥

ब्रह्मयज्ञजपप्रकरणे व्याख्यायतोऽयं मन्त्रः।

ऋष्यादिकन्तु तत्रोक्तमेव बोध्यम् विनियोगश्चास्य पारस्करेणोक्तः पुंसवनप्रकरणे गृह्यसूत्रे यथा—"उदपेषं पिष्ट्वा पूर्ववदासेचनम्, हिरण्यगर्भोऽद्भ्यः सम्भृत इत्येताभ्यामि"ति। अद्भ्यः सम्भृत इति तु षडङ्गशतरुद्रियप्रकरणे पुरुषसूक्तव्याख्यायामेव व्याख्यातं तत्र द्रष्टव्यं, विनियोगानुसारेण यदर्थवैशिष्ट्यं तदप्यूह्यम् ॥२॥

ॐ सुपर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ।
स्तोमऽआत्मा छन्दाᳬंस्यङ्गानि यजूᳬंषि नाम।
साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः।
सुपर्णोऽसि गरुत्मान्दिवं गच्छ स्वः पत॥ ३ ॥

अस्य मन्त्रस्य प्रजापतिर्ऋषिश्चतुरवसाना कृतिश्छन्दो विषहन्त्री लिङ्गोक्ता देवता गर्भाभिमन्त्रणे विनियोगः, "स यदि कामयेत वीर्य्यवान्स्यादिति विक्रत्यैनमभिमन्त्रयते सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्यः" इति पारस्करवचनात्। अथ मन्त्रार्थः। "तस्माद्वात्मनऽ आकाशः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" इति श्रुतेर्जलस्य कारणमग्निरित्यवसीयते। अतोऽग्निजलयोः कारणकार्य्यत्वभावावगतेरिहाग्निस्तुत्या जलमेव स्तुतं सद्गर्भवीर्य्यवत्त्वं करिष्यतीत्यभिप्रायेणैवात्राग्निं प्रत्युच्यते। यत्–हे अग्ने, त्वं सुपर्णोऽसि शोभनं पर्णं पतनं गमनं यस्य स सुपर्णः शोभनगमनोऽसीत्यर्थः। यद्वा "सुपर्णः पन्नगाशनः" इति कोशादौ गरुत्मनामसु दर्शनात्सुपर्णो गरुडः शोभनं पर्णं पतनं यस्य स सुपर्णः शोभने पर्णे पक्षौ वा यस्य स सुपर्णः पूर्वोक्तो विष्णुवाहनत्वेन प्रसिद्धस्तद्रूपोऽसि, पक्ष्याकारेण चितत्वादित्याशयः। तत्र दृष्टान्तः प्रदर्श्यते गरुत्मानिति। लुप्तोपमानमेतत्। वस्तुतस्तु उपमावाचकमिवादि पदं न दृश्यते तथापि प्रकरणवशादर्थसाहचर्य्येण तदिहाक्षिप्यते, गरुत्मानिव यथा गरुत्मान् गरुडः पक्षवान्, तथा त्वमप्यसि पक्ष्याकारचितिमत्त्वादिति भावः। एवं पक्ष्याकारविशिष्टस्य तवाऽवयवाः कथ्यन्ते। त्रिवृत् तव शिरोऽस्तीति शेषः। "तिसृभ्यो हिं करोति स प्रथमया, तिसृभ्यो हिंकरोति स मध्यमया, तिसृभ्यो हिंकरोति स उत्तमयोद्यतौ त्रिवृतौ विष्टुतिरि"ति श्रुत्युक्तो यस्त्रिवृत्स्तोमः स ते तवाग्नेः शिरःस्थानीयोऽस्तीत्यर्थः। तथा गायत्रं ते तव चक्षुरस्तीति शेषः। यद्वा गायत्राख्यं साम तत्ते तव चक्षुः नेत्रस्थानीयमस्तीत्यर्थः।

तथा बृहद्रथन्तरे ते तव पक्षौ स्त इत्यर्थः। साम्नां मध्ये "त्वामिद्धि हवामहे" इत्यस्यामृच्युत्पन्नं यत्साम तदेव बृहत्साम, एवं हि साम्नां मध्ये "अभित्वा शूर नो नुम" इत्यस्यामृच्युत्पन्नं यत्साम तदेव रथन्तरं साम, इत्युभे बृहद्रथन्तरे प्रसिद्धे सामनी ते तव पक्षौ पक्षस्थानीये स्त इत्यर्थः। तथा स्तोमस्ते तव आत्माऽस्तीति शेषः। "पञ्चभ्यो हिंकरोति स तिसृभिः स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभिः पञ्चपञ्चिनी पञ्चदशस्य विष्टुतिरि" ति श्रुत्युक्तो यः पञ्चदशस्तोमः स ते तव आत्मा अन्तःकरणस्थानीयोऽस्तीत्यर्थः। तथा छन्दांसि ते तव अङ्गानि सन्तीति शेषः। गायत्र्यादीनि यानि एकविंशतिच्छन्दांसि तानि ते तव हृदयाद्यङ्गस्थानीयानि सन्तीत्यर्थः। तथा यजूंषि ते तव नाम ("सुपां सुलुगि" ति विभक्तेर्लुक्) नामानि सन्तीति शेषः। इषे त्वेत्यादीनि यानि यजूंषि तानि ते तव नामस्थानीयानि सन्तीत्यर्थः। तथा वामदेव्यं साम ते तव तनूरस्तीति शेषः। साम्नां मध्ये "कयानः" इति वामदेव्यं साम यत्प्रसिद्धं तत्ते तव तनूः शरीरस्थानीयमस्तीत्यर्थः। तथा यज्ञायज्ञियं साम ते तव पुच्छमस्तीति शेषः। "यज्ञायज्ञा वो" इति यज्ञायज्ञियाख्यं यत्प्रसिद्धं साम तत्ते तव पुच्छस्थानीयमस्तीत्यर्थः। तथा धिष्ण्यास्ते तव शफाः सन्तीति शेषः। अग्नीनामाश्रयभूता मृदा निर्मिताः स्वल्पवेदिका धिष्ण्यान्युच्यन्ते। तत्र स्थिता अग्नयः तव शफाः खुरस्थानीयाः सन्तीत्यर्थः। हे अग्ने, एवं भूतस्त्वं यतो गरुत्मान् गरुड इव सुपर्णः पक्ष्याकारचितौ स्थितत्वात्त्वमपि पक्षिरूपोऽसि, अतो दिवमाकाशं प्रति गच्छ विद्युदात्मना माध्यमिको भवेत्यर्थः। ततश्च स्वः पत स्वर्लोकं प्राप्नुहि अस्य गर्भस्य वीर्य्यप्रदानार्थमिन्द्रलोकमपि गच्छ यद्यद्बलकृतं कर्म्म तदैन्द्रमेवेत्युक्तत्वादिन्द्रतो बलमानीयाऽस्मै प्रयच्छ यथायं गर्भो वीर्य्यवान्स्यादित्याशंसावाक्यार्थः। "स यदि कामयेत वीर्य्यवान्स्यादिति विकृत्यैनमभिमन्त्रयते सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्यः" इत्युक्तेः॥ ३॥

॥ इति पुंसवनमन्त्रव्याख्या॥

---

## ॥ अथ सीमन्तोन्नयनमन्त्रव्याख्या॥

ॐ भूर्विनयामि॥ १॥ ॐ भुवर्विनयामि॥ २॥ ॐ स्वर्विनयामि॥३॥ ॐ भूर्भुवःस्वर्विनयामि इति वा॥ ४॥

व्याहृतित्रयस्य प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांस्यग्निवायुसूर्य्या देवता गर्भिण्याः केशपाशविनयने विनियोगः; "ऊर्द्ध्वं विनयति भूर्विनयामि भुवर्विनयामि स्वर्विनयामि भूर्भुवःस्वर्विनयामीति वे" ति पारस्करोक्तेः। यतः पुंसवने हिरण्यगर्भ इत्यादिमन्त्रद्वयेन नस्यं दत्वा त्रैलोक्याधिपतिस्त्रैलोक्याधारः पुरुषोत्तम अस्या गर्भे आहितः। अत एव एतावता गर्भिण्याः केशपाशे त्रैलोक्यमपि वर्त्तते। तथा सति भूरादिलोकत्रयमत्रासङ्कीर्णं भवत्विति हेतोरेभिस्त्रिभिर्मन्त्रैः केशानां पृथक्करणं सीमन्तोन्नयने भवति। तत्र सीमन्तोन्नयने

केशपाशविनयने विनियुक्तानां व्याहृतिमन्त्रत्रयाणामयमर्थः। हे गर्भिणि, अहं भूर्विनयामि त्वत्केशाश्रितं भूर्लोकं विनयामि अयं भूर्लोकः इति विभागेन पृथक्करोमि विभजामीत्यर्थः। तथा भुवर्विनयामि भुवर्लोकमन्तरिक्षं च विभागेन पृथक्करोमि विभजामीत्यर्थः। एवं स्वर्विनयामि स्वर्लोकं विभागेन पृथक्करोमि विभजामीत्यर्थः। एकतन्त्रेण वा विभागाभिधानं हे गर्भिणि, भूर्भुवःस्वर्विनयामि अयं भूर्लोकः, अयं भुवर्लोकः, अयं स्वर्लोक इति विभागेन पृथक्करोमि विभजामीति पूर्ववदेवार्थोऽनुसन्धेयः ॥१॥२॥३॥४॥

ॐ अयमूर्ज्जावतो वृक्षऽऊर्ज्जीव फलिनी भव ॥ ५ ॥

अयमूर्ज्जावत इत्यस्य प्रजापतिर्ऋषिरनिर्दिष्टं छन्दो लिङ्गोक्ता देवता फलिन्युदुम्बरशाखाबन्धने विनियोगः, "त्रिवृत्तमाबध्नाति, अयमूर्ज्जावत" इति पारस्करवचनात्। अयमूर्ज्जावत इति मन्त्रेण सीमन्तोन्नयने केशैर्वेणीं बध्नातीत्यर्थः। अथ मन्त्रार्थः। हे गर्भिणि, अयं वृक्षः उदुम्बराख्यः ऊर्ज्जावतः ऊर्ज्जावानित्यर्थः। अस्तीतिवाक्यशेषः। बलवानस्तीति भावः। अत्र अकारान्तपुलिङ्ग ऊर्ज्जशब्दो बोध्यः, ऊर्ज्जोऽस्यास्तीति ऊर्जवानीति प्राप्ते ऊर्जशब्दस्य छान्दसत्वाद्दीर्घे ऊर्जावान् तत्र "सुपां सुपो भवन्ती"ति वचनात्प्रथमैकवचनस्थाने द्वितीयाबहुवचनं छान्दसं बोध्यम्! एतद्योगात् ऊर्जीव उदुम्बरशाखा इव फलिनी फलयुक्ता भव यथायं वृक्ष ऊर्जवान् बलवान् फलवाँश्चास्ति यथा चास्य शाखा फलिनी फलवती फलयुक्तेति यावत्, तथा त्वमपि फलिनी पुत्रिणी भवेत्यर्थः। अत्र प्रथमपादेन उदम्बरस्तुतिः द्वितीयपादेन गर्भिण्याः पुत्रिणीत्वञ्चाऽऽशास्यते ॥ ५ ॥

ॐ सोमऽएव नो राजेमा मानुषीः प्रजाः।
अविमुक्तचक्रऽआसीरँस्तीरे तुभ्यमसौ ॥ ६ ॥

सोम एवेत्यस्य प्रजापतिर्ऋषिर्गायत्रीछन्दः सोमो देवता गाथागाने विनियोगः, "अथाह वीणागाथिनौ राजानꣳ. सङ्गायेतां यो वाप्यन्यो वीरतर इति, नियुक्तामप्येके गाथामुदाहरन्ति सोम एव० इति, यां नदीमुपवसिता भवति तस्या नाम गृह्णाति" इति पारस्करवचनात्। अथ मन्त्रार्थः। असौ हे अमुकनदि, मानुषी (वा छन्दसीति पूर्वसवर्णदीर्घो बोध्यः। "तिङां तिङो भवन्ती"तिवचनात्प्रथमाबहुवचनस्थाने द्वितीताबहुवचनं वा ज्ञेयम्। मानुषीः मानुष्यः इमाः प्रजाः तुभ्यम् (अत्र षष्ठ्यर्थे चतुर्थी बोध्या) तव सोमसंबन्धिन्याः एवं भूते तीरे आसीरन् त्वामाश्रित्य स्थिता इत्यर्थः। किं भूते तीरे अविमुक्तचक्रे अनुल्लङ्घितशास्त्रे एवं भूते तव तीरे इत्यर्थः। अतस्त्वत्संबन्धवशात् नोऽस्माकं प्रजानां सोम एव राजास्त्विति शेषः। राजा यथा रक्षकः पोष्टा च भवति, तथास्माकं त्वदीयः सोमश्चन्द्रो रक्षकः पोष्टा च भवत्वित्यभिप्रायः। अत्र "अयं वेनश्चोदयत्पृश्निगर्भाज्योतिर्जरायूरजसो विमाने" इत्यादिश्रुतेः सोमस्याप्प्रेरकत्वमभिप्रेत्यैव सोमसंबन्धिन्यास्तव तीरे इति नदीं प्रत्युक्तं "नद्यः कस्मात् नदना भवन्ती"ति यास्कोक्तेर्नदीनामप्सङ्गविशिष्टत्वेनैव शब्दवतीत्वाभिधानाच्चेति भावः। अविमुक्तचक्र इति प्रजा विशेषणं वा "सुपां सुलुगि"त्यादिना विभक्तेः शे आदेशे अविमुक्तचक्रे इति रूपम्। शब्दव्युत्पत्तिश्चैवम्, अविमुक्तमनुल्लङ्घितं चक्रं

मण्डलं याभिस्तास्तथोक्ता एवं भूता मानुषीः मानुष्यः प्रजास्तुभ्यं तव तीरे आसीरन् इत्यादि अन्यत्समानम् ॥ ६ ॥

॥ इति सीमन्तोन्नयनमन्त्रव्याख्या ॥

---

## ॥ अथ सोष्यन्तीकर्म्ममन्त्रव्याख्या ॥

ॐ एजतु दशमास्यो गर्भो जरायुणा सह । यथाऽयं वायुरेजति यथा समुद्रऽएजति । एवाऽयं दशमास्योऽअस्रज्जरायुणा सह ॥ १ ॥

एजतु इत्यस्य प्रजापतिर्ऋषिर्महापङ्क्तिश्छन्दो गर्भो देवता सोष्यन्त्याः (प्रसवशूलवत्याः) स्त्रियोऽभ्युक्षणे विनियोगः, "सोष्यन्तीमद्भिरभ्युक्षति एजतु०" इति पारस्करोक्तेः । अथ मन्त्रार्थः । दशमास्यः दश मासा जाता यस्य स दशमास्यः दशमासकालावच्छिन्नः सम्पूर्णप्रसवकालीन इति यावत्, एवं भूतोऽयं गर्भः जरायुणा सह एजतु "एजृ कम्पने" जरायुर्गर्भवेष्टनं तेन सह कम्पतां चलत्वित्यर्थः । कथं चलतु तत्र दृष्टान्तः । यथा येन प्रकारेणाऽयं वायुरेजति चलति यथा च समुद्रः एजति कम्पते चलतीत्यर्थः । एतौ हि यथा सदा कम्पनशीलौ तथायं गर्भ एजतु चलत्वित्यर्थः । एवेति निपात एवमर्थे । ततोऽयमर्थः, एवमयं दशमास्यः सम्पूर्णावयवो गर्भो जरायुणा सह अस्रत् स्रंसतां निर्गच्छत्वित्यर्थः । "स्रंसु अधःपतने" व्यत्ययेन परस्मैपदे शपो लुकि च कृते "हल्ङ्याब्भ्यः०–" इति तिपि लुप्ते "वावसाने" इति सस्य दत्वे "अनिदिताम्" इति नलोपे अडागमे च अस्रदिति लोडर्थे लङि प्रथमपुरुषैकवचने रूपं बोध्यम् "छन्दसि लुङ्लङ्लिटः" इति लकारमात्रे तद्विधानात् ॥ १ ॥

॥ इति सोष्यन्तीकर्म्ममन्त्रव्याख्या ॥

---

## ॥ अथावरावपतनकर्ममन्त्रव्याख्या ॥

अवैतु पृश्निः शेवलꣳ शुने जराय्वत्तवे नैव माꣳसेन पीवरि न कस्मिंश्चनायतनमव जरायु पद्यताम् ॥ १ ॥

अवैत्वित्यस्य प्रजापतिर्ऋषिर्बृहतीछन्दोऽग्निर्देवता अवरावपतने विनियोगः, "अथावरावपतनमवैतु पृश्निः" इति पारस्करवचनात् । अथमन्त्रार्थः । जरायुर्गर्भवेष्टनमवैतु सुखेन अपगच्छत्वित्यर्थः। जरायु इत्यत्र "सुप्तिङुपग्रहलिङ्गनराणामि"त्यादिकारिकया लिङ्गव्यत्ययः "सुपां सुलुगि"ति सुलोपो वा बोध्यः । कथमवैत्वित्यत्र दृष्टान्तद्वयमुच्यते । पृश्निः

शैवलं च यथाऽवैतीतिवाक्यशेषः। पृश्निः पङ्क्तिः अपां फेनरूपा, शैवलं "शेमार" इति प्रसिद्धमेतदुभयं यथा कचिदपि असँङ्गनं जलोपरि स्थितं कथञ्चिदिषदपि प्रेरितं सद्यथा गच्छति तथा जरायु सुखेनापगच्छत्वित्यर्थः। किं कारणमपगच्छत्वित्याकाङ्क्षायामुच्यते। शुने अत्तवे भक्षणाय "शुने" इति षष्ठ्यर्थे चतुर्थी। शुनोऽदनाय यथा न भवति तथापगच्छत्वित्यर्थः। "अत्तवे" इत्यत्र "तुमर्थे सेसेनसे०" इत्यादिनाऽत्तेस्तुमर्थे तवेन्प्रत्ययो बोध्यः। किम्भूतं जरायु मांसेन पीवरि पुष्टमित्यर्थः। कुत्रचित्पीवरी इत्यपि पाठो दृश्यते तत्र पीवरीति लिङ्गव्यत्ययेन क्लीत्वम्। किञ्च जरायु कस्मिँश्चन चनशब्दोऽप्यर्थे कुत्राप्यवयवे न अवपद्यताम् नावस्थितं भवतु सर्वतोऽङ्गादयत्नं यथास्यात्तथा विलग्नं भवत्वित्यर्थः। तज्जरायु पुनः किम्भूतम् आयतनं गर्भस्येतिशेषः। एवंभूतं जरायु उदरे असँङ्गनं सत्सुखेन पतत्वित्यर्थः॥१॥

॥ इत्यवरावपनकर्म्ममन्त्रव्याख्या ॥

---

## ॥ अथजातकर्म्ममन्त्रव्याख्या ॥

ॐ भूस्त्वयि दधामि ॥ १ ॥

ॐ भुवस्त्वयि दधामि ॥ २ ॥

ॐ स्वस्त्वयि दधामि ॥ ३ ॥

ॐ भूर्भुवःस्वः सर्वं त्वयि दधामि ॥ ४ ॥

जाते सति यत्कर्म्म भवति तदेव जातकर्म्मेति कथ्यते। तत्रादौ मेधाजननाख्यं कर्म्म भवति, तत्पश्चाचायुष्यं कर्म्म भवति। तदुक्तं पारस्करेण "जातस्य कुमारस्याऽच्छिन्नायां नाड्यां मेधाजननायुष्ये करोति।" इति। मयापि तदनुसारेणैव तत्तत्कर्म्ममन्त्रा व्याख्यायन्ते।

भूरादिव्याहृतित्रयस्य प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांस्यग्निवायुसूर्य्या देवता कुमारस्य मधुघृतप्राशने विनियोगः, "अनामिकया सुवर्णान्तर्हितया मधुघृते प्राशयति घृतं वा भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवःस्वः सर्वं त्वयि दधामि" इति पारस्करोक्तेः। अथमन्त्रार्थः। हे कुमार, त्वयि कुमारे भूः भूर्लोकं दधामि स्थापयामि अनेन मधुकृतप्राशनकर्म्मणेति वाक्यशेषः। एवमग्रेऽपि सर्वत्र बोध्यम्। अन्यत्समानम्। तुरीयमन्त्रस्यार्थे त्वयं विशेषः। भूर्भुवःस्वः एतल्लोकत्रयोपलक्षितमेतदाश्रितं सर्वं प्रमेयजातन्त्वयि कुमारे दधामि स्थापयामीत्यर्थः। शेषं पूर्ववदिहाप्यूह्यम्। त्रैलोक्यगतप्रमेयजातधारणेन तव मेधा भवत्वित्याशंसावाक्यार्थः॥ १ ॥ २ ॥ ३ ॥ ४ ॥

॥ इति जातकर्म्मान्तर्गतमेधाजननकर्ममन्त्रव्याख्या ॥

---

## ॥ अथजातकर्म्मान्तर्गतायुष्यकर्म्ममन्त्राः ॥

अग्निरायुष्मान्स वनस्पतिभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ १ ॥

सोमऽआयुष्मान्सौषधीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ २ ॥

ब्रह्माऽऽयुष्मद्ब्राह्मणैरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ ३ ॥

देवाऽआयुष्मन्तस्तेऽमृतैरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ ४ ॥

ऋषयऽआयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ ५ ॥

पितरऽआयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ ६ ॥

यज्ञऽआयुष्मान्स दक्षिणाभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ ७ ॥

समुद्रऽआयुष्मान्स स्रवन्तीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ ८ ॥

अग्निरायुष्मानित्यादीनां प्रजापतिर्ऋषिर्गायत्रीछन्दो लिङ्गोक्ता देवता आयुष्यमन्त्रजपे विनियोगः, "अथायुष्यं करोति, अग्निरायुष्मान्०" इति पारस्करवचनात् । अथ मन्त्रार्थः । हे कुमार, योऽयमग्निरायुष्मान् चिरस्थायी स वनस्पतिभिः वृक्षैरिन्धनभूतैरायुष्मान् चिरस्थायी भवतीति वाक्यशेषः । तेनाग्निसम्बन्धिना आयुषा त्वा त्वाम् आयुष्मन्तं करोमि । अतस्त्वमनेन मत्कृतेनाऽऽयुष्यकर्म्मणा ( आयुष्यमन्त्रजपेन ) आयुष्मान्भवेत्याशंसावाक्यार्थः ॥ १ ॥ एवमग्रेऽपि सोमऽआयुष्मानित्यादिमन्त्रेष्वपि सर्वत्र बोद्धव्यं, बुद्ध्वा च तथैवाशंसावाक्यार्थोऽप्यूह्यः । तथा हे कुमार, सोमश्चन्द्रो य आयुष्मान् स तु ओषधीभिर्व्रीह्यादिभिः आयुष्मान्भवति । अर्थात् अमावास्यायां क्षीणश्चन्द्रमा ओषधीषु प्रविष्टो भवति ततः शुक्लपक्षे ताभिराप्यायमानः क्रमेण वृद्धिमासादयन् आयुष्मान्भवति, तेनायुषा त्वा त्वामायुष्मन्तं करोमीत्यादि पूर्ववदन्यत्समानम् ॥ २ ॥ तथा हे कुमार, ब्रह्म यदायुष्मत्तत्तु ब्राह्मणैरायुष्मदर्थात् ब्राह्मणैर्वेदाध्ययनशीलैर्द्विजोत्तमैः शिष्योपाध्यायक्रमेण धार्य्यमाणो वेदः आयुष्मान् चिरस्थायी भवतीतिशेषः ॥ तेनाऽऽयुषा त्वा त्वामायुष्मन्तं करोमि इति पूर्ववत्समानम् ॥३॥ किञ्च हे कुमार, देवा इन्द्रादयः आयुष्मन्तश्चिरस्थायिनो ये सन्ति ते तु अमृतैः पीयूषैरेवाऽऽयुष्मन्तो भवन्तीतिशेषः । देवानान्तु अमृतं प्राप्यैवामरत्वमितिभावः । तेन देवसंबन्धिनाऽऽयुषा त्वा त्वामायुष्मन्तं करोमीत्यादि पूर्ववत्समानम् ॥ ४ ॥ तथा हे कुमार, ऋषयो ये आयुष्मन्तस्ते तु व्रतैश्चान्द्रायणप्रभृतिभिरेवायुष्मन्तो भवन्तीतिशेषः । ऋषीणान्तु तपसैव दीर्घायुष्ट्वमितिभावः ॥ तेन ऋषिसंबन्धिनायुषा त्वा त्वामायुष्मन्तं करोमीत्यादिकञ्च पूर्ववत्समानम् ॥ ५ ॥ किञ्च हे कुमार, पितरः ये अग्निष्वात्तादयः आयुष्मन्तस्ते तु स्वधाभिरायुष्मन्तो भवन्तीतिशेषः "स्वधा वै पितृणामन्नमि"ति श्रुतेः । पितृणामन्नैरेव दीर्घायुष्ट्वमितिभावः । तेनायुषा त्वा त्वामायुष्मन्तं करोमीत्यादि पूर्ववदिहाप्यनुसन्धेयम् ॥ ६ ॥ तथा हे कुमार, यज्ञो य आयुष्मान् स तु दक्षिणाभिरेवायुष्मान्भवतीतिशेषः । तेनायुषा त्वा त्वामायुष्मन्तं करोमीत्यादि पूर्ववत्समानम् ॥ ७ ॥ किञ्च हे कुमार, समुद्रो य आयुष्मान् स तु स्रवन्तीभिः

स्यन्दमानाभिर्नदीभिरेवायुष्मान्भवतीतिशेषः। तेनायुषा त्वा त्वामायुष्मन्तं करोमीत्यादि समानम् ॥ ८ ॥ "त्र्यायुषमिति" षडङ्गशतरुद्रियप्रकरणे नीलसूक्ते व्याख्यातम् ॥ ९ ॥

॥ इति जातकर्मान्तर्गताऽऽयुष्यकर्ममन्त्रव्याख्या ॥

---

## ॥ अथ जातकर्ममन्त्राः ॥

ॐ दिवस्परि प्रथमञ्जज्ञेऽअग्निरस्मद्द्वितीयं परि जातवेदाः।
तृतीयमप्सु नृमणाऽअजस्रमिन्धानऽएनञ्जरते स्वाधीः ॥ १ ॥

दिवस्परीत्यादीनां भालन्दनो वत्सप्री ऋषिस्त्रिष्टुच्छन्दोऽग्निर्देवता कुमाराभिमर्शने विनियोगः, "स यदि कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशत्, दिवस्परीत्येतस्यानुवाकस्योत्तमामृचं परिशिनष्टि" इति पारस्करोक्तेः। अथ मन्त्रार्थः। तत्र परीत्युपसर्गो जज्ञे- इति क्रियापदेन सह संबध्यते। अयञ्च व्यवहितोपसर्गसंबन्धः "छन्दसि परेऽपि" "व्यवहिताश्च"ति पाणिनिवचनात्। तद्यथा हे कुमार, अयमग्निः प्रथमं दिवस्परि द्युलोकस्योपरि जज्ञे सूर्यरूपेण समुत्पन्नोऽभूदित्यर्थः। "आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः। पितरञ्च प्रयन्त्स्वः॥"(शु. य. वा. मा. सं. ३।६।) इति श्रुतेः। अत एव "मूर्द्धानन्दिवोऽअरतिं पृथिव्याः" (शु. य. वा. मा. सं. ७।२४) इति "अग्निमूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम्। अपाꣳ रेताꣳसि जिन्वति ॥" ( शु. य. वा. मा. सं. ३।१२। ) इति च श्रुत्युक्तं संगच्छते, इति भावः। ततश्च अस्मत्परि अस्मदीयमनुष्यलोकस्योपरि जातवेदाः द्वितीयं जज्ञे प्रसिद्धवह्निरूपेण द्वितीयं जन्म प्राप्तवानित्यर्थः। जातं जातं पदार्थं वेद जानातीति जातवेदाः जाते सत्येव विन्दते लभते पदार्थमात्रमिति वा जातवेदाः ( वेत्तेर्विन्दतेर्वाऽसुन्प्रत्ययः ) । जातप्रज्ञो जातधनो वाऽग्निरेव। स हि गायत्रेण त्वा छन्दसा मन्थामीत्यादि मन्थनविधिना ब्राह्मणद्वाराऽरण्योर्मन्थनेन ततः सकाशादुत्पन्नमात्रः सन्नेवाज्यचरुपुरोडाशादि वेत्ति विन्दते च। तथाऽचिरजातस्तादृशोऽप्यग्निः सर्वमपि हविरादिपदार्थजातं तदानीमेवात्तुं समर्थो भवति। नान्यस्यैतादृशी कस्यचिच्छक्तिरस्ति यदुत्पन्नमात्रः सन्नेव सर्वमत्तुं समर्थः स्यादिति भावः। एवम्प्रकारेणायमग्निर्द्वितीयं जन्म लब्धवानित्यर्थः। ततोऽप्सु समुद्रे तृतीयं जज्ञे इत्यनुषङ्गः। अयमग्निः तृतीयं जन्म वडवानलरूपेण प्राप्तवानित्यर्थः। "अप्सुषदन्त्वा" "अप्सुषदेवेट्" इत्यादि श्रुत्यभिधानात्। एवम्भूतोऽग्निः अजस्रं सततं त्रिष्वपि जन्मसु नृमणाः नृषु मनो यस्य स नृमणाः "छन्दस्यृदवग्रहात्" पा० इतिणत्वं नृमणा अर्थात् यजमानेष्वनुग्रहबुद्धियुक्तो वर्त्तत एवेति वाक्यशेषः। अत एव एनमीदृशमग्निमिन्धानः आज्यचरुपुरोडाशादिहविर्भिर्दीपयन् स्वाधीः शोभना आहिता धीर्बुद्धिर्यस्य स स्वाधीः स्वायत्तचित्तो यजमानो जरते जीर्यते जरापर्य्यन्तमग्निहोत्रादिविधिना परिचरतीत्यर्थः। यतोऽयमग्निरजस्रं नृमणा अत एतस्मादग्नेः सकाशादहमपि त्वदर्थं वीर्य्यं कामये, इत्याशंसावाक्यार्थः। एवमनचर्योऽग्निः परोक्षवृत्त्या स्तुतः "जज्ञे अग्निः" इति मन्त्रे प्रथमपुरुषयोगात् ॥ १ ॥

एवमग्निस्तुतिव्याजेन कुमारं प्रत्यग्निमाहात्म्यमुक्त्वेदानीमग्निं प्रत्युच्यते । तत्र प्रत्यक्षवृत्त्याऽग्निस्तुतिरवगन्तव्या "अग्ने" इति संबुद्धिपदोपादानात्ते इति युष्मच्छब्दसंयोगाच्च।

तद्यथा—

विद्मा तेऽअग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यतऽआजगन्थ ॥ २ ॥

हे अग्ने, यानि पूर्वस्मिन्मन्त्रे दिवस्परीत्यादिना त्रेधा (प्रकारवचने धा प्रत्ययो बोध्यः ।) त्रिप्रकारकाणि स्वरूपाणि आदित्याग्निवडवानलाभिधानयुक्तानि त्रयाणि त्रिसङ्ख्यकानि ते तव संबन्धीनि पूर्वोक्तानि रूपाणि वयं विद्मा विद्म जानीमः । विद्मेत्यत्र "तिङां तिङो भवन्ती"-तिवचनादुत्तमपुरुषैकवचनस्थाने तदुत्तमपुरुषबहुवचनम् । अत एव वयमित्यत्र । "अस्मदोद्वयोश्चे"ति पाणिनिवचनादिहैकवचनेऽपि वयमिति बहुवचनम्। अहं वेद्मि जानामीत्यर्थः। वेत्तेर्लडुत्तमपुरुषबहुवचने "विदो लटो वा" इति मसो मादेशे "द्व्यचोऽतस्तिङः" इति संहितायां दीर्घे विद्मा इति रूपं सिद्ध्यति । किञ्च हे अग्ने, ते तव संबन्धीनि पुरुत्रा ( सप्तम्यर्थे त्रल्प्रत्ययस्तस्य छान्दसो दीर्घश्च बोध्यः । ) पुरुत्रा अर्थात् पुरुषु बहुषु गार्हपत्याहवनीयान्वाहार्य्यपचनाग्नीध्रीयरूपेषु प्रदेशेषु विभृता विभृतानि विहृतानि धाम धामानि स्थानानि च वयं विद्मा विद्म जानीम इत्यर्थः। विभृतेत्यत्र तु विहृतशब्दाद्वितीयाबहुवचने शसः श्यादेशे "शेश्छन्दसि बहुलमि"ति शेर्लोपे कृते प्रत्ययलक्षणेन नुमि उपधादीर्घे नलोपे च विहृतेति जाते "हृग्रहोर्भश्छन्दसी"ति हरतेर्हस्य भकारो बोध्यः। यद्वा उक्तसूत्रेण हकारस्य भकारे कृते "निशब्दो बहुलमि"ति प्रातिशाख्यसूत्रेण निलोपो बोध्यः। तथा धामेत्यत्र "सुपां सुलुगि"ति विभक्तिलोपोऽप्यनुसन्धेयः। धामशब्दश्चात्र स्थानवाची, "धाम रश्मौ गृहे देहे स्थाने जन्म प्रभावयोरि"ति हैमचन्द्रोक्तेः। तथा हे अग्ने, परममुत्कृष्टं गुहायां व्यवस्थितं "त्वं यविष्ठ दाशुषो नॄः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥" ( शु० य० १३।५२ । ) एतन्मन्त्रप्रसिद्धं यविष्ठेति यत्ते तव नामास्तीति शेषः। तदपि वयं विद्मा विद्म जानीम इत्यर्थः। गुहेत्यत्र "सुपां सुलुगि"ति सप्तमीविभक्तेर्लुक् बोध्यः। किञ्च हे अग्ने, यतः उत्सात् अनूपात् स्थानात् त्वम् आजगन्थ वैद्युतरूपेणाऽऽगतोऽसीत्यर्थः, तम् उत्सम् उत्स्यन्दनं जलरूपं ते तव स्थानमपि वयं विद्मा विद्म जानीम इत्यर्थः। अत एव एतत्कुमारार्थं वीर्य्यं त्वत्तोऽहं प्रार्थयामीत्याशंसावाक्यार्थः ॥ २ ॥

समुद्रे त्वा नृमणाऽअप्स्वन्तर्नृचक्षाऽईधे दिवोऽअग्नऽऊधन् ।
तृतीये त्वा रजसि तस्थिवाᳪंसमपामुपस्थे महिषाऽअवर्द्धन् ॥ ३ ॥

हे अग्ने, नृमणाः नृषु मनुष्येषु मनो यस्य स नृमणाः मनुष्येष्वनुरक्तचेताः प्रजापतिः समुद्रे अब्धौ वडवानलरूपेण तस्थिवांसं वर्त्तमानं त्वा त्वाम् ईधे दीपयाञ्चकारेत्यर्थः। "इन्धिभवतीभ्यां चे"ति कित्वान्नकारलोपः । "तथा नृचक्षाः नृषु पठत्सु मनुष्येषु चष्टे मन्त्रान् विस्पष्टं वक्तीति नृचक्षाः अध्ययनशीलेषु मनुष्येष्वनुरक्तचित्तः स एव प्रजापतिः

अप्सु वृष्टिरूपासु अन्तर्मध्ये विद्युद्रूपेण स्थितं त्वा त्वाम् ईधे दीपितवानित्यर्थः। तथा दिवः द्युलोकस्य ऊधन् ( सुपां सुलुगिति सप्तमीविभक्तेर्लुक ) ऊधनि ऊधस्थानीये तृतीये समुद्रवृष्ट्यपेक्षया तृतीयस्थाने रजसि रञ्जनात्मके तेजोमण्डले आदित्यात्मना तस्थिवांसं स्थितं त्वा त्वां स एव नृचक्षाः प्रजापतिः ईधे दीपयामासेत्यर्थः। किञ्च हे अग्ने, महिषा महान्तः प्राणाः अपामुपस्थे उत्सङ्गे नाव्यानामपां मध्ये स्थितं त्वा त्वामवर्धन् "छन्दस्युभयथे"ति शप आर्धधातुकत्वाण्णिलोपः। ) अवर्धयन्नित्यर्थः। महिषशब्देनात्र प्राणा एव गृह्यन्ते, "प्राणा वै महिषाः" इतिश्रुतेः। हे अग्ने, यतस्त्वं प्रजापतिना मुहुर्मुहुः सन्दीपितोऽसि, अतस्त्वामहं प्रार्थयामि, यदस्मै कुमाराय वीर्य्यं देहीत्याशंसावाक्यार्थः॥ ३॥

अक्र॑न्दद॒ग्निस्त॒नय॑न्निव॒ द्यौः॒ क्षामा॒ रेरि॑ह॒द्वी॒रुधः॑ सम॒ञ्जन्।
स॒द्यो ज॑ज्ञा॒नो वि॒हीमि॒द्धो॒ऽअख्य॒दा रोद॑सी भा॒नुना॑ भात्य॒न्तः॥ ४॥

अत्राग्निः परोक्षवृत्त्यैव स्तूयते "मन्त्रेऽस्मिन्प्रथमपुरुषश्रवणात्। तथाहि-ईदृशः अग्निः अक्रन्दत् क्रन्दति विस्फूर्जतीत्यर्थः। अक्रन्ददिति "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनादत्र लडर्थे लङि प्रथमपुरुषैकवचने रूपं बोध्यम्। कीदृशोऽग्निः द्यौरिव स्तनयन्। द्यौशब्देनात्र मन्त्राः क्रोशन्तीतिवल्लक्षणावृत्त्या मेघ उच्यते। "स्तनगदी देवशब्दे" चुरादिरदन्तस्तस्य शतरि स्तनयन्निति प्रथमैकवचने रूपम्॥ द्यौर्मेघ इव स्तनयन् गर्जन् शब्दं कुर्वाण इत्यर्थः। तत्र मेघसाधर्म्यं प्रदर्श्यते। तद्यथा-क्षामा रेरिहत्। "सुपां सुलुगि"ति क्षामाशब्दाद् द्वितीयाविभक्तेर्लुक्। क्षामाशब्दोऽत्र पृथिवीवाचकः क्षामाशब्दस्य पृथिवीनामसु निघण्टौ पठितत्वात्, क्षामां पृथिवीं रेरिहत् अत्यन्तं लेढीति लेलिहत् भूमिमास्वादयन् व्याप्नुवन्नित्यर्थः। यथा मेघो जलभावं गच्छन्नत्यर्थं भूमिं लेढि तद्वदयमग्निरपि भूमेरुपरि स्थितत्वात्पाकादिसमयेऽन्यत्रापि च भूमिं लेढीत्युत्प्रेक्ष्यते। रेरिहदित्यत्र "लिह आस्वादने" (अ० प०) इत्यस्माद्यङ्लुगन्ताच्छतृप्रत्ययो रेफश्च छान्दसः, "रलयोर्डलयोस्तथे"ति रलयोरैक्यस्मरणात्। "नाभ्यस्ताच्छतुः" इति नुमभावोऽपि ज्ञेयः। तथा वीरुधः समञ्जन् स्वकीयज्वालासमुहेन ओषधीर्व्याप्नुवन्नित्यर्थः। अत्रान्यदप्युच्यते। हि यस्मात् जज्ञानः उत्पद्यमानः सन् सद्यः तदानीमेव इद्धः दीप्तो भूत्वा व्यख्यत् विख्याति। अन्तर्भूतणिजन्तो ज्ञेयः श्रुत्या तथा व्याख्याततत्वात्, विख्यापयति इदं सर्वं विविधं प्रकाशयतीत्यर्थः। अन्यच्च योऽग्निः रोदसी "सुपां सुलुगि"ति विभक्तेर्लुक्।) रोदस्योः द्यावापृथिव्योः अन्तः मध्ये भानुना रश्मिना स्वयमाभाति समन्तात्प्रकाशते इत्यर्थः। यथा मेघो भानुना विद्युद्रूपेण द्यावापृथिव्योर्मध्ये भाति, एवमग्निरपि भानुना स्वरश्मिना द्यावापृथिव्योर्मध्ये भातीत्यभिप्रायः। एवमिह मेघरूपेणाग्निः स्तुतः। "ईम्" इति निपातः पादपूरणे, "मिताक्षरेष्वनर्थकाः कमीमिद्विति, यास्कोक्तेः। हे कुमार, य एवम्भूतोऽग्निस्तस्मादग्नेः सकाशात्त्वदर्थं वीर्य्यं प्रार्थयामीत्याशंसावाक्यार्थः॥ ४॥

श्री॒णामु॑दा॒रो ध॒रुणो॑ र॒यी॒णां म॑नी॒षाणां॒ प्रार्प॑णः॒ सोम॑गोपाः।
वसुः॑ सू॒नुः सह॑सो॒ऽअप्सु राजा॒ वि भा॒त्यग्र॑ऽउ॒षसा॑मिधा॒नः॥ ५॥

हे कुमार, ईदृशोऽग्निर्विभाति "भा दीप्तौ" विशेषेण भासते प्रकाशत इत्यर्थः। कीदृशोऽग्निरित्यपेक्षायामुच्यते। श्रीणां गवाश्वादिसम्पदामुदारः अत्यर्थं दातेत्यर्थः। "उदारो दातृमहतोः" इति कोशादावभिधानात्। तथा रयीणां धनानां धरुणः धारयितेत्यर्थः। तथा मनीषाणां मनसा एषितानामभिलषितानां पदार्थानां प्रार्प्पणः मनोऽभिलषितपदार्थानां प्रकर्षेणार्प्पयितेत्यर्थः। तथा सोमगोपाः सोमं गोपायतीति सोमगोपाः यजमानकर्तृकसोमयागस्य रक्षितेत्यर्थः। तथा वसुः वासयतीति वसुः सर्वस्य वासहेतुः। यद्वा वसुः धनरूपः यथान्यानि शयनासनरथादिधनान्युपकुर्वन्ति तथैवायमपि तापपाकप्रकाशैर्जनानामुपकर्त्ता भवति। अतोऽग्निरपि वसुशब्देनात्राभिहितः, इतिभावः। तथा सहसः "सह इति बलनामे"ति निघण्टुः, सहसः बलस्य सूनुः पुत्रः अरण्योर्मन्थने बलस्य सद्भावान्मन्थनवेगरूपस्य बलस्य पुत्र इति भावः। यतो बलान्मथ्यमानोऽजायतेऽग्निरत एवमुच्यत इत्यभिप्रायः। तथा अप्सु जलेऽवस्थितो वरुणात्मना राजा भासमान इत्यर्थः। यद्वा अप्सु वृष्टिरूपासु राजा विद्युद्रूपेण दीप्यमान इत्यर्थः। तथा उषसामग्रे प्रातःकालेऽग्निहोत्रेषु इधानः अग्निहोत्रिभिः प्रज्वालित इत्यर्थः। उषःकालेऽग्निहोत्रहोमायाग्नयः प्रादुष्क्रियन्ते तदभिप्रायेणैवात्र "उषसाम् अग्रे इधानः" इत्येवमुक्त इति भावः। यत ईदृशोऽग्निरस्तीतिशेषः। अतस्त्वदर्थमेतस्मादग्नेः सकाशाद्वीर्य्यमहं प्रार्थयामीत्याशंसावाक्यार्थः॥ ५॥

विश्वस्य केतुर्भुवनस्य गर्भऽआरोदसीऽअपृणाज्जायमानः।
वीडुञ्चिदद्रिमभिनत्परायञ्जनायदग्निमयजन्त पञ्च॥ ६॥

हे कुमार, यतस्तादृशः पूर्वमन्त्रोक्त एवम्भूतोऽग्निरस्तीति वाक्यशेषः। अतः स इदृशोऽग्निर्जायमानः उत्पद्यमानः सूर्यात्मना प्रकटीभवन् रोदसी (रोदसीति द्यावापृथिव्योर्नामे"ति निघण्टुः, "वा छन्दसी"ति पूर्वसवर्णदीर्घः) रोदस्यौ द्यावापृथिव्यौ आ अपृणात् आसमन्ताद्भावेन सर्वतस्तेजसा पूरयतीत्यर्थः। कीदृशोऽग्निरित्यपेक्षायामुच्यते। विश्वस्य केतुः प्राणिजातस्य विज्ञानभूतोऽन्यात्मनेत्यर्थः। तथा भुवनस्य गर्भः भूतजातस्य गर्भवदन्तरवस्थितो वाय्वात्मनेत्यर्थः। सोऽग्निरेव प्राणभावेन भूतानामन्तः सञ्चरतीत्यर्थः। किञ्च यः परायन् इन्दुरूपेण परापरतो गच्छन् ज्योत्स्नाप्रदानेन जगदिदं प्रकाशयतीतिवाक्यशेषः। तथा विडुञ्चित् विडुशब्दो दृढार्थः चिदप्यर्थे, दृढमपि अद्रिम् अदारयितव्यमपि मेघम् अभिनत् भिनत्ति वृष्ट्यर्थं विदारयतीत्यर्थः, इन्द्ररूपेणेतिशेषः। तथा यत् ("सुपां सुलुगि"ति विभक्तिलोपश्छान्दसः। यमग्निं पञ्चजनाः अयजन्त यजन्ते विप्रादयश्चत्वारो वर्णा निषादश्चेति पञ्चजनास्ते यजन्ते यथाक्रमं श्रौतस्मार्तादिकर्मभिरिति वाक्यशेषः। यद्वा होत्रध्वर्यूद्गातृब्रह्मणाश्चत्वारो महर्त्विजो यजमानश्चेति पञ्चजना यथावेदं यथाक्रमं च यजन्ते इत्यर्थः। यद्वा गन्धर्वाः पितरो देवा असुरा रक्षांसीति वा पञ्चजनाः यजन्ते इत्यर्थः। अनेनाग्नेः सर्वपूज्यत्वं ध्वन्यत इति भावः। "य एवम्भूतोऽग्निर्निषादपञ्चमस्य वर्णचतुष्टयस्य ब्राह्मणादेः रक्षःपञ्चमस्य गन्धर्वादिचयुष्टयस्यापि यजनार्होऽस्ति। अतस्त्वदर्थमेतस्मादग्नेः सकाशाद्वीर्य्यं प्रार्थयामीत्याशंसावाक्यार्थः। अपृणादिति "पॄ पालनपूरणयोः" (क्रा० प०) इत्यस्माल्लडर्थे लङि प्रथमपुरुषैकवचने रूपं, तत्र (आ अपृणात्) इत्यत्र व्यवहितोपसर्गसम्बन्धः,

"छन्दसि परेऽपि" "व्यवहिताश्चे"ति पाणिन्युक्तेः। एवमभिनदिति च लडर्थे लङि प्रथमपुरुषैकवचने रूपं बोध्यम्। तथैव "अयजन्त" इत्यपि लडर्थे लङि प्रथमपुरुषैकवचने रूपम् "छन्दसि लुङ्लङ्लिटः" इतिपाणिनिवचनात्सर्वत्र लडर्थे लङ्लकार इत्यवगन्तव्यम्॥६॥

उ॒शिक् पा॑व॒को अ॑र॒तिः सु॑मे॒धा मर्त्ये॑ष्व॒ग्निर॒मृतो॒ नि धा॑यि।
इय॑र्त्ति धू॒मम॑रु॒षं भरि॑भ्र॒दुच्छु॒क्रेण॑ शो॒चिषा॒ द्यामिन॑क्षन्॥ ७॥

य ईदृशोऽग्निर्मर्त्येषु मरणधर्म्मेषु निधायि निहितः देवैरिति शेषः। निपूर्वाद्धातेः कर्मणि लुङि "निधायि" इति रूपं तत्राडभावश्छान्दसः "बहुलं छन्दस्यमाङ्योगेऽपि" इति पाणिनिवचनात्। सोऽग्निः अरुषमरोषं चक्षुराद्युपद्रवरहितमरोचनं वा धूमम् उदियर्त्ति उद्गमयतीत्यर्थः। "छन्दसि परेऽपि" "व्यवहिताश्चे"ति पाणिन्युक्तेरुपसर्गक्रिययोर्व्यवधानम्, मन्त्रे उपसर्गस्य परनिपातनं चेतिद्वयमपि बोध्यम्। "इतो वा अयमूर्द्ध्वः. रेतः सिञ्चति धूमः. सामुत्र वृष्टिर्भवति" इति श्रुतेरिह "अयमग्निः अरुषं धूमम् उत् इयर्त्ति" इत्युक्तं भवति। कीदृशोऽग्निरित्यपेक्षायामुच्यते। उशिक् उश्यते काम्यते लोकैरित्युशिक् (वशेरौणादिक इक्प्रत्ययो बोध्यः) उशिक् काम्यः सर्वजनप्रियः कान्तः मनोज्ञ इति भावः। तथा पावकः पुनातीति पावकः पावयितेत्यर्थः। तथा अरतिः अलंमतिः पर्य्याप्तमतिरित्यर्थः। यद्वा अरतिः दुष्टेष्वरतिः प्रीतिरहित इत्यर्थः। तथा सुमेधाः शोभना सेवकाभिप्रायधारणसमर्था मेधा बुद्धिर्यस्य, शोभनो मेधो यज्ञो यस्येति वा स सुमेधाः शोभनबुद्धिः सुयज्ञो वेत्यर्थः। पुनः कीदृशोऽग्निः अमृतः अमरणधर्म्मा तथा भरिभ्रत् जगद्धारयन् स एव हि जगद्धारणसमर्थ इति भावः। "दाधर्त्ति दर्धर्त्ति दर्धर्षि०–" इत्यादिना बिभर्त्तेर्यङ्लुगन्तस्य शतरि अभ्यासस्य जश्त्वाभावनिपातनात् "भरिभ्रत्" इति प्रथमैकवचने रूपं भवतीति बोध्यम्। तथा शुक्रेण निर्मलेन शोचिषा तेजसा प्रभारूपेण प्रकाशेन द्याम् आकाशम् इनक्षन् व्याप्नुवन्नित्यर्थः। नक्षत्रग्रहतारासंबन्धितेजसा द्युलोकं प्राप्नुवन्नित्यर्थः, "इतः प्रदानाद्धि देवता उपजीवन्ती"ति श्रुतेः। हे कुमार, यस्मादीदृशोऽग्निरस्ति, तस्मादेव एतस्मादेवाग्नेः सकाशात् त्वदर्थं वीर्य्यमहं प्रार्थयामीत्याशंसावाक्यार्थः॥ ७॥

दृ॒शा॒नो रु॒क्म उ॒र्व्या व्य॑द्यौद्दु॒र्मर्ष॒मायुः॑ श्रि॒ये रु॑चा॒नः।
अ॒ग्निर॒मृतो॑ अभव॒द्वयो॑भि॒र्यदे॑नं॒ द्यौरज॑नयत्सु॒रेताः॑॥ ८॥

योऽयमीदृशोऽग्निः उर्व्या महत्या दीप्त्या व्यद्यौत् "द्युत दीप्तौ" इत्यस्मात् "सुप्तिङुपग्रहे"-तिकारिकयोपग्रहव्यत्ययेन परस्मैपदे "व्यत्ययो बहुलमि"ति विकरणव्यत्यये शपि लुप्ते वृद्धौ लङ्लकारस्य प्रथमपुरुषैकवचने व्यद्यौदिति रूपं, व्यद्यौत् विद्योतते विशेषेण प्रकाशते इत्यर्थः। अत्र लडर्थे लुङ् बोध्यः, "छन्दसि लुङ्लङ्लिटः" इति पाणिन्युक्तेः। कीदृशोऽग्निरित्यपेक्षायामुच्यते। रुक्मः रोचमानः प्रकाशमान इत्यर्थः। यद्यपि रुक्मशब्दोऽन्यत्र हिरण्यवाचकस्तथापीह अग्निविशेषणत्वेन प्रकाशमानवाचकः। "रुच दीप्तौ" (भ्वा० आ०) "युजिरुचितिजां कुश्चे"ति बाहुलकादिह कर्त्तरि औणादिको मक्प्रत्ययः कुत्वञ्च। रोचते अतिशयेन दीप्यते इति रुक्मः।

इहाग्निविशेषणत्वात्पुंस्त्वमिति बोद्धव्यम्। अन्यथा तु "शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्म्मकमाहुरि"ति वचनाद्रुचेरकर्म्मकत्वाद्भावे प्रत्यये सति "भावे औत्सर्गिकमेकवचनं क्लीबत्वं चे"त्युक्तेः रुक्ममिति नपुंसकत्वेनैव भवितव्यम्। अतो निघण्टौ हिरण्यनामप्रकरणे रुक्ममिति नपुंसकत्वेन निर्दिष्टमस्ति "रुक्मं तु काञ्चने लोहे" इति विश्वमेदिनीकोशादौ च तथैव दृश्यते। अथवा कीदृशोऽग्निः रुक्मः रुक्मम् (अस्मिन्पक्षे लिङ्गव्यत्ययेन पुंस्त्वं छान्दसम्) लुप्तोपमानमेतत्, रुक्ममिव हिरण्यमिव दृशानः दृश्यमानः हिरण्यवत्प्रकाशमानत्वेन दर्शनीय इति भावः। पृथग्विशेषणत्वपक्षे तु रुक्मः रोचमानः तथा दृशानः दृश्यमानः प्रत्यक्षमुपलभ्यमान इत्यर्थः। दृशान इति दृशेः शानचि शपो लुकि अदन्ताङ्गत्वाभावेन मुगागमाभावे हि प्रथमैकवचने रूपं बोध्यम्। पुनः कीदृशोऽग्निः श्रिये दुर्मर्षम् आयुः रुचानः, जनेभ्यः श्रियं दातुं दुर्मर्षमनवखण्डितं केनाप्यतिरस्कार्य्यं वा आयुः जीवनं रुचानः रोचते इति रुचानः वाञ्छन्नित्यर्थः। रुचेरकर्म्मकत्वेऽपि इह वाञ्छार्थकत्वेन सकर्मकत्वं ज्ञेयम्। रुचान इति रोचतेः शानचि "बहुलं छन्दसि" इति शपो लुकि गुणाभावे मुगागमाभावे च प्रथमैकवचने रूपम्। सोऽयमीदृशोऽग्निः वयोभिः "वय इत्यन्ननामे" ति निघण्टुः, वयोभिः अन्नैः पशुपुरोडाशप्रभृतिभिर्हविःस्वरूपैः अमृतः अमरणधर्म्माऽभवत् अग्नेरमृतत्वे हीदं कारणं यस्मात्कारणादीदृशी द्यौः एनमग्निमजनयत् जनितवती मञ्चाः क्रोशन्तीतिवल्लक्षणावृत्त्या द्युलोकवासी देवगण एनमग्निमुत्पादितवानित्यर्थः। कीदृशी द्यौरित्यपेक्षायामुच्यते। सुरेताः शोभनं रेतोऽग्निरूपं यस्याः सा सुरेताः सुवीर्य्या ईदृशी द्यौरित्यर्थः। अस्मात्कारणादप्ययमग्निरमृतोऽमृतधर्म्मोऽभवदिति भावः। हे कुमार, यतोऽग्निरीदृशोऽस्ति, अत एतस्मादग्नेः सकाशात्त्वदर्थं वीर्य्यं प्रार्थयामीत्याशंसावाक्यार्थः ॥८॥

यस्तेऽअ॒द्य कृ॒णव॑द्भद्रशोचेऽपू॒पं दे॑व घृ॒तव॑न्तमग्ने।
प्र तं न॑य प्रत॒रं वस्यो॒ऽअच्छा॒भि सु॒म्नं दे॒वभ॑क्तं यविष्ठ ॥ ९ ॥

अनयर्चा प्रत्यक्षवृत्त्याऽग्निः स्तूयते "भद्रशोचे, देव, अग्ने" इति संबुद्धिपदश्रवणात्ते इति युष्मच्छब्दयोगान्नयेति मध्यमपुरुषक्रियायोगाच्चेत्यवगन्तव्यम्। अथ मन्त्रार्थः। भद्रा कल्याणकारिणी शोचिर्दीप्तिर्यस्य तत्संबुद्धौ हे भद्रशोचे, हे देव, हे अग्ने, अद्यास्मिन्ननुष्ठानदिने ते तव अपूपं पुरोडाशं घृतवन्तं घृतयुक्तमुपस्तरणाभिघारणोपेतं कृणवत् कृणोति करोतीत्यर्थः। कृणोतिरिह करोत्यर्थे, करोतेर्वा विकरणव्यत्ययो बोध्यः। "कृवि करणे" (स्वा० उ० प०) इत्यस्माल्लडर्थे लेट् तस्य प्रथमपुरुषैकवचने "स्वादिभ्यः श्नुरि"ति श्नुप्रत्यये "इतश्चलोपः परस्मैपदेषु"ति तिप इकारलोपे "लेटोऽडाटावि"त्यडागमे ओर्गुणे च कृते कृणवदिति रूपं बोध्यम्। करोतेर्वा विकरणव्यत्ययेन लेट्लकारस्य प्रथमपुरुषैकवचने पूर्वप्रणाल्या तादृशं रूपमवगन्तव्यम्। "स आज्यस्योपस्तीर्य्य द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति॥ (१।७।२।१०।) इत्येतच्छ्रुत्यभिप्रायेणैवेहैवमुक्तम्। किञ्च हे यविष्ठ, युवतम, यद्वा वे यविष्ठ मिश्रयितृतम, हे अग्ने, यो यजमानस्त्वामेवमुपकरोति तं यजमानं प्रतरं अतिशयेन प्रकृष्टं प्रतरम् ("अमु च च्छन्दसि" इत्यव्ययात्परात् घादमुप्रत्ययः) प्रतरं प्रकृष्टतरं वस्यः वसति यत्र तद्वस्तृ (वसतेस्तृन्प्रत्ययः) अतिशयेन वस्तृ इति वसीयः ("तुश्छन्दसि"

इतीयसुनि "तुरिष्ठेमेयःसु" इति तृचो लोपे छान्दसे ईलोपे "वस्यः" इति पदं सिद्ध्यति ) वस्यः अर्थात् वासयोग्यस्थानम् उत्तमलोकं प्रनय ( अत्र जातकर्म्मप्रकरणवशाल्लडर्थे लोट् बोध्यः ) प्रनयसि प्रापयसीत्यर्थः, "स लोकमागच्छत्यशोकमहिमं तस्मिन् वसति शाश्वतीः समाः" ( बृह. मा. ४।१५ ) इति श्रुतेः। किञ्च हे अग्ने, तं यजमानं त्वम् अच्छाभिमुख्येन ईदृशं सुम्नं सुखं चाभिनय अत्रोपसर्गपदाभ्याववृत्त्या क्रियापदाभ्यावृत्तिरपि बोद्धव्या। ( लडर्थे लोट् ) तेनायमर्थः, सर्वतो नयसि प्रापयसीत्यर्थः। कीदृशं सुम्नं देवभक्तं देवैः भक्तं सेवितं देवयोग्यं सुखं प्रापयसीत्यर्थः। "वस्यो अच्छे"त्यत्र "प्रकृत्यान्तःपादमव्यपरे" इति पाणिनिवचनादिह सन्ध्यभावोऽनुसन्धेयः। हे अग्ने, यतस्त्वमेवम्भूतोऽसि एवं करोषि च, अतस्त्वमस्य कुमारस्य वीर्य्यं सम्पादय अस्मै कुमाराय वीर्य्यं देहीत्याशंसावाक्यार्थः॥ ९॥

आ तं भंज सौश्रवसेष्वग्नऽउक्थऽउक्थऽआभंज शस्यमाने।
प्रियः सूर्य्ये प्रियोऽअग्ना भवात्युज्जातेन भिनदद्दुज्जनित्वैः॥ १०॥

शोभनं श्रवः कीर्त्तिः सुश्रवः सुश्रवसः संबन्धीनि कीर्त्तिहेतुभूतानि कर्माणि सौश्रवसानि तेषु सौश्रवसेषु यज्ञकर्मसु हे अग्ने, त्वं तं यजमानमाभज ( अत्रापि जातकर्मप्रकरणवशाल्लडर्थे लोट्, "बहुलं छन्दसी"ति पाणिन्युक्तेश्छन्दसि सर्वविधीनां वैकल्पिकत्वात्। "तिङां तिङो भवन्ती"ति वचनाद्वा लण्मध्यमपुरुषैकवचनस्थाने लोण्मध्यमपुरुषैकवचनादेशः ) आसमन्ताद्भजसीत्यर्थः। तथा उक्थे उक्थे निष्केवल्यप्रगाथादिरूपे च शस्यमाने सति तमाभज आसमन्ताद्भजसि सर्वतो भावेन यष्टुं प्रेरयसीत्यर्थः। एवं त्वयानुगृहीतो यजमानः सूर्य्ये प्रियो भवाति सूर्य्यस्य प्रियो भवतीत्यर्थः। 'सूर्य्ये' इत्यत्र षष्ठ्यर्थे सप्तमी बोद्धव्या। भवातीत्यत्र "व्यत्ययो बहुलमि"ति सर्वविधीनां छन्दसि वैकल्पिकत्वादिह लडर्थे लेट्। "इतश्च लोपः परस्मैपदेष्वि"ति तिप इकारलोपस्यापि बाहुलकादिहाप्राप्तौ "लेटोऽडाटौ" इत्यडागमे भवातीति पदं सिद्ध्यति। किञ्च हे अग्ने, त्वयानुगृहीतो यजमानः अग्ना अग्नेश्च प्रियो भवाति भवतीत्यर्थः। अग्ना इति ( "सुपां सुलुगि"ति ङसो डादेशेऽग्निशब्दस्य षष्ठ्येकवचने रूपं भवति) तथा जातेन उत्पन्नेन पुत्रेण उद्भिनदत् उद्भेदनमुदयं वृद्धिं प्राप्नोतीत्यर्थः। ( अत्रापि उत्पूर्वाद्भिन्दतेर्लडर्थे पूर्ववल्लेट्, तत्र इलोपेऽडागमे च "उद्भिनदत्" इति रूपम् ) तथा जनित्वैः जनिष्यन्ते इति जनित्वास्तैः जनित्वैः जनिष्यमाणैरिति यावत्, पौत्रादिभिश्च उद्भिनददित्यनुषङ्गः। उद्भेदनमुदयं वृद्धिं प्राप्नोतीत्यर्थः। जनित्वैरित्यत्र भविष्यदर्थे औणादिक इत्वप्रत्ययो बोद्धव्यः। स्वयजनशीलस्य यतस्त्वमेवंविधमुपकारं करोषि, अतोऽहमपि त्वद्यजनशीलो भूत्वा हे अग्ने, त्वामिदानीमिदं प्रार्थयामि यदस्य कुमारस्य त्वं वीर्य्यं सम्पादय अस्मै कुमाराय वीर्य्यं देहीत्याशंसावाक्यार्थः॥ १०॥

त्वामग्ने यजमानाऽअनुद्यून्विश्वा व्वसु दधिरे व्वार्याणि।
त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो व्विवव्रुः॥ ११॥

हे अग्ने, यजमानास्त्वामनुवर्त्तमानाः त्वां सेवमानाः सन्तः द्यून् ( द्युशब्दो दिनवाची, "कालाध्वनो०" इति द्वितीया) दिनेषु सर्वदा वार्य्याणि वरणीयानि प्रार्थ्यानि विश्वा

( "निशब्दो बहुलमि"ति प्रातिशाख्यसूत्रेण निलोपश्च छान्दसो बोध्यः ) विश्वा विश्वानि सर्वाणि वसु "सुपां सुलुगि"ति वसुशब्दाद्विभक्तिलोपो बोध्यः। वसु वसूनि धनानि गोभूहिरण्यादीनि दधिरे (अत्र लडर्थे लिट् "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनात्) दधिरे दधति धारयन्ति यथेष्टं धनं प्राप्नुवन्तीत्यर्थः। किञ्च हे अग्ने, पूर्वस्मिन्नपि समये त्वया सह संस्थिताः त्वामाभजन्तो यजमाना द्रविणं यज्ञफलमिच्छमानाः इच्छन्तः उशिजः मेधाविनः ज्ञानसमुच्चयकारिणः सन्तः गोमन्तं गावो रश्मयोऽत्र सन्तीति गोमान् तं गोमन्तं रविमण्डलमध्यगं व्रजं व्रजन्त्यनेन सुकृतिन इति व्रजस्तं देवयानमार्गं विवव्रुः विभिदुः रविमण्डले मार्गं कृतवन्त इत्यर्थः। तदुक्तं श्रुत्या "ते य एवमेतद्विदुः" इत्युपक्रम्य "देवलोकादादित्यम्" इति। हे अग्ने, यस्मात्त्वामाभजतां यजमानानां त्वत्प्रसादात्सर्वमप्यभिलषितं वस्तु सम्पद्यते, अतोऽहमपि अस्य कुमारस्य वीर्यसम्पादनार्थं त्वामाभजामीतिशेषः। त्वं च मामनुगृह्यास्य कुमारस्य वीर्य्यं सम्पादय अस्मै कुमाराय वीर्य्यं देहीत्याशंसावाक्यार्थः॥११॥

**पूर्वो ब्रूयात्प्राणेति, व्यानेति दक्षिणः, अपानेत्यपरः, उदानेत्युत्तरः, समानेति पञ्चमऽउपरिष्टादवेक्षमाणो ब्रूयात् ॥ १२ ॥**

प्राणेत्यादीनां यजुषां प्रजापतिर्ऋषिरनिर्दिष्टानि च्छन्दांसि लिङ्गोक्ता देवता अनुकूलप्राणकरणे विनियोगः, "पूर्वो ब्रूयात्प्राणेति०" इत्यादि पारस्करोक्तेः। अथ मन्त्रार्थः। हे प्राण, प्राणवायो, त्वमस्मिन्कुमारे स्थिरो भवेति पूर्वः पूर्वदिक्स्थो ब्राह्मणो ब्रूयात्। एवमनेन यजुषा कुमारस्यानुप्राणनं कुर्यादिति भावः। तथा हे व्यान, व्यानवायो, त्वमस्मिन्कुमारे स्थिरो भवेति दक्षिणो दक्षिणदिगवस्थितो ब्राह्मणो ब्रूयादित्यनुषङ्गः। एवमनेन यजुषा कुमारस्यानुप्राणनं कुर्यादित्यर्थः। तथा हे अपान, अपानवायो, त्वमस्मिन्कुमारे स्थिरो भवेति अपरः अपरदिक्स्थः पश्चिमदिगवस्थितो ब्राह्मणो ब्रूयादित्यनुषङ्गः। एवमनेन यजुषा कुमारस्यानुप्राणनं कुर्य्यादिति भावः। तथा हे उदान, उदानवायो, त्वमस्मिन्कुमारे स्थिरो भवेति उत्तरः उत्तरदिक्स्थो ब्राह्मणो ब्रूयादित्यनुषङ्गः। एवमनेन यजुषा कुमारस्यानुप्राणनं कुर्य्यादित्यर्थः। तथा हे समान, समानवायो, त्वमस्मिन्कुमारे स्थिरो भवेति पञ्चमो ब्राह्मणः उपरिष्टादूर्द्ध्वमवेक्षमाणः अवलोकयन् सन् ब्रूयादित्यनुषङ्गः। एवमनेन यजुषा कुमारस्यानुप्राणनं कुर्य्यादिति भावः॥ १२॥

**वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् ।**
**वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः**
**शतꣳ श्रृणुयाम शरदः शतम् ॥ १३ ॥**

वेद ते इत्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो भूमिर्देवता जातकस्य जातप्रदेशाभिमन्त्रणे विनियोगः, "स यस्मिन्देशे जातो भवति तमभिमन्त्रयते वेद ते०"–इतिपारस्करवचनात्। अथ मन्त्रार्थः। हे भूमि, पृथिवि, ते तव हृदयं वेद वेद्मि अहं जानामीत्यर्थः। वेत्तेर्लड्डुत्तमपुरुषैकवचने "विदो लटो वा" इति मिपः स्थाने णलादेशे "पुगन्तलघूपधस्य च" इतिलघूप-

धगुणे "वेद" इति रूपं भवति। किम्भूतं हृदयं दिवि आकाशे चन्द्रमसि चन्द्रे श्रितं स्थितं "पुरा क्रूरस्य व्विसृपो व्विरप्शिन्नुदादाय पृथिवीञ्जीवदानुम्। यामैरयँश्चन्द्रमसि स्वधाभिस्तामुधीरासोऽअनुदिश्य यजन्ते॥" (शु० य० वे० सं० १।२८॥) इतिश्रुतेः। तच्चन्द्रमसि स्थितं तव हृदयं वेद वेद्मि अहं जानामि तच्चन्द्रमसि स्थितं तव हृदयं मां विद्यात् मामप्यनुजानीयादित्यर्थः। पश्येम शरदः शतमिति स्पष्टार्थं व्याख्यातञ्च गर्भाधानमन्त्रव्याख्याप्रकरणे तत्र द्रष्टव्यम्॥ १३॥

अश्मा भव परशुर्भव हिरण्यमस्तुतं भव।

आत्मा वै पुत्रनामासि स जीव शरदः शतम्॥१४॥

अश्मा भवेत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता कुमाराभिमर्शने विनियोगः, "अथैनमभिमृशत्यश्मा भवे"ति पारस्करवचनात्। अथ मन्त्रार्थः। "अतिरिक्तमि"ति कारिकया संबुद्धिपदमध्याहर्त्तव्यं ततोऽयमर्थः। हे कुमार, त्वम् अश्मा भव पाषाण इव त्वं दृढाङ्गो भवेत्यर्थः। तथा परशुर्भव कुठार इव विरोधिनां छेदको भवेत्यर्थः। किञ्च हिरण्यमस्तुतं भव (लुप्तोपमानमेतत्) हिरण्यं सुवर्णं यथा अस्तुतं वह्नौ प्रक्षिप्तमपि अस्तुतम् अक्षरम् अविनश्वरं भवति तद्वत्त्वमपि अविनश्वरो भव अर्थाद्दीर्घजीवी भवेत्यभिप्रायः। किञ्च हे कुमार, त्वं मम आत्माऽसि केवलं त्वं पुत्रनामा इत्येव मत्तः पार्थक्यमन्यत्तु तव मया सह समानमेव। मदीयात्मना सह तव पुत्रत्वमेतावन्मात्रविशेषः। अपरञ्च सर्वं मया सह तव तुल्यमेवेत्याशयः। हे कुमार, स त्वं शरदः शतं शतवर्षपर्य्यन्तं शतं शरदो वर्षाणि जीव चिरजीवी भवेत्यर्थः॥ १४॥

इडासि मैत्रावरुणी वीरे वीरमजीजनथाः।

सा त्वं वीरवती भव मया पत्या सहेति॥ १५॥

इडासीत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता कुमारमात्रभिमन्त्रणे विनियोगः, "अथास्य मातरमभिमन्त्रयते इडासि०" इति पारस्करोक्तेः। हे प्रसूते, कुमारमातः, त्वम् इडासि "ईड स्तुतौ" ईड्यते पुत्रवतीत्वेन स्तूयते इति इडा (लुप्तोपमानमेतत्) इडानाम्नी मनोर्दुहिता तत्तुल्यासीति वा। तथा मैत्रावरुणी असि मित्रावरुणदेवतयोः सम्बन्धिनी भवसीत्यर्थः, अमोघप्रसवत्वादितिभावः। हे वीरे, प्रसवरूपस्य महतः क्लिष्टकर्म्मणः कारिणि, त्वं वीरं पुत्रमजीजनथाः उत्पादितवती। अतः सा त्वं मया पत्या सह वीरवती "पुत्रो वै वीरः" इति श्रुतेर्वीरशब्दः पुत्रवाचकः पुत्रवती सर्वदा भवेत्यर्थः। इति शब्दः पादपूरणार्थः॥ १५॥

इमँ स्तनमूर्ज्जस्वन्तन्धयापां प्रपीनमग्ने सरिरस्य मध्ये।

उत्सञ्जुषस्व मधुमन्तमर्व्वन्त्समुद्रियँ सदनमाविशस्व॥ १६॥

इमँ स्तनमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता दक्षिणस्तनदाने विनियोगः, "अथास्यै दक्षिणँ स्तनं प्रक्षाल्य प्रयच्छतीमँ स्तनमिति"इति पारस्करोक्तेः।

कुमारशरीरगतजाठराग्निं प्रत्युच्यते। हे अग्ने, कुमारशरीरगतजाठराग्ने, त्वमस्यै ( अत्र षष्ठ्यर्थे चतुर्थी ) अस्याः प्रसूतेः इमं स्तनं दुग्धपूर्णं कुचं धय पिब "धेट् पाने" इत्यस्माल्लोण्मध्यमपुरुषैकवचने धयेति रूपम्। ) कीदृशं स्तनं ऊर्जस्वन्तम् ऊर्जो रसोऽस्यास्तीति ऊर्जस्वान् तं ऊर्जस्वन्तं विशिष्टरसवन्तं पुनः कीदृशम् अपां प्रपीनम् अप्शब्देनात्र लक्षणया पय उच्यते, दुग्धमित्यर्थः। अपामिति 'तृत्यर्थानां करणे षष्ठी' इति तृतीयार्थे षष्ठी। प्रपीनमित्यत्र "ओप्यायी वृद्धौ" इत्यस्मात्प्रपूर्वादौणादिको नक् प्रत्ययः "प्यायः पी" इति प्यादेशश्च। प्राप्याय्यते पूर्यते इति प्रपीनम् अपाम् अद्भिः प्रपीनं प्रकर्षेण पूर्णमित्यर्थः। अद्भिः पयोभिरर्थाद्दुग्धैः प्रपीनं प्रपूर्णं दुग्धपरिपूर्णमिमं स्तनमित्यर्थः। ईदृशमिमं स्तनं त्वं पिबेत्यभिप्रायः। तदेवंप्रकारेण पुनः स्पष्टीक्रियते। तथाहि-इयर्तीति अर्वा तत्संबुद्धौ हे अर्वन्, सर्वतो गन्तः, सर्वप्राणिनां जाठराग्निभूत, हे अग्ने, सरिरस्य मध्ये ( "सुप्तिङुपग्रहे" ति कारिकया हलो व्यत्ययेन तालव्यशकारस्य स्थाने दन्त्यसकारः, अचो व्यत्ययेन दीर्घस्येकारस्य स्थाने ह्रस्व इकारश्च ) सरिरस्य शरीरस्य मध्ये अर्थात् भूतानां देहस्य मध्ये रसरूपेण स्थितमिति शेषः, एतादृशमुत्सम् उत्स्यन्दनं स्तन्यलक्षणं दुग्धं जुषस्व सेवस्वेत्यर्थः। पुनः कीदृशमुत्सं मधुमन्तं मधुरस्वादेन माधुर्य्यरसेन युक्तम्। तथा समुद्रियं "समुद्र इत्यन्तरिक्षनामेति निघण्डुः" समुद्रे भवं समुद्रियम् अन्तरिक्षाच्चन्द्रकलया इह प्राप्तं सत्कुमारमातृभक्षितपदार्थद्वारा तत्स्तन्यं दुग्धमपि समुद्रियमित्युच्यते, इति भावः। किञ्च हे अग्ने, त्वमेतादृशं स्तन्यं रसं दुग्धं पातुं सदनं कुमाराऽऽस्यरूपं गृहमाविशस्व आविश कुमारजठरतः प्राणवायुसाहाय्येन तदीयमुखलक्षणं गृहं प्रविश। तथा सति स्तन्यं रसं पास्यसीत्यभिप्रायः। "समुद्राभ्राद्धः" इति समुद्रशब्दाद्घप्रत्यये कृते घस्य "आयनेयी०-" इत्यादिना इयादेशे द्वितीयैकवचने समुद्रियमिति रूपं बोध्यम्॥ १६॥

यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः।
येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः॥ १७॥

"यस्ते" इत्यस्य दीर्घतम ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता वामस्तनदाने विनियोगः, "यस्ते स्तन इत्युत्तरमि" ति पारस्करवचनात्। हे सरस्वति, कुमारमातृशरीरस्थे, वागधिष्ठात्रि, देवते, तं स्तनमिह अस्मिन् स्थाने कुमारमुखे इति यावत्, धातवे ( "धेट् पाने" इत्यस्मात् "तुमर्थे सेसेनसे०" इत्यादिना तुमर्थे तवे प्रत्ययो बोध्यः। ) धातुं पातुमकः कुरु कुमारस्य पानार्थं प्रयच्छेत्यर्थः। ( अक इत्यत्र करोतेर्लोडर्थे लङ् शपि लुप्ते गुणश्च बोद्धव्यः ) तं कं स्तनं यस्ते तव स्तनः कुमारमातृवागधिष्ठात्र्यास्तव स्तन इव स्तनः नतु वास्तविकत्वेन तव स्वकीयस्तनोऽभिप्रेत इत्याशयः। यश्चेदानीं शशयः शेते इति शशयः ( अच्प्रत्यये द्वित्वं पूर्वस्यात्वं च छान्दसं बोध्यम् ) यः स्तनः सम्प्रति सुप्त इवास्ते अन्यैरनुपभुक्तत्वादिति भावः। यश्च स्तनो मयोभूः मयः सुखं दुग्धपानजन्यं भावयति प्रापयतीति मयोभूः सुखाविर्भावक इत्यर्थः। तथा यश्च स्तनः रत्नधाः रत्नं दधातीति रत्नधाः कुमारक्षुन्निवृत्तिकारकत्वेन तदीयभोजनरूपस्य रत्नस्य धारयितेत्यर्थः। यश्च वसुवित् वासयति पीतं सत्प्राणान् शरीरे स्थापयतीति वसु स्तन्यं दुग्धमिति यावत् तद्विन्दति वेत्तीति वा वसुवित् अर्थात्कुमारस्य प्राणस्थि-

त्यर्थं दुग्धपरिपूर्णो यः स्तन इत्यभिप्रायः। तथा यश्च स्तनः सुदत्रः सुष्ठु ददाति स्तन्यं रसमिति सुदत्रः स्तन्यरसस्य शोभनो दातेत्यर्थः। किञ्च येन स्तनेन विश्वा (निशब्दो बहुलमिति प्रातिशाख्यसूत्रेण निलोपे "शेश्छन्दसी"ति पाणिनीयसूत्रेण शिलोपे प्रत्ययलक्षणत्वेन नुमि उपधादीर्घे नलोपे च (विश्वा) इति द्वितीयाबहुवचने रूपं भवति।) येन स्तनेन विश्वा विश्वानि सर्वाणि वार्य्याणि वरणीयानि वसूनि वस्तूनि त्वं पुष्यसि पुष्णासि तं स्तनं पानार्थं कुमाराय प्रयच्छेत्यर्थः ॥ १७ ॥

आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ।

एवमस्याᳪं सूतिकायाᳪं सपुत्रिकायां जाग्रथ ॥ १८ ॥

आपो देवेष्वित्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्द आपो देवता जलपात्राधाने विनियोगः, "उदपात्रं शिरस्तो निदधाति आपो देवेषु जाग्रथ०–" इति पारस्करोक्तेः। अथ मन्त्रार्थः। हे आपः, यूयं देवेषु जाग्रथ देवानां रक्षायै निन्द्रां मुञ्चथ अतो युष्मान्प्रति मयाप्युच्यते। यत् हे आपः, यथा यूयं देवेषु जाग्रथ जगरूका भवथ एवं तथैव अस्यां सपुत्रिकायां पुत्रसहितायां सूतिकायां सुप्तायां सत्यां यूयं जाग्रथ जागरणशीला भवत। देवलोकेषु देवस्त्रीणां स्वस्वप्रसूतकृत्ये यथा यूयं जाग्रथ एवमस्याः सपुत्रायाः प्रसूतेः रक्षार्थं यूयं जाग्रथेत्याशंसावाक्यार्थः ॥ १८ ॥

शण्डामर्काऽउपवीरः शौण्डिकेयऽउलूखलः।

मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा ॥ १९ ॥

आलिखन्ननिमिषः किं वदन्तऽउपश्रुतिर्हर्य्यक्षः।

कुम्भी शत्रुः पात्रपाणिर्नृमणिर्हन्त्री मुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहा ॥ २० ॥

शण्डामर्का इति मन्त्रद्वयस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता अग्नौ सर्षपाणामावपने विनियोगः, "द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात्सन्धिवेलयोः फलीकरणमिश्रान् सर्षपानग्नावावपति शण्डामर्काः"इत्यादिपारस्करवचनात्। शण्डामर्कौ शुक्रपुत्रावसुरयाजकौ स्त इति "निरस्तः शण्डः शुक्रस्याधिष्ठानमसि, निरस्तो मर्को मन्थिनोऽधिष्ठानमसि" इत्यादिश्रुतिनिदर्शनादवसीयते। बालग्रहाणां मध्ये शुक्रपुत्रत्वेन ब्राह्मणजातित्वादुभयोः शण्डामर्कयोः पूजार्थमिह गुरुत्वाद्बहुवचनं बोध्यम्। अथ व्याख्या। शण्डाः शण्डनामानो बालग्रहाः मर्काः मर्कनामानो बालग्रहाः एवमन्येऽपि उपवीरादयश्च्यवनान्ता ये बालग्रहास्ते सर्वे शण्डादयोऽष्टौ बालग्रहाः इत आहुतेर्नश्यतात् नश्यन्त्वित्यर्थः। "तिङां तिङो भवन्ती"ति वचनादिह णशेर्लोट्प्रथमपुरुषबहुवचनस्थाने तदेकवचनं, तस्य तातङादेशे श्यन्प्रत्ययादौ नश्यतादिति पदं सिद्ध्यति। यद्वा नश्यतादित्येकवचनं यथा स्थितमेव व्याख्यातव्यम्। तत्पक्षे नश्यतादितिक्रियापदमष्टाभिः सह प्रत्येकं सम्बध्यते। तत्र कर्त्तृपदसमूहे शण्डा मर्का इत्युभयत्र "सुपां सुपो भवन्ती"ति वचनात्प्रथमैकवचनस्थाने प्रथमाबहुवचनं बोध्यम्। व्याख्यावसरे एकवचनान्तेनैव व्याख्येयं, नश्यतादित्येकवचनान्तक्रियापदोपादानात्। अन-

याऽऽहुत्या शण्डादयोऽष्टौ बालग्रहा नश्यन्त्वित्याशंसावाक्यार्थः ॥ १९ ॥ आलिखन्नित्यादयश्च्यवनान्ता ये दश बालग्रहा द्वितीयमन्त्रोक्तास्तैः सहापि नश्यतादिति क्रियापदं प्रत्येकं सम्बध्यते । मन्त्रद्वयेऽपि स्वाहाशब्दो होमार्थद्योतकः । अतोऽयमर्थः । हे अग्ने, यस्य तव प्रसादादनेन फलीकरणमिश्रितसर्षपहोमेन शण्डादयश्च्यवनान्ता अष्टौ बालग्रहाः प्रथममन्त्रोक्ताः, एवमालिखन्नित्यादयश्च्यवनान्ता दश बालग्रहाश्च सर्वे नाशं यास्यन्तीत्यभिप्रायेण त्वयि एतत्फलीकरणमिश्रितसर्षपरूपं हविरावपामि तत्स्वाहा तस्मै तथाविधोपकारकाय तुभ्यमेतद्धविः सुहुतमस्त्वित्यर्थः ॥ २० ॥

## ॥ अथ जातकर्म्मान्तर्गतबालग्रहोपद्रवशान्तिमन्त्रव्याख्या ॥

**कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनश्चेच्चेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर तत्सत्यम् ॥ २१ ॥**

कूर्कुर इति त्रयाणां मन्त्राणां प्रजापतिर्ऋषिरनुष्टुप्छन्दः शुनको देवता कुमारोपद्रवशान्त्यर्थं जपे विनियोगः, "यदि कुमार उपद्रवेज्जालेन प्रच्छाद्योत्तरीयेण वा पिताङ्क आधाय जपति कूर्कुरः सुकूर्कुर०—" इत्यादि पारस्करोक्तेः। अथ मन्त्रार्थः। कूर्कुरादीनि त्रीणि नामानि, तत्तन्नामको बालग्रहविशेष इत्यर्थः । तत्र बालबन्धनः बालं कुमारं बध्नातीति बालबन्धनः इति त्रिभिरेव कूर्कुरादिभिः सह प्रत्येकं सम्बध्यते 'चेत् चेत्' इति वीप्सादर्शनात् । तेनायमर्थः । तत्र हे शुनक, इति कूर्कुरादीनां त्रयाणामपि बालग्रहविशेषाणां साधारणमेवैकं सम्बोधनपदम्, सीसरस्तेषां बालग्रहविशेषाणां पिता च एक एवं। कूर्कुरश्चेद्बालबन्धनः, सुकूर्कुरश्चेद्बालबन्धनः, कूर्कुरनामकस्तृतीयोऽन्यो वा कश्चिद्बालबन्धनस्तेषां बालग्रहविशेषाणां त्रयाणां मध्ये प्रत्येकं प्रत्युच्यते । हे शुनक, बालग्रहविशेष, कूर्कुरश्चेद्बालबन्धनः सुकूर्कुरश्चेद्बालबन्धनस्तृतीयो वा कूर्कुरश्चेद्बालबन्धनस्तर्हि ते तुभ्यं नमोऽस्तु नमस्कारोऽस्तु स त्वं मन्नमस्कारेण तुष्टः सन् सृज "सृज विसर्गे" विसर्गस्त्यागः, स त्वं कुमारन्त्यजेत्यर्थः, यतश्च सीसरस्तव पिता लपेत बाहुलाकाल्लडर्थे लिङ् लपते त्वां प्रति वदतीत्यर्थः । किं लपते तदुच्यते । हे शुनक, त्वम् अपह्वर अपगतकौटिल्यो भवेति वदतीत्यर्थः । तत्सत्यम् यत्त्वां प्रति त्वदीयस्य पितुः सीसरस्य कुमारत्यागविषयकं वाक्यं तत्सत्यं भवत्वित्यर्थः । कूर्कुरादीनां बालग्रहविशेषाणां मध्ये यदि एको द्वितीयस्तृतीयो वा यः कश्चिदस्ति तदर्थं नमस्कारोऽस्तु स च मदीयनमस्कारेण तुष्टः सन् कुमारं त्यजतु तथा स्वपितुः सीसरस्य च वचसापि एनं कुमारं परित्यजत्वित्याशंसावाक्यार्थः ॥ २१ ॥

**यत्ते देवा वरमददुः स त्वं कुमारमेव वा वृणीथाः । चेच्चेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर तत्सत्यम् ॥ २२ ॥**

हे शुनक, यत् ("सुपां सुलुगि"ति द्वितीयाविभक्तेर्लुक्) यं वरं ते तुभ्यं देवा इन्द्रादयोऽददुः दत्तवन्तः स वरस्तु पूर्वोक्तरूप एव । तस्यैव पुनः स्पष्टीकरणं यथा—हे

शुनक, देवानां सविधे यदा त्वया वरः प्रार्थितस्तदानीं वरं ब्रूहीत्युक्तेषु देवेषु त्वं कुमारं बालमेव वरं वृणीथाः वृतवान् ( लुङि छान्दसोऽडभावः, "बहुलं छन्दस्यमाङ्योगेऽपी"ति पाणिनिवचनात्। ) ततश्च ते देवास्तुभ्यं तमेव वरमददुर्यं वरं त्वं वृतवान् तदुभयमपि सत्यं तव वरप्रार्थनं देवानां वरप्रदानञ्च वस्तुतस्तु सत्यमेव तथापि यतस्ते तुभ्यं नमोऽस्तु नमस्कारोऽस्त्वित्युक्त्वा त्वां नमस्करोमि तथा यतश्च सीसरस्त्वदीयः पिता अपह्वर अपगतकौटिल्यो भवेति त्वां प्रति लपेत लपते वदतीत्यर्थः। अत एव त्वं मम नमस्कारेण तुष्टः सन् स्वपितृवाक्येन चैनं कुमारं सृज परित्यजेत्यर्थः॥ २२॥

यच्चो सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ। चेच्चेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर तत्सत्यम्॥ २३॥

हे शुनक, सरमा देवानां शुनी ते तव माता जननी, सीसरः तन्नामको देवानां श्वा ते तव पिता जनकः, तथा श्यामशबलौ तन्नामानौ वैवस्वतकुलोद्भवौ यमद्वारे स्थितौ श्वानौ ते तव भ्रातरौ, तथा यच्च तव कृते देवानां वरदानं पूर्वोक्तं, तदेतत्सर्वमपि सत्यं तथ्यमेव। तव मातृपितृभ्रातॄणां सरमादीनां हिंस्रस्वभावाद्यद्यपि तवापि तादृशः स्वभावो दुर्वार एव, एवं तव देववरोऽपि तदनुकूल एव, तथापि यतस्ते तुभ्यं नमोऽस्तु नमस्कारोऽस्त्वित्युक्त्वा त्वां नमस्करोमि तथा यतश्च सीसरस्त्वदीयः पिता अपह्वर अपगतकौटिल्यो भवेति त्वां प्रति लपेत लपते वदतीत्यर्थः। अत एव कूर्कुरश्चेद्बालबन्धनः सुकूर्कुरश्चेद्बालबन्धनः तृतीयो वा कूर्कुरश्चेद्बालबन्धनःसत्वं मम नमस्कारेण तुष्टः सन् स्वपितृवाक्येन चैनं कुमारं सृज परित्यजेत्यर्थः। अपपूर्वस्य "ह्वृ कौटिल्ये" इत्यस्य धातोर्लोण्मध्यमपुरुषैकवचने "अपह्वर" इति रूपम्॥२३॥

॥ इति कूर्कुरादिमन्त्रत्रयव्याख्या॥

न नामयति न रुदति न हृष्यति न ग्लायति।

यत्र वयं वदामो यत्र चाभिमृशामसि॥ २४॥

न नामयतीत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो वायुर्देवता कुमाराभिमर्शने विनियोगः, "अभिमृशति न नामयति०—" इत्यादिपारस्करोक्तेः। यत्र कुमारे वयं वदामः अमुं मन्त्रमुच्चारयाम इत्यर्थः। ( "अस्मदो द्वयोश्चे"ति पाणिनिवचनादिह एकवचनेऽपि बहुवचनम्। ) तथा यत्र च अभिमृशामसि यत्रेत्यत्र बाहुलकाद्द्वितीयार्थे त्रल्प्रत्ययः। यञ्च कुमारं वयम् अभिमृशामसि ( "इदन्तो मसी"ति मस इगागमः ) अभिमृशामः यं कुमारं वयमनेन मन्त्रेण स्पृशाम इत्यर्थः। स कुमारो न नामयति अङ्गानां नमनं प्रक्षेपणं न करोति। एतन्मन्त्रोच्चारणपूर्वकाभिमर्शने सति कुमारं कूर्कुरादिर्नाऽभिभवतीत्याशयः। तथा स कुमारो न रुदति न रोदनं करोति रोदनपीडायुक्तो न भवतीत्यभिप्रायः। तथा स कुमारो न हृष्यति हर्षपीडायुक्तो न भवतीत्यर्थः। तथा स कुमारो न ग्लायति हर्षक्षययुक्तोऽपि न भवतीत्यर्थः॥२४॥

इति जातकर्म्मान्तर्गतबालग्रहोपद्रवशान्तिमन्त्रव्याख्या॥ ४॥

॥ इति जातकर्ममन्त्रव्याख्या समाप्ता॥

---

नामकर्मणि वैदिकमन्त्रैरनुष्ठानं पारस्करेण नोपदर्शितम्, अतोऽस्माभिरपि तत्र वैदिकमन्त्राभावात्तत्संबन्धिनीं व्याख्यां विहायाऽन्नप्राशनमन्त्रा व्याख्यास्यन्ते। तथाहि—

## ॥ अथान्नप्राशनमन्त्रव्याख्या ॥

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।
सा नो मन्द्रेषमूर्ज्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु स्वाहा ॥ १ ॥

देवीं वाचमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवताऽन्नप्राशनाङ्गाऽऽज्यहोमे विनियोगः, "आज्याहुती जुहोति देवीं वाचम्०" इति पारस्करवचनात्। अथ मन्त्रार्थः। मन्त्रेऽस्मिन् तच्छब्दश्रवणाद्यच्छब्दोऽध्याहर्तव्यः, यत्तदोर्नित्यसंबन्धत्वात्। तथा हि—देवाः ब्रह्मादयः ईदृशीं यां वाचं वाणीम् अजनयन्त उत्पादितवन्त इत्यर्थः। कीदृशीं वाचमित्यपेक्षायामुच्यते। देवीं द्युतिस्तुतिक्रीडादियुक्तां कान्त्यादिगुणवतीमित्यर्थः। तां वाचं विश्वरूपाः नानारूपाः मनुष्यादिरूपाः पशवः पश्यन्तीति पशवो जीवा वदन्ति ब्रुवन्तीत्यर्थः। सा वाक् अस्मान् उपैतु उपगच्छतु उपेत्य च स्वसामर्थ्यप्रदानेन इमं कुमारमप्यनुगृह्णात्विति भावः। उपैत्वित्यत्र व्यवहितोपसर्गसम्बन्धः "छन्दसि परेऽपि" "व्यवहिताश्च" इति पाणिन्युक्तेः। अत एव 'उप' इत्ययमुपसर्गः 'एतु' इति क्रियापदेन सह सम्बध्यते। कीदृशी वागिति चेत्तत्र हेतुगर्भविशेषणमुच्यते। नोऽस्माकम् ऊर्ज्जं सामर्थ्यं दुहाना पूरयन्तीत्यर्थः। नोऽस्माकमेवेति न, किन्तु कुमारस्यापि वाक्सामर्थ्यं दुहानेतिभावः। तच्च ऊर्ज्जं कीदृशं मन्द्रेषं मन्द्रो गम्भीरः अव्यक्त इति यावत् तस्य इषं गमकं ज्ञापकमित्यर्थः। अव्यक्तः परोक्षोऽप्यर्थो येनावगम्यते तत्सामर्थ्यमस्माकं पूरयन्तीत्यर्थः। पुनश्च कीदृशी वाक् धिनोति प्रीणातीति धेनुः प्रीणयित्रीत्यर्थः। यद्वा धेनुः धेनुस्वरूपेत्यर्थः। वाचो धेनुत्वं च श्रुत्याभिहितं तद्यथा—"वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवाऽउपजीवन्ति स्वाहाकारञ्च वषट्कारञ्च स्वधाकारं पितरो हन्तकारं मनुष्यास्तस्याः प्राण ऋषभो मनोव्वत्सः" इति। पुनः कीदृशी वाक् सुष्टुता सुष्ठु स्तुतेत्यर्थः। या ईदृशी वाक् तस्यै स्वाहा तामुद्दिश्य तदर्थमित्यर्थः, एतद्धविः आज्यमग्नौ जुहोमि तत्त्वदर्थं सुहुतमस्तु सुहुतं भवत्वित्यर्थः। तस्याः प्रसादाच्चास्य कुमारस्य वाक्सामर्थ्यं परोक्षार्थप्रत्यक्षकारकं भवतु। अयं कुमारो वाचालुर्विद्वान् ज्ञानवाँश्च भवत्वित्याशंसावाक्यार्थः ॥ १ ॥

व्वाजो नोऽअद्य प्रसुवाति दानं व्वाजो देवाँ२॥ऽऋतुभिः कल्पयाति।
व्वाजो हि मा सर्व्ववीरं जजान व्विश्वाऽआशा व्वाजपतिर्जयेयम् ॥ २ ॥

वाजो नो इत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवताऽन्नप्राशनाङ्गाज्यहोमे विनियोगः, "वाजो नो अद्येति द्वितीयामि"ति पारस्करोक्तेः। अथ मन्त्रार्थः। वाजः अन्नं तदधिष्ठात्री देवता वा अद्य कुमारस्य अन्नप्राशनदिवसे नोऽस्माकं दानं होमरूपं प्रसुवाति (अत्र लोडर्थे लेट्) प्रसुवतु अभ्यनुजानातु प्रपूर्वः सुवतिरभ्यनुज्ञानार्थः। यद्वा वाजः अन्नं

तदधिष्ठात्री देवता वा अद्य कुमारस्य अन्नप्राशनदिवसे नोऽस्मान् दानं "सुपां सुलुगि"-ति विभक्तेः 'सु' आदेशः, दानाय प्रसुवाति प्रसुवतु। अर्थात् कुमाराय अन्नं दातुं प्रसुवतु प्रेरयतु कुमारस्य अन्नं प्राशयितुं तदन्नप्राशनकर्मणि अस्मान् प्रवर्त्तयत्विति भावः। तथा च वाजः अन्नं तदधिष्ठात्री देवता वा ऋतुभिः कालविशेषैः सह देवान् कल्पयाति यथास्थानं देवान्कल्पयतु ( कल्पतेर्लोडर्थे लेट् तस्य प्रथमपुरुषैकवचने "लेटोऽडाटौ" इत्यडागमे कल्पयाति इति रूपम्।) यस्मिन्काले यो देवो यष्टव्यस्तं तत्र मां प्रेरयित्वा याजयत्वितिभावः। 'हि' इत्ययं निपातश्चार्थे बोद्धव्यः। वाजोऽन्नं तदधिष्ठात्री देवता वा मा मां च सर्ववीरं सर्वे वीराः पुत्रपौत्रादयो यस्य स सर्ववीरस्तं तादृशं कृत्वा जजान जनयतु "छन्दसि लुङ्लङ्लिटः" इति लोडर्थे लिट् बोद्धव्यः। पुत्रादियुक्तं मां करोत्विति भावः। पुनरपि स्वपुत्रादेर्यथाऽन्नप्राशनं कारयेयं तथा मां विदधात्वित्याशयः। तथा सति बहुभिः पुत्रादिभिः सह युक्तः सन्नहं वाजपतिः वाजोऽन्नं तस्य पतिर्वाजपतिः समृद्धान्नो भूत्वा विश्वाः सर्वाः आशाः दिशः जयेयम् अन्नदानेन सर्वा दिशो वशीकुर्य्यामित्यभिप्रायः ॥ २ ॥

प्राणेनान्नमशीय स्वाहा ॥ ३ ॥
अपानेन गन्धानशीय स्वाहा ॥ ४ ॥
चक्षुषा रूपाण्यशीय स्वाहा ॥ ५ ॥
श्रोत्रेण यशोऽशीय स्वाहा ॥ ६ ॥

प्राणेनान्नमित्यादीनां चतुर्णां यजुषां प्रजापतिर्ऋषिर्यजुष्ट्वादनिर्दिष्टानि च्छन्दांसि लिङ्गोक्ता देवता अन्नप्राशनाङ्गस्थालीपाकहोमे विनियोगः, "स्थालीपाकस्य जुहोति प्राणेनान्नमि"त्यादिपारस्करोक्तेः। अथ मन्त्रार्थः। प्राणेन प्राणवायुना अन्नमदनीयं सर्वमपि पदार्थम् अशीय अश्नीयात् भुञ्जीतेत्यर्थः। अयं कुमार इति शेषः। "तिङां तिङो भवन्ती"ति वचनादिह अश्नोतेर्लिङि प्रथमपुरुषैकवचनस्थाने उपग्रहादिव्यत्ययेन तदुत्तमपुरुषैकवचनं "व्यत्ययो बहुलं" "बहुलं छन्दसी"त्यादिपाणिन्युक्तेश्च। स्वाहा तस्मै प्राणाय प्राणवायवे एतद्धविः सुहुतमस्त्वित्यर्थः ॥ ३ ॥

तथा अपानेन अपानवायुना गन्धान् सर्वप्रकारान् गन्धपदार्थान् अशीय पूर्ववदिहापि अयं कुमारोऽश्नीयादित्यर्थः। गन्धानामशनमाघ्राणं तदयं कुमारः प्राप्नुयादिति भावः। स्वाहा तस्मै अपानाय अपानवायवे एतद्धविः सुहुतमस्त्वित्यर्थः ॥ ४ ॥

तथा चक्षुषा चक्षुरिन्द्रियेण रूपाणि शुक्लादीनि अशीय ( पूर्ववदिहापि ) अश्नीयादयं कुमार इति शेषः। रूपाणामशनन्तु तद्दर्शनमात्रं तदयं कुमारः प्राप्नुयादित्याशयः। स्वाहा तदर्थमेतद्धविः सुहुतमस्त्वित्यर्थः ॥ ५ ॥

तथा श्रोत्रेण कर्णेन्द्रियेण यशः कीर्त्तिम् अशीय ( अत्रापि पूर्ववदेव ) अश्नीयादयं कुमार इति शेषः। यशोऽशनन्तु तच्छ्रवणं, तदयं कुमारः प्राप्नुयादितिभावः। स्वाहा तदर्थमेतद्धविः सुहुतमस्त्वित्यर्थः ॥ ६ ॥

इत्यन्नप्राशनमन्त्रव्याख्या।

# ॥ अथ कर्णवेधमन्त्रव्याख्या ॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवाᳬंसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ १ ॥

भद्रं कर्णेभिरित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता कुमारस्य दक्षिणकर्णाभिमन्त्रणे विनियोगः, याज्ञिकानां सम्प्रदायेषु प्रयोगपद्धतौ च तथा दर्शनात्। तद्यथा—"अथ कर्णवेधः। तत्र तृतीये वर्षे पञ्चमे वा पुष्येन्दुचित्राहरिरेवत्यन्यतमनक्षत्रसमन्वितरिक्तातिरिक्ततिथिपूर्वाह्णे पितान्यो वा पूर्वाभिमुखोपविष्टः प्रत्यङ्मुखोपविष्टाय कुमाराय मधुरं दत्वा कुमारस्य दक्षिणकर्णमभिमन्त्रयते भद्रं कर्णेभिरि" ति। अथ मन्त्रार्थः। तत्र कर्णादिसौष्ठवद्वारा भद्रश्रवणादिफलस्येह कुमारकर्णवेधप्रकरणाभिसम्बन्धेन कुमारगतत्वात्स्वतश्चेदानीं कुमारस्य वेदमन्त्रोच्चारणेऽनुपनीतत्वेनाऽनधिकारत्वात्कुमारपितृकर्मककुमारकर्णाभिमन्त्रणसम्बन्धत्वेन तत्कर्तृकमन्त्रोच्चारणे सत्यपि "कर्म्माणि फलवन्ति भवन्ती"ति श्रुतेः कर्म्ममात्रस्य फलवत्त्वात्तदिह फलस्य कुमारेण सहाभिसंबन्धवशान्मन्त्रगतक्रियापदस्थानेषु मन्त्रार्थविचारदशायां यथाक्रमं प्रथमपुरुषैकवचनत्वेन वाक्ययोजनानुसन्धेया। प्रयोगकाले यथास्थ एवाविकृतो मन्त्रः पठनीयः, "वेदस्य रूपान्तरं कर्त्तुं न शक्यतेऽपौरुषेयत्वादि"ति शिष्टानुकथनात्। अर्थविचारदशायान्तु यथाक्रमं क्रियापदादेर्विपरिणामो विधेयः। अथवार्थविचारदशायामपि यथावस्थ एव मन्त्रो व्याख्यातव्यः। केवलं भावार्थनिरूपणे कुमारगतफलाभिप्रायो ध्वन्यर्थद्वारा स्पष्टीकर्तव्यः। तथाहि—हे देवाः, इन्द्रादयः, कर्णेभिः कर्णैः भद्रं कल्याणमनुकूलं वयं शृणुयाम युष्मत्प्रसादादिति शेषः। "वयं शृणुयाम"इत्यत्र "अस्मदो द्वयोश्चे"तिपाणिन्युक्तेरेकवचनेऽपि बहुवचनं बोध्यम्। हे देवाः युष्मत्प्रसादादयं कुमारः कर्णेभिः कर्णैः भद्रं कल्याणमनुकूलं शृणोत्विति भावः। स च प्रकरणवशात्पुरुषवचनव्यत्ययेन ध्वन्यर्थरूपेण वा इह बोध्यः। एवमग्रेऽपि सर्वत्रानुसन्धेयम्। कर्णेभिरित्यत्र "बहुलं छन्दसी"ति सर्वविधीनां छन्दसि वैकल्पिकत्वात् भिस ऐस् न भवति, "बहुवचने झल्ये"दित्यतोऽङ्गस्यैत्वं तु भवत्येवेत्यवगन्तव्यम्। तथा हे यजत्राः, यजन्तं त्रायन्ते रक्षन्तीति यजत्राः यजमानपालकाः हे देवाः, इन्द्रादयः, युष्मत्प्रसादाद्वयम् अक्षभिः अक्षिभिः नेत्रैः भद्रं कल्याणमनुकूलं धनपुत्रादिकं मङ्गलकार्य्यादिकं च पश्येम। हे यजत्राः, हे देवाः, युष्मत्प्रसादादयं कुमारो भद्रं कल्याणं पश्यत्वित्यभिप्रायः। अक्षभिरित्यत्र "बहुलं छन्दसि" इति हलादौ अक्षिशब्दस्यानङादेशः। किञ्च देवहितं देवैः हितं स्थापितं देवानां हितं देवोपासनयोग्यं वा यदायुः जीवनं तद्वयं व्यशेमहि व्यश्नुवीमहि प्राप्नुयामेत्यर्थः। देवैः स्थापितमायुर्जीवनमयं कुमारः प्राप्नोत्वित्यभिप्रायः। कीदृशा वयं स्थिरैः दृढैरङ्गैः अवयवैः करचरणादिभिः तनूभिः शरीरैः पुत्रादिभिर्वा युताः, तथा तुष्टुवांसः भवतः स्तुवन्तः सन्तः, एवम्भूता वयमित्यर्थः। कुमारपक्षेऽपि प्रथमैकवचनत्वेन विपरिणामोऽनुसन्धेयः। अन्यत्तु समानं स्पष्टार्थं च॥ १॥

वृक्ष्यन्तीवेदागनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना।
योषेव शिङ्क्ते वितताऽधि धन्वञ्ज्या इयं समने पारयन्ती ॥२॥

वक्ष्यन्तीत्यस्य प्रजापतिर्ऋषिर्यजुष्टादनिर्दिष्टं छन्दो लिङ्गोक्ता देवता कुमारस्य सव्यकर्णाभिमन्त्रणे विनियोगः, "सव्यं वक्ष्यन्ती वेदिति चाथ भिन्द्यात्" इति याज्ञिकवचनात्। "कुमारस्य दक्षिणं कर्णमभिमन्त्रयते भद्रं कर्णेभिरिति सव्यं वक्ष्यन्ती वेदिति च" इह चकारादनेन मन्त्रेण कुमारस्य सव्यं कर्णमभिमन्त्रयते इत्येवमायाति न तु कर्णभेदनम्, "अथ भिन्द्यादि"ति अथकारेण पृथक्त्वनिर्देशात्। तेन भद्रं कर्णेभिरिति कुमारस्य दक्षिणकर्णाभिमन्त्रणं वक्ष्यन्ती वेदिति सव्यकर्णाभिमन्त्रणं, भेदनन्तूभयोः कर्णयोस्तूष्णीमेवेति राद्धान्तः। अथ मन्त्रार्थः। इयं ज्या धन्वन् धन्वनि धनुषि अधिवितता उपरि विस्तारिता सती शिङ्क्ते अव्यक्तं शब्दं कुरुते इत्यर्थः। (शिङ्क्ते इत्यत्र "शिजि अव्यक्ते शब्दे" अदादिरात्मनेपदी) इत्यस्माल्लटि प्रथमपुरुषैकवचने "इदितो नुम् धातोः"इति नुम्, "चोः कुः"इति कुत्वे जकारस्य ककारः, "स्तोः श्चुना श्चुः"इति चुत्वेन तस्य ङः, "टित आत्मनेपदानां टेरे" इति एत्वं चेति शब्दसाधनप्रणाली स्मर्त्तव्या। इयं ज्या धनुष्यारोपिता सती का इव शिङ्क्ते इति चेत्तत्रोच्यते। योषेव शिङ्क्ते यथा योषा कामिनी कामुकरञ्जनायाव्यक्तं वदति एवमियं ज्यापि अव्यक्तं वदतीत्यर्थः। कीदृशी इयं ज्येत्यपेक्षायामुच्यते। समने सङ्ग्रामे पारयन्ती "पार तीर कर्म्मसमाप्तौ" अदन्तः। सङ्ग्रामादुत्तारयन्ती विजयं कुर्वन्तीत्यर्थः। ननु का इयं ज्येतिचेत्तत्रोच्यते। या ज्या कर्णं श्रोत्रम् आगनीगन्ति आकृष्टा सती कर्णं प्रत्यत्यर्थमागच्छतीत्यर्थः। आगनीगन्तीत्यत्र गमेराङ्पूर्वस्य लटि श्लौ यङ्लुकि वा द्वित्वेऽभ्यासकार्ये कृते "दाधर्त्ति दर्धर्त्ति०" इत्यादि सूत्रेणाभ्यासस्य चुत्वाभावो नीगागमश्च निपातितः। कीदृशीत्युत्प्रेक्ष्यते, वक्ष्यन्तीव वक्तुमिच्छन्तीव, अन्योऽपि वक्तुमिच्छन्कर्णं प्रत्यागच्छति तद्वदियमपि विजयं वक्तुं योद्धुः कर्णं प्रत्यागच्छतीत्यर्थः। तत्रापि पुनरुत्प्रेक्ष्यते। प्रियं सखायमिष्टं मित्रम् अर्थात्प्रियमित्रभूतं बाणं परिषस्वजाना आलिङ्गन्ती मित्ररूपस्य बाणस्यालिङ्गनं कुर्वन्तीत्यर्थः। (परिषस्वजानेत्यत्र स्वजेः शानचि शपः श्लौ सति द्वित्वं परीत्युपसर्गात्परस्य सस्य षत्वं ततः स्त्रीत्वापेक्षया टाप्प्रत्ययः।) 'इत्' इति निपातोऽत्र पादपूरणार्थ एव। यद्वा-एति गच्छतीति इत् "इण् गतौ" इत्यस्माद्धातोः क्विपि तुकि 'इत्' इति पदं सिद्ध्यति। तस्य अध्याहृतभवतिक्रियाभिसम्बन्धात् अपगता भवतीत्यर्थः। इयं च ज्या पूर्वोक्तप्रकारेण यथा योद्धुः कर्णं प्रत्यागनीगन्ति श्रोत्रं प्रत्यागच्छति पश्चात्परावर्तते च, तथास्य कुमारस्यापि कर्णं प्रत्यागत्यकुण्डलादिधारणसमर्थं छिद्रं कृत्वापगच्छत्वित्याशंसावाक्यार्थः। एतन्मन्त्रेण कुमारस्य कर्णाभिमन्त्रणे कृते सति अयङ्कुमारोऽपि योद्धा स्यादित्यभिप्रेत्यानेन मन्त्रेण कुमारस्य सव्यं कर्णमभिमन्त्रयते इत्याशयः॥ २ ॥

॥ इति कर्णवेधमन्त्रव्याख्या ॥

---

## ॥ अथ चूडाकरणमन्त्रव्याख्या ॥

### उष्णेन वायऽउदकेनेह्यदिते केशान्व प॥ १ ॥

उष्णेनेति मन्त्रस्य परमेष्ठी ऋषिः प्रतिष्ठा छन्दो वायुर्देवता शीतोदके उष्णोदकासिञ्चने विनियोगः, "शीतास्वप्सूष्णा आसिञ्चति उष्णेन वाय०–" इति पारस्करवचनात् ) अथ मन्त्रार्थः । "इमं देव यज्ञꣳस्वाहा वातेधाः स्वाहे"ति श्रुतेर्वायोर्यज्ञाधारभूतत्वावगते"र्यज्ञाद्भवति पर्जन्यः पर्ज्जन्यादन्नसम्भवः"इत्यादिभगवद्वाक्याद्यज्ञस्य जलोपादानकारणत्वस्मृतेराहुतिपरिणामाभिप्रायेणेह जलोपादानकारणभूतयज्ञस्याधाररूपं वायुं प्रत्युच्यते । यद्वा "एष च अपाꣳ रसो योऽयं पवते" इति श्रुतेरपां रसो वायुरित्यवसीयते । अतोऽत्र वायुसम्बोधनेन कार्ये कारणोपचाराज्जलमेव सम्बोधितं भवति । तस्मादिह वायुं प्रत्युच्यते । हे वायो, यज्ञाधारभूत, यद्वा हे वायो, अपां रसभूत, हे अदिते, दितिः दैन्यमवखण्डनं वा हिंसेति यावत् , नास्ति दितिर्यस्य स अदितिस्तत्सम्बुद्धौ हे अदिते, अदीन, अथवा हे अदिते, अनवखण्डित, त्वम् उष्णेन उदकेन सह एहि शीतास्वप्सु सङ्गतिं कुरु, "अपाꣳ रसो योऽयं पवते" इति श्रुतेरपां रसस्य वायोस्तव सङ्गत्या सुतरामपामपि सङ्गतिर्भविष्यत्येवेत्यभिप्रायेण इह वायोः सङ्गतिव्याजेन जलसङ्गतिरेवेष्यते। तस्मादयं वाक्यार्थः । हे अपां रसस्य वायोरपि रसाख्य, जलान्तर्गतसारभूत, पदार्थ, त्वमुष्णेन उदकेन सह एहि एतेन सह शीतास्वप्सु सङ्गतिं कुर्वित्यर्थः। सङ्गत्य च केशान्वप छिन्धि, केशच्छेदनार्थमुष्णोदकशीतोदकयोः सङ्गतिर्भवत्वित्याशंसावाक्यार्थः । 'वायऽउदकेन' इत्यत्र अवादेशे वलोपो बोध्यः ॥ १ ॥

### सवित्रा प्रसूता दैव्याऽआपऽउन्दन्तु ते तनूं दीर्घायुत्वाय वर्च्चसे ॥२॥

सवित्रा प्रसूता इत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दो लिङ्गोक्ता देवता चूडाकरणे कुमारस्य दक्षिणगोदानक्लेदने विनियोगः, "तत अप आदाय दक्षिणं गोदानमुन्दति सवित्रा प्रसूता०"–इति पारस्करवचनात् । हे कुमार, सवित्रा सुवति स्वस्वव्यापारे जगत्प्रेरयतीति सविता तेन सवित्रा जगत्प्रेरकेण भगवता आदित्येन प्रसूताः जनिताः उत्पादिता इति यावत्, "आदित्याज्जायते वृष्टिः" इति स्मृतेः। एवम्भूताः दैव्याः दिवि आकाशे भवाः उत्पन्नाः दैव्याः आपः जलानि ते तव तनूं देहावयवम् उन्दन्तु क्लेदयन्तु "उन्दी क्लेदने" ( रु० प० ) तव शिरःस्थं दक्षिणं गोदानमार्द्रीकुर्वन्त्वित्यभिप्रायः । किमर्थमिति चेत्तत्रोच्यते। हे कुमार, तव दीर्घायुत्वाय ( सकारलोपश्छान्दसः ) दीर्घायुष्ट्वाय चिरजीवित्वाय वर्चसे तेजसे च । यथा त्वं दीर्घायुः स्याः यथा च त्वं तेजस्वी स्याः, तथा तव दक्षिणं गोदानं केशपाशमाप आर्द्रीकुर्वन्त्वित्याशयः ॥ २ ॥

### ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः ॥ ३ ॥

'ओषधे त्रायस्व' इत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दो लिङ्गोक्ता देवता कुशतरुणान्तर्धाने विनियोगः, "कुशतरुणान्वन्तर्दधाति ओषधे०–"इति पारस्करवचनात् । अथ मन्त्रार्थः ।

हे ओषधे, दर्भतरुण, एनं कुमारं त्रायस्व त्वं रक्ष क्षुरादिति शेषः। क्षुरो यथा केशानेव छिन्द्यान्न मांसं, तथा कृत्वास्य कुमारस्य त्वया संरक्षणं कर्त्तव्यमिति भावः। एवमोषधिं प्रत्युक्त्वा क्षुरं प्रत्युच्यते। स्वधितिरिति क्षुरस्यापरं नाम तत्सम्बुद्धौ हे स्वधिते, हे क्षुर, एनं कुमारं मा हिंसीः मा वधीः मा विनाशयेत्यर्थः। हिंसनञ्चात्र कुमारस्यान्यथाछेदनं तन्मा भवत्वित्येतदर्थं क्षुरस्य सविधे एतदभ्यर्थनमिति भावः। कुशैः कृतरक्षमेनं कुमारं त्वत्प्रभावात्कोऽपि मा हिनस्त्विति वाक्यार्थः॥ ३॥

**शिवो नामाऽसि स्वधितिस्ते पिता नमस्तेऽअस्तु मा मा हिंᳫसीः॥४॥**

"शिवो नामेति यजुः" अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुष्ट्वादनिर्दिष्टं छन्दः क्षुरो देवता लोहक्षुरादाने विनियोगः, "शिवो नामेति लोहक्षुरमादाये"ति पारस्करोक्तेः। षडङ्गशतरुद्रियप्रकरणे यद्यपि यजुरिदं व्याख्यातम्, तथापि विनियोगभेदात्पुनरिह व्याख्यायते। तद्यथा—अथ मन्त्रार्थः। हे क्षुर, यद्यपि स्वधितिः वज्रस्ते तव पिता जनकोऽस्तीतिशेषः। वज्रात्तवोत्पत्तिरित्यर्थः। तथापि त्वं शिवो नामासि शिवः कल्याणं तन्नामासीत्यर्थः। वज्रोत्पन्नत्वात्तव काठिन्यं क्रूरत्वं च युक्तं; किन्तु त्वयि तु तल्लेशमात्रमपि नास्ति, अतः शिव इति तव नामेत्यभिप्रायः। एवम्भूताय ते तुभ्यं नमोऽस्तु नमस्कारोऽस्तु। स त्वं मदीयनमस्कारेण सन्तुष्टो भूत्वा मा मां मा हिंसीः मा वधीः मा विनाशयेत्यर्थः। अत्र मामित्यस्मच्छब्दयोगात्कर्तृगोचराऽऽशंसा यद्यपि प्रतीयते; तथापि कुमारचित्तगोचरैव बोद्धव्या, "यां वै काञ्चन यज्ञे आशिषमृत्विज आशासते यजमानस्यैव से"तिश्रुतेः। पितुराचार्यत्वे तु "आत्मा वै जायते पुत्रः"इतिश्रुतेः "पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम्।" इत्यादिस्मृतेश्च कुमारे स्वात्माभिप्रायेणास्मच्छब्दयोगादपि कुमारार्थतैवास्या आशंसायाः सुस्पष्टेत्यवगन्तव्या। तस्मात् हे क्षुर, एनं कुमारं मा हिंसीः मा नाशय अन्यथाच्छेदनेन मांसादिसँल्लग्नतया मा व्यथयेत्याशंसावाक्यार्थः॥ ४॥

**निवर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय॥५॥**

कुमारदैवतं यजुरिदम्। छन्दस्त्वनिर्दिष्टमेव। विनियोगस्तु यजुषोऽस्य पारस्करेण पृथगेवोपदिष्टः "निवर्त्तयामीति प्रवपति"इति। अतोऽस्य विनियोगः क्षुरसँल्लग्ने द्रष्टव्यः। पूर्वं षडङ्गशतरुद्रियप्रकरणे इदमपि व्याख्यातमेव, तथापीह विनियोगभेदात्पुनर्व्याख्यायते यजुरिदम्। तद्यथा—अहं क्षुरं निवर्त्तयामि निवर्त्तनं यद्यपि प्रवपनमेव, सूत्रकारस्यापि तदेवाभिप्रेतमवसीयते "निवर्त्तयामीति प्रवपती"ति सूत्रारम्भसामर्थ्यात्, तथापि "यद्यपि शुद्धं लोकविरुद्धं नाचरणीयं नादरणीयमि"ति शिष्टोक्तेरिह शिष्टाचारविरोधात् "अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्न तु।" इति याज्ञवल्क्यवचनाच्च द्विजातेर्वपनासम्भवादिह सूत्रकारस्याऽऽदेशपरिरक्षणार्थं निपूर्वः प्रपूर्वश्च वर्त्ततिः संयोगेऽपीति बहूनां परामर्शः। सँल्लग्ने वर्त्तते इति कर्कस्य मतम्। तेन क्षुरस्य कर्म्मत्वं प्रकरणादवगन्तव्यम्। ततोऽयमर्थः। अहमाचार्य्यः निवर्त्तयामि क्षुरं सँय्योजयामि केशमूलेष्विति वाक्यशेषः। किमर्थं क्षुरस्य

योजनमित्यपेक्षायामुच्यते । आयुषे जीवनाय तथा अन्नाद्याय अन्नं च तत् अद्यं चेति अन्नाद्यं तस्मै अन्नाद्याय अदनीयान्नभक्षणायेत्यर्थः । तथा प्रजननाय प्रजननं सन्तानोत्पत्ति-शक्तिः पुंस्त्वमिति यावत् तस्मै प्रजननाय पुत्राद्युत्पत्तिसामर्थ्यसम्पादनायेतिभावः । तथा रायस्पोषाय राः धनं तस्य रायः धनस्य पोषाय पुष्ट्यै गोभूहिरण्यादेः पुष्ट्यर्थमित्यर्थः । तथा सुप्रजास्त्वाय शोभनसन्ततिमत्त्वायेत्यर्थः । तथा सुवीर्य्याय शोभनं च तत् वीर्य्यं च सुवीर्यं तस्मै सुवीर्य्याय उत्कृष्टवीर्य्यवत्त्वाय चेत्यर्थः । अनेन क्षुरसँल्लग्नकर्म्मणा कुमारस्य एतान्यन्नादीनि भवन्त्वित्याशंसावाक्यार्थः । रायस्पोषायेत्यत्र "तत्पुरुषे कृति बहुलमि"ति षष्ठ्या अलुकि सति "षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु"इति विसर्गस्य सकारो बोध्यः । तथा सुप्रजास्त्वायेत्यत्र सकारश्छान्दसो ज्ञेयः, "वर्णागमो वर्णविपर्य्ययश्च द्वौ चापरौ वर्णविकार नाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ।।" इति शिष्टानां वचःस्मरणात् ।। ५ ।।

येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ।
तेन ब्रह्माणो वपतेदमस्यायुष्यं जरदष्टिर्यथाऽसत् ।। ६ ।।

येनावपदित्यस्य लम्बायनऋषिः पङ्क्तिश्छन्दः सविता देवता कुशतरुणप्रच्छेदने विनियोगः "येनावपत्सविता०–यथाऽसदिति सकेशानि कुशतरुणानि प्रच्छिद्यानडुहगोमयपिण्डे निधाय" इति पारस्करवचनात्। अथ मन्त्रार्थः। हे कुमार! विद्वान् विपश्चित् वेदवित्सविता राज्ञः "राजा वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेन" इति श्रुतेः राजसूययाजिनः सोमस्य वरुणस्य च येन क्षुरेण अवपत् मुण्डितवान् केशानितिशेषः । तेन क्षुरेण ब्रह्माणः ब्रह्मा प्रजापतिः, ब्रह्म वेदो वा वपत वपते मुण्डयति तव केशानिति शेषः । ब्रह्माण इत्यत्र प्रथमैकवचनस्थाने प्रथमाबहुवचनं "सुपां सुपो भवन्ती"ति वचनात्। वपत इत्यत्र च छन्दसि सर्वविधीनां वैकल्पिकत्वात् "टित आत्मनेपदानां टेरे" इत्येत्वं न "बहुलं छन्दसी"ति पाणिन्युक्तेः । इदानीं तत्त्वदीयकेशवपनं क्रियाविशेषणत्वेन विशिष्यते । इदं त्वदीयकेशवपनमर्थादिदं चूडाकरणं तव आयुष्यं यथा असत् भूयात् तथा ब्रह्मा तव केशान् वपते इत्यर्थः । किम्भूतमायुष्यं तदुच्यते । तद्यथा–जरदष्टिः जरत् वार्द्धक्यमश्नुते व्याप्नोतीति जरदष्टिः एतच्च अजहल्लिङ्गमेव। इदं चूडाकरणं तव वार्धक्यजीवनपर्य्यन्तं हितकरं यथा स्यात्तथा तेन क्षुरेण तव केशान् ब्रह्मा वपते तव चूडाकरणं करोतीति भावः । ब्रह्मणो हि सृष्टिकर्तृत्वात्संस्कारकर्त्तृत्वञ्च । एतदभिप्रायेणैव मनुनाप्युक्तम् , "आचार्यो ब्रह्मणो मूर्त्तिः पिता मूर्त्तिः प्रजापतेः ।" इत्यादि ।। ६ ।।

त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् ।
यद्देवेषु त्र्यायुषं तन्नोऽअस्तु त्र्यायुषम् ।। ७ ।।

त्र्यायुषमित्यस्योत्तरनारायण ऋषिरुष्णिक्छन्द आशीर्देवता केशच्छेदने विनियोगः, "अथ पश्चात्त्र्यायुषमि"ति पारस्करवचनात् । षडङ्गशतरुद्रियप्रकरणे व्याख्यातोऽप्ययं मन्त्र

इह विनियोगभेदात्पुनर्व्याख्यायते। तथाहि—हे कुमार, जमदग्नेः जमदग्निनामकस्य ऋषेः यत् त्र्यायुषं त्रयाणां बाल्ययौवनस्थाविराणामायुषां समाहारस्त्र्यायुषं तथा कश्यपस्यैतन्नामकस्य प्रजापतेः सम्बन्धि यत् त्र्यायुषं तथा देवेषु इन्द्रादिषु च यत् त्र्यायुषमस्तीतिशेषः। तत्सर्वमपि त्र्यायुषं नः (ते इत्यस्य स्थाने न इति छान्दसत्वाद्व्यत्ययेन बोध्यम्।) ते तवास्तु भवत्वित्यर्थः। जमदग्न्यादीनां बाल्यादिषु यादृशं चरितमासीत्तादृशं चरितमनेन चूडाकरणकर्म्मणा तव भूयादित्याशंसावाक्यार्थः॥ ७॥

येन भूरिश्चरा दिवं ज्योक् च पश्चादधिसूर्य्यम्।
तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये॥८॥

येन भूरिश्चरेत्यस्य वामदेव ऋषिर्यजुष्टादनिर्दिष्टं छन्दः क्षुरो देवता केशच्छेदने विनियोगः, "अथोत्तरतो येन भूरि०–" इति पारस्करोक्तेः। भूरिः भवतेरौणादिको रिक्प्रत्ययः कित्वाद्गुणाभावः, भवति बहुवारमिति भूरिः चन्द्रः बहुत्वं च प्रतितिथ्यभिप्रायेण। स हि अमायां क्षीणः सन् शुक्लपक्षे प्रतितिथि एकैकया कलया वृद्धिमुपगतः सन् बहुतरो भवति, एतदभिप्रायेणैवेह भूरिशब्देन चन्द्रमा गृह्यते। तथाहि—हे कुमार, भूरिश्चन्द्रमा चरा "सुपां सुलुगि"ति विभक्तेराकारः, चरतीति चरः नित्यं भ्रमणशीलोऽपि सन् येन क्षुरेण साधनभूतेन दिवं ज्योक् च (ज्योक् इत्यव्ययमिह कालभूयस्त्वे चकारस्तु पादपूरणे) चिरकालं हि दिवं प्राप्तवान् चिरकालपर्य्यन्तं स्वर्गे सङ्गतोऽभूदिति भावः। एतत्क्षुरसाधनद्वारा कृतचूडत्वादेव चन्द्रस्य ग्रहत्वेन चिरं स्वर्गावस्थानमित्याशयः। पश्चात्स एव चन्द्रमा अधिसूर्य्यं ज्योक् सूर्य्येऽपि चिरं सङ्गतोऽभवत्। यथा यथा चन्द्रमा स्वकलयाऽपक्षीयते तथा तथा हि सूर्य्ये सुषुम्णारश्मिरूपेण चिरमवतिष्ठते। एवमनादिकालतः सूर्य्ये सङ्गतो भूत्वा शुक्लपक्षे प्रतितिथि एकैकया कलया वृद्धिमुपगतः सन् दिवि द्योतते। अत उक्तं श्रुत्या "सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्यौषधयोऽप्सरसो मुदोनाम" इति। एतत्सर्वमेतत्क्षुरसाधनद्वारा कृतचूडत्वप्रभावादेवेत्यभिप्रायः। अतो हे कुमार, ते तवापि तेन क्षुरेण ब्रह्मवपनानन्तरमहमाचार्य्यो वपामि ब्रह्मणानुज्ञात एवाहं त्वां क्षौरयामीतिभावः। किमर्थं हीदं क्षौरमिति चेत्तत्रोच्यते। ब्रह्मणा "सुपां सुपो भवन्ती"ति वचनाच्चतुर्थ्येकवचनस्थाने तृतीयैकवचनं बोध्यम्।) ब्रह्मणे वेदाय वेदलाभार्थमित्यर्थः। तथा जीवातवे ("तुमर्थे सेसेनसे०–"इत्यादिना तुमर्थे तवेङ्प्रत्ययो बोध्यः।) जीवितुं जीवनौषधार्थं जीवनोपायनार्थमितिभावः। तथा जीवनाय चिरकालपर्य्यन्तं जीवधारणार्थमित्यर्थः। तथा सुश्लोक्याय श्लोक्यं यशः सु शोभनं श्लोक्यं सुश्लोक्यं तस्मै सुश्लोक्याय तव यशोलाभार्थमित्यर्थः। तथा स्वस्तये क्षेमाय कल्याणार्थं च तव केशान् आवपामि त्वां क्षौरयामीत्यर्थः। एतत्सर्वं तव स्यादेतदर्थं तव चूडाकरणं करोमीत्यभिप्रायः॥८॥

यत्क्षुरेण मज्जयता सुपेशसा वप्त्वा वा वपति।
केशाँश्छिन्धि शिरो मास्यायुः प्रमोषीः॥ ९॥

यत्क्षुरेण मज्जयतेत्यस्य वामदेव ऋषिर्यजुष्टादनिर्दिष्टं छन्दो लिङ्गोक्ता देवता क्षुरभा-

मणे विनियोगः, "त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति संमुखं केशान्ते, यत्क्षुरेण मज्जयता०" इति पारस्करोक्तेः । "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । अथ मन्त्रार्थः । हे नापित, यत् यस्मात् सुपेशसा ("पेश इति रूपनामे"ति निघण्टावभिहितत्वादिह पेशस् शब्दो रूपवाची ।) सु शोभनं पेशः रूपं यस्य तेन सुपेशसा शोभनरूपेण शिरो मस्तकं मज्जयता निष्कल्मषं कुर्वता शोभनायुधेन क्षुरेण कुमारस्य शिरःस्थान् केशान् वप्त्वा छित्त्वा क्षौरं समाप्य वा पवति (वाशब्दोऽत्र पुनरर्थे तथा वपतिरत्र भ्रमणार्थोऽन्तर्भावितण्यर्थकश्च ।) वा वपति पुनः क्षुरं वारत्रयं शिरस उपरि भ्रामयतीति नापितानां चिरकालतो नियमो दृश्यते श्रूयते च, अतोऽहमपि त्रिः क्षुरं भ्रामयित्वा तुभ्यं नापिताय क्षुरं समर्प्पयामीति वाक्यशेषः । अतस्त्वां प्रत्येवं ब्रवीमि, हे नापित ! त्वमनेन क्षुरेण अस्य कुमारस्य केशान् छिन्धि छेदय मा शिरः, अस्य शिरश्छेदनं मा कुरु, शिरश्छेदनन्तु अन्यथाकेशच्छेदनेन शिरःस्थितमांसे क्षुरसँल्लग्नमेवाभिप्रेतं तद्यथा न स्यात्तथास्य क्षौरं सम्पादयेत्याशयः । तथा सत्येव व्रणाद्यभावत्वेन व्यथाराहित्यादस्यानवखण्डितमायुरपि स्यादित्यभिप्रायेण पुनरुच्यते यदस्य कुमारस्य आयुः मा प्रमोषीः मा चोरयेति । क्षुरेणायुःखण्डनं मा कुर्वित्यर्थः । प्रमोषीरिति "मुषस्तेये" इत्यस्य लुङ्मध्यमपुरुषैकवचने रूपम् । मज्जयतेति "टुमस्जो शुद्धौ" इत्यस्य शतरि तृतीयैकवचने रूपमिति च बोद्धव्यम् ॥ ९ ॥

अक्षुण्वन् परिवप ॥ १० ॥

अक्षुण्वन्नित्यस्य यजुषो वामदेवऋषिर्यजुष्टादनिर्दिष्टं छन्दो लिङ्गोक्ता देवता वपनार्थंप्रैषे क्षुरप्रदाने च विनियोगः, "नापिताय क्षुरं प्रयच्छति, अक्षुण्वन्परिवपेति" इति पारस्करवचनात् । हे नापित त्वमिमं क्षुरं गृहाणेति वाक्यशेषः । किञ्च हे नापित, त्वमनेन क्षुरेण अक्षुण्वन् कुमारमहिंसन् परिवप परि सर्वतो भावेन छेदय कुमारस्य केशानिति-शेषः । ॥ १० ॥

॥ इति चूडाकरणमन्त्रव्याख्या ॥

## ॥ अथोपनयनमन्त्रव्याख्या ॥

येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतम् ।
तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्च्चसे ॥ १ ॥

येनेन्द्रायेत्यस्याङ्गिरा ऋषिर्बृहती छन्दो बृहस्पतिर्देवता वासःपरिधापने विनियोगः, "अथैनं वासः परिधापयति येनेन्द्राय०" इति पारस्करोक्तेः । बृहस्पतिर्देवानामाचार्य्यः येन विधिना इन्द्राय अमृतमहतमर्थादमौत्रधौतं सकृत्प्रक्षालितं वासः पर्यदधात् परिधापितवानित्यर्थः । हे कुमार, तेन विधिना अमृतमहतमर्थादमौत्रधौतं सकृत्प्रक्षालितमिदं वासः त्वा त्वां परिदधामि परिधापयामीत्यर्थः । किमर्थमिति चेत्तत्र तवेत्यध्याहृत्योच्यते । तव आयुषे जीवनाय तथा दीर्घायुत्वाय (सकारलोपश्छान्दसः) दीर्घायुष्ट्वाय चिरजीवित्वाय बलाय सामर्थ्याय वर्च्चसे च त्वामिदं वासः परिधापयामीत्यर्थः । पर्यदधात्परिदधामीत्येतद्द्वयमपि पदमन्तर्भूतणिजर्थं ज्ञेयम् ॥ १ ॥

**इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती मऽआगात्।**
**प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयम् ॥ २ ॥**

इयं दुरुक्तमित्यस्य वामदेव ऋषिस्त्रिष्टुप्छन्दो मेखला देवता तद्बन्धने विनियोगः, "मेखलां बध्नीते, इयं दुरुक्तम्०" इति पारस्करोक्तेः। इयं मेखला आगात् आगतवतीत्यर्थः। किं कुर्वाणाऽऽगादिति चेत्तत्रोच्यते। मे मम दुरुक्तम् अग्राप्ययमनुपवीतोति दुर्वचनं परिबाधमाना सर्वतो भावेन खण्डयन्तीत्यर्थः। अत एव देवी स्तवादिविषया सञ्जातेयं मेखलेति भावः। तथा इयं मेखला किम्भूता सती आगादित्यपेक्षायामुच्यते। वर्णं द्विजातिं पवित्रमुत्कृष्टं पुनती धावयन्ती सती आगादित्यर्थः। न केवलं वर्णं पुनती आगात्किन्तर्हि प्राणापानाभ्यां शरीरसञ्चारिभ्यां प्राणापानवायुभ्यां बलं सामर्थ्यमादधाना तद्वायुद्वयद्वारा मह्यं बलमर्पयन्ती सती इयं मेखलाऽऽगादित्यर्थः। सेयं मेखला आगता सती सुभगा अकर्कशा सुखस्पर्शा भूत्वा स्वसा भगिनीवन्नित्यमभ्युदयिनी भवत्विति वाक्यशेषः। भगिनी यथा भ्रातुर्नित्यमभ्युदयमाकाङ्क्षति तथैव इयं मेखलापि मम नित्यमभ्युदयमाकाङ्क्षत्वित्याशंसावाक्यार्थः ॥ २ ॥

**यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्।**
**आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ३ ॥**

यज्ञोपवीतमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता अत्र यज्ञोपवीतपरिधापने विनियोगः, मन्त्रलिङ्गात्। अत्र यद्यपि पारस्करेण सूत्रं न सूत्रितं तथापि "अथैनं यज्ञोपवीतं परिधापयति यज्ञोपवीतमिति" इत्यूह्यं, प्रतिमुञ्चेति मन्त्रलिङ्गात्। उपनयनातिरिक्तस्थले तु यज्ञोपवीतमित्यस्य यज्ञोपवीतधारणे खलु विनियोगो बोध्यः, पुरुषव्यत्ययेन मन्त्रलिङ्गात्। हे माणवक, यज्ञोपवीतं प्रतिमुञ्च धारयेत्यर्थः। प्रतिपूर्वो मुञ्चतिर्धारणे वर्त्तते। किम्भूतं यज्ञोपवीतम् आयुष्यम् आयुषे हितम् आयुष्यम् आयुर्वृद्धिकरमित्यर्थः। तथा अग्र्यम् अग्रे भवम् अग्र्यं सृष्ट्यादौ ब्रह्मणा सहैव प्रथमोत्पन्नमिति यावत्, प्रथमोत्पन्नत्वात् श्रेष्ठमित्यर्थः। तथा शुभ्रं श्वेतं निर्म्मलं परमं पवित्रम् अतिशयेन पवित्रमित्यर्थः। अग्र्यं सृष्ट्यादौ प्रथमोत्पन्नमित्युक्तं तत्र सन्दिह्यते कथमुत्पन्नमित्यपेक्षायामुच्यते। पुरस्तात्पूर्वं सृष्ट्यादौ प्रजापतेर्ब्रह्मणः सहजं सह जातं प्रजापतिना सह एकसमये जातमित्यर्थः। तदिदं यज्ञोपवीतं त्वं प्रतिमुञ्च धारय। एतद्यज्ञोपवीतधारणेन तव बलं सामर्थ्यं तेजः अध्यात्मशक्तिश्चास्तु। तदुभयं त्वयि भवत्विति भावः ॥ ३ ॥

**मित्रस्य चक्षुर्द्धरुणं बलीयस्तेजो यशस्वी स्थविरꣳ समिद्धम्।**
**अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम् ॥ ४ ॥**

मित्रस्येति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवताऽजिनोत्तरीयपरिधाने विनियोगः, "अथाजिनं प्रयच्छति मित्रस्य०—वाज्यजिनं दधेऽहमिति"- इति गृह्यसूत्रकार-

वचनात्। माणवक आचार्य्यप्रदत्तमजिनमुत्तरीयं तूष्णीं प्रतिगृह्यानेन मन्त्रेण स्वयं परिधत्ते। परिदधे इति मन्त्रलिङ्गात्परिधान एव मन्त्रो न ग्रहणे इतिभावः। अथ मन्त्रार्थः। तत्र "अतिरिक्तमि"ति कारिकया हीनपदाध्याहारो बोध्यः। तथाहि—आचार्य्यं प्रति माणवको ब्रूते। हे गुरो, मित्रस्य सूर्य्यस्य चक्षुः चक्षुःशब्देन तन्मण्डलमेवोपलक्ष्यते, "तच्चक्षुर्देवहितमि"त्यन्यत्रापि श्रुत्यभिधानात्, तथापि लुप्तोपमानमेतत्, चक्षुरिव प्रकाशमानमिति शेषः। आदित्यस्य मण्डलमिव अतिकान्तिशालीत्यर्थः। तथा धरुणं ब्रह्मचर्य्यस्य धारकं बलीयः अतिबलशालि तेजः तेजस्वि (अत्र छान्दसत्वाद्विनिपो लुग्द्रष्टव्यः।) यशस्वी अजिनशब्दस्य क्लीबत्वात्तदीयविशेषणेऽपि सर्वत्र क्लीबत्वमेव युक्तं तथापि पुंस्त्वमिह छान्दसम्। यशस्वि यज्ञियत्वेनेति प्रख्यातमित्यर्थः। पुरा यज्ञो देवेषु रुष्टः कृष्णमृगो भूत्वाऽगमत्तदा देवा ज्ञात्वा तदीयां त्वचमुच्छिद्य जगृहुस्तस्मात्तच्चर्म्मास्तरणं यज्ञे भवति, एतदभिप्रायेणैवोपनयनेऽपि ब्रह्मचारिणः कृष्णाजिनमेवोत्तरीयं च भवतीति श्रुतिकथानुसन्धेया। अजिनस्य एतदेव यशस्वित्वकारणमिति भावः। अत एव स्थविरं चिरन्तनं "यज्ञो वै विष्णुरि"ति श्रुतेस्तस्य स्थविरत्वं "यज्ञो ह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचार" इत्यादि श्रुत्यन्तराच्च चिरकालिकत्वमस्य सुस्पष्टमिति भावः। अतो यज्ञियत्वेनैव समिद्धं सम्यग् दीप्तम् तथा अनाहनस्यमन्यैरसुराभिर्हन्तुमयोग्यमहिंसितमिति भावः। तथा धरिष्णु ("जॄ वयोहानौ" इत्यस्मादिष्णुच् प्रत्ययः।) जरणशीलं वयोहानिमत् वयोहानित्वं तु स्वावस्थातः प्रच्यावनं चर्म्मण आर्द्रत्वमेव स्वीयं वयस्तद्धानिस्तु चर्म्मणः शुष्कभावत्वं तेन शुष्कमितिभावः। तथा वाजि वाजो वेगोऽन्नं वा स अस्यास्तीति वाजि वेगवदन्नवद्वा "स कृष्णो भूत्वा चचारे"ति श्रुतेर्मृगत्वेन वेगवत्त्वं युक्तमेव, अन्नवत्त्वं तु अन्नस्य पर्ज्जन्याधीनत्वात्पर्ज्जन्यस्य तु यज्ञाधीनत्वाद्यज्ञस्य च कृष्णमृगरूपत्वात्तदीयचर्म्मणश्चापि युक्तमेवेत्याशयः। एवम्भूतमजिनं मृगसम्बन्धिचर्म्म तदेव वसनमुत्तरीयस्थानीयत्वाच्चर्म्मणो वसनत्वारोपेण वसनं वस्त्रं तद्रूपमुत्तरीयं ब्रह्मचर्य्यपालनद्वारा वासनिमित्तं वा सत् वसनं वासनिमित्तमिदमजिनं मृगचर्म्म भवतानुज्ञप्तोऽहं माणवकः परिदधे धारयामीत्यर्थः। अत्र परीत्युपसर्गस्य दधे इति क्रियापदेन सह सम्बन्धो व्यवहितः "छन्दसि परेऽपि" "व्यवहिताश्चे"ति पाणिनिवचनादित्यवगन्तव्यम्॥४॥

योमे दण्डः पराऽपतद्वैहायसोऽधि भूम्याम्॥
तमहं पुनरादद आयुषे ब्रह्मणे ब्रह्मवर्चसाय॥५॥

यो मे दण्ड इत्यस्य यजुषः प्रजापतिर्ऋषिर्यजुश्चादनिर्दिष्टं छन्दो दण्डो देवता दण्डग्रहणे विनियोगः, "अथ दण्डं प्रयच्छति तं प्रतिगृह्णाति यो मे दण्डः०"—इति पारस्करवचनात्। आचार्य्यं प्रति माणवको वक्ति। हे गुरो, मे मम यो दण्डः भूम्याम् अधि भूमेरुपरि पराऽपतत् पतितः तं दण्डं भवतानुज्ञप्तोऽहं माणवकः पुनराददे पुनर्गृह्णामीत्यर्थः। एतावता मन्त्रवाक्येन इदमत्र ध्वन्यते, यदहं प्राक्तनजन्मनि द्विजातिरेवासं, किन्तु मरणसमये यो मम दण्डः परापतत्, तमहमस्मिन् जन्मनि पुनर्गृह्णामीति। अमुमेवार्थं वक्तुं विशेषणत्वेन विशिनष्टि। किम्भूतो दण्ड इत्यपेक्षायामुच्यते। वैहायसः विहायसि आकाशे भवः वैहायसः सोमांशुत्वेनामृतकलया चन्द्रमण्डलस्थ इति भावः। "गायत्र्या पक्षिरूपं विधाय यदा दिवः सोम-

वल्ल्याहृता तदा तत्पत्रं भूमावुप्तं ततः पलाशोऽभवदि"ति श्रुत्या पलाशस्य प्राशस्त्यब्रह्मत्वावगतेः "पालाशो वै ब्राह्मणस्य दण्डः" इति श्रुत्यन्तराच्च दण्डस्य वैहायसत्वसद्भावात्सूत्रकृता पारस्करेणापि तथैव सूत्रितं "पालाशो ब्राह्मणस्य दण्डः" इति । अस्तु, प्रकृतमनुसरामः । तमहं दण्डं किमर्थं गृह्णामीत्यपेक्षायामुच्यते, आयुषे आयुरर्थं जीवनार्थमिति भावः । तथा ब्रह्मणे वेदाय वेदप्राप्त्यर्थमिति यावत् । उपनयनस्य वेदाध्ययनार्थत्वादित्यभिप्रायः । तथा ब्रह्मवर्चसाय वेदाध्ययनजन्यं तेजो ब्रह्मवर्चसं तत्तेजःप्राप्त्यर्थमिति भावः । एतदर्थमहं दण्डं पुनराददे इति वाक्यार्थः ॥ ५ ॥

"आपो हि ष्ठे"त्यादि ऋक्त्रयं "तच्चक्षुरि"ति च सन्ध्याप्रकरणे व्याख्यातं तत्र द्रष्टव्यम् ॥

**मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं तेऽअस्तु ।**

**मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् ॥ ६ ॥**

"मम व्रते" इत्यस्य परमेष्ठी ऋषिस्त्रिष्टुप्छन्दो बृहस्पतिर्देवताऽऽचार्य्यकर्तृकमाणवकहृदयस्पर्शने विनियोगः, "अथास्य दक्षिणांऽसमधिहृदयमालभते मम व्रते०"-इति पारस्करवचनात् । एतदनुरूप एव मन्त्रो विवाहप्रकरणे व्याख्यातस्तदर्थेनैवास्यापि गतार्थता बोद्धव्या । केवलं तुरीयपादमात्रे भेदः, तत्र "प्रजापतिष्ट्वा नियुनक्तु मह्यम्" इति, अत्र तु "बृहस्पतिष्ट्वा नियुनक्तु मह्यम्"इत्येतावन्मात्रभेदः । एतन्मन्त्रांशस्यापि स्पष्टोऽर्थ एव ॥ ६ ॥

**इन्द्रस्य ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यस्तव श्री अमुकशर्म्मन् ॥ ७ ॥**

इन्द्रस्येति यजुषः प्रजापतिर्ऋषिर्यजुष्ट्वादनिर्दिष्टं छन्दो लिङ्गोक्ता देवता आचार्य्यकर्तृकपाठे विनियोगः, "अथैनमाह कस्य ब्रह्मचार्यसीति, भवत इत्युच्यमान इन्द्रस्य०"-इति पारस्करोक्तेः । "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । तथाहि—आचार्य्यो माणवकं प्रति ब्रूते । हे माणवक, श्री अमुकशर्म्मन् , एवं देवदत्तादिनामनिर्देशेन सम्बोधनम् । त्वम् इन्द्रस्य परमेश्वरस्य ब्रह्मचारी असि, अतस्तवाग्निराचार्य्योऽस्तीति शेषः । "तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः" इति श्रुतेः "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥" इत्यर्ज्जुनं प्रति भगवदुक्तेश्च अग्निपरमेश्वरयोरभेदावगतेः अग्रे प्रथमं नयतीति अग्निः अग्रगण्यः परमेश्वर एव तवाचार्य इति भावः, "यथाहं गुरुरग्निर्द्विजातीनाम्" इति श्रुतेः "गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः" इत्यादिस्मृतेश्च । एवं सत्यपि इदानीं तु तवोपनयनकर्तृत्वेनाहं यज्ञदत्तादिः आचार्य्योऽस्मीति शेषः । वस्तुतस्तु तवाचार्य्यो ब्रह्माख्योऽग्निरग्रगण्यः परमेश्वर एवेति वाक्यार्थः । एतदभिप्रायेणैव इदानीन्तनाचार्य्यमपि प्रकृत्य मनुनाप्युक्तम् । "आचार्य्यो ब्रह्मणो मूर्त्तिः पिता मूर्त्तिः प्रजापतेः" इत्यादि । अग्रोपपदान्नयतेः "सत्सूद्विषद्रुहदुह०"इति पाणिनीयसूत्रेण क्विपि पृषोदरादित्वादग्रशब्दस्य रेफाकारयोर्लोपे धातोरीकारस्य ह्रस्वे च 'अग्निः' इति प्रथमैकवचने रूपं बोध्यम् । त्रिविधा हि शब्दव्यवस्था प्रत्यक्षवृत्तिः, परोक्षवृत्तिः, अतिपरोक्षवृत्तिश्चेति भेदात् । अत्र च अतिपरोक्षवृत्त्याग्निशब्दः परमेश्वरविषये अग्रणीरित्यर्थं गमयतीत्यवगन्तव्यम् ॥ ७ ॥

प्रजापतये त्वा परिददामि, देवाय त्वा सवित्रे परिददामि, अद्भ्यस्त्वौषधीभ्यः परिददामि, द्यावापृथिवीभ्यां त्वा परिददामि, विश्वेभ्यस्त्वा देवेभ्यः परिददामि, सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै ॥८॥

प्रजापतये त्वेत्यस्य यजुषः प्रजापतिर्ऋषिश्छन्दस्त्वनिर्दिष्टमेव, "अनियताक्षरमनियतपादावसानं यजुरि"ति यजुषो लक्षणप्रसङ्गे वेदभाष्यकारेणोक्तत्वात्। विनियोगस्तु ब्रह्मचारिणः परिरक्षणार्थं प्रजापत्यादिदेवतासविधे तदर्प्पणे पारस्करेणोक्तः "अथैनं भूतेभ्यः परिददाति, प्रजापतये त्वा परिददामि०–"इत्यादि। अथ मन्त्रार्थः। तत्र "अतिरिक्तमि"ति कारिकया हीनपदाध्याहारो बोध्यः। तथाहि–हे माणवक, त्वा त्वां प्रजापतये ब्रह्मणे परिददामि समर्प्पयामि, किमर्थमित्यपेक्षायामुच्यते 'अरिष्ट्यै'इति, रिषतिर्हिंसार्थस्ततश्च क्तिन्प्रत्ययः, रेषणं रिष्टिः हिंसा आपदिति यावत्, न रिष्टिः अरिष्टिस्तस्मै अरिष्ट्यै अहिंसायै परिरक्षणार्थमिति भावः। एवमग्रेऽपि सर्वत्र बोध्यम्। एवं सवित्रे सुवति स्वस्वव्यापारे प्रेरयतीति सविता तस्मै सवित्रे सूर्य्याय देवाय अरिष्ट्यै त्वा त्वां परिददामि। तथा अद्भ्यः जलेभ्यः अरिष्ट्यै त्वा त्वां परिददामि रक्षार्थं समर्प्पयामीत्यर्थः। किञ्च हे माणवक, त्वा त्वाम् अरिष्ट्यै ओषधीभ्यः व्रीह्यादिभ्यः परिददामि रक्षणार्थं समर्प्पयामीत्यर्थः। तथा अरिष्ट्यै द्यावापृथिवीभ्याम् आकाशभूमिभ्यां त्वा त्वां परिददामि समर्प्पयामीत्यर्थः। तथा भूतेभ्यः राक्षसादिभ्यः अरिष्ट्यै रिष्टिरापत्तदुपशमनाय त्वा त्वां परिददामि समर्प्पयामीत्यर्थः। रक्षसादीनां हिंस्रस्वभावत्वेऽपि सति तेभ्यः परिरक्षणार्थमेव तेभ्यः समर्प्पणं युक्तमिति मन्यमानः सम्प्रत्याचार्य्यः "भूतेभ्यस्त्वा"इति तेभ्यः कुमारमर्प्पयति, हिंस्रस्वभाविनां सविधे समर्प्पणे सत्येव तद्रक्षणं भवति, न त्वसमर्प्पणे सति, यतः समर्प्पितं सन्तं तं स्वात्मीयत्वबुध्या न हिंसन्तीति तेषां स्वभाव इत्याशयः। अतो लोकेऽपि दरीदृश्यते, यत्कृत्यादिहिंसाकार्य्यनिरतां शाबरमन्त्रवेत्रीं कामपि कर्कशां दृष्ट्वा तत्स्वभावज्ञापि परिचिता पुत्रवती वधूस्ततो भयं विशङ्कमाना भिया कम्पितहृदयापि स्वात्मप्रियं पुत्रं परिरक्षणार्थं तस्यै समर्प्पयत्येव। तादृशीं तां दृष्ट्वा तत्सविधेऽसमर्प्पितेऽस्मिन्कुमारे सा किं विधास्यतीति विशङ्कमानचित्तायास्तस्या नववध्वा मनस्तोषो न जायते कदापि। अतस्तत्समर्प्पणं यथा भवति, तथैवाचार्योऽपि परिरक्षणार्थमेव राक्षसेभ्योऽपि कुमारमर्प्पयतीत्याशयो बोध्यः॥ ८॥

तत्सवितुरिति गायत्रीमन्त्रः सन्ध्याप्रकरणे व्याख्यातस्तत्रैव द्रष्टव्यः। मन्त्रस्यास्य ऋष्यादिकन्तु पूर्ववदेवात्रापि, केवलं विनियोगमात्रं भिद्यते। तत्र प्राणायामे जपे च विनियोग उक्तः, इह तु गायत्रीमन्त्रप्रदाने बोध्यः, "अथास्मै सावित्रीमन्वाहे"ति पारस्करवचनात्॥ ९॥

अग्ने सुश्रवः सुश्रवसं मा कुरु, यथा त्वमग्ने सुश्रवः सुश्रवाऽअसि, एवं माᳪ सुश्रवः सौश्रवसं कुरु, यथा त्वमग्ने देवानां यज्ञस्य निधिपाऽअसि, एवमहं मनुष्याणां वेदस्य निधिपो भूयासम्॥ १०॥

अग्ने सुश्रव इत्यादिपञ्चमन्त्राणां प्रजापतिर्ऋषिर्यजुष्टादनिर्दिष्टं छन्दोऽग्निर्देवताग्निसन्दीपने विनियोगः, "पाणिनाग्निं परिसमूहति अग्ने सुश्रवः०-इत्यादि पारस्करोक्तेः। परिसमूहनशब्दार्थस्तु यद्यपि भूमेर्धूल्याद्यपनोदनार्थ एवास्ति, तथापीह पाणेः करणत्वेनोपादानादग्नेः कर्म्मत्वेनोपादानाच्च पाणिनाग्निपरिसमूहनस्यासम्भवत्वेन परिसमूहनशब्दोऽत्राग्निसन्दीपनपर एव बोद्धव्यः, इति सूत्रगततत्त्वार्थविवेचनावगन्तव्या। पाणिना अग्निं परिसमूहति, पाणिना दक्षिणहस्तेन इन्धनप्रक्षेपेण "अग्ने सुश्रवः" इत्यादिभिः पञ्चभिर्मन्त्रैरग्निं परिसमूहति सन्धुक्षयतीति सूत्रार्थः। अथ मन्त्रार्थः। सुष्टु श्रवः कीर्तिर्यस्य स सुश्रवाः, तत्संबुद्धौ हे सुश्रवः, सुकीर्त्ते, हे अग्ने, त्वं मा मां सुश्रवसं कुरु वेदाध्ययनेन तदर्थतत्त्वपर्य्यालोचनेन च सुकीर्त्तिं कुर्वित्यर्थः। यद्वा सुष्ठु श्रवः श्रवणेन्द्रियं यस्य स सुश्रवास्तत्सम्बुद्धौ हे सुश्रवः, सुकर्णेन्द्रिय, हे अग्ने, त्वं मा मां सुश्रवसं कुरु वेदाध्ययनार्थं मामविकलेन्द्रियं कुरु, वेदार्थग्रहणेन सफलेन्द्रियं कुर्वित्यर्थः। किञ्च हे अग्ने, सुश्रवः (सुपां सुलुगिति तृतीयाविभक्तेरिह लुग्बोद्धव्यः) सुश्रवसा सुयशसा यथा त्वं सुश्रवाः असि सुयशस्वी असि, एवं मा मां सुश्रवः (अत्रापि पूर्वोक्तसूत्रेणैव तृतीयाविभक्तेर्लुग्द्रष्टव्यः) सुश्रवसा सुयशसा सौश्रवसं कुरु, सुष्टु श्रवो यस्य स सुश्रवास्तस्य सुश्रवसो भावः सौश्रवसस्तं सौश्रवसं सुयशस्विनं मां कुर्वित्यर्थः। यद्वा-"सुपां सुलुगि"ति सप्तमीविभक्तेरेव लुगनुसन्धातव्यस्तेनायमर्थः। हे अग्ने, सुश्रवः सुश्रवसि शोभनेऽक्षरादौ अर्थाद्वेदे वेदाक्षरे प्रणवे वा यथा त्वं सुश्रवा असि शोभनश्रवणजनितज्ञानवानसि "अग्निर्वै देवानां होते"ति श्रुतेस्तव होतृत्वावगतेर्होतुश्च समाख्यया तद्वेदज्ञत्वदर्शनादितिभावः। एवं मा मां सुश्रवः (अत्रापि पूर्ववत्सप्तमीविभक्तेर्लुक् द्रष्टव्यः।) सुश्रवसि शोभनेऽक्षरादौ अर्थाद्वेदे वेदाक्षरे प्रणवे वा सौश्रवसं कुरु शोभनश्रवणजनितज्ञानशालिनं कुर्वित्यर्थः। अपि च हे अग्ने, त्वं यथा देवानामिन्द्रादीनां मध्ये यज्ञस्य निधिपा असि यज्ञसम्बन्धेन निधिरक्षकोऽसि भाण्डारिको भवसीत्यर्थः। एवमहं मनुष्याणां मध्ये वेदस्य निधिपो निधिरक्षको भूयासं वेदरूपस्य निधेः पालको वेदस्य भाण्डारिको भवेयमित्यर्थः॥ १०॥

**अग्नये समिधमाहार्षं बृहते जातवेदसे॥ यथा त्वमग्ने समिधा समिध्यसऽएवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्य्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासꣳ स्वाहा॥ ११॥**

अग्नये समिधमित्यस्य प्रजापतिर्ऋषिराकृतिश्छन्दः समिद्देवता समिदाधाने विनियोगः, "अथ समिधमादधाति, अग्नये समिधमा०-" इति पारस्करोक्तेः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि-ईदृशाय अग्नये समिधं सम्यक् इध्यते दीप्यतेऽग्निर्यया सा समित् तां समिधम् इन्धनकाष्ठमिति यावत्, आहार्षमहमाहृतवानस्मि। कीदृशायाग्नये इत्यपेक्षायामुच्यते। बृहते "बृहदि"ति महन्नामसु निघण्टौ पठितन्तेनायमर्थः। बृहते महते जाज्वल्यमानायेत्यर्थः। तथा जातवेदसे जातं जातं पदार्थं वेत्तीति जातवेदाः पदार्थमात्रस्य पाञ्चभौतिकत्वात्प्रतिपदार्थमग्नेर्विद्यमानत्वात्, यद्वा "तदेवाग्नि-

स्तदादित्यः" इत्यादि श्रुतेः "यदादित्यगतं० यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक"मिति भगवद्वाक्याच्चाग्नेर्ब्रह्मरूपत्वावगतेर्ब्रह्मणश्च प्रतिजीवशरीरं सर्वकर्म्मसाक्षिचैतन्यरूपेण तत्र तत्र सद्भावत्वात्तत्तज्जीवस्वभावानुसारितत्तत्कर्म्मफलदातृत्वेन जातं जातं वेत्तीति जातवेदाः। यद्वा जातेषु जातेषु प्राणिषु विद्यते इति जातवेदाः प्राणिमात्रे जाठराग्निरूपेण विद्यमानत्वात्। यद्वा जातान् जातान् सर्वानदनीयपदार्थान् वैश्वानरात्मरूपत्वेन विन्दते लभते इति जातवेदाः "तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्य्यपचन आस्यमाहवनीयः।" ( छा श्रु० ५।१८ ) इति श्रुतेः। यद्वा जातं वेदः वेदोक्तकर्म्मफलं यस्मात्स जातवेदाः कृताधानस्यैवाग्निहोत्रादिवेदोक्तकर्म्मस्वधिकारात्। यद्वा जातं वेदः ( वेदनं वेदः ) ज्ञानं यस्मात्स जातवेदाः वेदाक्षरस्य प्रणवस्याग्निदेवताकत्वेन तदुपासनया द्विजातेर्ज्ञानोत्पत्तिदर्शनात्। यद्वा जातवेदाः जातः वेदो यस्मात्स जातवेदाः अग्निसाक्षित्वेन लब्धगायत्रीकस्यैव द्विजातेर्वेदाध्ययनादावधिकारदर्शनात्। एवं जातवेदःशब्देनोपवर्णितो योऽग्निस्तस्मै तादृशाय अग्नय इत्यर्थः। ईदृशाय अग्नये समिधमाहार्षम्, आहृतवानस्मीत्यर्थः। तमग्निं प्रत्युच्यते, यत् हे अग्ने, यथा त्वं समिधा समिन्धनकाष्ठेन समिध्यसे सम्यक् प्रकारेण दीप्यसे, मया समाहितया अनया समिधा यथा त्वं ज्वलसीत्यर्थः। एवमहं समिन्धे सुप्रकाशो भूयासमित्यर्थः। कैः सुप्रकाशो भूयासमित्यपेक्षायामुच्यते। आयुषा "निर्दुष्टं जीवनं यच्च तदायुरभिधीयते" इति वचनान्निर्दुष्टं दैन्यरहितं जीवनमायुस्तेन आयुषा दैन्यरहितेन जीवनेन तथा मेधया बुद्ध्या वर्चसा तेजसा तथा प्रजया "प्रजा स्यात्सन्ततौ जने" इति कोशादौ दर्शनादिदानीं माणवकस्य ब्रह्मचारित्वेन सन्ततेरसम्भवादिह प्रजाशब्दो जनवाची, तेनायमर्थः। प्रजया अर्थादात्मीयेन जनेन यद्वा स्वस्य गार्हस्थ्यसम्भावनाभिप्रायेण भाविन्या वृत्त्या प्रजया सन्तत्या चेत्यर्थः। तथा पशुभिः गवादिभिः ब्रह्मवर्चसेन वेदाध्ययनजन्यं तेजो ब्रह्मवर्चसं तेन ब्रह्मवर्चसेन ब्रह्मतेजसा च त्वमिव अहं समिन्धे सुप्रकाशो भूयासमित्यर्थः। किञ्च हे अग्ने, ममाचार्य्यः ममाचार्य्यगुरुः जीवपुत्रः मेधावी च भवत्विति शेषः। तथाहं ब्रह्मचारी अनिराकरिष्णुः असानि यावद्ब्रह्मचर्यं सायं प्रातरग्नौ समिदाधानस्यानिराकरणकारी भवानीत्यर्थः। ततः परञ्च सति गार्हस्थ्ये अग्नीनाधाय यागस्यानिराकरणकारी अनिराकरिष्णुः नित्यं यागकारी भवानीत्यर्थः। अपि च हे अग्ने, त्वत्प्रसादादहं ब्रह्मचारी, आयुष्मान् चिरजीवी, यशस्वी कीर्त्तिमान्, तेजस्वी कान्तिशाली, ब्रह्मवर्चस्वी वेदाध्ययनवीर्य्यवान्, भूयासं तथाहमन्नादो भूयासं न त्वन्नाद्यभावे सति विश्वामित्रादिवन्मांसभक्षणे प्रवृत्तो भूयासमित्यर्थः। दुर्भिक्षादिना केनचित्कारणान्तरेणालभमानत्वेन कदाचिदपि ममान्नविच्छेदो मा भवत्वित्यर्थः। यद्वा सत्यन्नेऽपि कदाचिदपि प्रमादवशान्मांसादो न भूयासमिति भावः। अमांसाशी अमृण्मयपायी अधःशायीस्यादित्यादिना ब्रह्मचारिणो मांसाशनस्य प्रतिषेधदर्शनादिति भावः। स्वाहा अनया कामनया स्वाहाकारेण त्वयि समिधमादधामि, तदेतत्समिद्रूपं द्रव्यं त्वदर्थं सुहुतमस्त्वित्यर्थः॥ ११॥

तनूपाऽअग्नेऽसि तन्वं मे पाह्यायुर्दाऽअग्नेऽस्यायुर्मे देहि वर्चोदाऽअग्नेऽसि वर्चो मे देहि। अग्ने यन्मे तन्वाऽऊनन्तन्मऽआपृण॥ १२॥

"तनूपाऽअग्ने" इत्यस्य यजुषः प्रजापतिऋषिरनिर्दिष्टं छन्दोऽग्निर्देवता मुखाभिमर्शने (मुखप्रोञ्छने) विनियोगः, "पाणी प्रतप्य मुखं विमृष्टे तनूपाऽअग्ने०"– इति पारस्कर वचनात्। हे अग्ने, त्वं तनूपाः असि तनूं शरीरं पाति रक्षतीति तनूपाः शरीरपालकोऽसि जाठराग्निरूपेणेति शेषः। अतो मे मम तन्वं तनूं शरीरं पाहि रक्ष, पालयेत्यर्थः। तथा हे अग्ने, त्वम् आयुर्दा असि आयुःप्रदोऽसि अतो मे मह्यमायुर्देहि। तथा हे अग्ने, त्वं वर्चोदा असि तेजसो दाता असि अतो मे मह्यं वर्चो देहि तेजो देहीत्यर्थः। तथा हे अग्ने, मे मम तन्वाः शरीरस्य यत् ऊनं न्यूनं वर्त्तते इति शेषः। तन्मे मम आपृण आपूरयेत्यर्थः। तन्वमित्यत्र तनूशब्दस्य द्वितीयैकवचने "वा छन्दसी"त्यमि पूर्वरूपत्वाभावे, इयङुवङ्-प्रकरणे "तन्वादीनां छन्दसि बहुलमि"ति वार्त्तिकेन उवङादेशे प्राप्ते बहुलमिति निदर्शना-च्छन्दसि वैकल्पिकत्वेन उवङादेशाभावपक्षे "तन्वादीनां छन्दस्युपसङ्ख्यानमि"ति यणादेशो बोध्यः॥ १२॥

**मेधां मे देवः सविता आदधातु, मेधां मे देवी सरस्वती**
**आदधातु, मेधां मेऽअश्विनौ देवा वाधत्तां पुष्करस्रजौ॥ १३॥**

"मेधां मे" इत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता मुखविमार्जने विनि-योगः, "मुखं विमृष्टे मेधां मे०" इति पारस्करवचनात्। सुवति स्वस्वव्यापारे प्रेरयतीति सविता सर्वप्रेरकः देवः द्योतनात्मकः सूर्य्यः मे मम 'सुपां सुपो भवन्ती"ति वचनात्सप्तम्ये कवचनस्थाने षष्ठ्येकवचनं मयि मेधां धारणाशक्तिं आदधातु स्थापयत्वित्यर्थः। यद्वा 'मे' इति चतुर्थ्येकवचनं ततोऽयर्थः, मे मह्यं मेधां धारणावतीं बुद्धि मादधातु ददात्वित्यर्थः, "डुधाञ् धारणपोषणयोः, दानेऽप्येके" इत्युक्तेः। एवमग्रेऽपि सर्वत्र बोद्धव्यम्। देवी द्योतमाना द्युतिस्तुतिक्रीडादिगुणयुक्ता सरस्वती वागधिष्ठात्री देवता मे मेधामादधात्विति-पूर्ववदनुसन्धेयम्। तथा पुष्करस्रजौ पुष्करं कमलं तन्मयी स्रक् माला ययोस्तौ पुष्करस्रजौ पद्ममालिनौ सूर्य्यपुत्रौ देववैद्यौ अश्विनौ देवौ मे मेधामाधत्तामित्यादि पूर्ववत्समानम्। अग्नेः सर्वदेवमयत्वात्सवित्रादिदेवताप्रार्थना इहाग्निसविध एव बोद्धव्या॥ १३॥

**अङ्गानि च मऽआप्यायन्ताम्, वाक्च मऽआप्यायताम्, प्राणश्च मऽआप्या-यताम्, चक्षुश्च मऽआप्यायताम्, यशो बलञ्च मऽआप्यायताम्॥ १४॥**

अङ्गानि च मऽआप्यायन्तामित्यादीनां यजुषां प्रजापतिर्ऋषिः, यजुष्ट्वादनिर्दिष्टानि छन्दांसि लिङ्गोक्ता देवता अङ्गान्यालभ्य जपे विनियोगः, "अङ्गान्यालभ्य जपन्त्यङ्गानि च म ऽआप्यायन्ताम्०"–इत्यादि पारस्करोक्तेः। अथ मन्त्रार्थः। हे अग्ने, त्वत्प्रसादान्मे मम अङ्गानि शरीरावयवाः आप्यायन्तामेधन्तां वृद्ध्या स्फीतानि भवन्त्विति भावः। तथा मे मम वाक् वागिन्द्रियम् आप्यायताम् एधतामित्यर्थः। तथा मे मम प्राणः प्राणवायुः आप्यायतां वर्द्ध-तामित्यर्थः। तथा मे मम चक्षुः चक्षुरिन्द्रियम् आप्यायतां वर्द्धतामित्यर्थः। तथा मे मम यशः कीर्त्तिः बलं सामर्थ्यं च आप्यायताम् एधतामित्यर्थः। चकाराः सर्वे समुच्चयार्थाः।

मे मम सर्वाणि अङ्गानि इन्द्रियाणि च त्वत्प्रसादादाप्यायन्तां स्फीतानि भवन्त्विति वाक्यार्थः ॥ १४ ॥

एतत्पद्धत्यन्तर्गतसर्वप्रायश्चित्तहोममन्त्रा बर्हिहोमपूर्णाहुत्यादिमन्त्राश्चास्य ग्रन्थस्य परिशिष्टे होमीयमन्त्रव्याख्यावसरेऽग्रे व्याख्यास्यन्ते, तत्रैव तेषां व्याख्या द्रष्टव्या ॥

॥ इत्युपनयनमन्त्रव्याख्या ॥

---

## ॥ अथ वेदारम्भमन्त्रव्याख्या ॥

### स॒मिधा॒ग्निं दु॑वस्यत घृ॒तैर्बो॑धय॒ताति॑थिम् ॥ आस्मि॑न्ह॒व्या जु॑होतन ॥१॥

समिधाग्निमित्यस्य देवा ऋषयः प्रजापतिर्वा ऋषिर्गन्धर्वा वा ऋषयः, "देवानां प्रजापतेरग्नेर्गन्धर्वाणां वार्षमि"ति वेदभाष्यकारोक्तेः । गायत्री छन्दोऽग्निर्देवताऽग्न्याधेयकर्म्मणि समिदाधाने विनियोगः । तत्र कात्यायनः "अमावास्यायामग्न्याधेयम्" इत्यादिना कालविशेषादीनि ब्रह्मौदनपाकपर्य्यन्तानि कार्य्याण्युक्त्वा पश्चादिदमाह "तं चातुष्प्राश्यं पचत्युद्वास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थास्तिस्रः समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचम्" इति । अग्न्याधेयमित्यग्न्याधानकर्म्मणो नामधेयम्, "आवसथ्याधानं दारकाले दायाद्यकालऽएकेषाम्" इत्यत्र सूत्रकारेण तथात्वेनाभिधानात् । तत्र यद्यपि वेदारम्भप्रसङ्गे "अध्यायादीन्प्रब्रूयात्, ऋषिमुखानि बह्वृचानाम्, सूक्तानि साम्नाम्" इत्यादि पारस्करेण सूत्रितत्वात्तत्रापि प्रकृतित्वादादौ दर्शपौर्णमासमन्त्राध्यायादौ पठितस्य '-इषेत्वा' इत्येतन्मन्त्रस्यैव प्राथम्यादत्र वेदारम्भे उपादानं युक्तं, परञ्च तत्रापि कृताधानस्यैव दर्शपौर्णमासयोरधिकारादग्नेर्द्विजातिगुरुत्वाच्च समिधाग्निमित्यस्याग्निदेवताकत्वात्तदीयमन्त्रस्यैव वेदारम्भे साम्प्रदायिकानां याज्ञिकानां मतेन सर्वपद्धतिषु प्रयोगदर्शनादहमपि तथैव यथासम्प्रदायं "समिधाग्निम्" इत्यमुमेव मन्त्रं विलिख्य तस्यार्थमिह विवृणोमि । तत्र "अतिरिक्तमि"ति कारिकया हीनपदाध्याहारो बोध्यः । तथाहि—हे ऋत्विजः, यूयं समिधा सम्यगिध्यते दीप्यते वह्निर्यया काष्ठरूपया सा समित्तया समिधा कृत्वा अग्निं दुवस्यत परिचरत, दुवस्यतेः परिचरणार्थत्वात् । तथा घृतैः होष्यमाणैः पूर्णाहुतिसंबन्धिभिरतिथिमातिथ्यकर्म्मणा पूजनीयमग्निं बोधयत प्रज्वालयतेत्यर्थः । अस्मिंश्च प्रज्वलितेऽग्नौ हव्या हव्यानि नानाविधानि हवींषि आजुहोतन सर्वतो भावेन जुहुतेत्यर्थः । हव्येत्यत्र "निशब्दो बहुलमि"ति प्रातिशाख्यसूत्रेण निलोपश्छान्दसः । यद्वा "शेश्छन्दसि बहुलमि"ति पाणिनीयसूत्रेण वा शेर्लोपे प्रत्ययलक्षणेनोधादीर्घे नलोपे च द्वितीयाबहुवचने 'हव्या' इति रूपं भवति । जुहोतनेत्यत्र जुहोतेर्लोण्मध्यमपुरुषबहुवचने "तस्थस्थमिपां तान्तन्तामः" इति थकारस्य तकारादेशे "तप्तनप्तनथनाश्च" इति तनबादेशो बोध्यः ॥ १ ॥

॥ इति वेदारम्भमन्त्रव्याख्या ॥

---

## ॥ अथ समावर्त्तनमन्त्रव्याख्या ॥

**ये अप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूखो मनोहास्खलो विरुजस्तनूदूषिरिन्द्रियहा अति तान्सृजामि यो रोचनस्तमिह गृह्णामि ॥ १ ॥**

"येऽप्स्वन्तरग्नयः प्रविष्टा गोह्योपगोह्यो मयूखो मनोहास्खलो विरुजस्तनूदुषुरिन्द्रियहा तान्विजहामि यो रोचनस्तमिह गृह्णामि।" इत्यपि मन्त्रपाठो दृश्यते। कुत्रचित्तु अतितान्विजहामीति पाठान्तरम्।

ये अप्स्वन्तरित्यस्य प्रजापतिर्ऋषिर्गायत्री छन्द आपो देवता जलादाने विनियोगः, "ये अप्स्वन्तरग्नयः० इति एकस्मादपो गृहीत्वे"ति पारस्करोक्तेः। अथ मन्त्रार्थः। गोह्यः, उपगोह्यः, मयूखः, इत्यादयोऽष्टौ स्वसत्तावन्तो दोषावहत्वेन प्रतीयमानाः येऽग्नयः अप्स्वन्तः जलमध्ये प्रविष्टाः सन्तीति शेषः। तान् दोषावहान् गोह्यादीनग्नीनहम् अतिसृजामि विजहामि परित्यजामीत्यर्थः। किञ्च रोचनः रोचननामा कल्याणकारी योऽग्निरिह जले वर्त्तेत इति शेषः। तमग्निमहं गृह्णामि स्नानार्थमहमाददे इत्यर्थः। वह्निना सिञ्चतीतिवदिहापि वह्निना स्नानं विरुध्यत इति चेन्न, "तस्माद्वा आत्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः०"-इत्यादिश्रुतेरपामग्नित उत्पत्त्यवगमादिहाग्निग्रहणव्याजेन जलग्रहणस्यैवाभिप्रेतत्वावगतेः। स्नानार्थेऽस्मिञ्जले वर्त्तमानान् दोषावहान् गोह्यादीनग्नीन् त्यक्त्वा कल्याणप्रकाशकाग्निसहितं जलं उष्णोदकमिति यावत्, स्नानार्थमहं गृह्णामीति वाक्यार्थः॥ १॥

**तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय॥ २॥**

तेन मामभिषिञ्चामीत्यस्य यजुषः प्रजापतिर्ऋषिर्यजुष्ट्वादनिर्दिष्टं छन्द आपो देवता समावर्त्तनस्नानीयाभिषेके विनियोगः, "तेन माम्० ब्रह्मवर्च्चसायेत्यात्मानमभिषिञ्चति" इति पारस्करवचनात्। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तत्र "गुरुणानुज्ञातः स्नायादि"ति वचनादिह गुरुं प्रति ब्रह्मचारी ब्रूते। तथाहि—हे गुरो, पूर्वमन्त्रेण यज्जलमहं स्नानार्थं गृहीतवानस्मीति वाक्यशेषः। तेन जलेन मां स्वात्मानमित्यर्थः, अभिषिञ्चामि। किमर्थमिदमभिषेचनमिति चेत्तत्रोच्यते। श्रियै लक्ष्म्यै लक्ष्मीलाभायेत्यर्थः, तथा यशसे कीर्त्त्यै यशोलाभायेत्यर्थः, तथा ब्रह्मणे ब्रह्मज्ञानलाभायेत्यर्थः, तथा ब्रह्मवर्च्चसाय ब्रह्मतेजोलाभायेत्यर्थः। एतदर्थमहं स्वात्मानमभिषिञ्चामि तदिदं ममाभिषेचनं भवाननुमन्यतामिति वाक्यार्थः॥ २॥

**येन श्रियमकृणुतां येनावमृशतां सुराम्।**
**येनाक्षावभ्यषिञ्चतां यद्वा तदश्विना यशः॥ ३॥**

येन श्रियमित्यस्य प्रजापतिर्ऋषिर्यजुष्ट्वादनिर्दिष्टं छन्दो लिङ्गोक्ता देवता समावर्त्तनस्नानीयाभिषेके विनियोगः, "येन श्रियं० यशः" इत्यादि पारस्करोक्तेः। हे अश्विनौ इति

प्राप्ते "सुपां सुलुगि"ति विभक्तेराकारादेशे "अश्विना" इति सम्बोधने प्रममाद्विवचनम्। तद्यथा—हे अश्विना, हे अश्विनौ, हे देववैद्यौ, युवां येन जलेन श्रियमकृणुतां लक्ष्मीं कृतवन्तौ, लक्ष्म्या अपि कान्तिमत्त्वं येन जलेन युवां सम्पादितवन्ताविति भावः। तथा येन जलेन सुराम् अवमृशतां सुराजनितदोषं मार्जितवन्तावित्यर्थः। तथा येन जलेन अक्षौ अक्षिणी अभ्यषिञ्चताम् अभिषिक्तवन्तौ च्यवनस्य महर्षेरिति शेषः। तथा वां युवयोर्यज्जलं यशः यशोहेतुत्वाद्यशःस्वरूपं यशःप्रकाशकमिति यावत्, तत् युष्मदीयं जलं मम स्नानार्थमिहास्त्विति वाक्यशेषः। तेन जलेन स्नाने कृते सति लक्ष्म्याः कान्तिवन्ममापि कान्तिर्भूयात्। तथा सुरादोषापमार्जनवन्ममापि सर्वदोषापमार्जनं भूयात्। तथा च्यवनवन्ममापि सर्वदाऽक्षिरोगराहित्यं च भूयात्। तथा युवयोर्जलसम्बन्धेन युष्मद्यशोवन्ममापि यशो भूयादतो युष्मदीयं तदुत्कृष्टं जलं प्रार्थये इत्याशंसावाक्यार्थः। एवमेतमन्त्राभिमन्त्रिते विद्यमानेऽस्मिन् स्नानीयजले आश्विनेयं जलं मनसाऽऽरोप्य यः स्नातकः स्नाति तस्येह लोके कीर्त्तिर्भवति, मन्त्रोक्तयावदुक्तफलावाप्तिश्च भवतीतिवाक्यार्थः। "छन्दस्यपि दृश्यते" इति अक्षिशब्दस्यानङादेशे द्वितीयाद्विवचने अक्षाविति रूपं भवतीत्यवगन्तव्यम्॥ ३॥

उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳ श्रथाय।

अथा वयमादित्य व्रते तवानागसोऽअदितये स्याम ॥ ४॥

अयञ्च मन्त्रः स्नानप्रकरणे व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या। ऋष्यादिकन्तु पूर्ववदेव वोद्धव्यम्। "उदुत्तममिति मेखलामुन्मुच्ये"ति पारस्करोक्तेरिह मेखलोन्मोचने विनियोग इति विशेषः॥ ४॥

उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मा गमय॥ उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छतसनिरसि शतसनिं मा कुर्वाविदन्मा गमय॥ उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायं यावभिरस्थात्सहस्रसनिरसि सहस्रसनिं मा कुर्वाविदन्मा गमय॥ ५॥

उद्यन्निति मन्त्रस्य प्रजापतिर्ऋषिः शक्वरीछन्दः सविता देवताऽऽदित्योपस्थाने विनियोगः, "अथादित्यमुपतिष्ठते उद्यन्भ्राजभृष्णु०—"इति पारस्करोक्तेः। अथ मन्त्रार्थः। मन्त्रेऽस्मिन्न इन्द्रशब्दस्तस्य विशिष्टोऽर्थस्तु शतरुद्रिये व्याख्यातः। इह तु इन्द्रशब्दस्य सङ्क्षिप्तार्थं प्रदर्श्य "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि—इन्दतीति इन्द्रः परमैश्वर्य्ययुक्तः ईदृश आदित्यः "अदितिर्देवमाता स्यादि"त्यभिधानात् अदितेः पुत्रः आदित्यः स च द्वादशादित्येषु प्रसिद्धः स उद्यन् उदयं कुर्वन् सन् प्रातः प्रभाते यावभिः मरुद्भिः यावन्तो मरुतस्तैर्यावद्भिरिति प्राप्ते "वर्णागमो वर्णविपर्य्ययश्च"इत्यादि वचनादिह दकारवर्णलोपश्छान्दसः। यावद्भिः मरुद्भिरित्यर्थः। एकोनपञ्चाशत्सङ्ख्यकैर्वायुभिः सह प्रत्यूषे अस्थात् स्थितोऽभवदित्यर्थः। तावतो मरुतः, आदित्यं च अहमुपतिष्ठे इति वाक्यशेषः। कीदृश आदित्य इत्यपेक्षायामुच्यते। भ्राजभृष्णुः भ्राजं रश्मिं बिभर्त्तीति भ्राजभृष्णुः रश्मिमा-

नित्यर्थः। तमीदृशमादित्यमुपस्थायेदानीं सम्बुद्धिपदोपादानादसीति मध्यमपुरुषयोगाच्च सम्बुद्धया प्रत्यक्षीकृत्येवादित्यं प्रत्युच्यते। हे विदन्, सर्वज्ञ, आदित्य, त्वं दशशनिरसि 'गोभूरत्नहिरण्यादीनि'दश सनोतीति दशसनिः "षणु दाने"इत्यस्मादिन्प्रत्ययः, ततो "धात्वादेः षः सः" इति षकारस्य सकारे कृते पश्चात् "सुप्तिङुपग्रहे"त्यादिवचनेन इह हलो व्यत्ययेन दन्त्यसकारस्थाने तालव्यशकारश्च छान्दसः। अतो दशशनिरिति तालव्यशकारविशिष्टोऽयं मन्त्रपाठः। कुत्रचित्तु दशसनिरिति दन्त्यसकारविशिष्ट एव पाठो दृश्यते। मह्यमपि स एव रोचते। षकारस्य सकारं कृत्वा पुनरपि हलो व्यत्ययेन सकारस्थाने शकार इति क्लिष्टकल्पनाया अन्याय्यत्वात्। गोभूरत्नहिरण्यादीनां दशानां दातासीत्यर्थः। अतस्त्वं मामपि दशशनिं (सनिं) कुरु गोभूरत्नहिरण्यादीनां दशानां दातारं कुरु मां बहुधनं कुर्वित्यर्थः। बहुधने सति बहुदातृत्वस्य सम्भवः। अतो बहुदातृत्वसव्याजेन बहुधनत्वमेव प्रार्थ्यते मयेति भावः। कुत इति चेदित्यपेक्षायां हेतुगर्भत्वमुपप्रदर्श्यते। मा माम् आगमय ब्रह्मचर्य्योदुत्तीर्णं मां समन्ताद्भावेन जानीहीत्यर्थः। अत एव दशशनिं मां कुरु इत्युक्तं मया। "ये ये गत्यर्थास्तेते ज्ञानार्थाः" इत्युक्तत्वाद्गच्छतिरिह ज्ञानार्थ एव बोद्धव्यः। तस्य भ्वादौ पठितत्वाच्चुरादित्वाभावेऽपि "व्यत्ययो बहुलम्" इति पाणिन्युक्तेरिह बाहुलकाद्विकरणव्यत्ययेन गच्छतेः स्वार्थे णिच्प्रत्ययो बोद्धव्यः। "मितां ह्रस्वः" इत्युपधाया ह्रस्वे गमीत्यस्य णिजन्तत्वाद्धातुत्वे लोण्मध्यमपुरुषैकवचने शपि शकारपकारयोर्लोपे गुणेऽयादेशे सिपः स्थाने ह्यादेशे "अतो हेरि"ति हेर्लोपे गमयेति रूपमवगन्तव्यम्। तत्र "आ" इत्युपसर्गः "गमय" इति क्रियापदेन सह सम्बद्धयते। स च व्यवहितोपसर्गसंबन्धो बोद्धव्यः, "छन्दसि परेऽपि" "व्यवहिताश्च"इति पाणिनिवचनात्। इदानीं समाप्तब्रह्मचर्य्यस्य मम "आश्रमादाश्रमं गच्छेत्" इत्यादिस्मृतेर्गार्हस्थ्यस्य सम्भावित्वेन तत्र तत्र गोभूरत्नहिरण्यादिधनस्य प्रयोजनत्वसद्भावान्मां समाप्तब्रह्मचर्य्यं ज्ञात्वा गार्हस्थ्यसम्पादनाय मां बहुधनं कुरु, मह्यं बहुधनं देहीत्याशंसावाक्यार्थः। एवं द्वितीयतृतीययोर्दिवा यावभिः सायं यावभिरिति शतशनिः सहस्रशनिरसीत्येतावन्मात्र विशेषः। तत्र दिवासायमिति प्रसिद्धार्थमेव। शतसहस्रशब्दौ बहुत्ववाचिनौ बोध्यौ। अन्यत्सर्वं समानमेव॥ ५॥

अन्नाद्याय व्यूहध्वꣳ सोमो राजाऽयमागमत्।
स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च॥ ६॥

अयञ्च मन्त्रः प्रातःकृत्यप्रकरणे व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या॥ ६॥

प्राणापानौ मे तर्प्पय चक्षुर्म्मे तर्प्पय श्रोत्रं मे तर्प्पय॥ ७॥

"प्राणापानौ" इत्यस्य यजुषः प्रजापतिर्ऋषिर्यजुष्टुप्छन्दनिर्दिष्टं छन्दः प्राणापानौ देवते चन्दनानुलेपने विनियोगः, "उत्साद्य पुनः स्नात्वानुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते प्राणापानौ०" इति पारस्करोक्तेः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि—हे अनुलेपन! सुगन्धिद्रव्याधिष्ठातृदेवते, त्वं मे मम प्राणापानौ मित्रावरुणदेवताकौ तर्प्पय प्रीणय अनेन सुगन्धिद्रव्यानुलेपनेनेति शेषः। तथा मे मम चक्षुः चक्षुरिन्द्रियं तर्प्पय प्रीणय। तथा मे मम श्रोत्रं श्रोत्रेन्द्रियं च तर्प्पय प्रीणय, अनेनानुलेपने-

नेति वाक्यशेषः । अनेनैव मन्त्रेण सुगन्धिद्रव्यानुलेपनं गन्धानुलेपनं ( चन्दनानुलेपनं ) च कर्त्तव्यं, तदुभयत्र मन्त्रार्थस्तु तुल्य एव ॥ ७ ॥

पितरः शुन्धध्वम् ॥ ८ ॥

पितरः शुन्धध्वमित्यस्य यजुषः प्रजापतिर्ऋषिरनिर्दिष्टं छन्दः पितरो देवता पाण्यवनेजने विनियोगः, "पितरः शुन्धध्वमिति पाण्योरवनेजनं दक्षिणा निषिच्ये"तिपारस्करोक्तेः । हे पितरः, यूयं शुन्धध्वम् "शुन्ध शुद्धौ" ( भ्वा० प० ) इत्यस्माल्लोण्मध्यमपुरुषबहुवचने "व्यत्ययो" बहुलं "बहुलं छन्दसी"त्यादिपाणिन्युक्तेः "सुप्तिङुपग्रहे"ति इहोपग्रहव्यत्यये-नात्मनेपदं "छन्दस्युभयथे"ति ध्वमित्यस्यार्धधातुकत्वेन "णेरनिटी"ति णेर्लोपे रूपं बोध्यम् । शुन्धयत शोधयतेत्यर्थः, मामिति शेषः ॥ ८ ॥

सुचक्षा अहमक्षीभ्यां भूयासꣳ सुवर्चा
मुखेन सुश्रुत्कर्णाभ्यां भूयासम् ॥ ९ ॥

"सुचक्षा" इत्यस्य यजुषः प्रजापतिर्ऋषिरनिर्दिष्टं छन्दः सविता देवता अनुलेपनान्ते जपे विनियोगः ॥ "अनुलिप्य जपेत् सुचक्षा०–" इति पारस्करवचनात् । अहं स्नातकः अक्षीभ्याम् अक्षिभ्यां नेत्राभ्यां सुचक्षाः भूयासं सुष्ठु चष्टे इति सुचक्षाः शोभनदृष्टिर्भूयास-मित्यर्थः । तथा मुखेन सुवर्चाः शोभनं वर्चो यस्य स सुवर्चाः शोभनदीप्तिर्भूयासमित्यनुषङ्गः । तथा कर्णाभ्यां श्रोत्राभ्यां सुश्रुत् सुष्ठु शृणोतीति सुश्रुत् शोभनश्रावी भूयासमित्यर्थः । अक्षि-भ्यामितिप्राप्ते "ई च द्विवचन"इति ईकारः । सुचक्षा इत्यत्र दर्शनार्थात्सुपूर्वाच्चक्षेः "चक्षेर्ब-हुलं शिच्चे"ति असिः । इकारस्तूपदेशार्थः । शित्वात्सार्वधातुकसंज्ञायां "चक्षिङः ख्याञि"ति ख्याञादेशो न भवति । सुपूर्वात् शृणोतेः क्विप्प्रत्यये क्विपः सर्वापहारलोपे "ह्रस्वस्य पिति कृति तुक्"इति तुगागमे अनुबन्धलोपे कृदन्तत्वात्प्रातिपदिकत्वे प्रथमपुरुषैकवचने सुश्रुदिति रूपं बोध्यम् ॥ ९ ॥

परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि ।
शतं च जीवामि शरदः पुरूची रायस्पोषमभि संव्ययिष्ये ॥ १० ॥
यशसा मा द्यावापृथिवी यशसेन्द्रा बृहस्पती ।
यशो भगश्च माऽऽविदद्यशो मा प्रतिपद्यताम् ॥ ११ ॥

इमौ च मन्त्रौ विवाहप्रकरणे व्याख्यातौ, तत्रानयोर्व्याख्या द्रष्टव्या ॥ १० ॥ ११ ॥

याऽआहरज्जमदग्निः श्रद्धायै कामायेन्द्रियाय ।
ताऽअहं प्रतिगृह्णामि यशसा च भगेन च ॥ १२ ॥

याऽआहरदिति मन्त्रस्य भरद्वाज ऋषिरनुष्टुप्छन्दः सुमनसो देवताः पुष्पग्रहणे विनि-

योगः, "सुमनसः प्रतिगृह्णाति याऽआहरज्जमदग्निः—०" इतिपारस्करवचनात्। अत्र यद्यपि पारस्करेण सुमनसः प्रतिगृह्णातीत्येवमुक्तं तथापि पुष्पमाल्यग्रहणे तु पुष्पग्रहणं सुतरां भविष्यत्येव, अतोऽनेन पुष्पमाल्यग्रहणमिति याज्ञिकाः समामनन्ति। अथ मन्त्रार्थः। श्रद्धायै श्रद्धाप्राप्त्यर्थं तथा कामाय अभिलषितमनोरथसिद्ध्यर्थं तथा इन्द्रियाय चक्षुरादीन्द्रियपाटवार्थं च याः सुमनसः पुष्पाणि पुष्पस्रज इति यावत्, जमदग्निर्ऋषिः आहरत् आहृतवान् ताः सुमनसः पुष्पाणि अर्थात् ताः पुष्पस्रजोऽहमपि स्नातकः श्रद्धायै कामाय इन्द्रियाय च जमदग्निवत्तत्तन्निमित्तं तत्तदर्थसिद्ध्यर्थं प्रतिगृह्णामि परिधारणार्थमाददे स्वीकरोमीत्यर्थः। अनेन पुष्पमाल्यग्रहणेन यशसा कीर्त्या भगेन "ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणः॥" (कुत्रचित्तु "धर्म्मस्य यशसः श्रियः" इत्यपि पाठः।) इति वचनादिह भगशब्दः षड्विधैश्वर्य्यवाचकस्तेन भगेन षड्विधैश्वर्य्येण युक्तो भूयासमिति वाक्यशेषः। यद्वा "सुपां सुपो भवन्ती"ति वचनात् "यशसा भगेन" इत्युभयत्र चतुर्थ्येकवचनस्थाने तृतीयैकवचनमित्यवगन्तव्यं, ततोऽयमर्थः। यशसा यशसे यशोऽर्थं तथा भगेन भगाय च ताः सुमनसः पुष्पाणि अर्थात् ताः पुष्पस्रजः प्रतिगृह्णामीत्यनुषङ्गः। अनेन पुष्पमाल्यग्रहणेन श्रद्धादिभगान्तं सर्वमपि पदार्थजातं ममास्त्वित्याशंसावाक्यार्थः। यद्वा "सुपां सुपो भवन्ती"ति वचनादेव प्रथमैकवचनस्थाने तृतीयैकवचनं व्यत्ययेनेत्यनुसन्धातव्यम्। ततोऽयमर्थः। यशसा यशः विद्याधनादिभिः प्रख्यातिर्मम भूयादित्यर्थः, "विद्याधनाभ्यां रहितस्य पुंसो यज्जीवनं तन्मरणं वदामः" इत्युक्तेः। तथा भगेन च भगश्च मम भूयात्पुष्पमाल्याधिष्ठातृदेवताप्रसादादितिवाक्यशेषः। अस्मिन्पक्षे भगशब्देन स्त्रीभगो विवक्षितः, ब्रह्मचर्य्यस्य समाप्तत्वादिति भावः। सोऽपि विवाहत्वे सति स्वस्त्रिया एव न चान्यस्याः, समावर्त्तनानन्तरं झटिति मम विवाहोऽपि स्यादिति ध्वन्यते। "भज सेवायां" (भ्वा० उ०) इत्यस्मात् "पुंसि संज्ञायां घः प्रायेण" इति घप्रत्ययः। "चजोः कुघिण्यतोः" इति जकारस्य कुत्वेन गकारश्च बोध्यः। भज्यते सेव्यते भोगार्थिभिरिति भगः। अयञ्च भगशब्दः पुँल्लिङ्गो धनवाची "शिक्षास्तोतृभ्यो मातिधग्भगो नः" इति श्रुतेः, तथापि "अनेन स्त्रीभगोऽपि व्याख्यातः" इति यास्कोक्तेः स्त्रीभगग्रहणं क्रियते। सोऽपि भज्यते सेव्यते भोगार्थिभिर्मैथुनायेति भावः। यथा योनिशब्द उदकवाचकः स्थानवाचको रूपवाचको गृहवाचकोऽन्तरिक्षवाचकस्तथा योनिशब्दः स्त्र्युपस्थवाचकोऽपि भवति। तदुक्तं यास्केन "योनिरन्तरिक्षं महानवयवः परिवीतो वायुनाऽयमपीतरो योनिरेतस्मादेव परियुतो भवति" तथा "रात्र्युषसे योनिमचिरत् स्थानं स्त्रीयोनिरभियुत एनां गर्भः" इति च। "रेतो मूत्रं विजहाति योनिं प्रविशदिन्द्रियमि"ति श्रुतेः। ननु पूर्वन्तु भगशब्दो धनवाचकत्वेनाभिहितः, इह तु स्त्रिया उपस्थेन्द्रियवाचक इति तदुभयं विरुध्यते; इतिचेन्न। यतो हि स्त्रीणां भग एव धनभूतः, यथा रेक्णशब्दो यद्यपि धनवाचकोऽस्ति तथापि प्रकरणवशादर्थसाहचर्य्येण "परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम" इतिश्रुतेरपत्यवाचकोऽपि भवति। तद्वदत्रापि भगशब्दो धनवाचकोऽपि सन् इह स्त्रीभगवाचकत्वेन विवक्षितः, अतोऽत्र न विरुध्यत इति भावः॥ १२॥

यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु।

तेन सङ्ग्रथिताः सुमनसऽआबध्नामि यशो मयि॥ १३॥

यद्यशोऽप्सरसामिति मन्त्रस्य भरद्वाज ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता माल्यावबन्धने विनियोगः, "अथाऽवबध्नीते यद्यशोऽप्सरसामि"ति पारस्करवचनात्। "अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि–इन्द्रः पुरन्दरः अप्सरसामुर्वशीप्रभृतीनां यत् यशः विपुलं बहुलं पृथु विस्तीर्णं चकार कृतवान् रूपवत्तयेतिशेषः। तेन रूपवद्विशिष्टेन सूत्रस्थानीयेन यशसा सङ्ग्रथिताः सम्यक् ग्रथिताः सुमनसः पुष्पाणि आबध्नामि स्वग्रीवायामितिशेषः। यशःस्वरूपेण सूत्रेण सङ्ग्रथितं पुष्पमाल्यमहं स्नातकः परिदधे इति भावः। तथा सति मयि यशो भूयादिति शेषः। मयीत्यत्र "सुपां सुपो भवन्ती"ति वचनात्षष्ठ्येकवचनस्थाने सप्तम्येकवचनं मम यशो भूयादनेन पुष्पमाल्यपरिधारणेनेति भावः। यथैवेन्द्रप्रदत्तैः पुष्पमाल्यैरुर्वशीप्रभृतीनामप्सरसां रूपवत्त्वेन लोके प्रख्यातिरभूत्तथैवैतत्पुष्पमाल्यपरिधारणेन ममापि लोके प्रख्यातिर्भवत्वित्याशंसावाक्यार्थः ॥ १३ ॥

युवा सुवासाः परिवीतऽआगात्सऽउश्रेयान्भवति जायमानः।
तं धीरासः कवयऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥१४॥

युवा सुवासा इति मन्त्रस्यास्य प्रजापतिर्ऋषिश्चतुर्थे व्यूहेन पादपूरणत्वाद् ब्रूना त्रिष्टुप्छन्दो बृहस्पतिर्देवतोष्णीषेण शिरोवेष्टने विनियोगः, "उष्णीषेण शिरो वेष्टयते युवा सुवासा इति" इति पारस्करोक्तेः। मन्त्रार्थोऽयं यथा– यः युवा सुवासाः शोभनं वासो वस्त्रं यस्य स सुवासाः शोभनवस्त्रधारी भूत्वा परिवीतः परिवेष्टितः सन् आगात् उष्णीषेणेतिशेषः। उष्णीषेण शिरो वेष्टयित्वा आगतवानित्यर्थः। अत एव स युवा श्रेयान् भवति श्रेष्ठो भवतीत्यर्थः। तथा स युवा जायमानः जातनामकः नाम्ना प्रख्यातश्चेतियावत्, भवतीत्यनुषङ्गः। तं युवानं कवयः क्रान्तदर्शिनः अतीतानागतवर्त्तमानसर्वपदार्थप्रत्यक्षकृतः कीर्त्तिवक्तार इतियावत्, तथा स्वाध्यः सुष्ठु आहिता सर्वपदार्थेषु स्थापिता धीर्यैस्ते स्वाध्यः स्वाधियः, यद्वा सुष्ठु आहिता धीर्येषां ते स्वाध्यः स्वाधिय इति यावत्, (स्वाधिय इति प्राप्ते "बहुलं छन्दसी"ति पाणिन्युक्तेश्छन्दसि सर्वविधीनां वैकल्पिकत्वादिह "न भूसुधियो"रिति यणः प्रतिषेधो न भवति। तेन "एरनेकाचोऽसंयोगपूर्वस्ये"ति यणि प्रथमाबहुवचने स्वाध्य इति रूपं भवतीति बोद्धव्यम्) आत्मनि निहितशोभनबुद्धय इतिभावः, तथा मनसा हृदयेन देवयन्तः स्तुवन्तः, एवम्भूता धीरासः धीरा एव धीरासः ("आज्जसेरसुगि"त्यसुगागमः।) धीराः पण्डिताः उन्नयन्ति उत्कर्षयन्ति शोभनोऽयं युवेत्येवं वर्णयन्ति सुवस्त्रत्वात्तं प्रशंसन्तीत्यर्थः। "विद्यया वपुषा वाचा वस्त्रेण विभवेन च। वकारैः पञ्चभिर्युक्तो नरः प्राप्नोति गौरवम् ॥" इति शिष्टानां वचःस्मरणात्स युवा यथा सुवस्त्रपरिधानेनोष्णीषपरिवेष्टनेन चातिरूपवान्भवति तथाहमपि स्नातकस्तादृग्वस्त्रोष्णीषादिना अतीव रूपवान् भवेयमित्यभिप्रायेणानेन मन्त्रेण स्वीयं शिर उष्णीषेण परिवेष्टयामीतिवाक्यार्थः। उष्णीषपरिवेष्टनेन रुद्ररूपत्वमप्यायाति "नम उष्णीषिणे गिरिचराय" (शु० य० वे० वा० मा० सं० १६, २२,) इति श्रुतेः। अत उष्णीषेण शिरो वेष्टयतीति भावः ॥ १४ ॥

अलङ्करणमसि भूयोऽलङ्करणं भूयात् ॥ १५ ॥

अलङ्करणमसीत्यस्य यजुषः प्रजापतिर्ऋषिरनिर्दिष्टं छन्दो लिङ्गोक्ता देवता कर्णवेष्टका-

लङ्करणपरिधारणे विनियोगः, "अलङ्करणमसि भूयोऽलङ्करणं भूयादिति कर्णवेष्टकौ" इति पारस्करवचनात्। मन्त्रार्थस्त्वेवं, तथाहि-हे कर्णवेष्टक, कुण्डल, त्वम् अलङ्करणमसि अलं क्रियतेऽनेनेत्यलङ्करणं भूषणमसि त्वं शोभाप्रसाधनं भवसीत्यर्थः। अतो भूयः उत्तरोत्तरमपि अलङ्करणं (ममेतिशेषः) मम कर्णभूषणं भूयात् त्वं भूया इत्यर्थः। भूयादित्यत्र "तिङां तिङो भवन्ती"ति वचनाद्भवतेराशीर्लिङि मध्यमैकवचनस्थाने तत्प्रथमैकवचनम्। अलङ्करणमसीति तव सुतरां स्वभाव एवं। अतस्त्वं पुनरपि मम कर्णशोभार्थमलङ्करणं भवेत्याशंसावाक्यार्थः॥१५॥

वृत्रस्यासि कनीनकश्चक्षुर्दाऽअसि चक्षुर्म्मे देहि ॥ १६ ॥

वृत्रस्यासीत्यस्य प्रजापतिर्ऋषिर्गायत्रीच्छन्दो लिङ्गोक्ता देवता नेत्रद्वयेऽञ्जनकरणे विनियोगः, "वृत्रस्येत्यङ्क्तेऽक्षिणी"ति पारस्करवचनात्। मन्त्रार्थश्चैवं, तथाहि-हे अञ्जन, त्वं वृत्रस्य वृत्रनाम्नः शक्तिशालिनोऽसुरस्य कनीनकोऽसि नेत्रमध्यगतकृष्णमण्डलरूपोऽसि कनीनिका अक्षितारका तद्रूपत्वात्त्वं चक्षुर्दा असि चक्षुरिन्द्रियपाटवस्य दाता भवसीत्यर्थः। तस्मान्मह्यमपि त्वं चक्षुर्देहि चक्षुरिन्द्रियगतं तेजो देहि मम कदाचिदपि नेत्रवैकल्यं मास्त्विति भावः। यस्मात्कारणाद्वृत्रस्याक्षितारकेतिनामकमत्यन्तमञ्जनं त्वमसि, अतोऽन्येषां त्वं चक्षुर्दा असि चक्षुषो दाता भवसीत्यर्थः। अतोऽञ्जनेन मम चक्षुःप्रकाशो भवत्वित्याशंसावाक्यार्थः। वृत्रस्याक्षिसमुत्थमञ्जनमितिमाध्यन्दिनश्रुत्या तैत्तिरीयश्रुत्या चाभिहितं, तद्यथा-"यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीदि"ति माध्यन्दिनीयश्रुतिः। "इन्द्रो वृत्रमहन् तस्य कनीनिका परापतत्तदेवाञ्जनमभवत्" इति तैत्तिरीयश्रुतिश्च ॥ १६ ॥

रोचिष्णुरसि ॥ १७ ॥

रोचिष्णुरसीत्यस्य यजुषः सूर्यऋषिरनिर्दिष्टं छन्द आदर्शो देवता आदर्शे मुखनिरीक्षणे विनियोगः, "रोचिष्णुरसीत्यात्मानमादर्शे प्रेक्षते" इति पारस्करोक्तेः। हे दर्पण, त्वं रोचिष्णुरसि प्रकाशनशीलोऽसि, अतो मामपि त्वं प्रकाशयेतिवाक्यशेषः ॥ १७ ॥

बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्धेहि तेजसो यशसो मामन्तर्धेहि ॥१८॥

बृहस्पतेरित्यस्य गौतम ऋषिर्गायत्रीच्छन्दो लिङ्गोक्ता देवता छत्रग्रहणे विनियोगः, "छत्रं प्रतिगृह्णाति बृहस्पतेश्छदिरसी"ति पारस्करवचनात्। हे छत्र, त्वं बृहस्पतेर्देवगुरोः सुराचार्य्यस्य सम्बन्धि छदिरसि अपवारणं भवसि। अतो मां पाप्मनः पापात् अन्तर्धेहि आवृतं कुरु यथा कदाचिदपि मम पापसम्बन्धो न भवेत्तथा कुर्वित्यर्थः। न केवलं पापादेव किन्तु तेजसः आदित्यतापादिरूपादपि मामन्तर्धेहीत्यनुषङ्गः। किमर्थमित्यपेक्षायामुच्यते यशस इति, यशसः (अत्र चतुर्थ्यर्थे षष्ठी "चतुर्थ्यर्थे बहुलं छन्दसी"ति पाणिन्युक्तेः) यशसे यशोऽर्थमित्यर्थः। अर्थात् हे छत्र, यतस्त्वं बृहस्पतेरपि पापसन्तापादिवारकोऽसि, अतस्तेभ्योऽपिधाय मामपि यशस्विनं कुर्वित्याशंसावाक्यार्थः ॥१८॥

प्रतिष्ठे स्थो विश्वतो मा पातम् ॥ १९ ॥

प्रतिष्ठे स्थ इत्यस्य यजुषः प्रजापतिर्ऋषिरनिर्दिष्टं छन्दो धर्म्मो देवता उपानद्ग्रहणे विनियोगः, "प्रतिष्ठे स्थो विश्वतो मा पातमित्युपानहौ प्रतिमुञ्चते" इति पारस्करवचनात्। प्रतिपूर्वो मुञ्चतिः परिधाने वर्त्तते। प्रतिमुञ्चते परिधत्ते इति सूत्रार्थः। मन्त्रार्थस्त्वित्थम्। तथाहि—हे उपानहौ, युवां प्रतिष्ठे स्थः उपक्रान्तगतिक्रियायाः अत्यागः प्रतिष्ठा तन्निमित्तत्वात् युवामेव प्रतिष्ठे भवथः। अतश्च विश्वतः सर्वतः सर्वस्माद्गतिविरोधिनः कण्टकादेः सकाशान्मा मां पातं रक्षतमित्यर्थः। यतो यूयं प्रतिष्ठानिमित्ते भवथः, अतस्त्वत्प्रसादान्मम कुत्रापि गतिप्रतिबन्धो मा भवत्वित्याशंसावाक्यार्थः। काष्ठपादुकाग्रहणेऽप्ययमेव मन्त्रो बोध्यः। हे काष्ठपादुके, युवां प्रतिष्ठे स्थ इत्यादि पूर्ववदिहाप्यनुसन्धेयम्। स्पष्टमन्यत् ॥१९॥

**विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वतः ॥ २० ॥**

विश्वाभ्य इत्यस्य यजुषो याज्ञवल्क्य ऋषिरनिर्दिष्टं छन्दो दण्डो देवता दण्डग्रहणे विनियोगः, "विश्वाभ्यो० सर्वत इति वैणवं दण्डमादत्ते" इति पारस्करवचनात्। अथ मन्त्रार्थः। हे वैणवदण्ड, त्वं नाष्ट्राभ्यः नाशयन्तीति नाष्ट्रास्ताभ्यः नाष्ट्राभ्यः नाशकारिणीभ्यः विश्वाभ्यः सर्वाभ्यः राक्षससर्प्पशृङ्गविशिष्टपशुजातिभ्यः सकाशान्मा मां सर्वतः परिपाहि (सर्वत इत्यत्र सप्तम्यर्थे तसिल्।) सर्वासु दिक्षु सर्वतो भावेन रक्षेत्यर्थः। त्वत्प्रसादान्नाष्ट्रादेः सकाशान्मम-कदाचिदपि भयं मास्त्वित्याशंसावाक्यार्थः ॥२०॥

॥ इति समावर्त्तनमन्त्रव्याख्या ॥

इति श्रीदामोदरशर्म्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये चतुर्दशोऽयं संस्कारपरिच्छेदः समाप्तः ॥ १४ ॥

---

# अथ पञ्चदशपरिच्छेदः।

## ॥ तत्रादौ दूर्वाक्षतप्रदानमन्त्रः ॥

ॐ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूरऽइषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो नऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ १ ॥

## ॥ अथ मन्त्रव्याख्या ॥

आब्रह्मन्नित्यस्य परमेष्ठी प्रजापतिर्ऋषिरुत्कृतिच्छन्दो लिङ्गोक्ता देवता इह दूर्वाक्षतदाने ( दूर्वाक्षताभिधानाशिषः प्रदाने) विनियोगः, आशीर्लिङ्गात्। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। ब्रह्मणः सृष्टिकर्तृत्वात्तं प्रति ब्राह्मणैरुच्यते। तद्यथा—हे ब्रह्मन्, अस्य यजमानस्य यजनशीलस्य राज्ञः, अन्यत्र तु यजमानस्य आशीर्वादार्हस्य देवदत्तादेरिति यावत् राष्ट्रे राज्ञः पक्षे तु राज्ये अन्यत्र तु राष्ट्रे अधिकारप्रदेशे इति यावत् ब्रह्मवर्चसी यज्ञाध्ययनशीलो ब्राह्मणः आजायतामुत्पद्यतामित्यर्थः, नोऽस्माकमाशीःप्रदानकर्तॄणां ब्राह्मणानामाशीर्वचसेतिशेषः। तथा राजन्यः क्षत्रियश्चैवम्भूत आजायतामित्यनुषङ्गः। किम्भूतो राजन्य इत्यपेक्षायामुच्यते। शूरः पराक्रमीत्यर्थः। "शूर विक्रान्तौ"शूरयतीति शूरः तथा इषव्यः इषुभिर्विध्यतीति इषव्यः बाणयोद्धेत्यर्थः। यद्वा इषौ कुशलः इषव्यः बाणप्रक्षेपनिपुण इत्यर्थः। तथा अतिव्याधी अत्यन्तं विध्यतीति अतिव्याधी अत्यन्तं शत्रुभेदनशील इत्यर्थः। तथा महारथः एकः सहस्रं जयतीति स महारथः एवं भूतो राजन्योऽस्य राष्ट्रविषये उत्पद्यतामिति भावः। तथा दोग्ध्री दुग्धप्रपूरयित्री धेनुः सकृत्प्रसूता पयस्विनी गौरित्यर्थः। सा आजायतामित्यनुषङ्गः। तथा वोढा वहनशीलः अनड्वान् अनः शकटं वहतीति अनड्वान् वृषभः आजायतामित्यनुषङ्गः। तथा आशुः शीघ्रगामी सप्तिः अश्वः आजायतामित्यनुषङ्गः। तथा योषा स्त्री पुरन्धिः पुरं शरीरं सर्वगुणसम्पन्नं दधातीति पुरन्धिः सुन्दरी स्त्री आजायतामित्यनुषङ्गः। तथा रथेष्ठाः रथे तिष्ठतीति रथेष्ठाः ( अत्र क्विप् सप्तम्या अलुक् च बोध्यः। ) रथे स्थितो युयुत्सुर्नरो जिष्णुः जयनशीलः कश्चिद्वीरपुरुषश्चाजायतामित्यनुषङ्गः। आजायतामित्यत्र सर्वत्र आ इत्युपसर्गस्य व्यवहितेन क्रियापदेन सह सम्बन्धः "छन्दसि परेऽपि "व्यवहिताश्चे"ति पाणिनिवचनात्। युवास्येत्यत्र युवा आ अस्येति पदच्छेदः। अस्य यजमानस्य यजनशीलस्य राज्ञः अन्यत्र तु आशीर्वादार्हस्य देवदत्तादेरिति यावत् युवा समर्थः सभेयः सभायां योग्यः वीरः पुत्रः आजायतामुत्पद्यतामित्यर्थः। वीरशब्दः पुत्रवाची "वीरो वै पुत्रः" इति श्रुतेः। सभेय इत्यत्र "ढश्छन्दसि" इति सभा-

शब्दात्सप्तम्यन्तात्साधुरित्यर्थे ढप्रत्यये तस्य "आयनेयीनीयिय" इत्यादिना एयादेशे "यस्येतिचे"त्याकारलोपे प्रथमैकवचने सभेय इति पदं सिध्यति । किञ्च नोऽस्माकमाशीर्वचसा अस्य राष्ट्रे राज्ये अधिकारप्रदेशे वा निकामे निकामे अभ्यासो वीप्सार्थः, नितरां कामनायां सत्यां पर्जन्यो वर्षाधिष्ठाता देवोऽभिवर्षतु । यदा यदा वृष्टेः प्रयोजनं स्यात्तदा तदा मेघो वृष्टिं करोत्वित्यर्थः । तथा ओषधयः यवाद्याः फलवत्यः फलयुक्ताः सत्यः पच्यन्तां स्वयमेव पक्वा भवन्त्वित्यर्थः । तथा अस्य योगक्षेमः कल्पतां योगेन युक्तः क्षेमो योगक्षेमः स च क्लृप्तो भवतु । अलब्धलाभो योगः, लब्धपरिपालनं क्षेमः, तदुभयमस्य सम्पद्यतां नोऽस्माकं ब्राह्मणानामाशीर्वचनेनेति शेषः । अमुमर्थं स्मरन्तो दूर्वाक्षतप्रदानं कुर्य्युश्चेद्ब्राह्मणास्तर्हि मन्त्रोक्तयावदुक्तसमस्तफलावाप्तिश्चास्य भविष्यतीत्यत्र न कश्चित्सन्देहः ॥१॥

॥ इति दूर्वाक्षतप्रदानमन्त्रव्याख्या ॥

---

## ॥ अथ रक्षिकाबन्धनमन्त्रः ॥

ॐ यदाबध्नन्दाक्षायणा हिरण्यꣳ शतानीकाय सुमनस्यमानाः ।
तन्मऽआबध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥ १ ॥

यदाबध्नन्नित्यस्य दक्ष ऋषिस्त्रिष्टुप्छन्द आशास्यमानाशीर्देवता रक्षिकाबन्धने विनियोगः, "यो बिभर्त्ति दाक्षायणम्" "यदा बध्नन्" इत्युभयत्र तल्लिङ्गात् । दक्षस्यापत्यानि दाक्षायणाः ( नडादित्वात् फक् तस्य "आयनेयीनीयियः०" इत्यादिना आयादेशश्च बोध्यः ) दाक्षायणाः दक्षवंशोत्पन्नाः ईदृशाः ब्राह्मणाः यत् हिरण्यं शतानीकाय राज्ञे आबध्नन् आसमन्तात् बबन्धुः शतं बहूनि अनीकानि सैन्यानि यस्य सः शतानीकः ( त्रेतायुगे मिथिलायां जनकस्य राज्ञो भ्राताऽऽसीदिति श्रुतिस्मृतिपुराणतो ज्ञायते । ) तस्मै शतानीकाय राज्ञे दक्षवंशजा ब्राह्मणा यत् हिरण्यमाबद्धवन्त इति भावः । कीदृशाः दाक्षायणा इत्यपेक्षायामुच्यते । सुमनस्यमानाः मनसि शोभनं ध्यायन्तः, शोभनं मनः कुर्वते सुमनस्यन्ते, सुमनस्यन्ते इति सुमनस्यमानाः शुद्धान्तःकरणाः ब्रह्मविचारपरायणा इत्यर्थः । शुद्धे मनसि ब्रह्मविचारस्य प्रवर्त्तमानत्वात् "तन्मे मनः शिवसङ्कल्पमस्तु"इत्यादि श्रुतेः । द्विजातीनामाहारशुद्धिं प्रकृत्य "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलाभे सर्वग्रन्थीनां विप्रमोक्षः" ( छा० ७।२६ ) इति श्रुत्यन्तराच्च । मनः शुद्धिं प्रकृत्य "मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासक्तं मुक्तं निर्विषयं स्मृतम् ॥ अतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते । तस्मान्निर्विषयं नित्यं मनः कार्य्यं मुमुक्षुणा ॥" ( ब्र० वि० उ० ) इत्याथर्वणिकश्रुतेश्च । तत् हिरण्यं मे मयि आबध्नामि । मे इत्यत्र सप्तम्यर्थे षष्ठी "सुपां सुपो भवन्ती"ति वचनात् । तत् हिरण्यं स्वस्मिन्नाबध्नामीत्युक्तं भवतीति । अत्र यद्यपि हिरण्यबन्धनं नेदङ्किन्तु रक्षिकाबन्धनमर्थाद्रक्षार्थमेतत्सूत्रबन्धनं तथापि "यो बिभर्त्ति दाक्षायणꣳ. हिरण्यꣳ. स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः ।" इतिश्रुतेस्तद्धिरण्यस्य दीर्घायुष्ट्वनिमि-

त्त्वावगतेस्तद्दीर्घायुष्ट्वनिमित्तत्वमिहास्मिन्सूत्रे आरोप्यते। तेन हेतुना रक्षासूत्रे हिरण्यत्वोपचारमभिप्रेत्य तत् हिरण्यमाबध्नामीत्युक्तं भवति। तस्मादिह लुप्तोपमानमित्यूह्यम् । यथा दक्षवंशोत्पन्ना ब्राह्मणः शतानीकाय राज्ञे हिरण्यमाबध्नन् तथाहमपि स्वस्मिन् आबध्नामि इदं रक्षासूत्रमिति शेषः "अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेदि"ति वचनात्। किमर्थमाबध्नामीत्यपेक्षायामुच्यते। शतशारदाय शरदः शतं जीवनायेत्यर्थः। किञ्च यथा येन प्रकारेण अस्य रक्षासूत्रस्य बन्धनेन अहमप्यायुष्मान् दीर्घजीवी जरदष्टिश्च आसं भूयासं तथा इदं रक्षासूत्रमाबध्नामीत्यर्थः। जरदष्टिः जरामश्नुते व्याप्नोतीति जरदष्टिः। यद्वा जरन्ती जरां प्राप्ता अष्टिः शरीरं यस्य स जरदष्टिः प्राप्तवार्द्धक्यशरीर इत्यर्थः। अनेन रक्षासूत्रबन्धनेन शरीरस्वास्थ्यपूर्वकं चिरकालपर्य्यन्तं मम जीवनं सुखेनास्तामित्याशंसावाक्यार्थः। आसमिति अस्तेराशीर्लिङर्थे लङ् "छन्दसि लुङ्लङ्लिटः" इति पाणिन्युक्तेः। यद्वा आङ्पूर्वादस्तेर्लिङर्थे लेट्, तस्योत्तमपुरुषैकवचने "लेटोऽडाटौ" इत्यडागमे "इतश्चलोपः परस्मैपदेषु" इति मिप इकारलोपे "सिब्बहुलं लेटि" इति बाहुलकात्सिपोऽभावे आसमिति रूपं बोध्यम्। मन्त्रेऽस्मिन् 'मे' इत्यस्मच्छब्दोपादानात् आबध्नामि, आसम्, इत्युभयत्रोत्तमपुरुषयोगाच्च यद्यप्याशंसा मन्त्रेणानेन रक्षासूत्रबन्धनकर्तृपुरुषगतैव प्रतीयते, तथापि रक्षासूत्रबन्धनकर्तृपुरुषस्य दक्षिणाभिग्रहणसम्बन्धवशाद्यजमानगतैव बोद्धव्या "यां वैकाञ्च यज्ञऽऋत्विजऽआशिषमाशासते यजमानस्यैव सा" ( श० १।३।१।२६ ) इतिश्रुतेः। तस्मात्परार्थेऽपि रक्षाबन्धने वैदिकैर्यथास्थित एव पठनीयोऽयं मन्त्रः। अस्मिन्नपि पक्षे यथोक्तैव व्याख्यावगन्तव्या। 'तन्म' इति 'तत्त' इति यथासमित्यत्र यथासीरित्येवं वा विपरिणम्य मन्त्रः पठनीय इत्येके समामनन्ति। तस्मिन्पक्षे व्याख्यापि तथैवोह्या ॥ १ ॥

॥ इति रक्षिकाबन्धनमन्त्रव्याख्या ॥

---

## ॥ अथ जयन्तीप्रदानमन्त्रः ॥

ॐ जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तोऽअचरच्च वाते।
तेन नो वाजिन्बलवान्बलेन वाजजिच्च भव समने च पारयिष्णुः ॥ १ ॥

जवो य इत्यस्य परमेष्ठीप्रजापतिर्ऋषिर्जगतीछन्दो लिङ्गोक्ता देवता जयन्तीप्रदाने विनियोगः। जयन्त्याः यवमयत्वात् यवस्य च "या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा। मनैनुबभ्रुणा महठं शतं धामानि सप्त च।" इति श्रुतेर्ग्राम्यौषधीत्वावगतेर्ग्राम्यौषध्यन्तर्गतस्य यवस्य "याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वठंहसः ॥" इति श्रुतेरंहःपृथक्करणत्वप्रतीतेः यौति पृथक् करोति अंहः पापं द्वेषं दौर्भाग्यञ्चेति यवः, यौतेरशे आदित्वादच्प्रत्यये गुणेऽवादेशे यव इति रूपसिद्धेश्च सत्त्वात्तादृशस्य यवस्यौषधीत्वेन "सोमऽओषधीनामधिपतिः समावत्वस्मिन्" इत्याद्याथर्वणिकश्रुतेः सोमाधीनत्वप्रतिपादनात् सोमस्य च "स एव विष्णुः स प्राणः स एवाग्निः स

चन्द्रमाः" तथा "तद्वायुस्तदु चन्द्रमाः" इत्यादिश्रुतेः "यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" इति भगवद्वाक्याच्च ब्रह्मरूपत्वप्रतिपादनात् ब्रह्मणश्च "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" तथा "अन्नं वै ब्रह्म अन्नमेवोपासीत" तथा "बलं वै ब्रह्म बलमुपास्वेति" तथा "अनेजदेकं मनसो जवीयो नैनद्देवाऽआप्नुवन्०" इत्यादिश्रुतेर्जवीयस्त्वप्रतिपादनात् जवतेर्गत्यर्थत्वादर्श आदित्वादच्प्रत्यये जवति गच्छतीति जवः, तस्य जवस्य गत्यर्थत्वात् वाजपर्य्यायत्वेन वाजस्य च अन्नपर्य्यायत्वाद्बलपर्य्यायत्वाच्च वाजो वेगोऽन्नं बलं वा अस्यास्तीति वाजी तद्वाजिजवशब्दद्वयविशिष्टत्वादन्नबलरूपब्रह्मप्राप्तिफलार्थकत्वाच्चास्य मन्त्रस्य अनादिसृष्टिकालतः साम्प्रदायिकानां गुरुपरम्परातो जयन्तीप्रदाने प्रयोगदर्शनादधुनापि जयन्तीप्रदाने प्रयोगो दृश्यते ।

अथ मन्त्रार्थः। वाज इति अन्ननामेति निघण्टुः। तथा हि—वाजः "वज गतौ" (भ्वा० प०) "अकर्त्तरि च कारके संज्ञायाम्" इति घञ्। "अजिव्रज्योश्च" इति चकारस्यानुक्तसमुच्चयार्थत्वादिह कुत्वाभावश्च बोध्यः। "अत उपधायाः" इत्युपधावृद्धौ वाज इति पदं सिद्ध्यति। तदुक्तं न्यासकारेण "चकारस्यानुक्तसमुच्चयार्थत्वाद्वजेरपि कुत्वप्रतिषेधः सिद्धो भवति तेन वाजः" इति। निगम्यते अभिगम्यते हि तत्सर्वैः। गच्छत्यनेनादत्तेन सुखानि, भुक्तेन तृप्तिं वा गच्छत्यनेन शुद्धेन सत्त्वशुद्धिं भोक्ता। यदाहुः "आहारशुद्धौ सत्त्वशुद्धिः" इति। यद्वा गत्यर्था धातवो बुद्ध्यर्थाः वजति जानात्यनेन भुक्तेन धर्म्ममिति वाजः। एवं वाजशब्देन अन्नमभिधीयते। तदन्नञ्च ब्रह्मत्वेनाभिलक्ष्यते। "यदेतन्मण्डलं तपति तदन्नमथ यऽएषऽएतस्मिन्मण्डले पुरुषः सोऽत्ता" इत्यादि श्रुतेः। तथा "सर्वं खल्विदं ब्रह्मे"ति प्रकृत्य "अन्नं वै ब्रह्म तस्माद्भूतानि जायन्ते तस्मात्प्राणाश्चाधितिष्ठन्ति तस्मादन्नमेव ब्रह्मेत्युपासीत" इति श्रुत्यन्तराच्च, "अन्नं ब्रह्मा रसो विष्णु"रित्यादिस्मृतेश्च 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्॥ यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्मनामरूपमन्नञ्च जायते" इत्याथर्वणिकाश्च समामनन्ति। तदुक्तञ्च मुण्डकोपनिषदि—'तपसा चीयते०, यः सर्वज्ञः०' खं० ८।९। एवञ्चायमर्थः। वाजोऽन्नमस्यास्तीति वाजी "अत इनिठनौ" इति इन्प्रत्यये प्रथमैकवचने रूपम्। वाजी अन्नवान् अर्थाच्चन्द्रः "अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते" इत्यादि प्रकृत्य "पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तन्देवा भक्षयन्ति। तस्मिन्यावत्सम्पातमुषित्वा० मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" (छा० ५।६) इत्यादिश्रुतेः कर्म्मद्वारा ब्रह्मरूपस्यान्नस्य चन्द्रमसि स्थितत्वावगतेः। यद्वा वाज इति बलनामेति निघण्टुः। वजति गच्छत्यनेन शत्रून्प्रति जिगीषुरिति वाजः गम्यतेऽधिगम्यते व्यायामादिना यत्नेन 'वाजो बलम्' वाजयतेः प्रेरणार्थादिति माधवः, वाजयति अनेन शत्रून् प्रेरयति विद्रावयतीति वाजो बलम्। तेन ब्रह्मैवोपलक्ष्यते "बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन्परिचरिता भवति परिचरन्नुपसत्ता भवतीत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्त्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयांꣳसि च तृणवनस्पतयः श्वापदान्याकिटपतङ्गपिपीलिकं बलेन लोकस्तिष्ठति बलमुपास्वेति। १। स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य

यथाकामचारो भवति ॥ २ ॥" ( छा० ७८।) इति श्रुतेः। एवञ्चायमर्थः। वाजो बलमस्यास्तीति वाजी बलवान् अर्थाच्चन्द्रः स एव हि राहुणा ग्रस्तोऽपि तदुदरे तदीयात्मना सह युद्धं कृत्वा स्वस्य बलवत्त्वकारणेनैव तं पराजित्य तदुदरान्निःसृतो भूत्वा दिवि दृश्यते द्योतते च। वाजो बलं वेगोऽर्थाद्ब्रह्म तच्च चन्द्रगतमिति तु विनियोगविचारावसरे श्रुतिस्मृतिप्रमाणप्रदर्शनपुरस्सरमेव मयाभिहितम्। तस्य चन्द्रमसः ओषध्याधिपत्यमभिप्रेत्य चन्द्रमसम्प्रत्युच्यते। हे वाजिन्, अन्नवन्, अन्नाख्यब्रह्मरूप, चन्द्र, यद्वा हे वाजिन्, बलवन्, बलाख्यब्रह्मरूप, चन्द्र, यद्वा हे वाजिन्, वेगवन्, जवीयस्त्वब्रह्मतेजोमय, चन्द्र, यस्ते तव जवः वेगः श्रुतिप्रतिपाद्यः गुहा ("सुपां सुलुगि"ति गुहाशब्दात् ङेर्लुक्) गुहायां हृदयप्रदेशे निहितः स्थापितोऽस्तीतिशेषः। "अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्।"इति कठश्रुतेः "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्" इति तैत्तिरीयश्रुतेश्च। तथा हे वाजिन्, श्येने "सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्" इति श्रुतेर्गायत्रीरूपे श्येनाख्ये पक्षिणि च यस्ते तव जवः परीत्तः त्वयैव परिदत्तः सन् अचरत् चरति प्रवर्त्तते इत्यर्थः। अचरदित्यत्र चरतेर्लडर्थे लङ् "छन्दसिलुङ्लङ्लिटः"इति पाणिनिवचनात्। परिपूर्वाद्धातेर्निष्ठायां 'अच उपसर्गात्तः"इति तादेशे "दस्ति"इति दादेशे तकारे परे इगन्तोपसर्गस्य दीर्घे परीत्त इति पदं सिद्ध्यति। किञ्च हे वाजिन्, पूर्वोक्तगुणविशिष्ट, चन्द्र, तेन त्रिविधेन बलेन वेगलक्षेण बलाख्यब्रह्मतेजसा बलवान् वेगवान् बलाख्यब्रह्मतेजोविशिष्टः सन् नोऽस्माकं कृते वाजजित् वाजोऽन्नम् अदनीयद्रव्यरूपं ब्रह्म वा तस्य जेता भव, अस्मभ्यम् अदनीयद्रव्यं ब्रह्मज्ञानञ्च देहीत्यर्थः। यद्वा वाजो बलं तस्य जेता भव, अस्मभ्यं शारीरिकबलमाध्यात्मिकबलञ्च देहीत्यर्थः। यद्वा वाजो वेगः ब्रह्माख्यं तेजः तस्य जेता भव, कामादिशत्रुभिराहृतस्यास्य अस्मदीयब्रह्मज्ञानस्य जेता भवेत्यर्थः। प्राकृतस्य प्रसिद्धस्य वा वेगस्य जेता भव, सांसारिकभोगविषयेषु प्रसृतस्य अर्थात्तद्भोगार्थं शत्रुभूतैरिन्द्रियैराहृतस्यास्मदीयमनोवेगस्य जेता भवेत्यभिप्रायः। तथा समने सङ्ग्रामे इन्द्रियदमनार्थं कामादिभिः सह युद्धे प्रसिद्धे वास्मिन् प्राकृते देवदत्तादिशत्रुभिः सह युद्धे पारयिष्णुः पारयिता च भव, पारप्रापको भवेत्यर्थः। "पारतीर कर्म्मसमाप्तौ" इत्यस्माच्चुरादिणिजन्तात् "णेश्छन्दसि" इतीष्णुच्प्रत्ययः। हे वाजिन्, पूर्वोक्तगुणविशिष्ट, चन्द्र, यतस्त्वत्प्रसादादेव एतन्मन्त्रोक्त्यावदुक्तसमस्तफलावाप्तिर्भवतीति श्रुत्या प्रतिपाद्यते, अतोऽनेन मन्त्रेण त्वद्देवताकयवमयजयन्तीं प्रतिगृह्णामि। अनया च जयन्त्या मन्त्रोक्त्यावदुक्तसमस्तफलावाप्तिरस्माकं भवत्वित्याशंसावाक्यार्थः। नोऽस्माकमित्यत्र बहुवचनं भार्य्यापुत्राद्यपेक्षया बोद्धव्यम्, "अस्मदोद्वयोश्चे"ति पाणिवचनाद्वा। मन्त्रेणानेन यजमानार्थं जयन्तीप्रदाने "यां वै काञ्चन यज्ञऽऋत्विजऽआशिषमाशासते यजमानस्यैव सा" (श० १।३।१।२६) इति श्रुतेर्यथोक्तैव व्याख्यानुसन्धेया। "जवोयस्तेवाजिन्नि"त्यत्र हे वाजिन्, ते तव वाजिनो जव इति वाजिजवयोर्भिन्नतास्मिन्मन्त्रे प्रतीयते, तथाप्यर्थविचारदशायां वाजिजवयोस्तेजोमयब्रह्मवाचकत्वात्तदुभयोर्भेदो न विद्यते य एव वाजी तेजोमयब्रह्मांशविशिष्टो देवः स एव तेजोमयब्रह्मांशविशिष्टो जवश्च तस्माद्वाजिजवयोरद्वैतमेव, तथा च सति राहोः शिर इतिवत्षष्ठी न भेदसाधिकेत्यवगन्तव्यम् ॥ १ ॥

॥ इति जयन्तीप्रदानमन्त्रव्याख्या ॥

## ॥ अथ मृतसञ्जीविनीमन्त्रः ॥

**ॐ तत्सवितुर्वरेण्यं त्र्यम्बकं यजामहे भर्गो देवस्य धीमहि सुगन्धिं पुष्टिवर्द्धनम्। धियो योनः प्रचोदयात् उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥१॥**

अस्योद्धारश्चेत्थन्तथाहि तन्त्रसारे—"गायत्र्याः प्रथमं पादं पादैकं त्र्यम्बकस्य च। पादं द्वितीयं गायत्र्यास्तथैव त्र्यम्बकस्य च। पादं तृतीयं गायत्र्याः शेषञ्च त्र्यम्बकस्य च॥" इति। स्पष्टोऽर्थः॥ एतदुद्धारक्रमेण यादृशो मन्त्रो भवति तादृश एव मन्त्र उपरितनभागे मूले द्रष्टव्यः। इयञ्च मृतसञ्जीविनी शुक्रोपासितेति साम्प्रदायिकाः समामनन्ति।

अस्य मृतसञ्जीविनीमन्त्रस्य विश्वामित्रपरमेष्ठिनावृषी गायत्र्यनुष्टुप्छन्दसी सवितृत्र्यम्बकौ देवते मृत्युनिवारणार्थे जपे विनियोगः। तदित्यत्र "सुपां सुलुगि"ति षष्ठ्या लुक्। तत् तस्य सवितुः प्रेरकस्य सर्वान्तर्यामिणो विज्ञानानन्दस्य भावस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य वा आदित्यान्तरपुरुषस्य वा ब्रह्मणः साक्षात्स्वरूपभूतं वरेण्यं वरणीयं मृत्युनिवारणार्थं सर्वैः प्रार्थनीयमेतादृशं त्र्यम्बकं नेत्रत्रयोपेतं रुद्रं वयं यजामहे पूजयामः। तदीयजपहोमाद्यनुष्ठानैस्तं परितोषयाम इत्यभिप्रायः। तस्य कस्य इत्यपेक्षायां यत्तदोर्नित्यसंबन्धत्वात्पूर्वपादे तच्छब्दयोगादिह यच्छब्दोऽध्याहर्त्तव्यः। यस्य देवस्य द्योतनात्मकस्य पूर्वोक्तस्य श्रुतिस्मृतिप्रतिपाद्यस्य ब्रह्मणः भर्गः सर्वपापानां सर्वसंसारस्य च भर्जनसमर्थं तेजः सत्यज्ञानानन्दादिवेदान्तप्रतिपाद्यं वयं धीमहि ध्यायामः। "ध्यै चिन्तायाम्" इत्यस्माल्लिङुत्तमबहुवचने छान्दसत्वात्सम्प्रसारणे पूर्वरूपे च कृते "हलः" इति दीर्घे धीमहीति रूपं भवति। कीदृशं त्र्यम्बकं तत्रोच्यते। सुगन्धि दिव्यगन्धोपेतं मर्त्त्यधर्म्मरहितं तथा पुष्टिवर्द्धनं धनधान्यादिपुष्टेर्वर्द्धयितारमीदृशं त्र्यम्बकमित्यर्थः। तथा यश्च नोऽस्माकं धियः बुद्धीः कर्म्माणि वा प्रचोदयात् प्रकर्षेण चोदयति प्रेरयति अपमृत्युनिवारणार्थं सत्कर्म्माण्यनुष्ठातुमिति शेषः। "धीर्धारणावती मेधे"त्यमरसिंहोक्तेर्धीशब्दो बुद्धिवाचकः। तथा धीशब्दस्य कर्म्मनामसु पठितत्वादत्र धीशब्दः कर्म्मवाचकश्च। चोदयादित्यत्र लडर्थे लेट्, तस्य प्रथमपुरुषैकवचने "लेटोऽडाटौ" इत्यडागमे "इतश्चलोपः परस्मैपदेषु" इति तिप इकारलोपे "पुगन्ते"ति गुणे चोदयादितिरूपम्। "सिब्बहुलं लेटि" इति बाहुलकादत्र सिप् न भवति। तद्रुद्रप्रसादाद्वयं मृत्योः अपमृत्योः संसारमृत्योश्च सकाशात् मुक्षीय "तिङां तिङो भवन्ती"ति वचनाद्बहुवचनस्थाने इहैकवचनम्। मुक्षीमहि मुक्ता भूयास्मेत्यर्थः। किन्तु अमृतात् अभ्युदयनिःश्रेयसरूपात्फलद्वयात् मा मुक्षीय मा मुक्षीमहि मा मुक्ता भूयास्मेत्यर्थः। तत्र मोचने दृष्टान्त उच्यते, उर्वारुकमिव बन्धनादिति। बन्धनात् उर्वारुकमिव, यथा उर्वारुकं कर्कन्ध्वादेः फलमतिपक्वं सत् बन्धनात् स्वस्य वृन्तात्प्रमुच्यते न पुनस्तत्र तेन सह संयुज्यते तथैव वयमपि मृत्योः अपमृत्योः संसारमृत्योश्च सकाशान्मुक्ताः सन्तः पुनस्तत्र न संयुक्ता भूयास्मेत्यर्थः। एतदभिप्रायेणैव तस्य परब्रह्मणः साक्षात्स्वरूपभूतं त्र्यम्बकं रुद्रं वयं यजामहे सोऽस्मत्सपर्य्यया सन्तुष्टः सन् इदानीं ग्रहवैगुण्यजन्यापमृत्योः सकाशादथ संसारमृत्योश्च सकाशादस्मान्मोचयित्वाऽऽत्मज्ञानप्रदानद्वारास्मभ्यं मोक्षं च दत्वा पुनर्मुक्तेः सकाशात्कदाचिदपि मा प्रच्यावयत्वित्याशंसावाक्यार्थः॥ १॥

॥ इति मृतसञ्जीविनीमन्त्रव्याख्या॥

## ॥ अथ महामृत्युञ्जयमन्त्रः ॥

ॐ हौं ॐ जूँसः भूर्भुवः स्वः त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् भूर्भुवः स्वः रों जूँसः हौं ॐ ॥१॥

अयञ्च पञ्चाशद्वर्णात्मको महामृत्युञ्जयमन्त्रः । एतदुद्धारस्तु मन्त्रमहोदधौ षोडशस्तरङ्गे यथा—

'महामृत्युञ्जयं वक्ष्ये दुरितापन्निवारणम् ।
यं प्राप्य भार्गवः शम्भोर्मृतान्दैत्यानजीवयत् ॥ १ ॥
तारः खं व्यापिनी चन्द्रयुक् तारश्चतुराननः ।
अर्धीशबिन्दुसंयुक्तो हंसः सर्गी च भूर्भुवः ॥ २ ॥
सकारो वालसर्गाढ्यस्त्र्यम्बकं वैदिको मनुः ।
भूर्भुवः स्वर्भुजङ्गेशस्तारो जूँ सर्गवान् भृगुः ॥ ३ ॥
आकाशो मनुबिन्द्वाढ्यः प्रणवान्तो मनूत्तमः ।
महामृत्युञ्जयाख्योऽयं पञ्चाशद्वर्णनिर्मितः ॥ ४ ॥
( म० १६ स्त० ) इति ।

तार इत्यादि श्लोकचतुष्टयस्य व्याख्याचैवं, तथाहि—महामृत्युञ्जयमन्त्रस्योद्धारमाह तार इति । तारः अर्थात् 'ॐ' व्यापिनीचन्द्रयुक् अर्थात् 'औ' बिन्दुयुतं खम् अर्थात् 'हँ' तथा सति 'हौँ' पुनस्तारः अर्थात् 'ॐ' अर्धीशबिन्दुयुक्तश्चतुराननः अर्थात् ऊबिन्दुयुतो जः 'जूँ' इति यावत् तथा सर्गी हंसः अर्थात् 'सः' भूर्भुवः स्वरूपम् अर्थात् 'भूर्भुवः' इति यथास्थितमेव, तथा वालविसर्गाढ्यः वविसर्गयुतः सकारः अर्थात् 'स्वः' त्र्यम्बकमिति मामृतादित्यन्तो वैदिको मनुः अर्थान्मत्र इति यावत्, पुनरपि भूर्भुवः स्वः स्वरूपम् अर्थात् 'भूर्भुवः स्वः' इति यथास्थितमेव, तथा भुजङ्गेशः अर्थात् 'रेफः' तारः अर्थात् 'ॐ' तथा सति 'रों' ततश्च जूँ स्वरूपम् अर्थात् 'जूँ' इति, तथा सर्गवान् भृगुः विसर्गयुतः सकारः 'सः' इति, मनुबिन्द्वाढ्यः आकाशः औबिन्दुयुतो हः अर्थात् 'हौं' इति यावत्, प्रणवान्तश्चायं मन्त्रः । एवं प्रकारेण पञ्चाशद्वर्णात्मकोऽयं मन्त्रो भवति । तस्य महामृत्युञ्जयमन्त्र इति संज्ञा । संज्ञाकरणञ्च व्यवहारार्थम् । साधकानां सम्प्रदाये यथैतस्य 'महामृत्युञ्जयमन्त्रः' इति नाम्ना व्यवहार आस्तामेतदर्थमित्यर्थः । महाँश्चासौ मृत्युः महामृत्युस्तं जयति अनेन मन्त्रेण इति महामृत्युञ्जयो मन्त्रः । एतन्मन्त्रोद्धारक्रमेण यादृशो मन्त्रः स उपरिमूले द्रष्टव्यः । सम्प्रदाये कुत्रचित् वैदिकमन्त्रान्ते—"भूर्भुवः स्वरों जूँसः हौं ॐ" इति, एवमपि पाठो दृश्यते । तत्पक्षे एकोनपञ्चाश(४९)द्वर्णात्मक एव मन्त्रो भवति । तादृशस्य च मन्त्रस्योद्धारसत्त्वे तादृशोऽपि मन्त्रो भवितुमर्हति । मन्त्रोद्धारस्य त्वलाभे तादृशो मन्त्रः प्रामादिक इति वक्तुं शक्यते । सम्प्रदाये तु उभयविधस्यापि मन्त्रस्य पाठदर्शनान्न्याख्यातव्यमहामृत्युञ्जयमन्त्रस्य पाठे सन्दे-

हृतिनिराकरणार्थमेव मन्त्रमहोदधितो मन्त्रोद्धारमुद्धृत्य तच्छ्लोकचतुष्टयञ्च व्याख्याय इदानीं मन्त्रमहोदध्यनुसारेण उपरि लिखितो मूलमन्त्रो व्याख्यायते ।

अस्य श्रीमहामृत्युञ्जयमन्त्रस्य वामदेवकहोलवसिष्ठा ऋषयः पङ्क्तिगायत्र्यनुष्टुभश्छन्दांसि सदाशिवमहामृत्युञ्जयरुद्रो देवता श्रीं बीजं ह्रीं शक्तिः सकलरोगनिवारणार्थे जपे विनियोगः, मन्त्रलिङ्गस्वरसात् । अथ मन्त्रार्थः । सुगन्धिं दिव्यगन्धोपेतं मर्त्यधर्म्महीनं पुष्टिवर्द्धनं धनधान्यादिपुष्टेर्वर्द्धयितारं त्र्यम्बकं त्रीण्यम्बकानि नेत्राणि यस्य असौ त्र्यम्बको रुद्रस्तं त्र्यम्बकं त्रिनेत्रं प्रतिवक्त्रं नेत्रत्रयोपेतं रुद्रं वयं यजामहे अपमृत्युनिवारणार्थं पूजयाम इत्यर्थः । दुरितापन्निवारणार्थं पूजयाम इति वा "महामृत्युञ्जयं वक्ष्ये दुरितापन्निवारणमि"ति तन्मन्त्रोद्धारकर्त्तुर्वचनस्वरसात् । 'यजामहे' इति बहुवचनं स्वभार्य्यापुत्राद्यपेक्षया "अस्मदोद्वयोश्चे"तिपाणिनिवचनाद्वा । ततो रुद्रप्रसादान्मृत्योर्मुक्षीय एकवचनमिह बह्वर्थे "सुपां सुपो भवन्ती"तिवचनात् । वयं मुक्षीमहि अपमृत्योः संसारमृत्योश्च सकाशान्मुक्ता भूयास्मेत्यर्थः । तथा रुद्रप्रसादादमृतान्मा मुक्षीय मा मुक्षीमहि स्वर्गरूपान्मुक्तिरूपाच्च मा मुक्ता भूयास्मेत्यर्थः । अभ्युदयनिःश्रेयसरूपात्फलद्वयादस्माकं कदापि भ्रंशो मा भूयादित्यभिप्रायः । मृत्योर्मोचने दृष्टान्तः-उर्व्वारुकमिव बन्धनादिति, बन्धनादुर्वारुकमिव यथोर्वारुकं कर्कन्ध्वादेः फलमत्यन्तं पक्वं सत् बन्धनात् स्वस्य वृन्तात् प्रमुच्यते न पुनस्तत्र तेन सह संयुज्यते, तथा वयमपि मृत्योः अपमृत्योः संसारमृत्योश्च सकाशान्मुक्ताः सन्तः पुनस्तत्र न संयुक्ता भूयास्मेत्यर्थः । एतदभिप्रायेणैव वयं रुद्रं यजामहे इत्यभिप्रायः ।

ननु यं त्र्यम्बकं रुद्रं वयं यजामहे स कीदृश इत्यपेक्षायामुच्यते । ॐ शब्दब्रह्मरूपः तारः संसाराब्धेस्तारको ब्रह्मविष्णुरुद्रेश्वरमहेश्वरात्मकः सोपाधिकनिरुपाधिकपरमात्मस्वरूप इत्यर्थः, "निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः । निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः ॥" इत्याद्यागमोक्तवचनात् । शब्दब्रह्मस्वरूपप्रणवे अकारद्वारा रजोगुणो लक्ष्यते, उकारद्वारा सत्त्वगुणः मकारद्वारा तमोगुणश्चेति । नादशब्दस्यार्थो वामा, ज्येष्ठा, तथा रौद्री चेति शक्तित्रयोपलक्षकः । वामा सात्त्विकी शक्तिः, ज्येष्ठा राजसी शक्तिः, रौद्री तामसी शक्तिरेतास्तिस्रः शक्तयः । बिन्दुरपि सात्त्विकराजसिकतामसिकभेदतस्त्रिविधः । सात्त्विकबिन्दुः सात्त्विकोऽहंकारः, राजसिकबिन्दू राजसिकोऽहंकारः तामसोबिन्दुस्तामसोऽहंकार इति सांख्यमतावलम्बिनः समामनन्ति । एतद्बिन्दुत्रयादेव ब्रह्मविष्णुरुद्रा उत्पन्ना इति तेषामेव मतम् । प्रणवस्य षष्ठमङ्गं कला 'अङ्कुरः' तदर्थविवरणं यथा–कला ( अङ्कुरा )-ऽभिधानान्महेश्वररूपात्तामसिकबिन्दोः सकाशात् 'शब्दतन्मात्रा-स्पर्शतन्मात्रा-रूपतन्मात्रा-रसतन्मात्रा-गन्धतन्मात्रा, एतत्पञ्चतन्मात्रा उत्पद्यन्ते । ततश्चाकाशवायुतेजोजलपृथिव्यात्मकानि पञ्चमहाभूतानि उत्पद्यन्ते । एवं ब्रह्माभिधाद्राजसिकबिन्दोः सकाशात् 'शब्दशक्तिः-स्पर्शशक्तिः-रूपशक्तिः-रसशक्तिः–गन्धशक्तिश्चेत्येताः पञ्च शक्तयः, वाक्पाणिपादपायूपस्थेति पाञ्चभौतिकानि पञ्च कर्म्मेन्द्रियाणि चोत्पद्यन्ते । तथा विष्णुरूपात्सात्त्विकबिन्दोः सकाशात् शब्दज्ञानस्पर्शज्ञानरूपज्ञानरसज्ञानगन्धज्ञानानि पञ्च, एवं श्रवणेन्द्रियत्वगिन्द्रियदर्शनेन्द्रियरसनेन्द्रियघ्राणेन्द्रियाण्येतानि पाञ्चभौतिकानि पञ्चाज्ञानेन्द्रियाणि, मनोबुद्ध्यहंकारचित्तचित्त्वेत्येतानि पञ्चसु विभागेषु विभक्तान्यन्तःकरणानि चोत्पद्यन्ते । एतत्समुदाय एव कलाशब्देनाभिधीयते । तथा एतत्समुदायेऽनुप्रविष्टचैतन्यमेव कलातीतशब्देनोच्यते ।

यतो हि तत्समुदायेऽनुप्रविष्टत्वेनापि साक्षिचैतन्यरूपेण तत्सर्वमप्येतदतिक्रम्यैवावतिष्ठते। एतदुक्तं श्रुत्या—"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति॥" ( अ० वे० मु० ३।१।१। ) इति। एवं प्रणवस्य सप्ताङ्गानि निरूप्य इदानीं प्रणवस्य पादचतुष्टयं व्याख्यायते। तद्यथा—प्रतिवस्तुनि "स्थूलसूक्ष्मबीजसाक्षीति"एतदवस्थाचतुष्टयं वर्त्तते। या खलु स्थूलेन्द्रियद्वारा गृह्यते सा स्थूलावस्थेत्युच्यते। या च स्थूलेन्द्रियद्वारा न गृह्यते सा च सूक्ष्मेत्यभिधीयते। तथा गुणमात्रे स्थितत्वादेव बीजमित्याम्नायते। निर्गुणावस्थापन्नत्वे साक्षीत्युच्यते। एतदवस्थाचतुष्टयमेव प्रणवस्य पादचतुष्टयम्। एवं प्रणवस्य पादचतुष्टयं व्याख्याय सम्प्रति त्रिस्थानं व्याख्यायते। तद्यथा—विश्वं जाग्रदवस्थायां परिदृश्यमानं जगद्रूपम्, एवं विराट् अर्थाज्जाग्रदवस्थाभिमानी पुरुषः, एतस्य समष्टिव्यष्टिरूपं शब्दब्रह्मरूपस्य प्रवणस्य प्रथमं स्थानम्। हिरण्यगर्भाख्यं स्वप्नावस्थायां परिदृश्यमानं जगद्रूपम्, एवं तैजसः स्वप्नाभिमानी पुरुषः, एतस्य समष्टिव्यष्टिरूपं शब्दब्रह्मरूपस्य प्रणवस्य द्वितीयं स्थानम्। अव्याकृताख्यमर्थात्सुषुप्त्यवस्थायामनुभूयमानमज्ञानाधिकृतमानन्दाख्यम्, तथा प्राज्ञः सुषुप्त्यवस्थाभिमानी पुरुषः, एतस्यैव समष्टिव्यष्टिरूपं शब्दब्रह्मरूपस्य प्रणवस्य तृतीयं स्थानम्। एवञ्च सति सुतरां जीवमात्रस्य समष्टिव्यष्टिरूपेण अवस्थात्रयमेव शब्दब्रह्मरूपस्य प्रणवस्य स्थानत्रयमितिभावः। एवं त्रिस्थानत्वमभिधाय पञ्चदेवतात्वं निरूप्यते। तद्यथा—ब्रह्मा-विष्णुः-रुद्रः-ईश्वरः ( सोपाधिकः ) महेश्वरः ( निरुपाधिकः ) एता एव पञ्चदेवताः सन्ति। अतः शब्दब्रह्मरूपस्य प्रणवस्य पञ्चदेवतात्वम्। तदुक्तं शिवेन गिरिजां प्रति महानिर्वाणतन्त्रे तृतीयोल्लासे। तथाहि—"अकारेण जगत्पाता संहर्त्ता स्यादुकारतः। मकारेण जगत्स्रष्टा प्रणवार्थ उदाहृतः॥" इति। अत्र विष्णु-रुद्र-ब्रह्माख्यत्रितयमीश्वरमहेश्वरयोरप्युपलक्षकम्। तदुक्तञ्च तन्त्रमहार्णवे "सप्ताङ्गञ्च चतुष्पादं त्रिस्थानं पञ्चदैवतम्।" इत्यादि। एतदभिप्रेत्यैव शारदातिलके प्रथमपटलेऽप्युक्तं, तथाहि—"निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः। निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः॥ सच्चिदानन्दविभवात्सकलात्परमेश्वरात्। आसीच्छक्तिस्ततो नादो नादाद्बिन्दुसमुद्भवः॥ परशक्तिमयः साक्षात्त्रिधासौ भिद्यते पुनः। बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः॥ बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः। समवायः समाख्यातः सर्वागमविशारदैः॥ रौद्री बिन्दोस्ततो नादाज्ज्येष्ठा बीजादजायत। वामा ताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः॥ ते ज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्कस्वरूपिणः।" इत्यादि। तथा क्रियासारेऽभिहितं, तद्यथा—"बिन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम्। तयोर्योगे भवेन्नादस्तेभ्यो जातास्त्रिशक्तयः॥ इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी च वैष्णवी। त्रिधा शक्तिः स्थिता लोके तत्परं ज्योतिरोमिति॥" इत्यादि।

पुनः कीदृशः हौँ हकारः शिववाची तेन शिवः कल्याणकारी तथा औकारः सदाशिववाची तेन सदाशिवः सदा सर्वदा च मङ्गलमय इत्यर्थः। तथा नादोऽपरवाची तेन अपरः नास्ति परः उत्कृष्टो यस्मात् सोऽपरः सर्वोत्कृष्टः अत एव महादेवः तथा बिन्दुश्च दुःखहरार्थवाची तेन सर्वदुःखापहारकश्चेत्यर्थः। तदुक्तं शिवेन गिरिजाम्प्रति वरदातन्त्रे षष्ठपटले। यथा—"शिववाची हकारस्तु औकारः स्यात्सदाशिवः। शून्यं दुःखहरार्थं तु तस्मात्तेन शिवं यजेत्॥" इति। तथा नादमुपलक्ष्य तस्मिन्नेव प्रकरणेऽभिहितं, यथा—"ईस्तुष्ट्यर्थोऽपरो नादो बिन्दुर्दुःख-

हरार्थकः।" पुनः कीदृशः ॐ पूर्वोक्तप्रकारेण सोपाधिकनिरुपाधिकशब्दब्रह्मरूप इत्यर्थः। अतिशयार्थद्योतनार्थेह पुनरुक्तिः "अभ्यासे भूयांसमर्थं मन्यन्ते"इति यास्कवचनात्। पुनः कीदृशः जूँ "स्थिरजपन्नौ जपजः शूली च चतुराननः"इति मातृकाकोशादिह प्रकरणवशात् जकारः शूली भक्तरक्षणार्थं शूलधारीत्यर्थः। अत एव ऊ "ऊकारश्चापि रक्षणे"इति वरदातन्त्रोक्तवचनात् रक्षकः भक्तानामपमृत्योः सकाशात्पालक इत्यर्थः। तथा नादः ँ अर्थादपरः नास्ति पर उत्कृष्टो यस्मात् सोऽपरः सर्वोत्कृष्टः तथा बिन्दुः दुःखापहारकः पूर्वोक्तवचनद्वयादित्यनुषङ्गः। "ॐ हौँ ॐ जूँ"इत्यत्र प्रणवस्य वेदाक्षरत्वात्तथा "श्रुतिस्तु द्विविधा, वैदिकी तान्त्रिकी चे"ति हारितोक्तेरिहागमोक्तबीजद्वयस्यापि छान्दसत्वात्सुपां सुलुगिति सुलोपो द्रष्टव्यः। पुनः कीदृशः 'सः' अस्तीति सः ब्रह्मरूपत्वान्महाप्रलयेऽपि य एक एवावतिष्ठते स एव स इत्युच्यते "आत्मा वा इदमग्रऽआसीत्"इत्यादि श्रुतेः। तत्र "भृगुःश्वेतस्तथा हंसः"इति मातृकाकोशात्सकारो हंसवाचकः। हन्त्यहंकारमन्धकारं वेति हंसः भगवानादित्यः "हꣳसः शुचिषत्"इत्यादिश्रुतेः। सोऽपि रुद्र एव "असौ यस्ताम्रोऽअरुणऽउत बभ्रुः" इत्यादिश्रुतेः। रविरूपत्वादेवास्य रोगनाशकत्वं च, तदुक्तं श्रुत्या—"प्रथमो दैव्यो भिषक्" इति। तथा "सः"इत्यत्र यद्बिन्दुद्वयं तच्च विसर्गशब्देनाभिधीयते। तत्रैको बिन्दुः दुःखहरार्थको द्वितीयश्च सुखप्रदार्थकः। "यत्र बिन्दुद्वयं मन्त्रे एकं दुःखहरार्थकम्। अन्यत्सुखप्रदं देवि ज्ञात्वा चार्थं विचिन्तयेत्॥"इति गिरिजाम्प्रति शिवोक्तेः। तेनायं त्र्यम्बको दुःखहरः सुखप्रदश्चेत्यर्थः। पुनः कीदृशः भूर्भुवःस्वः व्याहृतित्रयप्रतिपाद्यलोकत्रयरूपोऽग्नित्रयरूपो वेत्यर्थः। तथा च श्रुतिः। "भूरिति प्रथमा व्याहृतिः भुव इति द्वितीया व्याहृतिः स्वरिति तृतीया व्याहृतिः। आभिरिमाꣳल्लोँकान्प्रजापतिरसृजत्"इति। "तस्माद्भूरित्ययं लोकः भुव इत्यन्तरिक्षलोकः स्वरितिस्वर्गलोकः"इति च। तत्तद्व्याहृत्या तत्तल्लोकस्य प्रजापतिना सृष्टत्वात्तत्तद्व्याहृतिस्तत्तल्लोकात्मिका। तस्मादिह तत्तद्व्याहृतिरूपेण तत्तल्लोकात्मक इति भावः। यद्वा "अयं वै लोको गार्हपत्यो भुवऽअन्वाहार्य्यपचनः स्वराहवनीयः"इतिश्रुतेरिह व्याहृतित्रयरूपेणाग्नित्रयरूपो वा त्र्यम्बक इत्यर्थः। "द्वे वा व ब्रह्मणो रूपे मूर्त्तं चैवामूर्त्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यच्च" इत्यादि बृहदारण्यकश्रुतेः "निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः।"इत्याद्यागमोक्तेश्च त्र्यम्बकस्यास्य रुद्रस्य अमूर्त्तपक्षे तत्तेजोमयस्योपासनाऽसम्भवाल्लोकत्रयरूपेण त्रेताग्निरूपेण वा तदुपासनार्थमिह व्याहृतित्रयरूपेण तद्रूपपरिकल्पनं साधकानां कृते उपासनासौकर्य्यार्थमेव। तदेव रुद्राध्यायेनापि वेदे सविशेषमेव प्रतिपादितमस्ति। तत्र हि आ श्वचाण्डालादि ब्रह्मादि स्तम्बपर्य्यन्तं सर्वमेव रुद्रत्वेन ध्येयमित्यभिहितम्। पुनः कीदृशः भूर्भुवः स्वः, उक्तार्थमेतद्विशेषणत्रयमतिशयार्थद्योतनार्थमिह पुनः प्रतिपाद्यते, "अभ्यासे भूयांसमर्थं मन्यन्ते"इति यास्कोक्तेः। तथा रौँ "रुचिरो रेफ ईरितः"इति मातृकाकोशादिह रुचिरार्थको रेफस्तेनायमर्थः। रुचिरः मनोज्ञः सौम्यरूपत्वाद्भक्तैः सुखसेव्यः न तु मुण्डमालादिधारणेन असौम्यत्वाद्भयङ्कर इत्याशयः। तथा ॐ उक्तार्थ एव, पूर्वोक्तप्रकारेण सोपाधिकनिरुपाधिकशब्दब्रह्मरूपः प्रणवाधिष्ठातृदेव इत्यर्थः। पुनः कीदृशः जूँसः हौँ ॐ पूर्वोक्तप्रकारेण तत्तद्बीजादिप्रतिपाद्यः। ईदृशो यस्त्र्यम्बकस्तं त्र्यम्बकं वयं यजामहे स च अस्मत्सपर्य्यया परितुष्टः सन् अस्मत्सकलग्रहोपग्रहादिसंसूचिताशेषारिष्टं झटित्यपनीय अपमृत्योः संसारमृत्योश्च सकाशादस्मान्मोचयित्वा आत्मज्ञानप्रदानद्वारास्मभ्यं मोक्षञ्च

दत्त्वा मुक्तेः सकाशात्कदाचिदपि मा प्रच्यावयत्वित्याशंसावाक्यार्थः।

॥ इति महामृत्युञ्जयमन्त्रव्याख्या ॥

---

## ॥ अथाशीर्वादीयमन्त्रः ॥

ॐ पुनस्त्वादित्या रुद्रा व्वसवः समिन्धतां पुनर्ब्रह्माणो व्वसुनीथ यज्ञैः। घृतेन त्वं तन्वं वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥१॥

प्रजापतिदृष्टा आग्नेयी त्रिष्टुप् इहाशीर्वादप्रदाने विनियुक्ता ऋगियम्। अथ मन्त्रार्थः। हे अग्ने, आदित्याः रुद्राः वसवश्च त्वा त्वां पुनः समिन्धतां समिन्धन्ताम् उपशान्तं त्वां पुनरपि सम्यग् दीपयन्त्वित्यर्थः। समिन्धतामित्यत्र वचनव्यत्ययो बोध्यः। "तिङां तिङो भवन्ती"ति वचनात् "व्यत्ययो बहुलं" "बहुलं छन्दसि" इति पाणिन्युक्तेश्च। तथा हे वसुनीथ, वसु धनं तन्निमित्ता नीथा स्तुतिर्यस्य स वसुनीथः यद्वा वसूनि धनानि नयतीति वसुनीथस्तत्सम्बुद्धौ हे वसुनीथ, हे धननेतः, अग्ने, ब्रह्माणः ब्राह्मणा ऋत्विग्यजमानाः यज्ञैः कृत्वा त्वां पुनः समिन्धतां समिन्धन्तां सम्यक् त्वां दीपयन्त्वित्यर्थः। तथा त्वं च तन्वं स्वशरीरं घृतेन अस्मद्त्तेन आज्येन वर्धयस्व। त्वयि वृद्धे सति यजमानस्य कामाः सत्याः सन्तु, अतस्त्वां प्रत्येवं प्रब्रवीमीति भावः। सत्याः सन्तु यजमानस्य कामा इत्याशीर्वादप्रकाशनलिङ्गदर्शनेनैव मन्त्रेणानेनाशिषं प्रयुञ्जन्ति साम्प्रदायिकाः। अतो मयाप्यत्र व्याख्यातोऽयं मन्त्रः॥ १ ॥

॥ इत्याशीर्वादीयमन्त्रव्याख्या ॥

॥ इति श्रीदामोदरशर्म्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये दूर्वाक्षतादिमन्त्रव्याख्यात्मकोऽयं पञ्चदशपरिच्छेदः समाप्तः ॥ १५ ॥

---

# अथ षोडशपरिच्छेदः।

## ॥ तत्रादौ शान्तिस्वस्त्ययनमन्त्रारम्भः ॥

ॐ स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥१॥

षडङ्गशतरुद्रियस्य शान्तिमन्त्रप्रकरणे व्याख्यातोऽयं मन्त्रस्तत्रास्य व्याख्या द्रष्टव्या ॥१॥

पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः।
अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवाऽअवसा गमन्निह ॥२॥

लिङ्गोक्तदेवत्या प्रजापतिदृष्टा जगतीच्छन्दस्का इह स्वस्त्ययने (स्वस्तिवाचने) विनियुक्ता ऋगियम्। अथ मन्त्रार्थः। ईदृशा मरुतो देवाः अवसा अन्नेन हविर्लक्षणेन हेतुना इह नोऽस्माकं यज्ञे आगमन् (लोडर्थे लुङ् "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनात्। आगच्छन्त्वित्यर्थः। कीदृशा मरुत इत्यपेक्षायामुच्यते। पृषदश्वाः पृषत्यः पृषतीसंज्ञकाः अश्वा वडवा वाहनभूता येषां ते पृषदश्वाः (इह पृषतीशब्दस्य पुंवद्भावः "पृषत्यो मरुतामि"ति निघण्टुवचनात्।) अथवा पृषन्तः शबलाः अश्वाः येषां ते तथोक्ताः। पुनः कीदृशाः पृश्निमातरः, पृश्निर्द्यौर्गौर्दितिर्वा माता जननी येषां ते पृश्निमातरः। तथा शुभंयावानः शुभं कल्याणं यान्ति प्राप्नुवन्ति प्रापयन्ति वा यजमानानिति शुभंयावानः ("आतो मनिन्०—" इत्यादिना वनिष्प्रत्ययः।) तथा विदथेषु यज्ञगृहेषु जग्मयः गमनशीलाः, ("आदृगमहन०–" इति किः।) तथा अग्निजिह्वाः अग्निर्जिह्वा भोजनसाधनं येषां ते तथोक्ताः, "अग्निमुखा वै देवाः" इतिश्रुतेः, हुताद इत्यर्थः। तथा मनवः मन्यन्ते जानन्तीति मनवः सर्वज्ञा इतिभावः। तथा सूरचक्षसः, सूरः सूर्य्यः चक्षः चक्षुर्येषां ते तथोक्ताः। सूरं सूर्य्यं चक्षते पश्यन्तीति सूरचक्षस इति वा। ईदृशा मरुत इत्यर्थः। किञ्च न केवलं मरुतः किन्तु विश्वे देवाः सर्वे देवाश्च नोऽस्माकं यज्ञे आगमन् आगच्छन्त्वित्यर्थः। यद्वा उत्तरार्द्धस्यायमर्थस्तथा हि–न केवलं पूर्वोक्तगुणविशिष्टा मरुत एव इहागमन् किन्तु ये च चतुर्दशमनवः, तथा ये च सूरचक्षसः सूर्य्यचक्षुषः आदित्यदर्शना मित्रवरुणाग्नयो देवा इति यावत्, "चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः"इतिश्रुतेः। ते च इह नोऽस्माकं यज्ञे आगमन् आगच्छन्त्वित्यर्थः। तथा ये च अग्निजिह्वाः अग्निमुखा हुतभोक्तारो विश्वेदेवाः सत्यवसुसंज्ञकास्तेऽपि इहागमन् नोऽस्माकं यज्ञे आगच्छन्त्वित्यर्थः। अग्निजिह्वास्तु विश्वेदेवा एव "येऽअग्निजिह्वाऽउतवा यजत्राऽआसद्यास्मिन्बर्हिषि मादयध्वम्।" इति विश्वेदेवमन्त्रेऽभिहितत्वात्। "अग्निमुखा वै देवाः"इतिश्रुतिप्रमाणसत्त्वेऽपि "अहुतादो मरुतः"

इतिश्रुतेर्मरुतामग्निजिह्वत्वासम्भवे "अग्निमुखा वै देवाः" इतिश्रुतिप्रमाणं तु मरुद्भिन्नानां देवानां कृते ह्यवगम्यते। तेन अग्निजिह्वा हुतभोक्तारो मरुद्भिन्ना अपि ये विश्वेदेवाः सत्यवसुसंज्ञकास्ते सर्वेऽपि इहागमन् इहागच्छन्त्वित्यर्थः सङ्गच्छते। यद्वा विश्वशब्दस्य सर्वशब्दपर्य्यायत्वादयमर्थः। मरुद्भिन्ना येऽन्ये देवास्ते विश्वे देवाः अर्थात्सर्वे देवा अपि इहागमन् नोऽस्माकं यज्ञे आगच्छन्त्वित्यर्थः। ते च कीदृशा इत्यपेक्षायां मन्यन्ते जानन्तीति मनवः सर्वज्ञाः, तथा सूरचक्षसः सूर्य्यचक्षुषः आदित्यदर्शनाः, तथा अग्निजिह्वाः अग्निमुखेन भोक्तारः, इत्येतद्विशेषणत्रयं योऽयम् "अग्निमुखा वै देवाः" इतिश्रुतेर्देवतामात्रं प्रति तद्विशेषणत्वस्य श्रवणात्। तेषु सर्वेष्विहागतेषु सत्सु सर्वथास्माकं कल्याणं स्यादतस्तदागमनं प्रार्थये इत्याशंसावाक्यार्थः॥ २॥

भ॒द्रं कर्णे॑भिः शृणुयाम देवा भ॒द्रं प॑श्येमा॒क्षभि॒र्यज॑त्राः।
स्थि॒रैरङ्गै॑स्तुष्टु॒वाᳪं स॑स्त॒नूभि॒र्व्य॑शेमहि दे॒वहि॑तं॒ यदायुः॥३॥

देवदेवत्या प्रजापतिदृष्टा त्रिष्टुबिह स्वस्त्ययने (स्वस्तिवाचने) विनियुक्ता ऋगियम्। यजन्तं त्रायन्ते रक्षन्तीति यजत्रास्तत्सम्बुद्धौ हे यजत्राः, यजमानपालकाः, देवाः, युष्मत्प्रसादात् स्थिरैः दृढैः शैथिल्यरहितैरितियावत्, अङ्गैः अवयवैः करचरणादिभिः तनूभिः शरीरैश्च पुत्रादिभिर्वा युतास्तुष्टुवांसः युष्मान् स्तुवन्तः सन्तो वयं युष्मत्प्रसादादेव कर्णेभिः कर्णैः भद्रं कल्याणमनुकूलं शृणुयाम। तथा अक्षभिः अक्षिभिः नेत्रैः भद्रं कल्याणं वयं पश्याम। किञ्च देवहितं देवैः स्थापितं देवानां हितं देवोपासनायोग्यं वा यदायुः यत् आयुः जीवनं तत् वयं व्यशेमहि व्यश्नुवीमहि प्राप्नुयामेत्यर्थः। कर्णेभिरित्यत्र "अतो भिस ऐस्" न भवति, "बहुलं छन्दसी"ति पाणिन्युक्तेश्छन्दसि सर्वविधीनां वैकल्पिकत्वात्। "बहुवचने झल्येदि"ति कर्णघटकस्याकारस्यैत्वन्तु भवत्येव। तेन कर्णेभिरिति कर्णैरित्यस्य स्थाने छान्दसप्रयोगोऽवगन्तव्यः। तथा अक्षभिरित्यत्र हलादावप्यक्षिशब्दस्यानङ्ङादेशो बोद्धव्यः; "बहुलं छन्दसी" ति पाणिनिवचनात्। अनङ्ङादेशे तृतीयाबहुवचने अक्षैरितिप्राप्ते पूर्वोक्तपाणिनिवचनादिहापि भिस ऐस्, अकारस्यैत्वञ्चेतिद्वयमपि न भवति। व्यशेमहीत्यत्र तु विकरणव्यत्ययोऽनुसन्धेयः, "व्यत्ययो बहुलमि"ति पाणिन्युक्तेः॥ ३॥

श॒तमिन्नु श॒रदो॒ऽअन्ति॑ देवा॒ यत्रा॑ नश्च॒क्रा ज॒रसं॑ त॒नूना॑म्।
पु॒त्रासो॒ यत्र॑ पि॒तरो॒ भव॑न्ति॒ मा नो॑ म॒ध्या री॑रिष॒तायु॒र्गन्तोः॥ ४॥

देवदेवत्या प्रजापतिदृष्टा त्रिष्टुबिह स्वस्त्ययने (स्वस्तिवाचने) विनियुक्ता ऋगियम्। हे देवाः, शतमित् (अत्र इच्छब्दोऽप्यर्थे) शतमपि शरदो वर्षाणि शतवर्षपर्य्यन्तं यूयम् अन्ति अन्तिके समीपे भवतेति शेषः। (नु इति पादपूरणे) यत्रा यस्मिन् शरच्छते नोऽस्माकं तनूनां शरीराणां यूयं जरसं जरां चक्र कुरुथ तत्र शरच्छते वार्धक्यावधि यूयमस्माकं समीपे भवतेत्यभिप्रायः। अस्माकं वार्धक्येऽपि देवपूजाभङ्गो मा भवत्वित्याशयो ध्वन्यतेऽनेन। तथा यत्र चास्माकं जरायां पुत्रासः (आज्जसेरसुगित्यसुगागमः।) पुत्रा एव पुत्रासः अर्थात् पुत्राः

पितरो भवन्ति यस्मिन् शरच्छते वार्धकावधि अस्मत्पुत्रा अपि पितरो भवेयुः पुत्रा अपि पुत्रवन्तः स्युः, यावदस्माकं पौत्रा भविष्यन्तीत्याशयः। तावत् मध्या (सुपां सुलुगिति विभक्तेराकारस्ततः सवर्णदीर्घे 'मध्या' इति रूपम्। अथवा तेनैव सूत्रेण पूर्वसवर्णदीर्घे विभक्तेर्डादेशे वा डित्वात् "टेः" इति टिलोपे 'मध्या' इति सप्तम्येकवचने रूपं बोध्यम्।) यावदस्माकं पौत्रा भविष्यन्ति तावत् मध्या मध्ये नोऽस्माकमायुर्जीवनं मा रीरिषत मा हिंसिष्ट मा विनाशयतेत्यर्थः। आयुश्च कीदृशमित्याकाङ्क्षायामुच्यते। गन्तोः गन्तृ गमनशीलमित्यर्थः। जललोलबिन्दुचपलमित्याशयः। अत इदमुक्तञ्च "सञ्चिन्त्य सञ्चिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य। वर्षासु सिक्ता इव चर्म्मदण्डाः सर्वे प्रयत्नाः शिथिलीभवन्ति ॥" इति। "चक्रा" इत्यत्र करोतेर्लिटि मध्यमपुरुषबहुवचने "द्व्यचोऽतस्तिङः" इति संहितायां दीर्घो बोध्यः, लिट् चात्र लडर्थेऽवगन्तव्यः "छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनात्। तथा "निपातस्य च" इति "यत्रा" इत्यत्र संहितायां दीर्घो बोद्धव्यः। रीरिषतेति रिषेर्हिंसार्थस्य णिजन्तस्य लुङि चङि मध्यमपुरुषबहुवचने रूपमितिचानुसन्धेयम् ॥ ४ ॥

अदि॑ति॒र्द्यौरदि॑ति॒र॒न्तरि॑क्ष॒मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः।
विश्वे॑ दे॒वा अदि॑तिः॒ पञ्च॒ जना॒ अदि॑तिर्जा॒तमदि॑ति॒र्जनि॑त्वम् ॥ ५ ॥

लिङ्गोक्तदेवत्या प्रजापतिदृष्टा त्रिष्टुबिह स्वस्त्ययने (स्वस्तिवाचने) विनियुक्ता ऋगियम्। अदितिर्देवमाता स्यादित्युक्तेरिह अदितिशब्दो देवमातृवाचकः। सा चेयमदितिरत्र देवमातृत्वादेव सर्वात्मकत्वेन स्तूयते। "अदितिरदीना" इतियास्कः। तत्र भाष्ये यद्यपि नञ्पूर्वात् द्यतेः क्तिनि "द्यतिस्यतिमास्थामित्ति किति" इतीत्वे च रूपं सिद्ध्यति, तथापि द्यतेर्नित्यमपूर्वादर्थान्वयाच्च "दीङ् क्षये" (दि. आ.) इत्यस्यैवेदं छान्दसं रूपं द्रष्टव्यमित्याह स्कन्दस्वामी। तथाचोक्तं 'न संस्कारमाद्रियेत अर्थो नित्यः परीक्षेत' (म. भा.) इति। नास्ति दितिर्दैन्यं यस्याः सा अदितिः अदीनेत्यर्थः। अदीनत्वं च तस्या देवमातृत्वादेव। एवमदितिशब्दार्थं प्रदर्श्य "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते ऋगियम्। तथाहि--अदितिरेव द्यौः द्युलोकः, तथा अदितिरेव अन्तरिक्षम् अन्तरिक्षलोकः, तथा अदितिरेव माता पृथिवीत्यर्थः, असौ मीयते निर्मीयते प्रजापतिना, मान्ति अस्यां भूतानि इति वा, मातृवल्लोकस्य रक्षिका वेति विग्रहः, मातृशब्देन इह पृथिवी अभिधीयते "इयं वै माता पृथिवी द्यौष्पिते"तिश्रुतेरन्यत्रापि मातृशब्देन पृथिव्या एवाभिधानात्। ("मा माने" (अ. प.) इत्यस्मात् तृच्प्रत्यये मातृशब्दो निष्पन्नः, "तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ, नप्तृनेष्टृ०—"इत्यादिवचनात्। अत्र मातृशब्दात् "ऋन्नेभ्यो ङीप्" इति ङीप्प्रत्ययो न भवति, "न षट्स्वस्रादिभ्यः" इति ङीपः प्रतिषेधात्। मातृशब्दस्य प्रथमैकवचने "ऋदुशन०" इत्यनङादेशेऽनुबन्धलोपे उपधादीर्घे "हल्ङ्याब्भ्यो०–" इति सुलोपे "नलोपः प्रातिपदिकान्तस्ये"ति नलोपे मातेति रूपं बोध्यम्।) तथा अदितिरेव सपुत्रः पुत्रेण सहितः सपुत्रः पिता द्यौः आकाश इत्यर्थः, "इयं वै माता द्यौष्पिते"ति श्रुतेरिह पितृशब्देन द्यौरेव गृह्यते। तत्पर्य्याय आकाशः, तस्य पुत्रश्च वायुः, "तस्माद्वा आत्मनऽ आकाशः सम्भूतः आकाशाद्वायुः" इति श्रुतेः। तत्सर्वमदितिरेव "अदितिः सर्वमि"ति

श्रुतेः। तथा अदितिरेव विश्वे देवाः सर्वे देवा इत्यर्थः। तथा अदितिरेव पञ्चजनाः देवपितृ-गन्धर्वासुरराक्षसाः निषादपञ्चमाश्चत्वारो वर्णा वा देवादयो मनुष्या वेत्यर्थः, "गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः" इति यास्कोक्तेः। तथा किं बहुना जातमुत्पन्नं प्राणिजातं जनित्वं जनिष्यमाणं च सर्वमदितिरेव "अदितिः सर्वमि"ति श्रुतेः। यतोऽदितिरेव सर्वमिति श्रुत्या प्रतिपाद्यते, अतोऽस्माभिरप्यदितिरिह स्वस्त्ययने (स्वस्तिवाचने) सर्वात्मकत्वेन स्तूयते। सा अदितिश्चास्माभिः स्तुता सती अस्माकमेतत्प्रस्तुतं कर्म्म सम्पादयत्वित्याशंसावाक्यार्थः। यद्वा द्यौरित्यादीनि जनित्वान्तानि सर्वाणि अदितिः अदित्तीनि अदीनानि अनवखण्डितानि वा तान्यस्माकं कृते महाभाग्ययुक्तानि भवन्त्वित्याशंसावाक्यार्थः॥ ५॥

**द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि॥ ६॥**

लिङ्गोक्तदेवतं प्रजापतिदृष्टमेकाधिकशकरीच्छन्दस्कमिह स्वस्त्ययने (स्वस्तिवाचने) विनियुक्तं यजुरिदम्। अस्यार्थश्चैवम्। द्यौः द्युलोकरूपा या शान्तिः, तथा अन्तरिक्षम् अर्थादन्तरिक्षरूपा च या शान्तिः, तथा पृथिवी भूलोकरूपा या शान्तिः, तथा आपः अब्रूपा जलस्वरूपा च या शान्तिः, तथा ओषधयः ओषधिरूपा या शान्तिः, तथा वनस्पतयः वनस्पतिरूपा अर्थात् वृक्षरूपा च या शान्तिः, तथा विश्वे देवाः सर्वदेवरूपा या शान्तिः, तथा ब्रह्म त्रयीलक्षणं "सत्यज्ञानानन्ते"त्यादिश्रुतिप्रतिपाद्यं वा परं ब्रह्म तद्रूपा च या शान्तिः, तथा सर्वं सर्वजगद्रूपा या शान्तिः, तथा शान्तिः शान्तिस्वरूपा एव या शान्तिः, सा शान्तिः मा मां प्रति एधि अस्तु सा शान्तिर्मम भवत्वित्यर्थः। एधीत्यत्र पुरुषव्यत्ययः "सुप्तिङुपग्रहलिङ्गनराणामि"तिवचनात् "तिङां तिङो भवन्ती"तिवचनाच्च। यद्वा द्यौरित्यादिषु विभक्तिव्यत्ययेन सप्तम्यर्थे प्रथमा "सुप्तिङुपग्रहे"ति वचनात् "सुपां सुपो भवन्ती"ति वचनाच्च। तथा "सुपां सुलुगि"ति पाणिन्युक्तेश्च। ततोऽयमर्थः। द्यौः दिवि द्युलोके या शान्तिः, तथा अन्तरिक्षम् अन्तरिक्षे अर्थात् अन्तरिक्षलोके च या शान्तिः, तथा पृथिवी पृथिव्यां भूमौ अर्थात् भूलोके च या शान्तिः, तथा आपः अप्सु जलेषु शैत्यरूपा या शान्तिः, तथा ओषधयः ओषधिषु माधुर्य्यादिसाररूपा या शान्तिः, तथा वनस्पतयः वनस्पतिषु फलपुष्पादिरूपा या शान्तिः, तथा विश्वे देवाः विश्वेषु देवेषु महाभाग्यरूपा या शान्तिः, तथा ब्रह्म ब्रह्मणि च या शान्तिः, तथा सर्वं सर्वस्मिंश्च वस्तुनि या शान्तिः, अर्थात् सर्वत्र या शान्तिः सा शान्तिः मा मां प्रत्येधि (पुरुषव्यत्ययस्त्विहापि बोद्धव्यः।) मां प्रत्यस्त्वित्यर्थः॥ ६॥

**गणानान्त्वा॥ ७॥ अम्बेऽअम्बिके॥ ८॥**

एतन्मन्त्रद्वयं देवपूजने व्याख्यातं तत्र द्रष्टव्यम्॥ ७॥ ८॥

**श्रीश्च ते॥ ९॥**

अयञ्च मन्त्रः षडङ्गशतरुद्रिये व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या॥ ९॥

यतो॑ यतः॑ स॒मीह॑से॒ ततो॑ नो॒ऽअभ॑यङ्कुरु।
शन्नः॑ कुरु प्र॒जाभ्यो॒ऽभ॑यं नः प॒शुभ्यः॑ ॥ १० ॥

परमात्मदेवत्या प्रजापतिदृष्टा भूनानुष्टुप्छन्दस्का इह स्वस्त्ययने (स्वस्तिवाचने) विनियुक्ता ऋगियम्। अत्र व्यूहेन पादपूरणं, तत्रापि द्व्यक्षरोनत्वाद्विराडनुष्टुबियमित्यवगन्तव्यं "द्वाभ्यां विराट्स्वराजौ" इति पिङ्गलकात्यायनवचनात्। सा चेयमृक् "अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेदि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि-हे परमात्मन्! यतः यतः यस्माद्यस्मात् दुश्चरितात् त्वं समीहसे चेष्टसे अस्मात्स्वपकर्त्तुमितिशेषः। ततस्ततः तस्मात्तस्मात् दुरितात् नोऽस्माकम् अभयं कुरु। तथा नोऽस्माकं प्रजाभ्यः सन्ततिभ्यो जनेभ्यश्च शं सुखं कुरु। तथा नोऽस्माकं पशुभ्यः गवादिभ्योऽभयं कुरु। अस्माकम् अस्मत्प्रजापशूनां च सर्वदा सर्वथा भीतिराहित्यं कुर्वित्याशंसावाक्यार्थः॥ १०॥

विश्वानि देव सवितः॥ ११॥

अयं च षडङ्गशतरुद्रियप्रकरणे शान्तिमन्त्रे मया व्याख्यातस्तत्रास्य मन्त्रस्य व्याख्या द्रष्टव्या॥ ११॥

* इति स्वस्त्ययन (स्वस्तिवाचन) मन्त्रव्याख्या *

---

## ॥ अथ कलशस्थापनमन्त्रारम्भः ॥

ॐ म॒ही द्यौः॑ पृथि॒वी च॑ नऽइ॒मं य॒ज्ञम्मि॑मिक्षताम्।
पि॒पृ॒तान्नो॒ भरी॑मभिः॥ १॥

द्यावापृथिवीदेवत्या गायत्री मेधातिथिदृष्टा इह कलशस्थापनप्रकरणे भूमिस्पर्शने विनियुक्ता ऋगियम्। तत्र "मही द्यौरि"ति भूमिस्पर्शः, इति याज्ञिकाः समामनन्ति, अतोऽत्र व्याख्यायते ऋगियम्। तथाहि-मही महती द्यौः द्युलोकः पृथिवी भूलोकश्च नोऽस्माकमिमं यज्ञं मिमिक्षताम् "मिह सेचने" सन्नन्तः, सेक्तुमिच्छतां स्वैः स्वैर्भागैः पूरयतामित्यर्थः। तथा भरीमभिः भरणैर्हिरण्यपशुधान्यादिभिः स्वैः स्वैर्भागैर्नोऽस्मान् पिपृताम् अस्मदीयं गृहं पूरयतामित्यर्थः॥ १॥

**अथवा**

ॐ भूर॑सि॒ भूमि॑र॒स्यदि॑तिरसि वि॒श्वधा॑या॒ विश्व॑स्य॒ भुव॑नस्य ध॒र्त्री।
पृथि॒वीं य॑च्छ पृ॒थि॒वीं दृ॑ꣳह पृथि॒वीं मा हि॑ꣳसीः॥ २॥

लिङ्गोक्तदेवत्या प्रजापतिदृष्टा प्रस्तारपङ्क्तिच्छन्दस्का इह कलशस्थापनप्रकरणे भूमिस्पर्शने विनियुक्ता ऋगियम्। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि–हे सर्वाधारभूते, भूम्यधिष्ठातृदेवते, त्वं भूः असि। "भू सत्तायाम्" (भ्वा०प०) इत्यस्मात् "स्त्रियां क्तिन्" ३।३।९४। ( पा० सू० ) इत्यस्य प्रकरणे "सम्पदादिभ्यः क्विबि"ति वार्त्तिकेन इह सम्पदादित्वाद्भावे क्विप्प्रत्ययो बोध्यः। भवत्यस्यां सर्वमिति भूः सर्वाधारभूतासीत्यर्थः। यद्वा त्वं भूः असि सुखानां भावयित्र्यसीत्यर्थः। तथा त्वं भूमिः असि "नियो मिरि"त्यस्य प्रकरणे "भुवः कित्" इति भवतेरौणादिको मिप्रत्ययः। भवन्ति प्ररोहन्ति बीजानि अस्याः सकाशादिति भूमिः सर्वेषां स्थावरजङ्गमानां प्राणिनां प्रादुर्भावयित्री च त्वमेवासीत्यर्थः। तथा त्वम् अदितिः असि, नास्ति दितिः दैन्यं यस्याः सा अदितिः अदीना विष्णुपत्नीत्वाद्दुःखरहितेतियावत्, तथा त्वमसि। अदितिशब्दनिर्वचनं तु स्वस्त्ययनप्रकरणे अदितिर्द्यौरितिमन्त्रव्याख्यायां सविशेषमुक्तं तत्तु तत्रैव द्रष्टव्यम्। अस्मिन्पक्षे अदितित्वञ्चास्याः पाञ्चभौतिकस्यास्य जगतो निर्माणे उपादानकारणत्वादेव सुप्रसिद्धम्, देवमातृत्वाद्वा अदितिः अदीना, अन्यत्समानम्। तथा त्वं विश्वधाया असीत्यनुषङ्गः। विश्वं दधाति पुष्णातीति विश्वधाया, विश्वं निहितमस्यामिति वा। तथा त्वं विश्वस्य भुवनस्य सर्वस्यास्य जगतो भूतग्रामस्य धर्त्री धारयित्री असीत्यनुषङ्गः। हे भूम्यधिष्ठातृदेवते, यतस्त्वमेवम्भूतासि अतस्त्वं पृथिवीं यच्छ कलशस्थापनभूमिं नियतां कुर्वित्यर्थः। तथा पृथिवीं कलशस्थापनभूमिं दृंह दृढीकुर्वित्यर्थः। तथा त्वं पृथिवीं मा हिंसीः मा विनाशयेत्यर्थः। केचन याज्ञिकाः कलशस्थापनेऽनेनैव मन्त्रेण भूमिं स्पृशन्ति। अतोऽयमपि मन्त्र इह व्याख्यातो मया॥ २॥

ॐ ओष॑धयुः सम॑वदन्तु सोमे॑न सुह राज्ञा॑।
यस्मै॑ कृणोति॑ ब्राह्मुणस्त१ꣳ रा॑जन्पारयामसि॥ ३॥

लिङ्गोक्तदेवत्या बन्धुदृष्टानुष्टुप्छन्दस्का इह कलशस्थापनप्रकरणे कलशस्थापनभूमेरुपरि यवप्रक्षेपणे विनियुक्ता ऋगियम्। तत्र "ओषधयः सम्" इति यवप्रक्षेपः, इति याज्ञिकाः समामनन्ति। अतोऽत्र "अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायते ऋगियं मया। तथाहि–ओषधयः ओषध्यधिष्ठात्र्यो देवताः राज्ञा स्वस्वामिना सोमेन सह समवदन्त संवादं कृतवत्यः। ओषधयः सोमेन सह किं समवदन्तेत्यपेक्षायामुच्यते। हे राजन्, स्वामिन्, सोम, ब्राह्मणः ( ब्रह्म जानातीति ब्राह्मणः, ब्रह्म वेद इति यावत्। "ब्रह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वदा। क्षरत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते॥" इति मनूक्तश्लोकस्य टीकायां ब्रह्मणः वेदस्येति मेधातिथिकुल्लूकभट्टाद्युक्तेः। ) वेदज्ञः कर्म्मानुष्ठाता स्वयं यज्ञकर्त्ता द्विजातिर्यजमानः, "आचार्य्यो ब्रह्मणो मूर्त्तिरि"ति मनूक्तेः ब्रह्मणः अयं ब्राह्मणः ब्रह्मणो मूर्त्तिराचार्य्य इति वा यजमानस्य यज्ञकारयिता यजमानप्रतिनिधिर्वराचार्य्य इति यावत्, सोऽपि ब्राह्मणः यस्मै कलशाय कृणोति करोति यवप्रक्षेपमितिशेषः। यस्य कलशस्य निधानार्थमत्र कलशस्थापनभूमेरुपरि अस्मान्प्रक्षिपतीत्यर्थः। तं कलशं वयं पारयामसि पारयामः पारयेमेतियावत्, त्वत्प्रसादादितिशेषः। कर्म्मसमाप्तिपर्य्यन्तं त्वत्प्र-

सादात्तं कलशं धारयितुं वयं यथा समर्था भवेम तथा त्वं कुरु इति समवदन्तेत्यभिप्रायः। "कृञ् हिंसायाम्" यद्यप्ययं धातुः स्वादौ हिंसार्थे पठितस्तथापि धातूनामनेकार्थत्वादिह करोतेरेवार्थे प्रतीयते। अतोऽन्येष्वपि वेदभाष्येषु सर्वत्र "कृ कृतौ स्वादि"रित्येवमुपलभ्यते। परञ्च "कृ कृतौ" इति तु स्वादौ धातुपाठे कुत्रापि न दृश्यते। तथा सति "बहुलमेतन्निदर्शनमिति" गणसूत्रेण दशगणीपाठबाहुल्याभिधानात् "डुकृञ् करणे" इति तनादिस्थ एव कृ धातुः स्वादौ पठित इति वक्तुं शक्यते। वस्तुतस्तु "छन्दसि दृष्टानुविधयो भवन्ती"त्युक्तेः करोतेरेव विकरणव्यत्ययेन कृणोतीत्यपि रूपमिह बोद्धव्यम्। एतदर्थमेव "व्यत्ययो बहुलमि"ति पाणिनिनाप्युक्तम्। तथा पारयामसीत्यत्र "पार कर्म्मसमाप्तौ" (चु० प०) इत्यस्माल्लिङर्थे लेट्, तस्योत्तमपुरुषबहुवचने "इदन्तो मसी"ति मस इदन्तादेशो बोध्यः॥ ३॥

ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा। दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनाम्पयोऽसि॥ ४॥

लिङ्गोक्तदैवतं प्रजापतिदृष्टं यजुरिदमिह कलशस्थापनप्रकरणे कलशस्थापनभूमेरुपरि-धान्यप्रक्षेपणे विनियुक्तन्तदिह "अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तद्यथा-हे व्रीह्यादिधान्य, त्वं धान्यमसि (धिनोतिः प्रीणनार्थः।) धिनोति प्रीणातीति धान्यं, यतस्त्वं धान्यमर्थात्स्वभावतः प्रीणनस्वभावमसि, अतोऽस्मिन् यज्ञे यक्ष्यमाणान् देवान् धिनुहि प्रीणयेत्यर्थः। धान्यमित्यत्रैकवचनं जात्यभिप्रायेण बोध्यम्। कृषकाणां परस्परप्रश्ने पक्वो यव इत्यत्र जात्यभिप्रायेण यथैकवचनं तद्वदत्रापीत्याशयः। तथा हे धान्य, त्वा त्वां प्राणाय परिशेषयामीति शेषः। प्रकर्षेण अनिति सर्वदा मुखे नासिकायां च चेष्टते इति प्राणः श्वासवायुः (अस्य च मुख्यं स्थानं हृदि वर्त्तते, अतोऽभिधानकारेणोक्तं "हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले। उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः॥" इति यथाप्रकरणं सर्वत्रानुसन्धेयम्।) प्राणः मुखनासिकाप्रभवः प्राणवायुः, सोऽपि इह प्रकरणवशाद्देवानामेव ग्राह्यः, तस्मै प्राणाय यक्ष्यमाणदेवतानां यः प्राणस्तत्प्रीत्यर्थं त्वां परिशेषयामीत्यर्थः। तथा हे धान्य, त्वा त्वाम् उदानाय परिशेषयामीति शेषः। उत् ऊर्द्ध्वम् अनिति चेष्टते इत्युदानः उत्क्रान्तिवायुः (अस्य मुख्यं स्थानं कण्ठे वर्त्तते।) यष्टव्यदेवतानां य उदानाख्यो वायुः तस्मै उदानाय उदानवायुप्रीत्यर्थं त्वां परिशेषयामीतिभावः। तथा हे धान्य, त्वा त्वां व्यानाय परिशेषयामीति शेषः। विशेषेण अनिति सर्वशरीरं व्याप्य चेष्टते इति व्यानः (अस्य स्थानं सर्वशरीरे वर्त्तते।) यष्टव्यदेवतानां यो व्यानः सर्वशरीरव्यापको बलहेतुर्वायुः तस्मै व्यानाय व्यानवायुप्रीत्यर्थं त्वां परिशेषयामीत्यर्थः। परिशेषणन्तु कलशस्थापनार्थावशिष्टस्य धान्यस्य हविःसाधनत्वात्तत्संरक्षणार्थाभिप्रायेण इहोच्यते, पुनर्यागान्तरस्य च सद्भावात्। पुनर्यागान्तरे च यष्टव्यदेवतानां प्राणोदानव्यानेभ्य एव त्वां परिशेषयामि न तु स्वभोजनार्थं त्वां परिशेषयामीत्यभिप्रायः। यद्वा परिशेषयामीत्यस्य स्थाने इह संस्थाप्य अभिमन्त्रयामीति वाक्यशेषोऽध्याहर्त्तव्यः। ततश्चाय-

मर्थः। हे धान्य, यक्ष्यमाणदेवतानां प्राणाय प्राणप्रीत्यर्थं त्वा त्वामिह संस्थाप्य अभिमन्त्रयामीति वाक्यशेषः। एवं हि "उदानाय त्वा, व्यानाय त्वा" इत्युभयत्रापि बोद्धव्यम्। हे व्रीह्यादिधान्य, अतोऽहं दीर्घाम् अविच्छिन्नां प्रसितिं प्रसयनं प्रसितिः ("षिञ् बन्धने" स्वा. उ., क्र्या. उ.) प्रबन्धः कर्मसन्ततिस्तामनुलक्ष्य आयुषे स्वायुषोऽभिवृद्ध्यर्थं धां दधामि (धामिति क्रियापदश्रवणादेव त्वामिति कर्म्मपदमिह कलशस्थापनभूमावित्यधिकरणपदं चेतिद्वयमपि इह क्रियापदेनैवाक्षिप्यते।) त्वामिह कलशस्थापनभूमौ धां दधामि स्थापयामीत्यर्थः। प्रसितिमिति प्रपूर्वकस्य सिनोतेः सिनातेर्वा क्तिनि द्वितीयैकवचने रूपम्। दधातेर्लङर्थे लुङि उत्तमपुरुषैकवचने "बहुलं छन्दस्यमाङ्योगेऽपी"त्यडागमाभावे धामितिरूपम्। एवं जात्याश्रयेणैकवचनत्वेन धान्यं प्रत्युक्त्वा इदानीं सर्वधान्यापेक्षया बहुवचनत्वेनोच्यते। हे धान्यानि, सविता देवः वः युष्मान् अच्छिद्रेण पाणिना अङ्गुलिविश्लेषहीनेन स्वहस्तेन प्रतिगृभ्णातु प्रतिगृह्णातु कलशस्थापनार्थं स्वीकरोत्वित्यर्थः। "हृग्रहोर्भश्छन्दसी"ति हस्य भः। "सत्यं देवा अनृतं मनुष्याः"इतिश्रुतेर्देवानां सत्यत्वाद्धेतोर्देवनामोच्चारणपूर्वकं तदीयहस्तेन इह ग्रहणं प्रार्थ्यते। किम्भूतः सविता, हिरण्यपाणिः हिरण्यं हिरण्याभरणमङ्गुलीयादिकं पाण्योर्यस्य स हिरण्यपाणिः। यद्वा यदा दैत्यैः प्राशित्रप्रहारेण छिन्नौ सवितुः पाणी, तदा देवैर्हिरण्मयौ पाणी कृताविति सवितुर्हिरण्यपाणित्वमिति बह्वृचश्रुतिकथानुसन्धेया। अथवा पुरा किल दक्षप्रजापतेर्यज्ञे भगवतो रुद्रस्य दक्षप्रजापतिनापमाने कृते रुद्रानुचरेण वीरभद्रेण सवितुः पाणी छिन्नौ। तदानीं ब्रह्मविष्णू तत्रागत्य भगवतो रुद्रस्य क्रोधापनयनं कृत्वा ताभ्यामेव सवितुर्हिरण्मयौ पाणी कृताविति पौराणिकी कथा चानुसन्धेया। किञ्च हे धान्य, त्वं महीनां पयोऽसि ("महीति पृथिवीनामेति"निघण्टुः) "मह पूजायाम्" (भ्वा. प.) इत्यस्मात् "इन् सर्वधातुभ्यः" इत्यौणादिक इन्प्रत्ययः। "कृदिकारात्" इति ङीष्। मह्यते पूज्यते प्रजाभिरिति मही, महति पूजयति देवताः स्वभारावतरणायेति वा मही। अथवा मानेन स्वगुणेन परिमाणेन स्वस्मादूनं परिमाणमर्थात्पातालं जहाति अतिक्रामतीति मही। अस्मिन्पक्षे मानशब्दाज्जहातेश्च मही। पृषोदरादित्वात् (६, ३, १०९) निर्वाहः। "आ नो महीमरतिं सजोषा" (ऋ. सं. ५, ४३, ६,) इति निगमः। एवञ्च मह्यः पृथिव्यस्तासां महीनां पृथिवीनां सम्बन्धि पयोऽसि। "पय इत्यन्ननामे"ति निघण्टुः, "अय पय गतौ" (भ्वा. आ.) इत्यस्मादसुन्प्रत्ययः। पीयते सर्वैरिति पयः अन्नं तद्धि पीयते, तद्धि चतुर्विधं पेयचोष्यलेह्यचर्व्यभेदेन। वर्द्धन्ते हि तेन भुक्तेन, "जातान्यन्नेन वर्द्धन्ते" (तै. उ. २, २) इतिश्रुतेः पयश्शब्दोऽन्नवाचकः। पयोऽसि अन्नमसि अदनीयं भवसीत्यर्थः। अतस्त्वां चक्षुषे चक्षुरिन्द्रियपाटव्याय पश्यामीति शेषः। तत्र स्वस्य कृते स्वस्य यजमानस्य कृते अमुकस्यास्येति यथा प्रकरणं सन्निवेशनीयम्। स्वकलशस्थापने चक्षुषे स्वचक्षुरिन्द्रियपाटवार्थं पश्यामि यजमानस्य कलशस्थापने चक्षुषे यजमानस्य चक्षुरिन्द्रियपाटवार्थं पश्यामीतिविवेकः। अन्नमदतां चक्षुषोर्ज्योतिर्वर्द्धते, अन्नमनश्नतां च चक्षुषोर्ज्योतिर्ह्रसते। अत एव अन्नाभावे जनानामन्धकारो भवतीत्यागोपालाङ्गनादिप्रसिद्धिः। तथा मम कदाचिदपि मा भवत्वित्यभिप्रायेण त्वामवपश्यामीत्याशंसावाक्यार्थः। केचन याज्ञिकाः "धान्यमसी"ति धान्यं विकिरेदिति समामनन्ति। अतो मयापि इह विनियोगानुसारेण व्याख्यातो मन्त्रः॥ ४॥

ॐ आजिघ्र कुलशं मुह्या त्वा व्विशन्त्विन्दवः। पुनरूर्ज्जा निवर्त्तस्व सा नः सुहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्म्माविंशताद्रयिः॥ ५॥

लिङ्गोक्तदेवत्या महापङ्क्तिः कुसुरुविन्दुदृष्टा अष्टार्णषट्पादा ऋगियम् "अतिरिक्तमि"-तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि–हे महि, ("महीति पृथिवीनामे"ति निघण्टुः) हे पृथिवि, त्वं कलशम् आजिघ्र आभिमुख्येन आघ्राणं कुरु, कलशस्य दधिदूर्वाक्षतालक्तपत्रादिभिर्भूषितत्वेन सुगन्धिमत्त्वादितिभावः। एवं पृथिवीं प्रत्युक्त्वा कलशं प्रत्युच्यते। हे कलश, इन्दवः क्लेदनसमर्थाः अर्थाज्जलसमूहाः त्वा त्वाम् आविशन्तु प्रविशन्तु, अग्रे वरुणस्योत्तम्भनमसीति जलप्रक्षेपणस्य सम्भावित्वादिह एवमुच्यते। किञ्च हे कलश, ऊर्ज्जा "ऊर्ज्ज बलप्राणनयोः" ऊर्ज्जति सर्वान्मनुष्यपश्वादीन् बलयति पानादिना दृढशरीरान् करोतीति ऊर्क्, ऊर्ज्जति सर्वान्मनुष्यपश्वादीन् प्राणयति प्रकर्षेण चेष्टयतीति ऊर्क् इति वा। एतद्व्युत्पत्तिद्वयेन वृष्टिगतो जलात्मको रस ऊर्ज्जशब्देनोच्यते "यो वृष्टादूर्ग्रसो जायते तदाहे"ति श्रुतेः। ऊर्ज्जा वृष्टिगतजलात्मकेन रसेन सह पुनः अस्मान्प्रति निवर्त्तस्व। हे कलश, देवयजनार्थं यं त्वां वयमत्र स्थापयामः स त्वं यज्ञं समाप्य तदीयफलरूपया वृष्ट्या सहास्मान्प्रत्यागच्छेत्यभिप्रायः, "निकामे निकामे नः पर्ज्जन्यो व्वर्षतु" इतिश्रुतेः, "यज्ञाद्भवति पर्जन्यः पर्जन्यादन्नसम्भवः" इति स्मृतेश्च। एवं कलशं प्रत्युक्त्वा पुनर्महीं प्रत्युच्यते। हे महि, पृथिवि, या त्वं कलशाघ्राणार्थमस्माभिः प्रार्थिता सा त्वं नोऽस्मभ्यं सहस्रं धुक्ष्व सहस्रसङ्ख्यं धनमस्मभ्यं देहीत्यर्थः। दुहतेर्दानार्थत्वादयमर्थोऽनुसन्धेयः। किञ्च त्वत्प्रसादात् उरुधारा बहुपयोयुक्ता पयस्वती ("पयस्वतीति धेनुनामे"ति निघण्टुः) पयस्वती धेनुर्मा मां पुनराविशतात् पुनः पुनः अस्मान्प्रत्यागच्छतु। त्वत्प्रसादाद्वयं सर्वदा धेनुयुक्ता भूयास्मेत्यर्थः। अस्मद्गोशाला कदापि गोशून्या मास्त्वितिभावः। तथा रयिः गोव्यतिरिक्तमन्यदपि हिरण्यादिधनं मा माम् आविशतात् अस्मान्प्रत्यागच्छत्वित्यर्थः। "सुपां सुपो भवन्ती"तिवचनात् "सुपां सुलुक्०–" इति अस्मच्छब्दस्य द्वितीयाबहुवचनस्थाने द्वितीयैकवचनम्। तत्र "त्वामौ द्वितीयायाः" इति मादेशे 'मा' इतिरूपम्। आजिघ्रेति धान्योपरि कलशस्थापनं कर्त्तव्यमिति सर्वे याज्ञिकाः समामनन्ति। अतो मयापि इह विनियोगानुसारेण एवं व्याख्यातोऽयं मन्त्रः॥ ५॥

ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भुसर्ज्जनी स्थो व्वरुणस्यऽऋतसदन्यसि व्वरुणस्यऽऋतसदनमसि व्वरुणस्यऽऋतसदनमासीद॥ ६॥

प्रजापतिदृष्टो वरुणदेवत्योऽयं यजुर्मन्त्रः। "वरुणोऽपामधिपतिः" इत्याथर्वणिकश्रुतेर्वरुणस्य जलाधिपत्वादनेन मन्त्रेण जलार्थं वरुणं स्तौति। कलशस्थापनप्रकरणेऽनेनैव मन्त्रेण कलशे जलञ्च दीयते, याज्ञिकानां प्रयोगपद्धतिषु "व्वरुणस्योत्तम्भनमसीत्युदकं पूरयेदि"ति प्रयोगदर्शनात्। तत्पक्षेऽपि वरुणस्तुतिरेव। अतो वरुणस्तुतिपूर्वकं कलशे जलप्रक्षेपोऽपि युक्त एव। प्रयोगदशायां यथावस्थ एव मन्त्रः पठनीयः, किन्तु मन्त्रार्थविचारदशायां "हे वरुणे"ति सम्बुद्धिपदं "वरुणस्ये"ति षष्ठ्यन्तपदश्रवणात्। "तवे"ति षष्ठ्यन्तपदं च तथा

"उत्तम्भनम् स्कम्भसर्ज्जनी"ति विशेषणपदद्वयश्रवणात्। "तेजः, पाशरज्जू" इतिविशेष्यपदद्वयमपि "अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेदि"तिकारिकयाध्याहर्त्तव्यम्। तथा "अस्ति, स्थः" इत्युभयत्र "सुप्तिङुपग्रहलिङ्गनराणामि"ति कारिकया "अस्ति, स्तः" इत्यपि योज्यं, "तिङां तिङो भवन्ती"ति वचनात्। ततोऽयमर्थः। हे वरुण, वरुणस्य व्रियते सर्वैः प्रार्थ्यते जलार्थमिति वरुणस्तस्य वरुणस्य वरणीयस्य सर्वैः प्रार्थनीयस्य तव उत्तम्भनमसि उत्तम्भनमस्तीत्यर्थः। उत्तभ्यते अनेन सर्वं जलप्रदानद्वारा जीवदानेन अवष्टभ्यते अनेन सर्वमिति उत्तम्भनं तेज इति शेषः। सर्वेषां स्तम्भयितृ त्वदीयं तेजोऽस्तीतिभावः। अतोऽन्यत्रापि श्रुत्याभ्युक्तम् "अस्तम्नाद्यां वृषभोऽअन्तरिक्षममिमीत व्वरिमाणं पृथिव्याः। आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि व्वरुणस्य व्रतानि।" (शु. य. वे. वा. मा. सं. ४। ३०।) इति। तथा वरुणस्य सर्वैः प्रार्थनीयस्य तव स्कम्भसर्ज्जनी स्थः स्कम्भसर्ज्जनी स्त इत्यर्थः। "स्कम्भ रोधने, सर्ज अर्जने" स्कम्भनं स्कम्भः रोधः स सर्ज्यते क्रियते याभ्यां ते स्कम्भसर्जन्यौ (विभक्तेः पूर्वसवर्णदीर्घः, "वा छन्दसी"तिपाणिन्युक्तेः।) पाशरज्जू इतिशेषः। यं कमपि त्वं निगृह्णासि तस्य रोध इतस्ततो गमनमेताभ्यां निवार्यते इत्यभिप्रायः। एतत्पाशसम्बन्धेनैव वरुणः पाशीत्युच्यते। अतः "प्रचेता वरुणः पाशी"त्यमरसिंहेनाप्युक्तम्। वाजपेययाजी सम्राट् भवति, राजसूययाजी च राजा भवति "राजा वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेने"ति श्रुतेः। तदिन्द्रे वाजपेययाजित्वफलं वरुणे राजसूययाजित्वफलं चेतिद्वयमपि श्रुतौ ह्याम्नायते "इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्रऽएतम्॥" (शु. य. वे. वा. मा. सं. ८, ३७।) इति। तत्र हि राजसूये उपवेशनार्थमुदुम्बरकाष्ठनिर्मिता आसन्दी भवति। तस्यां यजमानः सीदतीत्यभिप्रायेण इह वरुणं स्तुत्वा आसन्दीं प्रत्युच्यते। हे आसन्दि, त्वं वरुणस्य राज्ञः सम्बन्धिनी ऋतसदन्यसि ऋताय यज्ञाय सद्यते उपविश्यते यस्यां सा ऋतसदनी ("करणाधिकरणयोश्चे"ति ल्युट्प्रत्ययः।) ऋतं यज्ञस्तन्निष्पत्त्यर्थमुपवेशनस्थानभूतासीत्यर्थः। एवमासन्दीं प्रत्युक्त्वा तत्रत्यमासनं प्रत्युच्यते। हे आस्तृतासन, त्वं वरुणस्य राज्ञः ऋतसदनमसि यज्ञार्थमुपवेशनस्थानमसि। एवं वरुणासनं प्रत्युक्त्वा पुनर्वरुणं प्रत्युच्यते। हे वरुण, यतो वरुणस्य सर्वैः प्रार्थनीयस्य तव ऋतसदनं यज्ञार्थमुपवेशनस्थानं पुरा अप्यभूदितिशेषः, अत एव आसन्दीस्थितमासनं तवैव तत्र त्वमासीद सुखेनोपविशेत्यर्थः। हे वरुण, राजासने राजैवोपविशति नान्यः कश्चिदपि, अतस्त्वां प्रत्येवं प्रब्रवीमि यदत्रोपविशेति। अत्र त्वय्युपविष्टे सति त्वन्महाभाग्यत्वसन्निकर्षान्ममाप्यभीष्टसिद्धिर्भविष्यतीत्याशयः। कलशे सर्वदेवतानां पूजादर्शनात्कलशस्य देवतामात्रपूजने पीठत्वसद्भावादिह कलशे आसन्दीत्वमारोप्यते यज्ञोपवेशनसाम्यादित्यवगन्तव्यम्। अतो वरुणं प्रत्युच्यते, यत् हे वरुण, त्वमत्र आसन्दीत्वारोपितकलशास्तृतासनोपर्य्युपविशेति। एवं तव स्तुतिपूर्वकमिमं कलशमुदकेन पूरयामि। यस्मादिह तव सान्निध्यात्त्वदीयपाशभयाद्यज्ञविघातका असुरादय इह नागमिष्यन्तीत्याशंसावाक्यर्थः॥

जलप्राप्त्यर्थं तदीयमन्त्रजपपक्षेऽन्यत्र तदीयपूजनादौ च यथावदेव व्याख्यानुसन्धेया। तदुभयपक्षेऽपि अभीष्टसिद्धिः प्रचुरजलप्राप्तिश्च भवत्वित्याशंसावाक्यार्थोऽनुसन्धेयः। सर्वस्मिन्नपि पक्षेऽन्यत्सर्वं समानमेव बोद्धव्यम्॥ ६॥

## त्वां गन्धर्वा० ॥ ७ ॥

अनेन गन्धप्रक्षेप इति याज्ञिकाः समामनन्ति। अयञ्च मन्त्रः षोडशोपचारपूजाप्रकरणे व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या ॥ ७ ॥

ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा।
मनै नु बभ्रूणामहꣳ शतं धामानि सप्त च ॥ ८ ॥

लिङ्गोक्तदेवत्या बन्धुदृष्टानुष्टुप्छन्दस्का कलशस्थापनप्रकरणे सर्वौषधिप्रक्षेपणे विनियुक्ता ऋगियम्, "या ओषधीरि"ति सर्वौषधीः प्रक्षिपेदितियाज्ञिकानां प्रयोगपद्धतिषु दर्शनात्। अथ मन्त्रार्थः। तत्र मन्त्रेऽस्मिन् युगशब्दः कालवाची। त्रयाणां युगानां समाहारस्त्रियुगं त्रिकालं वसन्ते प्रावृषि शरदि च पुरा सृष्ट्यादौ या ओषधयः पूर्वाः प्रथमाः भाविनीभ्यः आद्याः जाताः उत्पन्ना बभूवुरित्यर्थः। ओषधयः किमर्थं जाता इत्यपेक्षायामुच्यते। देवेभ्यः ऋतुभ्योऽर्थायेत्यर्थः, "ऋतवो वै देवाः"इति श्रुतेः। ऋतव ओषधियुताः कर्त्तव्या एतदर्थमित्यर्थः। पूर्वार्द्धे यच्छब्दश्रवणादिहोत्तरार्द्धे तच्छब्दोऽध्याहर्त्तव्यः, यत्तदोर्नित्यसम्बन्धत्वात्। तथाहि तासां बभ्रूणां जगज्जनभरणसमर्थानामोषधीनां शतं धामानि स्थानानि सप्त च ग्राम्यारण्यभेदान् व्रीह्यादिनीवारादीन्मुरामांसादिजातिभेदाँश्च मनै नु (नु इह एवार्थे) मनै एव अहं जानाम्येवेत्यर्थः। अतो हे कलश, ताः सर्वौषधीस्त्वयि प्रक्षिपामीति वाक्यशेषः। "मन ज्ञाने" यद्यप्ययं धातुर्धातुपाठे पाणिनिना दिवादौ पठितस्तथापि "बहुलमेतन्निदर्शनमि"ति गणसूत्रेण दशगणीपाठबाहुल्याभिधानाद् भ्वादौ बोध्यः। ततो बाहुलकाल्लडर्थे लोटि आत्मनेपदे उत्तमपुरुषैकवचने शपि "टित आत्मनेपदानां टेरे" इति एत्वे "एत ऐ" इति एत ऐत्वे "मनै" इति रूपम्। यद्वा दिवादावेव यथास्थितपाठेऽपि "व्यत्ययो बहुलमि"ति पाणिन्युक्तेरिह विकरणव्यत्ययेन श्यनः स्थाने शप्प्रत्यय एव बोद्धव्यः। अन्यत्सर्वमस्मिन्पक्षेऽपि समानमेव। अथवा हीनपदाध्याहारेणास्य मन्त्रस्यायमर्थो यथा–हे सर्वौषधयः, या यूयं पुरा पूर्वकल्पे जातास्ता एव यूयं त्रियुगं ("सुपां सुपो भवन्ती"ति वचनात् "सुपां सुलुगि"ति पाणिन्युक्तेश्च सप्तम्येकवचनस्थाने प्रथमैकवचनं तेन त्रियुगमित्यस्य त्रियुगे इत्यर्थो बोद्धव्यः) त्रियुगे त्रिष्वपि सत्यादियुगेषु पूर्वा जाताः कलियुगे भाविनीभ्य ओषधीभ्यः आद्याः तदपेक्षया प्रथमोत्पन्नाः स्थेतिशेषः। तासां बभ्रूणां चिरोत्खननेन म्लानत्वात्पिङ्गलवर्णानां युष्माकं शतं धामानि ( "धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोरि"ति हैमचन्द्रोक्तेरिह धामशब्दः प्रभाववाचकः। ) प्रभावान् रोगनिवारणबलपुष्टिकर्तृत्वादिगुणविशेषानहं मनै नु ( नुनिपातः पादपूरणे ) मनै मन्ये अहं जानामीत्यर्थः। विशेषतश्च युष्माकं सप्त भेदान् यज्ञभेदेन सर्वौषधिमहौषधीत्यादिसंज्ञाविशेषांश्चाहं मनै मन्ये जानामीत्यर्थः। ज्ञात्वा च युष्मानस्मिन् कलशे प्रक्षिपामि। ता अस्माभिः कलशे प्रक्षिप्ता यूयं निर्विघ्नपूर्वकमस्माकमेतत्कर्म्म सम्पाद्य अस्मान् सुखं गमयेत्याशंसावाक्यार्थः ॥ ८ ॥

"काण्डात्काण्डादि"ति दूर्वाप्रक्षेप इति याज्ञिकाः समामनन्ति। स चायं मन्त्रः षोडशोपचारपूजाप्रकरणे दूर्वाप्रदाने व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या ॥ ९ ॥

"अम्बेऽअम्बिके" इत्याम्रपल्लवं प्रक्षिपेदिति याज्ञिकानां प्रयोगपद्धतिषु प्रयोगदर्शना त्कलशेऽनेन मन्त्रेणाम्रपल्लवप्रक्षेपो बोद्धव्यः। स चायं मन्त्रो देवपूजाप्रकरणे शक्तिमात्रार्चने व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या। तत्रायं विशेषः–हे अम्बे, हे अम्बिके, हे अम्बालिके, पल्लवाधिष्ठातृशक्तिदेवते, भवतीं सम्प्रार्थ्य भवत्या अनुकम्पातः सुरक्षितमाम्रपल्लवमस्मिन् कलशे प्रक्षिपामि। तेन निर्विघ्नपूर्वकमस्माकमेतद्देवयजनकर्म्म सम्पाद्य मां सुखं गमयेत्याशंसावाक्यार्थः। एतदेव वाक्यं भिद्यते। अन्यत्सर्वं पूर्ववदिहापि सममेव॥१०॥

## अथवा।

ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता।
गोभाजऽइत्किलासथ यत्सनवथ पूरुषम्॥ ११॥

लिङ्गोक्तदेवत्या बन्धुदृष्टानुष्टुप् इह कलशस्थापनप्रकरणेऽश्वत्थपल्लवप्रक्षेपणे विनियुक्ता ऋगियमतिरिक्तमितिकारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तत्रेदं वैशिष्ट्यम्, तथा हि–"अश्वत्थः सर्ववृक्षाणामि"ति भगवदुक्तेरश्वत्थस्य विष्णुरूपत्वावगतेर्विष्णोश्च "मूलं हि विष्णुर्देवानां यत्र धर्म्मः सनातनः।" इति कंसस्य मन्त्रिभिः सहाभिमन्त्रणप्रकरणे श्रीमद्भागवतोद्धृतप्रमाणेन सर्वदेवतामूलत्वं प्रतीयते। अतो देवाधिष्ठितत्वादेवाश्वत्थस्य लोके नतिप्रदक्षिणादिना जनैः पूजा क्रियते। तदभिप्रायेणैव कलशेऽश्वत्थपल्लवप्रक्षेपणं याज्ञिकानां सम्प्रदाये परिदृश्यते। अतोऽश्वत्थपल्लवस्थितान्देवान्प्रत्युच्यते। हे देवाः, वो युष्माकम् अश्वत्थे निषदनं निषद्यतेऽस्मिन्निति निषदनं स्थानमस्तीतिशेषः। अत एव पर्णे तदीयपत्रे वो युष्माकमनुचरभूतैरन्यैरपि देवैः वसतिः अवस्थितिः कृता। तथा यतश्च यूयमेतदश्वत्थपत्रैः सहास्मिन् कलशे सङ्गताः सन्तः गोभाजः गां मखभेदं भजन्तीति गोभाजः मखभेदभाजः इत् किल असथ किलेति विद्याप्रकर्षे, इदिति एवार्थे। मखभेदभाज एव भवथ विद्याप्रकर्षत्वाद् ज्ञानातिशयत्वादिति भावः। अतोऽश्वत्थपत्रैः सहास्मिन् कलशे यूयं सङ्गता भवथेतिवाक्यशेषः। अस्तेः शपि असथेति रूपं लटि। गोभाज इत्यत्र गोशब्दस्तु मखभेदवाचकोऽस्तीत्यवगन्तव्यं "गौर्नाऽऽदित्ये बलीवर्दे मखभेदर्षिभेदयोः। स्त्रियां स्यादिशि भारत्यां भूमौ च सुरभावपि॥" इति बृहद्वाचस्पत्यभिधानकोशात्। किञ्च हे देवाः, यूयं गोभाजः मखभेदभाजो भूत्वा पूरुषं (संहितायां छान्दसो दीर्घः।) पुरुषं यजमानं सनवथ (सनवतिः परिचर्य्यार्थः।) परिचरथ अन्नदानेन पोषयथेत्यर्थः। अतोऽहमपि युष्माकं मखभेदभाक्त्वं कर्त्तुं स्वस्य च युष्मत्तोऽन्नप्राप्त्यर्थमश्वत्थपत्रैः सह युष्मानस्मिन् कलशे प्रक्षिपामि यूयं च मयात्र प्रक्षिप्ताः सन्तो मखभेदभाजो भूत्वान्नप्रदानेन मामपि सुखं गमयतेत्याशंसावाक्यार्थः॥ ११॥

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी।
यच्छा नः शर्म्म सप्रथाः॥ १२॥

पृथिवीदेवत्या गायत्री मेधातिथिदृष्टा ऋगियम्। कलशस्थापनप्रकरणेऽनयर्चा

कलशे सप्तमृत्तिकाप्रक्षेपो भवति, "स्योना पृथिवीति सप्त मृदः" इति याज्ञिकाम्नानात्। अथ मन्त्रार्थः। हे पृथिवि, सप्तमृत्तिकाधिष्ठातृदेवते, त्वं नोऽस्माकं स्योना सुखरूपा भव स्योनशब्दस्य सुखनामसु निघण्टौ पठितत्वादितिभावः। तथा त्वं नोऽस्मभ्यं शर्म्म स्वशरणं यच्छ देहि अस्मत्कल्याणं कुर्वित्यभिप्रायः। त्वं च किम्भूतेत्यपेक्षायामुच्यते। अनृक्षरा ऋक्षरः कण्टकः "ऋच्छतेः कण्टकः कन्तपो वा कण्टतेर्वा कृन्ततेर्वा स्याद्गतिकर्म्मणः"इतियास्कोक्तेः। तद्ग्रहणं चौरदायादादिदुःखनिवृत्त्यर्थम्। न सन्ति ऋक्षराः कण्टकाः दुःखदायिनो यस्यां सा अनृक्षरा अकण्टका। तथा निवेशनी निविशन्ति जना यस्यां सा निवेशनी साधुप्रतिष्ठाना ("करणाधिकरणयोश्चे"तिल्युट्।) तथा सप्रथाः प्रथनं प्रथः विस्तारः, तेन प्रथसा सह वर्त्तमानाः सप्रथाः सर्वसः पृथुरित्यर्थः। हे पृथिवि, या त्वमेवम्भूतासि तां सप्तमृत्तिकारूपां त्वामस्मिन् कलशे प्रक्षिपामीतिवाक्यशेषः। अस्माभिश्च प्रक्षिप्ता त्वम् अस्मदीययजनकर्म्म सम्पाद्य अस्मान् सुखं गमयेत्याशंसावाक्यार्थः॥ १२॥

"याः फलिनीरि"ति पूगीफलमिति याज्ञिकाः समामनन्ति। स चायं मन्त्रः षोडशोपचारपूजाप्रकरणे व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या॥ १३॥

ॐ परि॒ वाज॑पतिः क॒विर॒ग्निर्ह॒व्यान्य॑क्रमीत्।
दध॒द्रत्ना॑नि दा॒शुषे॑॥ १४॥

आग्नेयी गायत्री सोमकदृष्टा इह कलशस्थापनप्रकरणे पञ्चरत्नप्रक्षेपणे विनियुक्ता ऋगियमतिरिक्तमितिकारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि-वाजपतिः "वाज इत्यन्ननामे"तिनिघण्टुः, वाजस्य अन्नस्य पतिः पालकः कविः क्रान्तदर्शनः अग्निः दाशुषे हवींषि दत्तवते यजमानाय रत्नानि रमणीयानि वज्रमौक्तिकवैदूर्य्यपुष्परागेन्द्रनीलकानि पञ्च रत्नानि दधत् (दधातिरिह दानार्थः, "डुधाञ् धारणपोषणयोः, दानेऽप्येके" इत्युक्तेः।) दधत् प्रयच्छन् सन् हव्यानि हवींषि पर्यक्रमीत् परिक्रान्तवान्। परिक्रमणं भक्षणार्थं स्वीकरणं तच्चकारेत्यर्थः। अग्निकर्तृकरत्नदानप्रवादं दृष्ट्वा श्रुत्वा अहमपि कलशस्थितजलाधिकरणकवैद्युतानलरूपमाध्यमिकाग्नेः सकाशात्तद्रत्नप्राप्त्यर्थमिह कलशे पञ्चरत्नं प्रक्षिपामीतिवाक्यशेषः। कणमात्रमपि पञ्चरत्नमिह प्रक्षिप्तं सत् माध्यमिकाग्नेः प्रसादान्ममापि पञ्चरत्नप्राचुर्य्यं जनयिष्यतीत्यभिप्रायेण अहमप्यस्मिन् कलशे इदं पञ्चरत्नं प्रक्षिपामि। तत्पञ्चरत्नप्रदानफलं ममापि झटित्यस्त्वित्याशंसावाक्यार्थः। "दाशृ दाने" ततो "दाश्वान्साह्वान्०—" इत्यादिना क्वसुप्रत्ययान्तो निपातः। दाशति दत्ते स्म इति दाश्वान् तस्मै दाशुषे, इति चतुर्थ्येकवचने रूपम्॥ १४॥

"हिरण्यगर्भः समि"ति हिरण्यं प्रक्षिपेदिति याज्ञिकाः समामनन्ति। स चायं मन्त्रः पञ्चमहायज्ञान्तर्गतब्रह्मयज्ञजपमन्त्रव्याख्याप्रकरणे व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या॥१५॥

"युवा सुवासाः" इति वस्त्रमिति याज्ञिकाः समामनन्ति। स चायं मन्त्रः समावर्त्तनप्रकरणे व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या॥ १६॥

ॐ पूर्णा द॑र्वि॒ परा॑ पत सु॒पूर्णा॒ पुन॒राप॑त।
व॒स्नेव॒ विक्री॑णावहा॒ऽइष॒मूर्ज॑ꣳ शतक्रतो॥ १७॥

प्रजापतिदृष्टा ऐन्द्यनुष्टुप् इह कलशस्थापनप्रकरणे कलशोपरि पूर्णपात्रस्थापने विनियुक्ता ऋगियम्, "पूर्णा दर्वी"ति पूर्णपात्रमुपरि न्यसेदिति याज्ञिकाम्नानात्। चातुर्म्मास्ये साकमेधपर्वणि यद्यपि दर्व्या स्थालीत ओदनग्रहणे विनियुक्ता ऋगियं, तथाप्यनया ऋचा कलशस्थापनप्रयोगे कलशोपरि पूर्णपात्रस्थापनं विदधति सर्वे साम्प्रदायिकाः। अस्मिन्पक्षे पूर्णपात्रे दर्वीत्वारोपो बोद्धव्यः, पूर्णपात्रस्य दर्व्या सह पूर्णत्वसामान्यात्। यथा दर्वी ओदनेन पूर्णा तथैव पूर्णपात्रमपि तण्डुलैः पूर्णम्। एकत्र तण्डुलस्यैव विकृतिर्यदोदनम्। इतरत्र तु ओदनस्यैव प्रकृतिर्यत्तण्डुलद्रव्यम्। अथ मन्त्रार्थः। हे दर्वि, अन्नप्रदानसाधनभूते, काष्ठादिनिर्मिते, त्वं पूर्णा स्थाल्याः सकाशादन्नं गृहीत्वा तेनान्नेन पूर्णा भूत्वा परा पूर्णत्वादेवोत्कृष्टा सती पत इन्द्रं प्रति गच्छेत्यर्थः। तथा सुपूर्णा कर्म्मफलेन सुष्ठु पूर्णा सती त्वं पुनरापत भूयोऽस्मान्प्रत्यागच्छेत्यर्थः। एवं दर्वीम्प्रत्युक्त्वा इन्द्रम्प्रत्युच्यते। हे शतक्रतो, बहुकर्म्मन्, इन्द्र, त्वं चाहं चोभौ वस्नेव वस्नशब्देन मूल्यमुपलक्ष्यते। (अत्र तृतीयायाः पूर्वसवर्णो बोध्यः।) वस्नेन मूल्येन इव इषमभीष्टं हविःस्वरूपमन्नमूर्जं हविर्दानफलरूपं रसविशेषञ्च विक्रीणावहै परस्परं द्रव्यविनिमयरूपं विक्रयं करवावहै। अहं तुभ्यं हविर्ददामि, त्वं च मह्यं फलं देहीत्यर्थः। वस्तुतस्तु अयमर्थः स्पष्टतया दर्व्यामेव सङ्गटते न तु पूर्णपात्रे। किन्तु पूर्णपात्रे दर्व्याः अध्यारोपणत्वेन दर्वीशब्देनापि इह पूर्णपात्रमेव स्तूयते न तु दर्वी, तदर्थस्येहानुपपत्तित्वात्। यद्वा 'पूर्णा, सुपूर्णा' इत्युभयत्र "सुपां सुलुगि"ति विभक्तेराकारः, छान्दसत्वात्स्त्रीत्वं वा, ब्रह्म पूता पुनातु मामितिवदिहापि बोद्धव्यम्। तथा "सुप्तिङ्‌ङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन॥" इति कारिकया दर्वीघटकदीर्घकारस्याचो व्यत्ययेन ह्रस्वस्तत्परस्योपमावाचकस्येवशब्दस्य छान्दसो लोपश्चानुसन्धेयः, "समूढमस्य पांꣳसुरे" इतिवत्। तथा सति "अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत्।" इति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि—हे पूर्णपात्र, त्वं दर्वि दर्वी इव पूर्णा अर्थात् पूर्णं तण्डुलादिभिः परिपूर्णं भूत्वा परा (अत्रापि विभक्तेराकारः स्त्रीत्वं वाऽऽर्षम्) अर्थात् परं पूर्णत्वादेवोत्कृष्टं सत् पत कलशोपरीतिशेषः। कलशाधिष्ठितं देवं प्रति गच्छेत्यर्थः। तथा सुपूर्णा अर्थात् सुपूर्णं कर्म्मफलेन सुष्ठु पूर्णं सत् त्वं पुनरापत भूयोऽस्मान्प्रत्यागच्छेत्यर्थः। एवं पूर्णपात्रं प्रत्युक्त्वा तदधिष्ठातृशतक्रतुं प्रत्युच्यते। हे शतक्रतो, शतयज्ञ, पूर्णपात्राधिष्ठातृदेव, त्वं चाहं चोभौ वस्नेव ("बहुलं छन्दसी"ति पाणिन्युक्तेश्छन्दसि सर्वविधीनां वैकल्पिकत्वादिह आङ इनादेशाभावे तृतीयाविभक्तेः पूर्वसवर्णः "सुपां सुलुगि"त्यादिपाणिनिवचनात्। शिश्नेतिवदिहाप्यवगन्तव्यम्।) वस्नेन मूल्येन इव इषम् अभीष्टं हविःस्वरूपमन्नम् ऊर्ज्जं हविर्दानफलरूपं रसविशेषञ्च विक्रीणावहै परस्परं द्रव्यविनिमयरूपं विक्रयं करवावहै। अहं तुभ्यं पूर्णपात्रस्थं तण्डुलरूपं हविर्ददामि, त्वं च मह्यं पूर्णपात्रस्थतण्डुलरूपहविःप्रदानफलं देहीत्यर्थः॥ १७॥

"पूर्णादर्वी"त्यस्य पूर्णाहुतावपि (प्रयोगो) विनियोगो दृश्यते। तत्पक्षे "स्रुवः खादिरः,

अङ्गुष्ठमात्रवृत्तपुष्करः" इति कात्यायनवचनेन स्रुवस्याङ्गुष्ठमात्रवृत्तपुष्करत्वावगतेः स्रुवस्य दर्व्या सह मुखसाम्यात्स्रुवे दर्वीत्वारोपस्य सामञ्जस्यमेव। अतः पूर्णाहुतिहोमपक्षे किञ्चिदेव वाक्यं भिद्यते। तद्यथा—हे दर्वि, दर्व्याकृतिस्रुवाख्ये, होमसाधनभूते, त्वं पूर्णा आज्यस्थाल्याः सकाशाद् घृतं गृहीत्वा तेन घृतेन पूर्णा भूत्वा परा पूर्णत्वादेवोत्कृष्टा सती पत पूर्णाहुतिहोमाधिष्ठातृदेवं प्रति गच्छेत्यर्थः। अन्यत्सर्वं पूर्ववत्सममेव बोद्धव्यम्॥ १७॥

"तत्त्वा यामीति वरुणमावाह्य वरुणं पूजयेदि"ति याज्ञिकाम्नानात्तत्त्वा यामीत्ययं मन्त्र इह कलशस्थापनप्रकरणे वरुणावाहने तत्पूजने च विनियुक्तो दृश्यते। स चायं मन्त्रः स्नानप्रकरणे प्रागेव व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या॥ १८॥

एवं "मनोजूतिरिति कलशं प्रतिष्ठापयेदि"ति याज्ञिकाः समामनन्ति। अयञ्च मन्त्रोऽग्रे प्राणप्रतिष्ठामन्त्रव्याख्यावसरे व्याख्यास्यते। तत्रास्य व्याख्या द्रष्टव्या॥ १९॥

सम्प्रदाये तु कुत्रचित् "श्रीश्च ते" इति श्रीफलं दत्वा "मनोजूतिरि"ति कलशे प्रतिष्ठाप्य तत्र "तत्त्वा यामी"ति वरुणं पूजयेदित्यपि प्रयोगो दृश्यते। तत्पक्षे कलशस्थापनप्रकरणे कलशे श्रीफलान्तसर्वसम्भारप्रक्षेपणानन्तरं वरुणपूजेत्यवगन्तव्यम्। "श्रीश्च ते" इति श्रीफलप्रदानमन्त्रस्य व्याख्या षडङ्गशतरुद्रियमन्त्रव्याख्याप्रकरणे पुरुषसूक्ते द्रष्टव्या॥ २०॥

॥ इति कलशस्थापनमन्त्रव्याख्या॥

---

## ॥ अथ नवग्रहमन्त्राः॥

आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥ १॥

अथ नवग्रहाः—"सूर्य्यः सोमस्तथा भौमो बुधजीवसितार्कजाः। राहुः केतुरिति प्रोक्ता ग्रहा लोकहितावहाः॥" इति स्कान्दप्रमाणात्। तेषां नवग्रहाणां मन्त्राश्च यथा याज्ञवल्क्येनोक्तास्तथा प्रदर्श्यन्ते। तथाहि—"आकृष्णेन इमन्देवा अग्निर्मूर्द्धा दिवः ककुत्। उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्त्तिताः॥ बृहस्पतेऽतियदर्य्यस्तथैवान्नात्परिस्रुतः। शन्नो देवीस्तथा काण्डात्केतुं कृण्वन्निति क्रमात्॥" इति। तत्र आकृष्णेनेत्यस्य हिरण्यस्तूप ऋषिस्त्रिष्टुप्छन्दः सूर्य्यो देवता सूर्य्यपूजने सूर्य्यप्रीत्यर्थे तदीयजपहोमादौ च विनियोगः। पञ्चदेवतापूजने व्याख्यातोऽयं मन्त्रस्तत्रास्य व्याख्या द्रष्टव्या॥ १॥

इमं देवाऽअसपत्नꣳ सुवद्ध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इममुमुष्य पुत्रममुष्यै पुत्रमस्यै विशऽएष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजा॥२॥

अस्य मन्त्रस्य प्रजापतिर्ऋषिरत्यष्टिच्छन्दः सोमो देवता सोमपूजने सोमप्रीत्यर्थे

तदीयजपहोमादौ च विनियोगः, पूर्वोक्तयाज्ञवल्क्यवचनात्, सोमोऽस्माकमित्यत्र सोमलिङ्गश्रवणाच्च। लिङ्गञ्च "अर्थप्रकाशनं शब्दसामर्थ्यं लिङ्गम्" इति मीमांसायां स्पष्टम्। अतो मन्त्राणां विनियोगप्रक्रमे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति जैमिनिना सूत्रं सूत्रितम्। सोमलिङ्गात्सोमपूजनादौ तदीयजपहोमादौ च विनियुक्तोऽयं मन्त्र इति स्पष्टम्। सोमश्चन्द्रः स एवेहाभिप्रेतो न तु वल्लीरूपस्तस्य नवग्रहाणां मध्ये देवतारूपत्वेन ग्रहणानर्हत्वात्। अतश्चान्द्रमसोऽयं मन्त्रः, "अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः। हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः॥" इत्यमरसिंहोक्तेः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि-हे देवाः, इन्द्रादयः, यूयम् इमं चन्द्रं देवं सुवध्वं प्रेरयध्वम् अस्मदभीष्टसिद्ध्यर्थं, यजमानपक्षे यजमानाभीष्टसिद्ध्यर्थमिति शेषः। किञ्च युष्माभिः प्रेरितः एष सोमः अयं चन्द्रः असपत्नं शत्रुरहितं यथा स्यात्तथा कृत्वा सत्कर्मणि सुव्यवहारे च अस्मानपि सुवत्विति शेषः। सति हि सपत्ने नानोपद्रववत्वेन व्यग्रचित्तत्वाद्विधिवदनुष्ठानासंभवात्। यद्वा नास्ति सपत्नः शत्रुः शारीरिकव्याधिर्ज्वरादिर्यस्मिन् कर्म्मणि तद्यथा स्यात्तथा कृत्वा सत्कर्म्मणि सुव्यवहारे च अस्मानपि सुवत्विति शेषः, शत्रुभूते ज्वरादौ शरीरस्थे सति सत्कर्म्मणि सुव्यापारे च मनसोऽसंलग्नत्वात्। किमर्थं सुवत्वित्यपेक्षायामुच्यते। महते क्षत्राय क्षत्रस्येदं क्षात्रं (ह्रस्वत्वन्तु छान्दसम्) तस्मै क्षत्राय क्षात्रत्वप्राप्त्यर्थमित्यर्थः। क्षात्रञ्चात्र पराक्रमत्वमभिप्रेतं तदस्माकं सत्कर्मणा सुव्यापारेण च यथा स्यात्तथा तत्कर्त्तुं प्रेरयत्विति भावः। तथा महते ज्यैष्ठ्याय ज्येष्ठस्य भावो ज्यैष्ठ्यं तस्मै ज्यैष्ठ्याय श्रेष्ठभावायेत्यर्थः। श्रेष्ठत्वं च विद्याजातिविनयधनादिसम्पत्तिभिरुच्चत्वमभिप्रेतं, तदस्माकं सत्कर्मणा सुव्यापारेण च यथा स्यात्तथा तत्तत्कर्त्तुं प्रेरयत्विति भावः। तथा महते जानराज्याय जनानामिदं जानं, राज्ञ इदं राज्यं, जानं च तद्राज्यं चेति जानराज्यं तस्मै जानराज्याय जनाधिपत्यायेत्यर्थः। येन सत्कर्म्मणा सुव्यापारेण च जनाधिपत्यमस्माकं भूयात्तथा तत्तत्कर्म्म कर्त्तुमस्मान् प्रेरयत्वित्यभिप्रायः। तथा इन्द्रस्य आत्मनः इन्द्रियाय इन्द्र आत्मा तस्य इदम् इन्द्रियं ज्ञानं तस्मै इन्द्रियाय आत्मज्ञानायेत्यर्थः। येन सत्कर्म्मणास्माकमात्मज्ञानं सम्पद्येत तत्कर्म्म कर्त्तुमस्मान् प्रेरयत्वित्याशयः। इमं चन्द्रं किम्भूतमित्यपेक्षायामुच्यते। अमुष्य सूर्य्यस्य पुत्रं "सुषुम्णः सूर्य्यरश्मिश्चन्द्रमे"ति श्रुतेः। तथा अमुष्यै (षष्ठ्यर्थे चतुर्थी) अमुष्याः दिशः पुत्रम् अत्रिमहर्षेश्चक्षुर्न्निःसृतं तेजो दिशा धृतं ततः सोमो जात इति वायुपुराणे स्थितत्वात्तदभिप्रायेणोच्यते। तथा अस्यै विशे अस्याः विशः समस्तसंसारप्रजायाः अधिपतिमितिशेषः। यद्वा किमर्थमयं दिशा धृत इत्यपेक्षायामुच्यते। अस्यै विशे अस्यै प्रजायै (तादर्थ्ये चतुर्थी) एतत्प्रजार्थमित्यर्थः। आप्यायनप्रकाशादिभिः प्रजानामनुग्रहणायेति भावः। एवम्भूतमिमं चन्द्रम् अस्मदभीष्टसिद्ध्यर्थं, यजमानपक्षे यजमानाभीष्टसिद्ध्यर्थञ्च सुवध्वमिति वाक्यार्थः। इमं चन्द्रं सुवध्वमिति देवान्प्रत्युक्तन्तत्र कारणमुच्यते। हे देवाः, अमी अमुकदेशवासिनो जनाः, अर्थात् अमुकदेशवासिन्यः प्रजाः वो युष्माकं सन्तीति शेषः। अतः स्वप्रजानामुपकारार्थं तदभीष्टसिद्धिकर्म्मणि यूयं चन्द्रं सुवध्वम्। कृतोपकारस्यैवोपकारप्रसिद्धेः सत्यवसरे इमा अपि प्रजाः हविर्दानेन युष्मानप्युपकरिष्यन्तीत्याशयः। किञ्च हे देवाः, एष सोमः अयं चन्द्रोऽस्माकं ब्राह्मणानां ब्रह्मविदां द्विजातीनां राजा प्रभुरस्तीतिशेषः। अतो वयं तमेव सोमं चन्द्रमनु-

ध्यायामः पूजयामश्चेति वाक्यार्थः । किञ्च राजते शोभते इति राजा दीप्यमानः स्वतेजसा भासमानः सोमश्चास्मान् सदैवाभीष्टफलप्रदानेनानुगृह्णात्विति शेषः । राजा राजसूययाजी वा सोमः "राजा वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेन तरति सर्वं पाप्मानं योऽश्वमेधेन यजेत" इतिश्रुतेः । यमेवम्भूतं चन्द्रं वयं यजामः सोऽस्मानापद्भ्यो रक्षतु अरिष्टनिरसनेन भोग्यपदार्थप्रदानेन च सुखयतु चेत्याशंसावाक्यार्थः ॥२॥

अ॒ग्निर्मू॒र्द्धा दि॒वः क॒कुत्पति॑ः पृथि॒व्या॒ऽअ॒यम् ।
अ॒पाꣳ रेता॑ꣳसि जिन्वति ॥ ३ ॥

अस्य मन्त्रस्य विरूप ऋषिर्गायत्री छन्दः कुजो देवता कुजपूजने कुजप्रीत्यर्थे तदीयजपहोमादौ च विनियोगः, पूर्वोक्तयाज्ञवल्क्यवचनात् । तत्र "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । तत्र पूर्वोक्तयाज्ञवल्क्यवचनस्वरसादयमिति पदेन कुज एवाकृष्यते । तथाहि—अपां रेतांसि जिन्वति अयं कुज इति शेषः । "अप इति कर्म्मनामे"ति निघण्टुः । "जिन्वतिः प्रीतिकर्म्मा गतिकर्म्मा वे"ति यास्कः । अपां कर्म्मणां रेतांसि साराणि सुखरूपेण परिणतानि शुभकर्म्मणां परिणामफलानि नित्यत्वात् जिन्वति गमयति प्रापयतीत्यर्थः । भक्तेभ्यः सुखानि ददातीत्यर्थः । यद्वा अयं कुजः अपां रेतांसि जिन्वति द्युलोकात्पात्यमानानां धारारूपाणामपां कारणानि जिन्वति पुष्णाति वृष्टिं जनयतीत्यर्थः । "अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने" इति श्रुतेर्वृष्ट्यर्थमपां प्रेरणस्य चन्द्रकर्तृत्वावगतेस्तत्रैवायमपि चन्द्रमण्डलसञ्चारित्वेन वृष्टिकारणान्युत्पादयति । तदेव श्रुत्या प्रतिपाद्यते "अपाꣳ रेताꣳसि जिन्वति" इति । एतच्छ्रुत्यभिप्रायेणैव ज्योतिर्निबन्धेऽप्युक्तं निबन्धकर्त्रा "चलत्यङ्गारके वृष्टिस्त्रिधा वृष्टिः शनैश्चरे"इति । अङ्गारकः कुज एव, "अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः" इत्यमरसिंहोक्तेः । अयं कुजः किम्भूत इत्यपेक्षायामुच्यते । दिवो मूर्द्धा दिवोऽन्तरिक्षलोकस्य मूर्द्धा शिरो भूतः । तत्र स्थितत्वात्तन्मूर्द्धत्वेनोपचर्य्यते, श्रेष्ठ इति भावः । "दिव्" इत्यन्तरिक्षनाम । तदुक्तममरसिंहेन "द्योदिवौ द्वे स्त्रियामभ्रम्" इति । पुनरयं कुजः किम्भूतः अग्निः अग्रगणीः श्रेष्ठतरः अग्निवत्तेजस्वित्वादग्निवद्रक्तवर्णत्वाद्वा । कुजस्य रक्तवर्णत्वं प्रसिद्धं, तच्च "आवन्त्यं क्षत्रियं रक्तम्" इत्यादियाज्ञिकैरप्युक्तम् । "लोहिताङ्गं नमाम्यहम्" इति व्यासोक्तेश्च । "लोहितो लोहिताक्षश्च सामगानां कृपाकरः" इति तदीयस्तोत्रादावपि दर्शनाच्च । अग्निशब्दस्य साधनप्रणाली व्याख्यान्ते स्फुटीभविष्यति । सा चाग्रे द्रष्टव्या । अयं कुजः पुनः किम्भूतः ककुत्पतिः "ककुदमिति महन्नामे"ति निघण्टुः, तस्यान्तलोप आर्षः । ककुतां महतां पतिः ककुत्पतिः महज्जनपालक इत्यर्थः । कर्म्मानुष्ठानरतानेवायं पाति कर्म्मानुष्ठानविमुखांस्तु नाशयतीत्याशयः । तथा पृथिव्याः भूमेः पुत्र इति शेषः । भूमिपुत्रत्वञ्चास्य प्रसिद्धमेव "आदित्याभिमुखं भौमम्" "धरणीगर्भसम्भूतम्" "लोहिताङ्गो महीसुतः" इत्याद्युक्तेः । य एवं गुणविशिष्टोऽयं कुजस्तमहं परिचरामि अनुध्यायामि च । परिचरतेः पूजनार्थत्वान्मत्सपर्य्यया परितुष्टोऽयं कुजो ममाशेषारिष्टं झटित्यपनीय मां सुखं गमयत्वित्याशंसावाक्यार्थः । अग्निशब्दस्य साधनप्रणाली प्रदर्श्यते । तथाहि—अग्रे प्रथमं नयतीत्यग्निः, अग्रोपपदान्नयतेः "सत्सूद्विषद्रुहदुहयुज-

विदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्"इति पाणिनीयसूत्रेण क्विप्प्रत्यये क्विपः सर्वापहारलोपे पृषोदरादित्वादग्रशब्दस्य रेफाकारयोर्लोपे कृदन्तत्वात्प्रातिपदिकत्वे स्वाद्युत्पत्तौ सकारस्य रुत्वे विसर्गे च कृते प्रथमैकवचनेऽग्निरिति पदं सिध्यति। त्रिविधा हि शब्दव्यवस्था—प्रत्यक्षवृत्तयः, परोक्षवृत्तयः, अतिपरोक्षवृत्तयश्चेति । अत्र चातिपरोक्षवृत्त्याग्निशब्दः कुजविषयेऽग्रणीरित्यर्थं गमयतीत्यवगन्तव्यम्। ननु अग्निशब्दो वह्नावेव प्रसिद्धोऽस्ति कथन्तर्हि कुजविशेषणत्वेनेह स्वीकृत इति चेत्तत्रोच्यते। द्विविधो हि शब्दो यौगिको रौढिकश्च। यत्र रूढ्या निर्वाहो न जायते तत्र यौगिककल्पनयैव शब्दार्थः सङ्गच्छते। अग्निशब्दस्य वह्नौ सुप्रसिद्धत्वेऽपि सति कुजविषयेऽग्निशब्दोपादाने तदर्थस्यानुपपत्तित्वादिह यौगिककल्पनयाऽग्निशब्दस्य कुजविशेषणत्वेनाग्रगण्यार्थकत्वमिति नात्र तिरोहितमिवास्तीति समाधानम्। यद्वा अग्निरिति षष्ठ्यर्थे प्रथमा, तत्र इवशब्दाध्याहारेणायमर्थः। अग्निः अर्थात् अग्नेर्मूर्द्धा इव अयं कुजो दृश्यते, इति शेषः। अतिरक्तवर्णत्वादिति भावः। तथा दिवः द्युलोकस्य अन्तरिक्षस्य वा ककुत् चिह्नं भूषणमित्यर्थः। अथवा दिव इत्युपलक्षणं सर्वस्यास्य जगतो महत्कारणमित्यर्थः, वृष्टिप्रदत्वादिति भावः। अत एव पतिः सर्वस्यास्य जगतः पालकोऽपीत्यर्थः। तथा पृथिव्याः पुत्र इतिशेषः। ईदृशोऽयं कुजः। अन्यत्समानम्॥ ३॥

उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते सꣳसृजेथामयञ्च।
अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत॥ ४॥

उद्बुध्यस्वेत्यस्य परमेष्ठी ऋषिस्त्रिष्टुप्छन्दो बुधो देवता बुधपूजने बुधप्रीत्यर्थे तदीयजपहोमादौ च विनियोगः, पूर्वोक्तयाज्ञवल्क्यवचनस्वरसात्। तत्र "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यातेऽयं मन्त्रः। तथाहि-हे अग्ने, अग्रे प्रथमं नयतीत्यग्निः तत्सम्बुद्धौ हे अग्ने, अग्रगण्य, सर्वश्रेष्ठ, हे बुध, त्वम् उद्बुध्यस्व उद्बुद्धो भव सुप्रकाशो भवेत्यर्थः। किञ्च हे बुध, त्वं प्रतिजागृहि "जागृ निद्राक्षये" ममाभीष्टसिद्ध्यर्थं जागरूकश्च भव निद्रारहितो भवेत्यर्थः। किञ्च हे बुध, त्वत्प्रसान्मम इष्टापूर्त्ते श्रौतस्मार्त्ते कर्म्मणी संसृजेथाम् (अत्र पुरुषव्यत्ययः) संसृजेतां संसृष्टे भवतामित्यर्थः। किञ्च हे बुध, त्वत्प्रसादादयं मम यजनानुष्ठानप्रयोगश्च फलेन सह संसृजेतामितिवाक्यशेषः। फलेन सह संसृष्टो भूयात्सफलो भवत्वित्यर्थः। तथा सति यजमानः त्वदीयो यष्टाहमस्मिन्सधस्थे सह तिष्ठन्त्यस्मिन्निति सधस्थः ("सुपि स्थः" इति कः, "सधमादस्थयोश्छन्दसि" इति सहस्य सधादेशश्च) तस्मिन् सधस्थे स्वीयेऽस्मिन् सहावासे पुत्रकलत्रादिभिः सहितेऽस्मिन् स्वीयस्थाने त्वत्प्रसादादरिष्टनिरसनेन नैरुज्यो भूत्वा यथा सीदेयं तथा कुर्विति शेषः। कथमित्यपेक्षायामुच्यते "अध्युत्तरस्मिन् विश्वेदेवाः सीदत" इति, अत्र "तिङां तिङो भवन्ती"ति वचना"त्सुप्तिङुपग्रहे"ति करिकया पुरुषव्यत्ययः, बहुलं छन्दसीति पाणिन्युक्तेर्लडर्थे लोट् च बोद्धव्यः, लुप्तोपमानं चैतत्, सप्तम्यन्तं सधस्थपदं चाध्याहर्तव्यन्ततोऽयमर्थः। यथा विश्वेदेवाः सर्वे देवा उत्तरस्मिन् सर्वोत्कृष्टे सधस्थे देवैः सह स्थितियोग्ये रविलोके द्युलोके अधि अधिकं चिरकालं सीदत सीदन्ति तिष्ठन्ति तथाहमप्यस्मिन् सधस्थे स्वपुत्रकलत्रादिभिः सह स्थितियोग्ये स्वावासस्थाने सीदामीत्यभिप्रायः। इह लोके सुखं भुक्त्वाऽन्तेऽपि त्वत्प्रसादा-

देव उत्तरस्मिन् उत्कृष्टे तस्मिन् द्युलोके सत्यामीत्यप्यनुषङ्गः। "द्यौर्वा उत्तरठँ सधस्थम्" इति श्रुतेर्विश्वैर्देवैः सहान्ते स्वस्य सालोक्यञ्च मया प्रार्थ्यते, इति भावः। मन्त्रेणानेन परार्थानुष्ठानेऽपि "यां वै काञ्चन यज्ञे आशिष मृत्विजऽआशासते यजमानस्यैव सा" इति श्रुतेर्यथोक्तैव व्याख्यानुसन्धेया ॥ ४ ॥

बृह॑स्पते॒ऽअति॒ यद॒र्यो॒ऽअर्हा॑द्द्यु॒मद्वि॒भाति॒ क्रतु॑मु॒ज्जने॑षु ।
यद्दी॒दय॒च्छव॑सऽऋतप्रजात॒ तद॒स्मासु॒ द्रवि॑णन्धेहि चि॒त्रम् ॥ ५ ॥

"बृहस्पते" इत्यस्य गृत्समद ऋषिस्त्रिष्टुप्छन्दो बृहस्पतिर्देवता बृहस्पतिपूजने बृहस्पतिप्रीत्यर्थे तदीयजपहोमादौ च विनियोगः, पूर्वोक्तयाज्ञवल्क्यवचनस्वरसात्। तथा बृहस्पतिसवे बार्हस्पत्यग्रहणेऽस्य मन्त्रस्य विनियुक्तत्वाच्च। "बृहस्पते" इति बृहस्पतिलिङ्गश्रवणात्कात्यायनेन तत्र विनियोग उक्तः। बृहस्पतिशब्दार्थस्तत्साधनप्रणाली चैवं, बृहतां देवानां पतिः बृहत्पतिरितिप्राप्ते "तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्चे"ति पारस्करगणसूत्रेण सुडागमे बृहच्छब्दावयव तकारस्य लोपे च बृहस्पतिरिति पदं सिध्यति। बृहस्पतिः गुरुः अर्थात्सुराचार्य्यत्वाद्देवपालक इत्यर्थः। यद्वा बृहतः वाचः पतिः बृहस्पतिरिति "वाग्वै बृहती तस्या एष पतिर्बृहस्पतिः" इति श्रुतेः, बृहस्पतिर्वाचस्पतिर्गीष्पतिरिति यावत्। अतोऽमरसिंहेनाप्युक्तं "बृहस्पतिः सुराचार्य्यो गीष्पतिर्धिषणो गुरुः" इति। अष्टौ यानि व्याकरणानि तत्रैकं बार्हस्पतं व्याकरणमिति गुरुपरम्परातः श्रूयते। किन्तु यमनराज्यशासने ("औरङ्जेब" इत्यस्य समये) बहूनां पुस्तकानां विनाशे तत्रास्यापि बार्हस्पतव्याकरणस्य विनष्टत्वान्नेदानीं तदुपलभ्यते।

अथ मन्त्रार्थः। बृहतां देवानां पतिः गुरुत्वात्तत्पालको बृहस्पतिः, यद्वा बृहतः वाचः पतिः बृहस्पतिर्वाक्पतिस्तत्सम्बुद्धौ हे बृहस्पते, देवगुरो, व्याकरणशास्त्रप्रणेतर्वा हे सुराचार्य्य, चित्रं नानाविधं तत् द्रविणं धनम् अस्मासु त्वदनुष्ठानकर्तृषु धेहि धारय स्थापयेत्यर्थः। अस्मभ्यं तद्धनं देहीति भावः। तत् किं धनमित्यपेक्षायामुच्यते। अर्य्यः स्वामी अर्थाद्धनस्वामी वैश्यो वा यद्धनम् अत्यर्हात् अतिशयेन अर्हति पूजयतीत्यर्थः। इह लडर्थे लेट् "लेटोऽडाटौ" इत्यडागमः, "इतश्च लोपः परस्मैपदेषु" इति तिप इकारलोपश्च बोध्यः। "अर्य्यः स्वामिवैश्ययोरि"त्यभिधानादिह अर्य्यशब्दो धनस्वामिवाचको वैश्यवाचकश्चेत्यनुसन्धेयम्। तत्र अर्य्यशब्दः स्वामिन्यन्तोदात्तो वैश्ये आद्युदात्तः। ईश्वरयोग्यं तद्धनं देहीप्यभिप्रायः। किं च हे बृहस्पते यद्धनं जनेषु लोकेषु विभाति विविधं शोभते, इत्यर्थः। तद्धनं कीदृशमित्यपेक्षायामुच्यते। यद्धनं द्युमत् द्यौः कान्तिस्तदस्यास्तीति द्युमत् "दिव उत्" इत्युकारः, तथा क्रतुमत् क्रतवो यज्ञा विद्यन्ते इति क्रतुमत् येन धनेन यज्ञाः क्रियन्ते तादृशं धनं देहीत्यर्थः। किञ्च हे ऋतप्रजात, ऋतात् सत्यात् ब्रह्मणः सकाशात् प्रजातं प्रकृष्टं जातं जन्म यस्य स ऋतप्रजातस्तत्सम्बुद्धौ हे ऋतप्रजात, ब्रह्मोत्पन्न, बृहस्पते, तद्धनमस्मासु धेहि स्थापय अस्मभ्यं देहीत्यर्थः। यद्धनं शवसः ("सुपां सुपो भवन्ती"ति तृतीयैकवचने ङसादेशः) शवसा "शव इति बलनामे"ति निघण्टुः, बलेन दीदयत् दापयति प्रापयति वा धनान्तरं, तद्धनं देहीत्यर्थः। 'दीदयत्' इति "दय दानगतिहिंसादानेषु" इत्यस्मा-

णिजन्तात् "छन्दसि लुङ्लङ्लिटः" इतिपाणिन्युक्तेर्लडर्थे लुङि प्रथमपुरुषैकवचने रूपम्। अडभावश्च आर्षः, "बहुलं छन्दस्यमाङ्योगेऽपि" इति पाणिनिवचनात्॥ ५॥

अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमं प्रजापतिः।
ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु॥६॥

अन्नात्परिस्रुत इत्यस्याश्विसरस्वतीन्द्रा ऋषयोऽतिजगतीच्छन्दः शुक्रो देवता शुक्रपूजने शुक्रप्रीत्यर्थे तदीयजपहोमादौ च विनियोगः, पूर्वोक्तयाज्ञवल्क्यवचनस्वरसात्, शुक्रमन्धस इति शुक्रलिङ्गाच्च। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि—"सुपां सुपो भवन्ती"ति वचनात्प्रथमैकवचनस्थाने द्वितीयैकवचनं शुक्रमिति। वस्तुतस्तु विनियोगत इह शुक्र इति प्रथमान्तत्वेनोह्यम्, ततोऽयमर्थः। ईदृशः शुक्रः शुक्रग्रहो दैत्यगुरुः ब्रह्मणा वेदेन गायत्रीलक्षणेन ईदृशं रसं व्यपिबत् विविच्य विशेषेण वा पीतवानित्यर्थः। कीदृशं रसमित्यपेक्षायामुच्यते। अन्नात्परिस्रुतः (अत्र द्वितीयैकवचनस्थाने प्रथमाबहुवचनं प्रथमैकवचनं वा "सुपां सुपो भवन्ती"ति वचना "त्सुपां सुलुगि"त्यादिपाणिन्युक्तेश्च) अन्नात्परिस्रुतम् अन्नं भक्तपरम् अदनीयद्रव्यमात्रपरं वा अद्यते यत्तदन्नं तस्मादन्नात् अर्थाद्भक्ताद्देर्द्राक्षादेर्वा सकाशात् परिस्रुतं परि सर्वतो भावेन च्यावितम् एतादृशं रसमित्यर्थः। कीदृशः शुक्र इत्यपेक्षायामुच्यते प्रजापतिः "प्रजा स्यात्सन्ततौ जने" इत्यभिधानात्प्रजाशब्दोऽत्र जनवाचकः, तेन प्रजानां जनानामर्थात् भक्तजनानां पतिः पालक इत्यर्थः। रसं व्यपिबदित्युक्तङ्किन्तु कस्य रसमिति नोक्तन्तदपेक्षायामिदमुच्यते, यत् अन्धसः संबन्धिनं रसमित्यर्थः। (अन्ध इत्यन्ननामेति निघण्टुः) तेन अन्धसः अन्नस्य अर्थात्सुरारूपान्नस्येति यावत्। तत्सम्बन्धिनं रसं व्यपिबदिति भावः। ननु ब्राह्मणो भूत्वा सुरारूपान्नस्य रसं कथङ्कारं व्यपिबदित्याशङ्कयोच्यते। क्षत्रं क्षत्रभावं क्षत्रियत्वं स्वीकृत्येति शेषः, क्षत्रियस्य सुरापानप्रसिद्धेः। "ब्राह्मणो मदिरां पीत्वा ब्राह्मण्यादेव हीयते" इत्यादिवचनेन ब्राह्मणस्य सुरापानप्रतिषेधात् क्षत्ररूपं धृत्वा पीतवानिति भावः। तथा सुरारसं पीत्वा पयः सोमं च व्यपिबत् इदं पयः क्षीरम् इमं च सोममिति विविच्य पीतवानित्याशयः। ऋतेन सत्येन ब्रह्मणा वेदेन गायत्रीलक्षणेन सुरारसपानादिदं सत्यं जातं यत् वेदोक्तविधिना सुरापानं न दोषावहमितिशेषः; "सौत्रामण्यां सुरां पिबेदि"ति वचनात्। तदिदं विपानं विविच्य पानमर्थाद्वेदोक्तविधिना सुरापानम् इन्द्रियम् इन्द्रः आत्मा तस्य इदमिन्द्रियमर्थाद्वीर्यप्रदमिति भावः। तथा इन्द्रस्य शक्रस्य इन्द्रियं वीर्य्यप्रदं च जातमिति शेषः। अथ कदाचिन्नमुचिनेन्द्रस्य वीर्य्यं पीतं तेनेन्द्रो हतवीर्य्यो बभूव। पश्चाद्धतवीर्य्योऽपीन्द्रो बृहस्पतिप्रसादादपां फेनेन नमुचेः शिर उदवर्त्तयत्। तस्मिन् हते रुधिरमिश्रः सोमो जातस्तं लोहितमिश्रं सोममश्विनौ देवभिषजौ तत्सहकारिणी सरस्वती च गृहीत्वा तेनेन्द्रस्य भैषज्यं चक्रुरिन्द्रश्च तद्विपानतस्तद्भैषज्यप्रसादाच्च वीर्य्यवानभूदिति श्रुतिकथानुसन्धेया। तदभिप्रेत्य इह एवमुक्तं यत् "इन्द्रस्येन्द्रियम्" इति। तथा च श्रुतिः "यमाश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय" इत्यादि। "अश्विनौ ह्येनं नमुचेरध्याहरताम्" इति श्रुत्यन्तरञ्च। "अपां फेनेन नमुचेः शिर इन्द्रोदवर्त्तयः" इति च। "तस्य शीर्ष्णि छिन्ने लोहितमिश्रः सोमोऽतिष्ठत् तस्मादबीभत्सन्त त

एतदन्धसो विपानमपश्यन् सोमो राजाऽमृतꣳ सुत इति तेनैनꣳ स्वदयित्वाऽऽत्मन्नदधत" इति च। पुनः कीदृशं तद्विपानम् अमृतम् अजरामरत्वप्रदं तथा मधु मधुरं च एवं पयोऽपि तादृशं जातमन्यत्समानम्। यः प्रजापतिः भक्तजनपालक एवम्भूतः शुक्रः पूर्वोक्तं रसं पयः सोमञ्च व्यपिबत्तस्याहं सपर्य्यामनेन मन्त्रेण विदधामि स च शुक्रोऽनया सपर्य्यया अनेन जपहोमाद्यनुष्ठानेन च तुष्टो भूत्वा ममाऽशेषारिष्टं झटित्यपनीय मां सुखं गमयत्वित्याशंसा-वाक्यार्थः॥ ६॥

शन्नो॑ दे॒वीर॒भिष्ट॑य॒ऽआपो॑ भवन्तु पी॒तये॑।

शꣳय्योर॒भिस्र॑वन्तु नः॥ ७॥

शन्नो देवीरित्यस्य दध्यङ्ङाथर्वण ऋषिर्गायत्रीच्छन्दः शनिर्देवता शनिपूजने तत्प्रीत्यर्थे तदीयजपहोमादौ च विनियोगः, पूर्वोक्तयाज्ञवल्क्यवचनात्। पुरानेन मन्त्रेण ग्रहत्वे शनेरभिषिक्तत्वादस्य मन्त्रस्य स्मृतिकारेण शनेः पूजनादौ विनियोगः प्रदर्शितः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे शने, तवाराधनतत्पराणां नोऽस्माकं कृते त्वं शं भवेति शेषः। त्वमस्माकं स्वार्चकानां कल्याणकारको भूया इति भावः। मदरिष्टमपनयेत्याशयः। तदुपायः प्रदर्श्यते। यथा त्वत्प्रसादाच्च देवीः (दीव्यन्तीति देव्य इति प्राप्ते "वा छन्दसी"ति पूर्वसवर्णदीर्घे देवीरिति) देव्यः द्योतमानाः आपः भवन्तु शं कल्याण्य इत्यनुषङ्गः। यथा पूर्वं तव ग्रहत्वाभिषेके आपो देव्यः कल्याणकारिण्योऽभूवन् तथास्माकमपि त्वत्प्रसादादेव इमा आपो देव्यः काल्याणकारिण्यो भवन्त्वित्यर्थः। अपां वैषम्येनैव नानारोगा उत्पद्यन्ते तैरभिभूताः सन्त एव लोका म्रियन्ते अतस्तन्निरासार्थमस्माकमियमभ्यर्थना तवान्तिकेऽस्तीति भावः। अपां च वैषम्याभावे रोगादेरप्यभावादस्माकं निर्दुष्टजीवनत्वे सति चिरकालपर्य्यन्तं नैरुज्येन शरीरस्वास्थ्ये नानापदार्थभोग्येन सर्वमेव सुखं स्यात्तत्तथा त्वया कर्त्तव्यं यथापो देव्योऽस्माकं सर्वदा सुखदा भवेयुरित्यभिप्रायः। तदेव पुनः स्पष्टीक्रियते। हे शने, अभिष्टये अभिलषितस्नानाचमनादिकार्य्यसिद्धये पीतये पानाय च आपो देव्यः कल्याणकारिण्यो भवन्त्वित्यर्थः। स्नाने पाने चास्मान् आपः सुखयन्त्विति भावः। तथा आपो देव्यः शꣳय्योः अभिस्रवन्तु कर्म्मणि षष्ठी वचनव्यत्ययश्च, "सुपां सुपो भवन्ती"ति वचनात्। शं च युश्चेति शꣳय्यू शं शमनं तच्च रोगाणाम्, युः यवनं पृथक्करणं तच्च भयानां, तदुभयं च यथा स्यात्तथाऽऽपो देव्योऽस्माकं कृते सुस्वादु रसमभिस्रवन्तु परिक्षरन्त्वित्यर्थः। किञ्च हे शने, यस्य तव प्रसादादापो देव्यस्तथाभूता भविष्यन्ति तं त्वामनुध्यायामः पूजयामश्च त्वञ्चास्माकं सपर्य्यां गृहीत्वातीव तुष्टः सन्नस्मान् सुखं गमयेत्याशंसावाक्यार्थः॥ ७॥

कया॑ नश्चि॒त्रऽआभु॑वदू॒ती स॒दावृ॑धः॒ सखा॑।

कया॒ शचि॑ष्ठया वृ॒ता॥ ८॥

कया न इत्यस्य वामदेव ऋषिर्गायत्रीच्छन्दो राहुर्देवता राहुपूजने तत्प्रीत्यर्थे तदीय-

जपहोमादौ च विनियोगः। यद्यपि राहुपूजने याज्ञवल्क्येन "काण्डात्काण्डादि"त्ययं मन्त्र उक्तस्तथापि याज्ञिकानां सम्प्रदाये "कया नश्चित्रऽआभुवदिति राहोरुदाहृतः।" इति स्कन्दपुराणोद्धृतवचनात् कया न इत्यस्य राहोः पूजनादौ प्रयोगो दृश्यते। पूर्वमनेन मन्त्रेण राहुरभिषिक्त इति हेतोस्तत्प्रियोऽयं मन्त्रस्तस्मादनेन राहोः पूजनादिकं क्रियते, इति याज्ञिकानां परामर्शः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि—चित्रः चयनीयः पूजनीयः "राहुरिति शेषः" कया ऊती ऊत्या अवनम् ऊतिस्तया ऊत्या तर्पणक्रियया नोऽस्माकमर्चकानां सखा सहायः आभुवत् आसमन्ताद्भावेन भूयादित्यर्थः। ऊतीत्यत्र "ऊतियूतिजूती"त्यादिना क्तिन्प्रत्यये "ज्वरत्वरे"त्यादिना उपधावकारयोरूठि कृदन्तत्वात्प्रातिपदिकत्वे तृतीयैकवचने "सुपां सुलुगि"ति पूर्वसवर्णदीर्घो बोध्यः। आभुवदित्यत्राङ्पूर्वाद्भवतेराशंसायां लिङर्थे लेट्। तस्य प्रथमपुरुषैकवचने "बहुलं छन्दसी"ति सर्वविधीनां छन्दसि वैकल्पिकत्वा "ल्लेटोऽडाटावि"त्याडागमाभावपक्षे शपि शप इकारपकारयोर्लोपे "इतश्च लोपः परस्मैपदेष्वि"ति तिप इलोपे शपश्छान्दसे ङित्वे ङित्वाद्गुणाभावे धातोरुवङादेशे आभुवदिति रूपम्। किञ्च चित्रः चयनीयः पूजनीयो राहुः कया शचिष्ठया अतिशयेन शची शचिष्ठा तया शचिष्ठया ( शचीति कर्म्मनामेति निघण्टुः, तत अतिशयार्थे इष्ठन्प्रत्ययः, ततो "यस्येति चे"ति इकारलोपश्च बोध्यः ) सातिशयकर्म्मवत्या कया आवृता आवृच्छब्देन क्रिया उच्यते आसमन्ताद्वर्त्तते इत्यावृत्तया आवृता यागक्रियया सदावृधः सदा वर्धते इति सदावृधः "इगुपध०" इति कप्रत्ययः, सदा वर्धमानश्च आभुवदित्यनुषङ्गः। कया चानुष्ठानपरिपाट्या पूजितो राहुरस्माकं सखा मित्रभूतः सन् सदा वृद्धिकारी भूयादिति प्रश्नो वाक्यार्थः। यतो वयं तव राहोरनुकूलकरणे किमपि न जानीमः, अतो हे राहो, स्वार्चनविषये त्वयोपदेष्टव्यः पन्थाः, त्वदुपदिष्टेन मार्गेण त्वदनुष्ठानं करिष्याम इत्याशंसावाक्यार्थः॥ ८॥

केचित्तु पूर्वोक्तयाज्ञवल्क्यवचनात्काण्डात्काण्डादित्यनेन च राहोः पूजनादिकं विदधति। तत्पक्षे तन्मन्त्रव्याख्या षोडशोपचारपूजाप्रकरणे द्रष्टव्या। तत्र व्याख्यातोऽयं मन्त्रः। तद्व्याख्यायां पूजाप्रसङ्गतो राहुपक्षे किञ्चिदेव वाक्यं भिद्यते तदूह्यम्। इह विस्तरभिया पुनर्न व्याख्यायते॥ ८॥

केतुं कृण्वन्नकेतवे पेशो मर्य्याऽअपेशसे।

समुषद्भिरजायथाः॥ ९॥

केतुं कृण्वन्नित्यस्य मधुच्छन्द ऋषिर्गायत्रीच्छन्दः केतुर्देवता केतुपूजने केतुप्रीत्यर्थे तदीयजपहोमादौ च विनियोगः, पूर्वोक्तयाज्ञवल्क्यवचनात्, केतुं कृण्वन्नित्यत्र केतुलिङ्गश्रवणाच्च। अथ मन्त्रार्थः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयंमन्त्रः। हे केतो, हे केतुग्रह, त्वमुषद्भिः "उष दाहे" उषन्ति हविर्दहन्तीत्युषन्तो होमकर्त्तारो यजमानास्तैः कृत्वा समजायथाः समुत्पन्नः समुत्पादितः यज्ञमण्डपे स्थापित इत्यर्थः। यजमानेन ग्रहाः स्थाप्यन्त एव न तु यजमानेन ग्रहा उत्पाद्यन्ते। तस्मादिहोत्पादनं स्थापनमेवेत्यभिप्रायः। अत इदानीमपि त्वमिह पूजास्थाने पूजनार्थं मया स्थापितो भवसीति वाक्यार्थः। अतो मया स्थापितः सम्पूजितश्च त्वं मत्सपर्य्यां स्वीकृत्य तया परितुष्टः सन्

अकेतवे "केतुरिति प्रज्ञानामेति निघण्टुः" नास्ति केतुः प्रज्ञा यस्य स अकेतुस्तस्मै अकेतवे प्रज्ञारहिताय मर्य्याः ("छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्य्य०–"इत्यादिसूत्रेण "मृङ्" धातोर्यत्प्रत्यये गुणे च निपातिते "सुपां सुलुगि"ति विभक्तिव्यत्ययेन चतुर्थ्येकवचनस्थाने प्रथमाबहुवचनं मर्य्याः) मर्य्याय मनुष्याय अर्थान्मह्यं केतुं प्रज्ञां बुद्धिं कृण्वन् कुर्वन् मां सुखं गमयेति वाक्यशेषः। सुतरामनेनाभ्यर्थनेन नैरुज्यादिकमप्यायातं, नहि नैरुज्यादिकं विना कस्यचित्प्रज्ञा सम्भवितुमर्हति, "स्वस्थे चित्ते बुद्धयः सम्भवन्ती"-त्याद्युक्तेः। सञ्चरन्त्यपि पाठान्तरं श्रूयते। चित्तस्वास्थ्यस्य शरीरस्वास्थ्यापेक्षकत्वेन शरीरस्वास्थ्यस्य नैरुज्यापेक्षकत्वात्तत्सत्त्वे तत्सत्त्वं तदभावे तदभावोऽपीति सुस्पष्टं प्रतीयते। अतः प्रज्ञाव्याजेन नैरुज्यं दीर्घायुष्ट्वं च सम्प्रार्थ्यते मयेत्यभिप्रायः। केतुमिति "कित ज्ञाने" इत्यस्य रूपम्। तथा अपेशसे पेशश्शब्देन सुवर्णं सौन्दर्यं वाभिधीयते, "पेशस्कारी पेशसो मात्रामुपपादये"त्यादौ शारीरब्राह्मणे पेशश्शब्दस्योभयार्थत्वेन प्रतिपादनात्। नास्ति पेशः सुवर्णं रूपं वा यस्य स अपेशास्तस्मै अपेशसे असुवर्णाय निर्धनाय अरूपाय वा मर्य्याय मनुष्याय अर्थान्मह्यं पेशः सुवर्णं धनं, रूपं सौन्दर्य्यं वा कृण्वन् कुर्वन् सन् त्वं मां सुखं गमयेति वाक्यशेषः। अजायथा इति जनेर्लङि मध्यमपुरुषैकवचने रूपम्। समजायथा इति व्यवहितोपसर्गसम्बन्धः "व्यवहिताश्चे"ति पाणिनिवचनात्। करोतेः शतरि कुर्वन्निति प्राप्ते "व्यत्ययो बहुलमि"ति विकरणव्यत्ययेन कृण्वन्निति रूपम्॥९॥

॥ इति नवग्रहमन्त्रव्याख्या ॥

---

## ॥ अथाधिदेवतामन्त्राः ॥

"शिवः शिवा गुहो विष्णुर्ब्रह्मेन्द्रयमकालकाः।
चित्रगुप्तोऽथ भान्वादेर्दक्षिणे चाधिदेवताः॥"

इति मदनरत्ने। तेषां मन्त्रा यथालिङ्गं प्रत्येतव्याः। तत्र "त्र्यम्बकं, श्रीश्च ते"इति मन्त्रद्वयं षडङ्गशतरुद्रियप्रकरणे व्याख्यातन्तत्र मन्त्रद्वयस्य व्याख्या द्रष्टव्या। तत्र "श्रीश्च ते" इति मन्त्रे "हे उमे" इति सम्बुद्धिपदमध्याहर्त्तव्यम्, "अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेदि"ति वचनात्। शेषञ्च पूर्ववत्॥ १ ॥ २ ॥

यदक्र॑न्दः प्रथ॒मं जाय॑मानऽउ॒द्यन्त्स॑मु॒द्रादु॒त वा॒ पुरी॑षात्।
श्ये॒नस्य॑ प॒क्षा ह॑रि॒णस्य॑ बा॒हूऽउ॑प॒स्तुत्यं॒ महि॑ जा॒तं ते॑ऽअर्वन्॥ ३ ॥

यदक्रन्द इत्यस्य भार्गवजमदग्निदीर्घतमा ऋषयस्त्रिष्टुप्छन्दः स्कन्दो देवता स्कन्दावाहने तदीयजपपूजनहोमेषु च विनियोगः। यद्यप्यस्मिन्मन्त्रे स्कन्दपदं नास्ति तथापि इयर्त्ति कुटिलं व्रजति वाव्रज्यते परसैन्येषु इत्यर्वा तत्सम्बुद्धौ "हे अर्वन्" एतत्सम्बुद्धिपदेन

स्कन्द एवाकृष्यते, तारकासुरसङ्ग्रामे पुरानेन मन्त्रेण स्कन्दस्य देवसेनाधिपत्ये देवैरभिषिक्तत्वात्। अतोऽनादिकालतस्तत्पूजने तदीयजपहोमादौ चास्य मन्त्रस्य विनियोग इति याज्ञिकानां परामर्शः। अतो मयापि विनियोगानुसारेणैव "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि—हे अर्वन्, परसैन्यसमूहे कुटिलगन्तः, स्कन्द, ईदृशस्त्वं यत् यदा अक्रन्दः क्रन्दितवान् स्वपराक्रमैर्देवशत्रूनिति शेषः। यद्वा यत् यदा त्वं देवशत्रूणां भीत्यर्थं महाक्रन्दनं भयानकशब्दं कृतवानित्यर्थः। यत्तदोर्नित्यसम्बन्धत्वान्मन्त्रेऽस्मिन्यच्छब्दश्रवणादिह तच्छब्दश्चाध्याहर्त्तव्यस्ततोऽयमर्थः। हे स्कन्द, तत् तदा ते तव महि माहात्म्यमुपस्तुत्यं जातम् उपस्तोतुं स्तुतिं कर्त्तुं योग्यमभूदित्यर्थः। कथं स्तुत्यं तदुच्यते। श्येनस्य पक्षौ हरिणस्य बाहू अनेन क्रन्दनेन जिताविति शेषः। शौर्य्येण श्येनस्य पक्षौ उपस्तुत्यौ स्तुतियोग्यौ भवतः। एवं हरिणस्य बाहू शीघ्रगमनेन उपस्तुत्यौ स्तुतियोग्यौ भवतः। अत्र हि तदीयाग्रचरणद्वयमेव बाहुद्वयत्वेनोपचर्यते। तत्सर्वमपि त्वदीयाक्रन्दनेन जितमित्यर्थः। कीदृशस्त्वं समुद्रात् पार्थिवादान्तरिक्षाद्वा प्रथमं जायमानः पूर्वमेवोत्पन्न इत्यर्थः। हिरण्यगर्भरूपेणेति शेषः, "हिरण्यगर्भः समवर्त्तताग्रे, ततः समुद्रोऽअर्णवः समुद्रादर्णवादधि"इत्यादिश्रुतेः। अनेन स्कन्दस्य ब्रह्मरूपत्वं ध्वन्यते। ब्रह्मणः सकाशादेव ब्रह्मादिस्तम्बपर्य्यन्तस्यास्य जगतः समुत्पत्तिस्तत्रायं समुद्रादपि पूर्वमेव स्कन्दः समुत्पन्न इत्यभिप्रायः। उत वा अथवा तदानीं पुरीषात् उद्यन् उत्पद्यमानः पुरीषं शाम्भमुदकं तस्मादपि उत्पद्यमानः, हे स्कन्द, य एवम्भूतस्त्वं तं त्वामत्राह्वयामि, आहूय पूजयामि च, हवनपक्षे त्वदर्थं जुहोमीति वाक्यशेषः। स त्वं मत्सपर्यया मत्कृतहोमादिना च परितुष्टः सन् मां सुखं गमयेत्याशंसावाक्यार्थः॥ ३॥

अधिदेवतान्तर्गतस्य विष्णोः पूजनम् "इदं विष्णुः" इति मन्त्रेण "विष्णोरराटम्" इत्यनेन वा कर्त्तव्यमिति याज्ञिकाः समामनन्ति। तत्र "इदं विष्णुः" इत्ययं मन्त्रः स्नानप्रकरणे व्याख्यातः, "विष्णोरराटम्" इत्ययं मन्त्रस्तु देवपूजाप्रकरणे व्याख्यातः, अतस्तत्र तत्र मन्त्रद्वयस्य व्याख्या द्रष्टव्या॥४॥५॥

"आब्रह्मन्" इत्ययं मन्त्रस्तु दूर्वाक्षतप्रदाने व्याख्यातस्तत्रैवास्य विशेषतो व्याख्या द्रष्टव्या। तत्र "नोऽस्माकं ब्राह्मणानामाशीर्वचनेने"ति वाक्यं व्याख्यातो हित्वा योज्यं चेत्थं वाक्यन्तद्यथा—हे ब्रह्मन्, त्वामस्मिन्यज्ञे वयमाह्वयामः, आहूय च त्वां पूजयामः, होमपक्षे त्वदर्थं जुहुमश्चेति वाक्यशेषः। अतस्तव प्रसादात् नोऽस्माकं यजनकर्त्तॄणां राष्ट्रे देशे ब्रह्मवर्चसी ब्रह्म वेदस्तेन जातं यद्वर्च्चस्तदस्यास्तीति ब्रह्मवर्चसी वेदाध्ययनशीलो वैदिकः, ब्राह्मण आजायतामुत्पद्यतां समुत्पन्नो भवतु, इत्यादि। एवम्प्रकारेण पूर्ववद्व्याख्यातव्यः समस्तमन्त्रः। केचन "ब्रह्मयज्ञानम्" इति मन्त्रेण वा ब्रह्मपूजां कुर्वन्ति, याज्ञिकैस्तथाप्याम्नानात्। स च मन्त्रो ब्रह्मयज्ञजपप्रकरणे व्याख्यातस्तत्रैवास्य व्याख्या द्रष्टव्या॥ ६॥ ७॥

**ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम्।**
**ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः॥ ८॥**

त्रातारमिन्द्रमित्यस्य गर्गऋषिस्त्रिष्टुप्छन्द इन्द्रो देवता इन्द्रावाहने, पूजनपक्षे

इन्द्रपूजने, जपपक्षे इन्द्रप्रीत्यर्थे जपे, होमपक्षे इन्द्रप्रीत्यर्थे होमे च विनियोगः। एवं सर्वत्रोह्यम्। त्रातारं रक्षितारमिन्द्रम् अवितारं प्रीणयितारमिन्द्रम् हवे हवे आह्वाने आह्वाने यज्ञे वा सुहवं सुखेन हूयते आहूयते इति सुहवस्तं सुहवं शोभनाह्वानं शूरं शौर्य्यगुणोपेतं शक्रं शक्नोतीति शक्रस्तं शक्रं समर्थं पुरुहूतं पुरुभिर्बहुभिर्हूयते इति पुरुहूतस्तं पुरुहूतं बहुभिराहूतम् ईदृशमिन्द्रं ह्वयामि आह्वयामि स्वाभीष्टसिद्ध्यर्थं पूजनायेति शेषः। स मघवा धनवानिन्द्रः आहूतः सन्नोऽस्माकं स्वस्ति अविनाशं धातु दधातु कल्याणमस्माकं करोत्वित्यर्थः। यद्वा मघवा धनवान् स इन्द्रः नोऽस्मभ्यं स्वस्ति कल्याणं धातु दधातु ददात्वित्यर्थः। "डुधाञ् धारणपोषणयोः, दानेऽप्येके" ( जु० उ० ) इत्युक्तत्वाद्दानार्थकोऽपि। तत्र "व्यत्ययो बहुलमि"ति पाणिन्युक्तेरिह विकरणव्यत्ययेन शपि लुप्ते लोट्प्रथमपुरुषैकवचने "धातु" इति रूपम्। मन्त्रे इन्द्रशब्दावृत्तिस्त्वादरार्था "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः॥ ८॥

अथवा

ॐ स॒जोषा॑ऽइन्द्र॒ सग॑णो म॒रुद्भिः॒ सोमं॑ पिब वृत्र॒हा शू॑र वि॒द्वान्।
ज॒हि शत्रूँ॒१ रप॒ मृधो॑ नु॒दस्वाथाभ॑यङ्कृणुहि वि॒श्वतो॑ नः॥९॥

"सजोषा इन्द्र" इत्यस्य विश्वामित्र ऋषिस्त्रिष्टुप्छन्द इन्द्रो देवता इन्द्रावाहने विनियोगः। पूजनजपहोमेषु पूर्ववद्वाक्योहः कर्त्तव्यः। हे शूर, हे वीर, हे इन्द्र, त्वं सजोषाः जोषणं जोषः प्रीतिः "जुषी प्रीतिसेवयोः" इत्यस्मादसुन्प्रत्ययः। जोषसा सह वर्त्तमानः सजोषाः सन्तुष्टः सन् मरुद्भिः कृत्वा सगणः सपरिवारः अर्थाद् मरुद्गणसहितो भूत्वा सोमं पिब। ततः सोमं पीत्वा वृत्रहा वृत्रम् असुरकुलं मेघवृन्दं वा हन्तीति वृत्रहा तथा भूत्वा विद्वान् एतमर्थमस्मत्कृतपूजनाभिप्रायं जानन् शत्रून् अस्मद्विरोधिनः जहि मारय तथा मृधः सङ्ग्रामान् अपनुदस्व 'नुद प्रेरणे' युद्धं निवर्त्तयेत्यर्थः। ( "दीर्घादटि समानपादे" इति शत्रूनित्येतत्पदघटकनकारस्य रुत्वम् "अत्रानुनासिकः पूर्वस्य तु वा" इति तत्पूर्वस्य ऊकारस्यानुनासिकत्वं च बोद्धव्यम्।) यद्वा मृध इति पञ्चम्येकवचनन्तेनायमर्थः। मृधः सङ्ग्रामात् अपनुदस्व शत्रूनित्यनुषङ्गः। ये हतावशिष्टाः शत्रवस्तान् सङ्ग्रामात्पलायनार्थं प्रेरयस्व तेषां कृते प्राणदानं कुर्वित्यर्थः। हे इन्द्र, एवं रिपुनाशनं कृत्वा अथ रिपुनाशनानन्तरं नोऽस्माकं विश्वतः सर्वतः अभयं कृणुहि कुरु "डुकृञ् करणे" ( त० उ० प० ) इत्यस्य लोण्मध्यमैकवचने विकरणव्यत्ययो बोध्यः, "व्यत्ययो बहुलम्" इति पाणिन्युक्तेः। हे इन्द्र, एतन्मन्त्रप्रतिपाद्यं त्वामाह्वयामः, पूजयामः, त्वामनुध्यायामः, त्वदर्थं जुहुमः, इति आह्वानपूजनजपहोमकर्म्मसु यथाप्रयोगमूह्यम्। स त्वमस्मत्कृतसपर्य्यादिना सन्तुष्टः सन् अस्माकमभयं कुरु अस्मान् सुखं च गमयेत्याशंसावाक्यार्थः॥ ९॥

ॐ य॒माय॑ त्वा म॒खाय॑ त्वा॒ सूर्य॑स्य त्वा॒ तप॑से।
दे॒वस्त्वा॑ सवि॒ता मध्वा॑नक्तु पृथि॒व्याः स॒ᳪस्पृश॑स्पाहि॥
अ॒र्चिर॑सि शो॒चिर॑सि॒ तपो॑ऽसि॥ १०॥

"यमाय"इत्यस्य दध्यङ्ङाथर्वण ऋषिर्यजुष्टादनिर्दिष्टं छन्दो यमो देवता यमावाहने तदीयजपपूजनहोमकर्मसु च विनियोगः। यमाय त्वेति मन्त्रे यमायेति यमलिङ्गाद्यमदेवताकोऽयं मन्त्रः। अतोऽनेन मन्त्रेण यमपूजनादिकं कुर्वन्ति साम्प्रदायिकाः। तत्र "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि-हे यम, यमाय यमयति नियमयति प्रशास्ति दण्डयति पापिन इति यमः। अथवा यमयति नियन्त्रयति पीडयति पापिन इति यमः। यद्वा यमयति नियमयति निश्चयति पापिनां दण्डप्रदानार्थं धर्माधर्मत्वेन कृताकृतपुण्यापुण्यविवेचनाय व्यवस्थापयति सर्वमिति यमः। यद्वा यच्छति उपरमयति जीवानिति यमस्तस्मै यमाय तादृशाय तुभ्यं नम इति शेषः। तथा हे यम, त्वा त्वामाह्वयामीतिशेषः। अतो मखाय मखो यज्ञः प्रवर्ग्यः स च सूर्य्यस्तस्मै मखाय तादृशाय तुभ्यं नम इति शेषः। "एष वै मखो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह मखाय त्वा"इतिश्रुतेः। अत्र प्रवर्ग्यव्याजेन सूर्य्यरूपेण यम एव स्तूयते, यमस्य सूर्य्यात्मजत्वादिति भावः। तादृशं त्वा त्वां पूजयामीतिशेषः। किञ्च हे यम, सूर्यस्य तपसे तपतीतितपस्तेजस्तस्मै तपसे तादृशाय सूर्य्यतेजोरूपाय तुभ्यं नम इति शेषः। तथा तादृशं त्वा त्वामाह्वयामि, आहूय च पूजयामि, त्वामनुस्मरामि, त्वामुद्दिश्य जुहोमीत्यादि यथाप्रकरणं तदीयजपपूजनहवनकर्मसु च बोद्धव्यम्। अत्रापि सूर्यप्रभवत्वादेव यमः सूर्यस्य तेजोरूपेण स्तूयते। सूर्य्यप्रभवत्वञ्चास्य अन्यत्रापि श्रुत्याभ्युक्तं "परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम्। वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य ॥" (ऋ. सं. ८, ६, २४, १,) अत एव हे यम, सविता देवः सूर्य्यः मध्वा (आगमशास्त्रमनित्यमित्युक्तेर्नुमागमशास्त्रस्यानित्यत्वपक्षे नुमागमाभावो बोध्यः) मधुना मधुरेण सर्वजगद्रूपेण आज्येन त्वा त्वामनक्तु लिम्पतु त्वद्वपुषः श्लक्ष्णीकरणार्थमितिशेषः। पुत्रस्य श्लक्ष्णमङ्गजातं दृष्ट्वा पितुरतीव प्रमोदो भवतीति स हि तस्य स्वभावः। अतस्त्वत्कृते एतदुक्तं भवतीत्याशयः। त्वष्टुर्दुहितरि विवस्वतः सकाशाद्यमस्य जन्म। सा यमस्य माता विवस्वतो महती जाया कुतश्चिद्धेतोर्ननाश। तथा च श्रुतिः-"त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति। यमस्य माता पर्युह्यमाना महोजाया विवस्वतो ननाश ॥ अपागूहन्नमृतां मर्त्येभ्यः कृत्वीमदद्दुर्विवस्वते। उताश्विनावभरद्यत्तदासीदजहादुद्वा मिथुना सरण्यूः (अ. वे. सं. का. १८, अ. १, सू. १, क० १,) तथा (ऋ. सं. अ. ७, अ. ६, व. २३,) इति। किञ्च हे यम, एवं मधुना श्लक्ष्णीकृतस्त्वं सर्वाङ्गसुन्दरो भूत्वा पृथिव्याः संबन्धिनः संस्पृशः संस्पृशति नाशार्थं स्पर्शं करोतीति संस्पृक् (सम्पूर्वात्स्पृशेः क्विप्।) "दिद्युदि"तिशेषः। एतन्नामकायुधविशेषः, ज्वरातिसारादिरोगाख्यो दोषइति यावत्। तस्मात्पाहि रक्ष मामितिशेषः। ननु दिद्युदिति तु माध्यमिकस्य देवस्यायुधं श्रूयते। कथन्तर्हि पृथिव्या सह सम्बन्धो विवक्षितः। येन पृथिव्याः सम्बन्धिन इत्युक्तमिति चेन्न, तया सह तत्सञ्चरणश्रवणात्। तथा च माध्यमिकं प्रति कस्य चिदृषेरुक्तिरियं, यथा च (ऋ० सं० ५, ४, १३, ३) "या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः।" इति। क्ष्मया चरतीत्यनेन पृथिव्या सह तत्सञ्चरणादेव पृथिव्याः सम्बन्धिनः संस्पृशः पाहीत्युक्तमित्याशयः। लोके ये रोगाः समुत्पद्यन्ते ते सर्वे भूगतवाय्वन्नजलवैषम्यादेव सम्भवन्ति। तथा सत्येव सर्वे रोगपीडिताः सन्तो म्रियन्ते। तन्निवृत्त्यर्थमेव मया प्राथ्र्यत इति भावः। किञ्च हे यम, त्वमर्चिरसि अर्चि-

रस्यास्तीति अर्चिष्मानिति प्राप्ते छान्दसो मतुपो लुग्द्रष्टव्यः। अर्चिष्मान् दीप्तिमानसीत्यर्थः। सूर्य्यात्मजत्वादित्याशयः। तथा त्वं शोचिरसि नारकाणां कृते भयप्रदत्वेन हृदयशोषकोऽसीत्यर्थः। तथा तपोऽसि तपतीति तपः तापनशीलः सूर्य्यरूपस्त्वमसीत्यर्थः, "आत्मा वै जायते पुत्रः" इतिश्रुतेः। य एवम्भूतस्त्वमसि तं त्वामावाहयामि, आहूय च पूजयामि, हवनपक्षे त्वदर्थं जुहोमीति यथाप्रकरणमूह्यम्। स त्वं मत्सपर्य्यया सन्तुष्टः सन्मां सुखं गमयेत्याशंसावाक्यार्थः॥ १०॥

ॐ असि॑ य॒मोऽअस्या॑दि॒त्योऽअ॑र्व॒न्नसि॑ त्रि॒तो गुह्ये॑न व्र॒तेन॑।
असि॒ सोमे॑न स॒मया॒ विपृ॑क्तऽआ॒हुस्ते॒ त्रीणि॑ दि॒वि बन्ध॑नानि॥११॥

"असि यम" इत्यस्य भार्गवजमदग्निर्दीर्घतमा ऋषयस्त्रिष्टुप्छन्दो यमो देवता यमावाहने (तदीयपूजने तत्प्रीत्यर्थे होमे च) विनियोगः। यथाप्रकरणं विनियोगवाक्यं भिद्यते। तच्च यथाप्रकरणमूह्यम्। यमोऽसीति यमलिङ्गाद्यमदेवताकोऽयं मन्त्रः। अतः केचन याज्ञिका अनेनैव मन्त्रेण यमपूजनादिकं विदधति। तत्र "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। इयर्त्ति कुटिलं व्रजति नारकान्प्रति दण्डप्रदानार्थमिति अर्वा तत्सम्बुद्धौ हे अर्वन्, नरकस्थानां कृते कुटिलगन्तः, हे यम, त्वं यमोऽसि। यमयति नियमयति नियन्त्रयति नरकस्थान् प्राणिनो दण्डप्रदानेनेति यमः नरकस्थितानां सर्वेषां प्राणिनां नियन्त्रणकर्त्ता त्वमसीत्यर्थः। यद्वा यच्छति उपरमयति जीवान् इति यमः सर्वप्राणिनामुपशमयितेत्यर्थः। तथा त्वमादित्यश्चासि आदित्यप्रभवत्वादादित्यरूपोऽपि त्वमसि तथा गुह्येन गोप्येन व्रतेन कर्म्मणा त्रितः त्रिस्थान इन्द्रोऽप्यसि, यमो यमनान्माध्यमिक इति वचनात्। तथा सोमेन समया विपृक्तः (समया—इति सहार्थमव्ययम्) उमया सहितः सोमो रुद्रः सोऽपि माध्यमिक एव तेन सह विशेषेण पृक्तः एकीभूतोऽसीत्यर्थः। अतो रुद्राध्याये श्रुत्याभ्युक्तं "नमो याम्याय च क्षेम्याय च" इति। एवम्भूतस्य ते तव सम्बन्धीनि त्रीणि बन्धनानि पाशाख्यानि बन्धनसाधनानि दिवि द्योतनात्मके संयमनीपुरे सन्तीति आहुः, बुधा इति शेषः। बन्धनानीत्यत्र कारणे कार्य्योपचारः, यथाग्निष्टोमे यज्ञसाधनभूते हविर्धानमण्डपे विष्णुपदवाच्यस्य यज्ञस्योपचारः। तत्र हि दर्भमयमालाधारवंशं सम्बोध्य तं प्रत्युच्यते विष्णोरराटमसीति। यैस्त्रिभिर्बन्धनैर्बन्धनसाधनैः पाशाभिधरज्जुविशेषैर्याम्यास्त्वदीयपुरुषाः नरकस्थान् पापिनो बध्नन्ति तानि मत्त उपसंहरेतिशेषः। अतस्त्वां पूजयामि स त्वं मत्सपर्य्यया परितुष्टः सन्मां सुखं गमयेत्याशंसावाक्यार्थः॥ ११॥

ॐ का॒र्षि॑रसि समु॒द्रस्य॒ त्वा क्षित्या॒ऽउन्न॑यामि।
समापो॑ऽअ॒द्भिर॑ग्मत॒ समोष॑धीभि॒रोष॑धीः॥ १२॥

कार्षिरसीत्यस्य दध्यङ्ङाथर्वणः प्रजापतिर्वा ऋषिरनुष्टुप्छन्दः कालो देवता कालावाहने (कालपूजने, कालप्रीत्यर्थे जपे, होमे च) विनियोगः। तत्र "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे काल, त्वं कार्षिरसि कर्षति आकर्षति आत्म-

सात्कर्त्तुं सर्वमिति कार्षिः सर्वाकर्षणशीलोऽसीत्यर्थः । अतः कैश्चिदप्युक्तं "कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ।" इति । तादृशं त्वां त्वां समुद्रस्य संसाराब्धेः अक्षित्यै अनुपक्षीणत्वाय उन्नयामि ( उदिति क्रियाविशेषणं बोध्यम् ) उत् उत्कृष्टं यथा स्यात्तथा नयामि नयतेः प्रापणार्थत्वात् प्राप्नोमीत्यर्थः । संसाराब्धेरनुपक्षीणत्वे सति संसाराब्ध्यन्तर्गतस्य ममापि जीवनसंरक्षणं स्यादित्यभिप्रायेण संसाराब्धेरनुपक्षीणत्वव्याजेन इह आत्मनो रक्षा प्रार्थ्यते, इत्याशयः । तत्र संसारस्यानुपक्षीणत्वोपायश्चेत्थमित्यभिप्रायेण पुनरुच्यते । हे काल, आपः प्रसिद्धा एव जलानीति यावत्, अद्भिः जीवमात्रोत्पत्तिनिमित्तभूताभिरद्भिः समग्मत सङ्गच्छन्ताम् । तथा ओषधीः ( वा छन्दसीति पूर्वसवर्णदीर्घः ) ओषधयः मुद्गमसूरादिका ओषधीभिः व्रीहियवादिभिः समग्मत सङ्गच्छन्ताम् । अपां कारणभूतत्वादोषधीनामपि योगोऽस्त्विति भावः । हे काल, त्वत्प्रसादान्ममैतत्सर्वं सम्पद्यतामित्यभिप्रायेण त्वामनेन मन्त्रेण आह्वयामि, आहूय च पूजयामि, हवनपक्षे त्वदर्थं जुहोमि चेति योज्यम् । स त्वं मत्सपर्य्यया ( होमपक्षे मत्कृतानेन होमेन ) सन्तुष्टः सन्मां सुखं गमयेत्याशंसावाक्यार्थः ॥ १२ ॥

ॐ चित्रावसो स्वुस्ति ते पुारमंशीय ॥ १३ ॥

"चित्रावसो" इत्यस्य हिरण्यस्तूप ऋषिरतिजगतीच्छन्दश्चित्रगुप्तो देवता चित्रगुप्ताबाहने ( चित्रगुप्तपूजने, चित्रगुप्तप्रीत्यर्थे जपे होमे च ) विनियोगः । तत्र "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः । मन्त्रेऽस्मिन् चित्रावसुशब्दश्चित्रगुप्तवाचकस्तन्निर्वचनञ्चेत्थन्तद्यथा—"वस निवासे" ( भ्वा. प. ) इत्यस्माण्ण्यन्तात् 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चे"त्यौणादिक उप्रत्ययः, "बहुलमन्यत्रापि संज्ञाछन्दसोः" इति णिलोपश्च बोध्यः । वासयति निवासयति इह लोके परलोके वा इति वसु । तदत्र वसुपदं कर्माभिधायकं "यदेतत्कर्म्म कुरुते तदभिसम्पद्यते । पुण्यः पुण्येन कर्मणा भवति, पापः पापेन, पुण्येन पुण्यं लोकं नयति, पापेन पापं लोकं नयति, उभाभ्यामसुं लोकं नयती"-तिश्रुतेः । कर्मद्वारैव तत्तल्लोकप्राप्तिरिति श्रुत्यावगम्यते । तच्च कृताकृतपुण्यापुण्यप्रमाणनिदर्शनरूपकर्म्मपरं तदेव तस्य मुख्यं कर्म्म एतस्मादेव कारणादनादिसृष्टितश्चित्रगुप्तपूजने तदीयजपहोमादौ च अमुं मन्त्रं याज्ञिकाः समामनन्ति । तत्र चित्रावसुपदं विशेषणपदम् । विशेषणपदश्रवणाद्विशेष्यपदन्त्वध्याह्रियते । तथाहि—हे चित्रावसो, चित्रं चयनीयं वसु प्राणिनां कृताकृतपुण्यापुण्यप्रमाणनिदर्शनरूपं कर्म्म यस्यासौ चित्रावसुस्तत्सम्बुद्धौ हे चित्रावसो, प्राणिनां कृताकृतपुण्यापुण्यप्रमाणनिदर्शनरूपकर्म्मवन् , हे चित्रगुप्त, ते तव ( प्रसादादितिशेषः ) त्वदनुग्रहादहं स्वस्ति क्षेमं यथा स्यात्तथा पारमशीय व्याप्नवानि संसाराब्धेरितिशेषः । संसाराब्धेः पारम् अपरतीरम् अर्थाद्ब्रह्मलोकं तदेव तस्यापरतीरं तदहं प्राप्नुयामेतदभिप्रायेणैव त्वामिह एतन्मन्त्रेणाह्वयामि, पूजयामि, होमपक्षे त्वदर्थं जुहोमि च । स च त्वं मत्सपर्य्यादिना सन्तुष्टः सन्मां सुखं गमयेत्याशंसावाक्यार्थः ॥ १३ ॥

॥ इत्यधिदेवतामन्त्रव्याख्या ॥

## ॥ अथ प्रत्यधिदेवतामन्त्रव्याख्या ॥

"अग्निरापो धरा विष्णुः शक्रेन्द्राणी पितामहाः ।
पन्नगाः कः क्रमाद्वामे ग्रहप्रत्यधिदेवताः ॥" इति मदनरत्ने ॥

"अग्निन्दूतम्" इति देवपूजाप्रकरणे व्याख्यातः। "आपोहिष्ठा" इति सन्ध्याप्रकरणे व्याख्यातः। अत एतयोस्तत्तत्प्रकरणे व्याख्या द्रष्टव्या ॥ १ ॥ २ ॥

केचन साम्प्रदायिका अपां पूजने तदीयजपहोमादौ च "अप्स्वन्तरि"ति मन्त्रं समामनन्ति। अतः केषाञ्चित्साम्प्रदायिकानां प्रयोगपद्धतिषु स एव मन्त्रो दृश्यते। अतः सोऽपि मन्त्र इह व्याख्यायते। इतः पूर्वमधिदेवतामन्त्रप्रकरणेऽपि यत्र यत्र सम्प्रदायभेदेन मन्त्रविकल्पो वर्त्तते, तत्र तत्र सर्वत्र "अथवा" इति सङ्केतेन सोऽपि वैकल्पिकमन्त्रो व्याख्यातः। एवं तेनैव सङ्केतेन अग्रेऽपि बह्वीनां देवतानां पूजनादौ वैकल्पिकत्वेन मन्त्रभेदो द्रष्टव्यः।

ॐ अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिनः ।
देवीरापो यो वऽऊर्मिः प्रतूर्त्तिः ककुन्मान्वाजसास्तेनायं वाजꣳ सेत् ॥३॥

अप्स्वन्तरित्यस्य बृहस्पतिर्ऋषिः पुरउष्णिक्छन्द आपो देवता अपामावाहने ( पूजनपक्षे अपां पूजने, होमपक्षे अपां प्रीतये होमे ) विनियोगः। स चायं मन्त्रः "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते। तथाहि—अप्सु उदकेषु अन्तर्मध्ये अमृतं सुधेति प्रसिद्धम् असाधारण्येनावस्थितमस्तीतिशेषः। तथा अप्सु उदकेषु अन्तर्मध्ये भेषजमारोग्यपुष्टिकरमौषधं चासाधारण्येनावस्थितमस्तीति शेषः। अतोऽब्रूपस्य जलस्य अमृतमिति संज्ञापि वर्त्तते। तदुक्तं च अमरसिंहेन "पीयूषममृतं सुधा" इति। एतस्मादेव कारणात् जगज्जीवनमुदकमित्यहं जाने, इति वाक्यशेषः। अतस्तदधिष्ठातृदेवान् प्रत्युच्यते। हे अश्वाः, व्यापकाः, अपामधिष्ठातारो देवाः, अपां प्रशस्तिषु उत 'उतशब्दोऽप्यर्थे' प्रशस्तभागेष्वपि विशेषतो यदमृतं भैषज्यं चास्तीति शेषः, तदुभयद्वारा यूयं वाजिनः अन्नवन्तो भवत अस्मदर्थमितिशेषः। अश्वशब्दनिर्वचनन्तु गणपतिमन्त्रव्याख्यायां सविशेषमुक्तं तत्तु तत्रैव द्रष्टव्यम्। इह विस्तरभिया नोच्यते। एवमपामधिष्ठातृदेवान्प्रत्युक्त्वेदानीमपः प्रत्युच्यते। हे आपो देवीः, अब्रूपा देव्यः, ( देव्य इति प्राप्ते "वा छन्दसी"ति प्रथमाविभक्तौ जसि पूर्वसवर्णदीर्घः। ) वो युष्माकं ककुन्मान् ककुच्छब्देन वृषभस्कन्धे उन्नतप्रदेश उच्यते। ततः सादृश्ये मतुप्, तत्सामान्यादुदकनिचयैः संयुक्तो बहुलोदकसङ्घातवान्ककुन्मानित्युच्यते, ककुन्मान् अर्थात् प्रचुरजलसङ्घातवान् तथा वाजसाः वाजम् अन्नं सनोतीति वाजसाः वाजस्य अन्नस्य दाता तथा प्रतूर्तिः प्रकृष्टा तूर्तिः वेगो यस्य स तथोक्तः त्वरणशीलः य एतादृशः ऊर्मिः तरङ्गः जलकल्लोल इति यावत्, अस्तीति शेषः। तेनोपलक्षितोऽयं माध्यमिको वैद्युतानल इति शेषः। स वाजमन्नं सेत् सनुयात् दद्यात्

वैद्युतानलद्वारैव तस्योत्पत्तिप्रसिद्धेः। मह्यमिति शेषः। सिनातिर्यद्यपि बन्धनार्थस्तथापीह दानार्थ एव, धातूनामनेकार्थत्वात्। तथा "षिञ् बन्धने" यद्यपि धातुपाठेऽयं धातुः स्वादौ पठितस्तथापि बहुलमेतन्निदर्शनमिति गणसूत्रेण दशगणीपाठबाहुल्याभिधानाददादौ बोध्यः। तस्माल्लिङर्थे लेट्। तत्र शपि लुप्ते "इतश्चे"तीकारलोपे गुणे च लेट्प्रथमपुरुषैकवचने सेदिति रूपम्। अत्र "सिब्बहुलं लेटि" इति सिप् "लेटोऽडाटौ" इत्याडागमश्च न भवति "बहुलं छन्दसी"ति पाणिनिवचनाच्छन्दसि सर्वविधीनां वैकल्पिकत्वात्। हे आपः, एतदर्थं युष्मानिह आवाहयामि आहूय चानेन मन्त्रेण पूजयामि होमपक्षे युष्माकं प्रीतये जुहोमि इति च यथावत्प्रतिप्रयोगं वाक्यं भिद्यते। तत् यथाप्रकरणमूह्यम्। ता यूयं मत्सपर्य्यादिना सन्तुष्टाः सन्तोऽस्मभ्यं सुखं गमयतेत्याशंसावाक्यार्थः॥ ३॥

**"स्योनापृथिवि"** इति मन्त्रः कलशस्थापनप्रकरणे व्याख्यातः। **"विष्णोरराटम्"** इति देवपूजाप्रकरणे व्याख्यातः। सम्प्रदायभेदेन विष्णुपूजने **"इदं विष्णुः"** इति च बोद्धव्यः। स च स्नानप्रकरणे व्याख्यातः। **"सजोषाइन्द्र"** इति, सम्प्रदायभेदेन **"त्रातारमिन्द्रम्"** इति च शक्रपूजने विनियुक्तौ। एतौ च मन्त्रौ अधिदेवतामन्त्रप्रकरणे व्याख्यातौ। एतेषां च व्याख्या तत्तत्प्रकरणेऽन्वेष्टव्या। तत्र सर्वत्र प्रत्यधिदेवतापूजनहवनप्रयोगानुसारेण आशंसावाक्यमात्रं भिद्यते। सर्वमन्यत्समानमेव बोद्धव्यम्। एतादृशस्थलेषु अन्यत्राप्येतदनुसन्धेयम्॥ ४॥ ५॥ ६॥ ७॥

ॐ अदि॑त्यै रास्ना॑सीन्द्रा॒ण्याऽउ॒ष्णीषः॑।
पू॒षासि॑ घ॒र्म्माय॑ दीष्व॥ ८॥

अदित्यै रास्नासीत्यस्य दध्यङ्ङाथर्वणऋषिरिन्द्राणीदेवता इन्द्राण्यावाहने तदीयपूजने इन्द्राणीप्रीत्यर्थे होमे च विनियोगः। "अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। 'अदितिरदीने'ति यास्कोक्तेः अदितिः अदीना दुःखरहिता। दितिः दैन्यं नास्ति दितिः दैन्यं यस्याः सा तथोक्ता। शच्या इन्द्रपत्नीत्वाददैन्यत्वं युक्तमेव तेन अदितिरिह इन्द्राण्येव नतु देवमाता, तस्या इह इन्द्राणीपूजाप्रकरणेऽनुपयोगात्। अदित्यै इत्यत्र षष्ठ्यर्थे चतुर्थी बोद्धव्या, "षष्ठ्यर्थे चतुर्थीतिवाच्यमि"ति वार्त्तिककारवचनात्। तथा असीत्यत्र "तिङां तिङो भवन्ती"ति वचनात् "बहुलं छन्दसि, सुपां सुलु०—" इत्यादिपाणिन्युक्तेश्च प्रथमपुरुषैकवचनस्थाने मध्यमपुरुषैकवचनमित्यनुसन्धेयम्। तदुक्तञ्च कारिकाकारेण "सुप्तिङुपग्रहलिङ्गनराणामि"त्यादि। रास्नाशब्दश्चात्र काञ्चीशब्दार्थवाचकः। काञ्ची तु रसना मेखलेति यावत्। शब्दायमानमेतद्भूषणं प्रायः स्त्रीमात्रस्य कटिप्रदेशे भवति। अतोऽन्यत्रापि कैश्चिदुक्तं "काञ्चीकूजितकैतवेन मदनो द्यौः शान्तिमुद्घुष्यति।" इति। "रासृ शब्दे" (भ्वा० प०) रासति शब्दायतीति रास्ना पूर्वोक्तैव "रास्नासास्नास्थूणावीणाः" इत्यौणादिको नाप्रत्ययः। एवं रासतेः शब्दार्थाद्रसतेर्वा शब्दार्थादेव नाप्रत्यये रास्नाशब्दो निष्पन्नो भवति। तत्र रसतेरितिपक्षे उपधादीर्घश्चानुसन्धेयः। यद्वा "रस आस्वादने" इत्यस्मात्पूर्वसूत्रेणैव नाप्रत्यये उपधादीर्घे सति रास्नाशब्दनिष्पत्तिः। पक्षेऽस्मिन् रास्नाशब्दो गन्धद्रव्यवाचकः। तथाचोक्तमभिधानकारेण "रास्ना तु स्याद्भुजङ्गाक्ष्यामेलापर्ण्या-

मपि स्त्रियाम्।" इतिमेदनी। एवं च एलापर्णी सुगन्धिद्रव्यविशेषः। तदपि गन्धद्रव्यं स्त्रियाः शृङ्गारेऽतीवोपयोगि। तदिदानीं रास्नाभिधं शब्दायमानं भूषणं तत्सदृशमन्यद्भूषणान्तरं वा पक्षान्तरे रास्नाभिधं शृङ्गारोपयोगि तद्द्रव्यमन्यद्द्रव्यान्तरं वोपकल्प्य इन्द्राणीं प्रत्युच्यते। हे इन्द्राणि, अदित्यै अदित्याः अनवखण्डितायाः दुःखरहितायाः इन्द्राण्याः ( तवेति शेषः ) तव रास्ना शब्दायमाना काञ्ची रास्ना शृङ्गारोपयोगि सुगन्धिद्रव्यं वा असि अस्तीत्यर्थः। तत्सम्पाद्य त्वामहमाह्वयामि आहूय च त्वां पूजयामि होमपक्षे त्वत्प्रीतये जुहोमीति वाक्यशेषः। किञ्च हे इन्द्राणि, इन्द्राण्याः उष्णीषः शिरोवेष्टनं तवायमस्तीतिशेषः। उष्णीषपदेन इह स्त्रियाः शिरःप्रदेशे चूडाबन्धने शृङ्गारोपयोगि शोभाकरं किमपि वस्त्रमुपलक्षयति, प्रसिद्धस्योष्णीषस्य स्त्रीविषयेऽनुपयुक्तत्वात्। तथा हे इन्द्राणि, त्वं पूषासि इन्द्रपत्नीत्वात्सर्वेषां पोषणकर्त्री असि पूषेत्यत्र पुंस्त्वमार्षम्। हे इन्द्राणि, त्वं घर्माय दीष्व घर्मः प्रवर्ग्यः स च यज्ञमात्रस्योपलक्षकः तेन घर्माय अर्थात् यज्ञाय यज्ञार्थं दीष्व देहि धनं मह्यमिति शेषः। "दा दाने" ( जु० उ० ) इत्यस्यात्मनेपदे लोण्मध्यमपुरुषैकवचने थासि तस्य 'से' इत्यादेशे शपि च जुहोत्यादित्वात् शपः श्लौ "छन्दसि वेतिवक्तव्यम्" इत्यनेन द्विर्वचनस्य वेदे वैकल्पिकत्वात्तदभावे "छन्दस्युभयथे"ति आर्धधातुकत्वेन "घुमास्था" इत्यादिना दावयवाकारस्य ईत्वे "सवाभ्याम्" इत्यादिना प्रत्ययावयवैकारस्य वकारे 'दीस्व' इति जाते इणः परत्वात्सकारस्य षकारे दीष्वेत्यवगन्तव्यम्॥ ८॥

सम्प्रदायभेदेन "नियुत्वान्वायो" इत्यपि मन्त्रः शचीपूजने केषांचित्साम्प्रदायिकानां प्रयोगपद्धतिषु दृश्यते। स च प्रामादिक एव, मन्त्रस्यास्य वायुलिङ्गत्वेन वायुदेवताकत्वात्तदर्थमात्रप्रकाशकत्वेन तदीयपूजनादावेव सदुपयोगत्वादिह शचीपूजनादौ लिङ्गप्रमाणाभावे विनियोगानर्हत्वात्। अतः प्रत्यधिदेवतामन्त्रप्रकरणे इह न व्याख्यायते। केचन साम्प्रदायिकाः "आब्रह्मन्नि"ति मन्त्रेण ब्रह्मपूजां समामनन्ति। स च मन्त्रोऽधिदेवताप्रकरणे व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या। सम्प्रदायभेदेन "प्रजापते न" इत्ययमपि मन्त्रो ब्रह्मपूजनादौ दृश्यते। तथाहि—

ॐ प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ रू॒पाणि॒ परि॒ ता ब॑भूव।
यत्का॑मास्ते जुहु॒मस्तन्नो॑ऽअस्तुव॒यम्म॒मुष्य॑ पि॒तासा॑वु॒स्य पि॒ता व्व॒यꣳ स्या॑म॒
पत॑यो र॒यी॒णाꣳ स्वाहा॑॥ ९॥

प्रजापते नेत्यस्य हिरण्यगर्भप्रजापतिर्ऋषिर्यजुर्मध्यात्रिष्टुप्छन्दः प्रजापतिर्देवता प्रजापत्यावाहने तदीयपूजने होमपक्षे प्रजापतिप्रीत्यर्थे होमे च विनियोगः। अथ मन्त्रार्थः। हे प्रजापते, हिरण्यगर्भ, त्वत् त्वत्तः अन्यः कश्चिदपि देवताविशेषः ता तानि विश्वा विश्वानि सर्वाणि रूपाणि नानाजातीयानि नानाविधानि एतानि इमानि सर्वाणि भूतानीति शेषः, न परिबभूव परिभवितुं समर्थो नाभूदित्यर्थः। (अत्र परीत्युपसर्गस्य बभूवेति क्रियापदेन सह सम्बन्धो बोद्धव्यः, "व्यवहिताश्चे"ति पाणिनिवचनात्।) परिभवः सृष्टेरप्युपलक्षणम्। तेन त्वदन्यो देव एतानि भूतानि स्रष्टुं संहर्तुं च न समर्थो बभूवेत्यभिप्रायः। 'ता' 'विश्वा' इत्युभयत्र "शिशब्दो बहुलमि"ति प्रातिशाख्यसूत्रेण शिलोपश्छान्दसो बोध्यः। अतो वयं यत्का-

मास्ते तुभ्यं जुहुमः, यः कामो येषां ते यत्कामाः येन कामेन त्वामुद्दिश्य जुहुम इति भावः। तत्कामसिद्धिरूपं फलं नोऽस्माकमस्तु भवत्वित्यर्थः। किञ्च हे प्रजापते, अयं देवदत्तादिर्मत्पुत्रः अमुष्य यज्ञदत्तादेर्मत्पौत्रस्य पिता अस्त्वित्यनुषङ्गः। तथा असौ यज्ञदत्तादिर्मत्पौत्रः अस्य भवदत्तादेर्मत्प्रपौत्रस्य पिता अस्त्विति इहाप्यनुषङ्गः। एवं वंशपरम्परयानवच्छिन्नसन्तत्या त्वत्प्रसादात्सर्वथा सपुत्राः सन्तो वयं रयीणां धनानां पतयः स्याम भवेम। अतोऽनेन मन्त्रेण त्वा त्वाम् आह्वयाम इति वाक्यशेषः। पूजापक्षे अनेन मन्त्रेण त्वा त्वां पूजयाम इति वाक्यशेषः। स्वाहा, तादृशाय तुभ्यं यद्धविः स्वाहाकारेण वयं जुहुमस्तद्धविस्त्वदर्थं सुहुतमस्त्विति भावः। स त्वमस्मत्सपर्य्यादिना सन्तुष्टः सन्नस्मान् सुखं गमयेत्याशंसावाक्यार्थः॥९॥

ॐ नमोऽस्तु सर्प्पेभ्यो ये के च पृथिवीमनु।
येऽअन्तरिक्षे ये दिवि तेभ्यः सर्प्पेभ्यो नमः॥ १०॥

नमोऽस्तु सर्प्पेभ्य इत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः सर्प्पो देवता सर्प्पावाहने तदीयपूजने तत्प्रीतये होमे च विनियोगः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे सर्प्पाः, ये के च ये केचिद्यूयं पृथिवीमनु पृथिव्यामनुगताः स्थेति शेषः। तेभ्यः पृथिवीस्थितेभ्यः सर्प्पेभ्यः सर्प्पणशीलेभ्यः एतत्सर्प्पशरीराधिष्ठातृभ्यो देवेभ्यो नमोऽस्तु नमस्कारोऽस्त्वित्यर्थः। किञ्च हे सर्प्पाः, ये यूयम् अन्तरिक्षे अन्तरिक्षलोके वर्त्तमानाः स्थेति शेषः। तेभ्योऽन्तरिक्षलोकस्थेभ्यो युष्मभ्यन्नमोऽस्त्वित्यनुषङ्गः। तथा ये यूयं दिवि द्युलोके वर्त्तमानाः स्थेति शेषः। तेभ्यो द्युलोकस्थितेभ्यो युष्मभ्यन्नमोऽस्तु मदीया नतिरस्त्वित्यर्थः। एवं नमस्कारपूर्वकं युष्मानाह्वयामि, आहूय च पूजयामि। होमपक्षे युष्मदर्थं जुहोमीति वाक्यशेषः। ते यूयं मत्सपर्य्यया सन्तुष्टाः सन्तो मां सुखं गमयेत्याशंसावाक्यार्थः॥ १०॥

"ब्रह्मयज्ञानम्" इति ब्रह्मयज्ञियमन्त्रप्रकरणे व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या॥ ११॥

इति प्रत्यधिदेवतामन्त्रव्याख्या॥

---

## ॥ अथ पञ्चलोकपालमन्त्राः ॥

"गणेशश्चाम्बिका वायुराकाशश्चाश्विनौ तथा। ग्रहाणामुत्तरे पञ्च लोकपालाः प्रकीर्त्तिताः॥" इति मदनरत्ने। तत्र "गणानान्त्वा, अम्बेऽअम्बिके" इति मन्त्रद्वयं देवपूजामन्त्रप्रकरणे व्याख्यातम्। तदेतन्मन्त्रद्वयस्य व्याख्या तत्रान्वेष्टव्या॥ १॥ २॥

ॐ आ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम्।
वायोऽअस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः॥ ३॥

आ नो नियुद्भिरित्यस्य वसिष्ठ ऋषिस्त्रिष्टुप्छन्दो वायुर्देवता वाय्वावाहने वायुपूजने वायु-

प्रीत्यर्थे होमे च विनियोगः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे वायो, त्वम् ईदृशीभिः नियुद्भिः अश्वाभिः नोऽस्माकमध्वरं यज्ञमुपयाहि अस्मदीयं यज्ञमुपलक्ष्य आगहि आगच्छेत्यर्थः। कीदृशीभिर्नियुद्भिरित्यपेक्षायामुच्यते। शतिनीभिः सहस्रिणीभिश्च शतं सहस्रं संख्या यासां ताभिर्नियुद्भिरश्वाभिरस्मदीयं यज्ञं प्रत्यागच्छेति भावः। एत्य चास्मिन्सवने यज्ञगृहे मादयस्व तृप्यस्व स्वात्मानं तर्पयेत्यर्थः। एवमेकवचनान्तेन वायुं सम्बोध्य तं प्रति स्वाभिप्रायं चोक्त्वा सम्प्रति यूयमिति युष्मच्छब्दयोगात्पातेति मध्यमपुरुषबहुवचनश्रवणाच्च बहुवचनान्तं वायुपर्य्यायवाचकं "हे मरुतः", इति सम्बुद्धिपदमध्याहृत्य इह पुनरुच्यते। हे मरुतः, यूयं स्वस्तिभिः कल्याणैर्नोऽस्मान् सदा पात सर्वदा रक्षत। अतो युष्मानाह्वयामः, पूजनपक्षे पूजयामः, होमपक्षे तत्प्रीत्यर्थे जुहुमश्चेति वाक्यशेषः॥ ३॥

सम्प्रदायभेदेन "वातो वा" इत्यपि मन्त्रो वायुपूजने केषाञ्चित्साम्प्रदायिकानां प्रयोगपद्धतिषु दृश्यते। स च प्रामादिक एव, मन्त्रस्यास्य नानालिङ्गत्वान्नानादेवताकत्वेन अश्वविषयकवेगस्थापनार्थप्रकाशकत्वाच्च भिन्नार्थकत्वेन तदर्थस्य वाय्वावाहनतत्पूजनतदीयहोमकर्म्मसु लिङ्गप्रमाणाभावे विनियोगानर्हत्वात्। अतोऽयमपि मन्त्रो मया इह न व्याख्यायते। तथा "घृतं घृतपावानः" इति षोडशोपचारपूजाप्रकरणे व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या। किन्तु तत्र घृतस्नानोपयोगित्वेन यद्वैशिष्ट्यं वर्त्तते तदस्मिन्पक्षे हेयम्। सर्वमन्यत्समानम्। यस्याकाशस्य हविराज्यं तमाकाशमिह आह्वयामि, आहूय च पूजयामि, हवनपक्षे तदर्थं जुहोमीति वाक्यशेषोऽध्याहर्त्तव्यः। अन्तरिक्षस्य हविरसीत्यन्तरिक्षलिङ्गत्वादनेन मन्त्रेण आकाशपूजनं समामनन्ति याज्ञिकाः॥ ४॥

तथा सम्प्रदायभेदेन "ऊर्ध्वाऽअस्य" इत्यपि मन्त्रः आकाशपूजने केषाञ्चित्साम्प्रदायिकानां प्रयोगपद्धतिषु दृश्यते। सोऽपि प्रामादिक एव, मन्त्रस्यास्य "शोचीꣳष्यग्नेः" इत्यग्निलिङ्गत्वेनाग्निदेवताकत्वात्सर्वैरपि पादैरग्निस्तुतिरेव प्रतिपादकत्वाच्च आकाशावाहनतत्पूजनतदीयहोमकर्म्मसु लिङ्गप्रमाणाभावे विनियोगानर्हत्वात्।

**ॐ यावाङ्कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षतम्।**
**उपयामगृहीतोऽस्यश्विभ्यान्त्वैषते योनिर्माध्वीभ्यान्त्वा॥ ५॥**

यावाङ्कशेत्यस्य मेधातिथिर्ऋषिर्गायत्रीच्छन्द अश्विनौ देवते अश्विनावाहने तदीयपूजने होमपक्षे तत्प्रीत्यर्थे होमे च विनियोगः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे अश्विना ("सुपां सुलु०" इति विभक्तेराकारः।) हे अश्विनौ अश्विदेवौ वां युवयोर्या ईदृशी कशा "कशेति वाङ्नामे"ति निघण्टुः, काशयति प्रकाशयति वाङ्मयमिति कशा वाक् अस्तीतिशेषः। तया कशया वाचा अस्मदीयं यज्ञं मिमिक्षतं "मिह सेचने" सन्नन्तः, सेक्तुमिच्छतम् निष्पादयतमित्यर्थः। कीदृशी कशेत्यपेक्षायामुच्यते। मधुमती मधु ब्रह्म तद्वती तद्विशिष्टा मधुब्राह्मणोपनिषत्प्रशंसायुतेत्यर्थः। तथा सूनृतावती प्रियं सत्यं वचः सूनृतं तद्वती सूनृतवतीति प्राप्ते तस्य संहितायां छान्दसो दीर्घः, सूनृतावती सत्यप्रियवचनोपेतेत्यर्थः। ईदृशी वाक् ययोर्युवयोरस्ति तया वाचा यज्ञसम्पादनार्थं हे अश्वि-

नौ, तौ युवामस्मिन् यज्ञे आह्वयामीति वाक्यशेषः। आहूय च पूजयामीति पूजने, युष्मदर्थं जुहोमीति होमे च वाक्योहः कार्य्यः। तौ युवामिहागत्य तया वाचा अस्मदीयं यज्ञं निष्पादयतमित्याशंसावाक्यार्थः। उपयामगृहीतोऽसीति यजुः। एतस्य यजुषः श्रौते आश्विनग्रहग्रहणे तदासने च प्रयोगो भवति। इह स्मार्त्ते सोमरसाभावे निष्प्रयोजनम्। सोमयज्ञप्रकरणे यावाङ्कशेति ऋचा सह पठितत्वादिदानीं सोमरसाभावेऽपि तया सह पठ्यते। केचन याज्ञिकास्तु यावाङ्कशेति ऋङ्मात्रं पठन्ति, न तु उपयामेति यजुः, द्रव्यलोपे मन्त्रलोपश्चेति तेषां मतम्। व्याख्यातव्यं चेत्पूजनीयद्रव्यं प्रति वक्तव्यम्। हे आश्विनग्रहस्थानीय, पूजनद्रव्य, त्वमुपयामगृहीतोऽसि उपयामेन पात्रेण गृहीतोऽसि स्वीकृतोऽसि। पक्षेऽस्मिन् पूजनद्रव्ये सोमरसाध्यारोप इत्येव युक्तं मन्ये, अश्विभ्यामर्थे त्वा त्वां गृह्णामीति शेषः। हे पूजोपयोगिन्, पूजनद्रव्यविशेष, एषः खरैकदेशः ते तव योनिः स्थानमित्यर्थः। कीदृग्भ्यामश्विभ्यामर्थे त्वां गृह्णामीत्याशङ्क्य माध्वीभ्यामित्युच्यते। माध्वीभ्यां मधुब्राह्मणाध्येतृभ्यामिति भावः। तथा हे पूजनद्रव्य, ईदृग्भ्यामश्विभ्यामर्थे त्वामत्र आसादयामीति शेषः। मधुब्राह्मणं यावधीयाते तौ माध्व्यौ ताभ्याम्। तद्धित ईप्रत्ययः। "दध्यङ् हवा आभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच" (४।१।५।१८) इति श्रुतेः ॥५॥

सम्प्रदायभेदेन "अश्विनोर्भैषज्येन" इत्ययं मन्त्रोऽश्विनोः आवाहनपूजनहोमेषु केषाञ्चित्साम्प्रदायिकानां प्रयोगपद्धतिषु दृश्यते। किन्तु सोऽपि प्रामादिक एव, मन्त्रस्यास्य अश्विलिङ्गत्वेनाश्विदेवताकत्वेऽपि मन्त्रसमुदायस्य अभिषेकार्थप्रकाशकत्वेन इहाश्विनोः पूजनादौ प्रमाणमन्तरा विनियोगानर्हत्वात् ॥

॥ इति पञ्चलोकपालमन्त्रव्याख्या ॥

---

## ॥ अथेन्द्रादिदशदिक्पालमन्त्राः ॥

तत्र "त्रातारमिन्द्रम्" इति अधिदेवताप्रकरणे व्याख्यातः। तथा "त्वन्नो अग्ने" इति स्नानप्रकरणे व्याख्यातः। एवम् "अग्निन्दूतम्" इति देवपूजाप्रकरणे व्याख्यातः। तथा "यमाय त्वा" सम्प्रदायभेदेन "असि यमः" इति चेमौ मन्त्रावधिदेवताप्रकरणे व्याख्यातौ। अत एतेषां मन्त्राणां तत्तत्प्रकरणे व्याख्या द्रष्टव्या ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

ॐ असु॑न्वन्तु॒मय॑जमानमिच्छ स्ते॒नस्ये॒त्यामन्वि॑हि॒ तस्क॑रस्य।
अ॒न्यम॒स्मदि॑च्छ॒ सा त॑ऽइ॒त्या नमो॑ देवि निर्ऋ॑ते॒ तुभ्य॑मस्तु ॥ ६ ॥

असुन्वन्तमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो निर्ऋतिर्देवता निर्ऋत्यावाहने (पूजनपक्षे निर्ऋतिपूजने, होमपक्षे निर्ऋतिप्रीतये) विनियोगः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। मन्त्रेऽस्मिन् निर्ऋतिशब्दो निर्ऋतिदिगभिमानिनीं देवतामभिलक्षयति। तत्र देवताशब्दस्य स्त्रीत्वापेक्षया निर्ऋतिशब्दस्यापि स्त्रीत्वं

युक्तम्। एतदभिप्रायेणैव "नमो देवि निर्ऋते तुभ्यमस्तु" इत्येतन्मन्त्रांशे स्त्रीत्वविशिष्टं सम्बुद्धिपदद्वयं वर्त्तते। अथवा दिक्पतीनां पूजनप्रकरणे दिक्पतिशब्दगतपुंस्त्वापेक्षया निर्ऋतिशब्दस्यापि पुंस्त्वमेवावगन्तव्यम्। निर्ऋतिशब्दस्य स्त्रीत्वे पुंस्त्वे च सम्बोधने समानमेव रूपम्। केवलं "देवि" इति सम्बोधने स्त्रीत्वमार्षम्। निरुक्ते निर्ऋतिशब्दनिर्वचनप्रसङ्गे यास्केनोक्तं, यथा "निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा" इति, तत्रैव "बहुप्रजा निर्ऋतिमाविवेश।" बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः, वर्षकर्म्मेति नैरुक्ताः" इति च। भगवता वेदभाष्यकारेण महीधरेणाप्युक्तं, तथाहि—"कृच्छ्रापत्तिर्निर्ऋतिः स्यात्स्यादलक्ष्मीस्तु निर्ऋतिः।" इत्यभिधानात् भूमिर्वा निर्ऋतिदिगभिमानिनी देवता वा "अलक्ष्म्यां दिक्पतौ चापि निर्ऋतिर्निरुपद्रवे।" इतिकोशान्तराच्च। तदत्र निर्ऋतिशब्दो निर्ऋतिदिक्पतिवाचकस्तत्सम्बुद्धौ हे निर्ऋते, देवि, हे निर्ऋतिदिक्पाल, देव, यद्वा हे निर्ऋते, देवि, हे निर्ऋतिदिगभिमानिनि, देवते, असुन्वन्तं सोमयागमकुर्वाणम् अयजमानम् अन्यैर्हविर्यज्ञैर्यजनमकुर्वाणं च त्वमिच्छ प्रतिगच्छ तं गृहाणेत्यर्थः। किञ्च स्तेनस्य गुप्तचोरस्य तथा तस्करस्य प्रकटचोरस्य च इत्यां गतिमन्विहि अनुगच्छ चौर्य्यं कृत्वा धावतोस्तयोः पृष्ठतो गत्वा तावभिगृहाणेत्याशयः। सर्वथा सोमं सुन्वद्भ्यो हविर्यज्ञैश्च यजद्भ्योऽस्मदन्यमिच्छ न त्वमस्मानिच्छेत्यर्थः। सा दुष्टशिक्षा ते तवेत्या गतिश्च अस्मदन्यम्प्रति गच्छत्विति शेषः। अस्मदन्यम्प्रतिगृह्णात्वित्यभिप्रायः। अतो हे देवि, निर्ऋते, निर्ऋतिदिगभिमानिनि देवते, एवम्भूतायै तुभ्यं नमोऽस्तु। मदीया नतिरस्त्वित्यर्थः। एवं नमस्कारपूर्वकं हे निर्ऋते, त्वामस्मिन्यज्ञे आह्वयामि, पूजनपक्षे त्वां पूजयामि, होमपक्षे त्वत्प्रीतये जुहोमि चेति वाक्यशेषः। मत्सपर्य्यादिना परितुष्टिं प्राप्य मां सुखं गमयेत्याशंसावाक्यार्थः॥ ६॥

केचन याज्ञिकास्तु "एष ते" इति निर्ऋतिपूजनमैच्छन्। अतः सम्प्रदायभेदेन केषाञ्चित्साम्प्रदायिकानां प्रयोगपद्धतिषु निर्ऋतिपूजने "एष ते" इति मन्त्रोऽपि दृश्यते। तथाहि—

**ॐ एष ते निर्ऋते भागस्तं जुषस्व स्वाहाग्निनेत्रेभ्यो देवेभ्यः पुरः सद्भ्यः स्वाहा यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्यऽउत्तरासद्भ्यः स्वाहा सोमनेत्रेभ्यो देवेभ्यऽउपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा॥ ७॥**

एष त इत्यादिमन्त्रस्य प्रजापतिर्ऋषिर्नानायजुष्ट्वान्नानाच्छन्दांसि निर्ऋतिर्देवता निर्ऋत्यावाहने पूजनपक्षे निर्ऋतिपूजने, होमपक्षे निर्ऋतिप्रीतये होमे च विनियोगः, इति यथाप्रयोगं वाक्यमूह्यम्। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे निर्ऋते, निर्ऋतिदिक्पते, हे निर्ऋते, निर्ऋतिदिगभिमानिनि देवते, इति वा एषः पुरःस्थापितो नैवेद्यादिरूपो भागः ते तव "अस्ती"ति शेषः। तं स्वकीयं भागं स्वांशं जुषस्व सेवस्व अतः स्वभागग्रहणार्थं त्वामिह आह्वयामि, पूजनपक्षे तेन भागेन त्वां पूजयामि, होमपक्षे तं भागं त्वदर्थं जुहोमि, इति वाक्यशेषः। अत इहागत्य स्वभागं च प्रतिगृह्य मां सुखं गमयेत्याशंसावाक्यार्थः। अवशिष्टानां च यजुषां स्पष्टोऽर्थः। निर्ऋतिलिङ्गकेन यजुषा सहैतानि यजूंषि

संहितायां सहपठितत्वादेव इह निर्ऋतिपूजनेऽपि सहैव पठ्यन्ते। न त्वेषामस्मिन्पक्षे किमपि प्रयोजनमित्येके समामनन्ति। "एष ते निर्ऋते भागस्तं जुषस्व" इत्येतावानेव मन्त्रभागो निर्ऋतिपूजादौ पठनीय इत्यपरे वदन्ति। "असुन्वन्तमयजमानम्" इत्येतन्मन्त्रस्य निर्ऋतिपूजादौ शब्दतोऽर्थतश्च समुपयुक्तत्वात्तेनैव मन्त्रेण निर्ऋतिदेवतायाः पूजनं हवनं च कर्त्तव्यं नतु "एषते" इति मन्त्रेणेति वयं ब्रूमः, मन्त्रसमुदायस्य नानालिङ्गकत्वात् ॥७॥

"तत्त्वा, इमम्मे" इति वा इत्येतन्मन्त्रद्वयं स्नानप्रकरणे व्याख्यातन्तत्रैव व्याख्या द्रष्टव्या ॥ ८ ॥ ९ ॥

"आ नो नियुद्भिः" इति पञ्चलोकपालमन्त्रव्याख्याप्रकरणे व्याख्यातस्तत्रैतस्य व्याख्या द्रष्टव्या ॥ १० ॥

"वयँ सोम" इति षडङ्गशतरुद्रियप्रकरणे नीलसूक्ते व्याख्यातस्तत्रैतस्य व्याख्या द्रष्टव्या। तत्र उमया सहितः सोमस्तत्सम्बुद्धौ हे सोम, इत्यादि रुद्रविषयकं वाक्यं हेयम्। हे सोम, चन्द्र, एतावदेव वाक्यं ग्राह्यं, सर्वमन्यत्समानम् ॥ ११ ॥

अथवा—

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय।
इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं यजन्ति ॥ १२ ॥

कुविदङ्गेत्यस्य काक्षीवतसुकीर्तिर्ऋषिस्त्रिष्टुप्छन्दः सोमो देवता सोमावाहने, सोमपूजने, सोमप्रीत्यर्थे होमे च विनियोगः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। हे सोम, यथा येन प्रकारेण यवमन्तः यवा विद्यन्ते येषां ते यवमन्तः "मादुपधायाश्च मतोर्वोऽयवादिभ्यः"इति निषेधादिह यवात्परस्य मतोर्मकारस्य वकाराभावः। बहुयवसम्पन्नाः कृषीवलाः कुवित् "कुविदिति बहुनामे"ति निघण्टुः, कुवित् अर्थात् बहु बहुलं यवं सर्वं यवमयं सस्यं चित् (चिदित्ययं निपात इह विचारणार्थे, चिदित्येषोऽनेककर्मेति यास्कोक्तेः) विचार्य्य अनुपूर्वं वियूय आनुपूर्व्येण पृथक्कृत्य अङ्ग "अङ्गेति क्षिप्रनामे"ति निघण्टुः, क्षिप्रं दान्ति शीघ्रं लुनन्ति। ( "दाप् लवने" (अ. प.) इत्यस्माल्लट्।) तथा हे सोम, एषां मम ज्ञातीनां ग्रामीणानां च सम्बन्धीनि भोजनानि भोज्यानि वस्तूनि इह अस्माकं गृहे कृणुहि कुरु। इह शब्दस्य पुनरुक्तिरादरातिशयद्योतनार्था, "अभ्यासे भूयांसमर्थं मन्यन्ते"इति यास्कोक्तेः। ये वयं बर्हिष उपरि स्थिता नम उक्तिं यजन्ति (यजन्तीत्यत्र पुरुषव्यत्ययः "तिङां तिङो भवन्ति, बहुलं छन्दसी"त्यादिपाणिन्युक्तेः।) नम इत्यन्ननाम, उक्तिर्वचनम्, हविर्लक्षणमन्नमादाय उक्तिं त्वन्मन्त्रलक्षणं वचनं च अभिधाय वयं यजामः यागं कुर्म्मः। अतस्त्वामाह्वयामः, पूजनपक्षे त्वां पूजयामः, होमपक्षे त्वत्प्रीतये जुहुम इति वाक्यशेषः। स त्वमस्मत्सपर्य्यादिना सन्तुष्टः सन्नस्मान् सुखं गमयेत्याशंसावाक्यार्थः। अनेन मन्त्रेण दिक्पालानां मध्ये सोमं पूजयन्ति केचिद्याज्ञिकाः। तत्र सोम उत्तरदिक्पतिः स च चन्द्रः। अथवा सोम उत्तरदिक्पतिः कुबेर इति केचित्। तत्पक्षे

"उ" इत्ययं निपात उत्कृष्टे, "मा" इति लक्ष्म्यर्थे उत्कृष्टा मा रमा तया सहितः सोमः उत्कृष्टैश्वर्य्यवानित्यर्थः। कुबेरपक्षेऽपि अन्यत्समानमेव ॥ १२॥

ॐ तमीशा॑नं॒ जग॑तस्त॒स्थुष॒स्पतिं॑ धियंजि॒न्वमव॑से हूमहे व्व॒यम्।
पू॒षा नो॒ यथा॒ व्वेद॑सा॒मस॑द्वृ॒धे र॑क्षि॒ता पा॒युरद॑ब्धः स्व॒स्तये॑ ॥ १३॥

तमीशानमित्यस्य गौतम ऋषिर्जगतीछन्द ईशानो देवता ईशानावाहने, पूजनपक्षे ईशानपूजने, होमपक्षे ईशानप्रीत्यर्थे होमे च विनियोगः। वयं तं प्रसिद्धम् ईशानं रुद्रं हूमहे आह्वयामः। कीदृशं तमित्यपेक्षायामुच्यते। जगतः जङ्गमस्य तस्थुषः स्थावरस्य च भूतजातस्य पतिं पालकं तथा धियंजिन्वं धियं बुद्धिं जिन्वति प्रीणातीति धियंजिन्वस्तं धियंजिन्वं बुद्धिसन्तोषकारकमित्यर्थः। अत्र धीशब्दात्परस्य अमोऽलुक्। किमर्थं हूमहे, अवसे अवितुं तर्पयितुमित्यर्थः। अत्र तुमर्थे असेप्रत्ययो बोध्यः। किञ्च यथा येन प्रकारेण पूषा नोऽस्माकं वृधे वृद्ध्यै स्वस्तये कल्याणाय च असत् भूयात् तथा हूमहे इत्यर्थः। कीदृशः पूषा वेदसां धनानां ज्ञानानां च रक्षिता रक्षकः। तथा पायुः पालकः पुत्रादीनामिति शेषः। तथा अदब्धः अनुपहिंसित इत्यर्थः। अनेनैव मन्त्रेण सर्वे साम्प्रदायिका ईशानदिगीशमीशानं पूजयन्ति तत्प्रीत्यर्थं जुह्वति चेत्यवगन्तव्यम्॥ १३ ॥

ईशानपूजानन्तरं केचन साम्प्रदायिकाः "अस्मे रुद्राः" इति ब्रह्माणमावाह्य तं पूजयन्ति, होमे चानेन मन्त्रेण तत्प्रीत्यर्थं जुह्वति च। तत्पश्चात् स्योनासीत्यनन्तमावाह्य अनन्तं पूजयन्ति। एवं होमेऽपि तत्प्रीत्यर्थमनेन जुह्वति च। तत्र पूजाक्रमस्तु साधुतरो मह्यमपि रोचते "हंसस्थोऽरुणकः कमण्डलुधरः शक्रेशयोरन्तराऽनन्तोऽपांपतिरक्षसोर्घननिभस्तार्क्ष्याधिरूढोऽरिभृत्" इत्यादिवचनात्। किन्तु ब्रह्मपूजने "आब्रह्मन्, ब्रह्मयज्ञानम्" इत्यादि तदीयमन्त्रगणं विहाय "अस्मे रुद्राः" इति मन्त्रं ये प्रयुञ्जन्ति, तेऽतीवानवधानतयाऽसामञ्जस्यं कुर्वन्ति। न ह्यस्मिन्मन्त्रे ब्रह्मलिङ्गं दृश्यते न च श्रूयते। मन्त्रश्चायं शुक्लयजुर्वेदसंहितायां सर्वमेधेऽग्निष्टोमसंस्थे वैश्वदेवस्तुत्संज्ञके चतुर्थेऽहनि माहेन्द्रपुरोरुक्प्रकरणे पठितः। अतः प्रकरणादपि ब्रह्मपूजनादौ विनियोगो न सिद्ध्यति। तथा ब्रह्मपूजनादेः स्मार्त्तत्वात्स्मृत्युक्तमेतादृशं वचनमपि न दृश्यते न च श्रूयते, येन तत्रास्य विनियोगःसम्भाव्येत। अतोऽयं प्रामादिक इत्येव वक्तुं शक्यते। अतोऽस्मिन्प्रकरणे अस्मे रुद्रा इत्ययं मन्त्रो न व्याख्यायते। अनन्तपूजने स्योनासीत्ययं मन्त्रः पठ्यते। तत्राप्यनन्तपूजाप्रसङ्गतिर्न भवति। स्योनासीत्यस्य शब्दतोऽर्थतश्च पृथिवीपूजार्थप्रकाशकत्वात्पृथिवीति पृथिवीलिङ्गात्पृथिवीदेवताकत्वाच्च पृथिवीपूजनादावस्य विनियोगः साधुतरो न त्वनन्तपूजने, तल्लिङ्गस्य तदर्थस्य चानुपयुक्तत्वात्। अतोऽयमपि प्रामादिक एव, तस्मादिह मया न व्याख्यायते। केषाञ्चित्सम्प्रदाये तदीयप्रयोगपद्धतिषु तु पञ्चलोकपालपूजनानन्तरमिन्द्रादिदशदिक्पालपूजाविधिरेव नास्ति, इति तु महदनौचित्यं मन्ये। किन्तु तत्सम्प्रदायज्ञैर्होमप्रकरणे ईशानहोमानन्तरमनन्तप्रीतये नमोऽस्तु सर्पेभ्य इत्यनन्तहोमप्रयोगस्तदुत्तरं च ब्रह्मप्रीतये ब्रह्मयज्ञानमिति ब्रह्महोमप्रयोगः प्रदर्शितः। तत्र अनन्तस्य शेषरूपत्वाच्छेषस्य च सर्पत्वान्नमोऽस्तु सर्पेभ्य इति मन्त्रेण अनन्तस्य हवनं यदुपदिष्टं तत्साधुतरं मन्ये, किन्तु ईशानहोमानन्तरं ब्रह्महोममनुक्त्वा यदनन्तहोममेव प्रथमं

प्रदर्श्य पश्चाद्ब्रह्महोमो निर्दिष्ट इति तु पूर्वोक्तवचनस्वरसात्तन्मह्यं न रोचते। "यदि मेऽस्ति तपस्तप्तम्" इत्यादिसावित्रीवचनाद्यद्यपि ब्रह्मपूजा निषिद्धा। परञ्च "पूजयिष्यन्ति ब्रह्माणं नरा भक्तिसमन्विताः" इत्यादिसावित्रीकृतशापोद्धारश्रवणात्स्कन्दपुराणादौ च "अद्यप्रभृति यः पूजां मन्त्रयुक्तां करिष्यति" इत्यादिसमन्त्रकब्रह्मपूजाप्रतिषेधनाद्ब्राह्मे "यदन्यदेवपूजायां तव पूजा भविष्यती"ति सर्वपूजान्ते ब्रह्मपूजाविधानात्तदभिप्रायेणैव प्रयोगपद्धतिष्वपि अनन्तहोमप्रयोगोत्तरं ब्रह्महोमो निर्दिष्ट इति चेत्तदपि नातीव सामञ्जस्यं, स्कन्दपुराणोक्तब्रह्मपुराणोक्तवचनद्वयस्य यज्ञेतरसमन्त्रकब्रह्मपूजाप्रतिषेधविषयत्वात्। यज्ञे तु हंसस्थ इत्यादिपूर्वोक्तवचनस्वरसादीशानपूजोत्तरं ब्रह्मपूजा, ब्रह्मपूजोत्तरमनन्तपूजा कर्त्तव्येत्ययं क्रम एव साधुतरः। एवं होमेऽप्ययमेव क्रमोऽनुसन्धेय इत्यलमेतत्। अवशिष्टं च मैथिलसाम्प्रदायिकमत्कृतसर्वदेवताप्रतिष्ठाप्रयोगपद्धतौ गौडदाक्षिणात्यसाम्प्रदायिकमत्कृतसर्वदेवताप्रतिष्ठाप्रयोगपद्धतौ चान्वेष्टव्यम्॥ "नमोऽस्तु सर्पेभ्यः" इति प्रत्यधिदेवतामन्त्रव्याख्याप्रकरणे व्याख्यातः। "ब्रह्मयज्ञानमि"ति ब्रह्मयज्ञजपमन्त्रव्याख्याप्रकरणे व्याख्यातः। तत्रैतन्मन्त्रद्वयस्य व्याख्या द्रष्टव्या॥ १४॥ १५॥

॥ इति दशदिक्पालमन्त्रव्याख्या ॥

---

## ॥ अथ प्रतिष्ठामन्त्रः ॥

ॐ मनो॑ जू॒तिर्जु॑षता॒माज्य॑स्य॒ बृह॒स्पति॑र्य॒ज्ञमि॒मन्त॑नो॒त्वरि॑ष्टँय्य॒ज्ञꣳ समि॒मन्द॑धातु। विश्वे॑दे॒वास॑ऽइ॒ह मा॑दयन्ता॒मो३म् प्रति॑ष्ठ॥ १॥

मनो जूतिरित्यस्य प्रजापतिर्ऋषिर्यजुरन्ता व्यूहेन पादपूरणत्वादनुष्टुप्छन्दो लिङ्गोक्ता देवता प्रतिष्ठापने विनियोगः, ॐ प्रतिष्ठेतिमन्त्रलिङ्गात्। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि—मनः आज्यस्य जुषताम् ( कर्म्मणि षष्ठी ) मनः आज्यं घृतं जुषतां सेवतामित्यर्थः। कस्य मन इत्यपेक्षायामस्य प्रतिष्ठार्हस्य अमुकदेवस्येत्यध्याहार्य्यं "हीनं वाक्ये निवेशयेदि"तिवचनात्। अस्य प्रतिष्ठार्हस्य अमुकदेवस्य मनः आज्यं जुषतां, मनस्त्विह प्राणमात्रोपलक्षकं तेन अस्य प्रतिष्ठार्हस्य अमुकदेवस्य मनः शरीरस्थाः पञ्च प्राणवायवश्च आज्यं जुषन्तां सेवन्तामित्यर्थः। कीदृशं मन इत्यपेक्षायामुच्यते। जूतिः ( जवतेर्गतिकर्म्मणो जूतिरिति क्तिन्प्रत्ययान्तो निपातः। स्त्रीत्वं च छान्दसम्। ) जवते शीघ्रं गच्छतीति जूतिः अतीतानागतवर्त्तमानकालगतपदार्थेषु सततगमनशीलमित्यर्थः। ईदृशं मन आज्यं जुषतां सेवतामितिभावः। तथा सति बृहस्पतिर्देवगुरुः इमं मदीयं यज्ञं तनोतु विस्तारयतु देवाचार्य्यत्वादित्यर्थः। तथा स एव बृहस्पतिः इमं मदीयं यज्ञम् अरिष्टं रिषतिर्हिंसार्थः नास्ति रिष्टं यस्मिन् सः अरिष्टस्तमरिष्टं हिंसारहितं कृत्वा सन्दधातु अविच्छिन्नं करोत्वित्यर्थः। तथा सति विश्वेदेवासः ( आज्जसेरसुगित्यसुगागमः ) विश्वेदेवाः सर्वे देवाः इह यज्ञकर्म्मणि मादयन्तां "मद तृप्तौ" (चु. आ.) तृप्यन्तामित्यर्थः। हे प्रतिष्ठार्ह, अमुकदेव,

त्वम् ॐ प्रतिष्ठ ( 'ॐ'इत्यङ्गीकारार्थमव्ययम् ) एतत्सर्वमङ्गीकृत्य त्वमिह प्रतिष्ठ प्रकर्षेण तिष्ठ अस्मिन् यज्ञे सुप्रतिष्ठितो भवेत्यर्थः। अन्यत्र तु अस्मिन् घटे, अस्यां वेद्यां वा, अस्मिँल्लिङ्गे, अस्यां मूर्त्तौ वा, अस्मिन् यन्त्रे वा, इति यथाप्रकरणमूह्यम्। त्वयि प्रतिष्ठिते सति ममायं यज्ञः साङ्गो भूत्वा समाप्स्यति। निर्विघ्नपूर्वकं यज्ञपरिसमाप्तौ सत्यामेव यावदुक्तसमस्तयज्ञफलावाप्तिश्च ममापि भविष्यति। अतस्त्वमिह प्रतिष्ठेत्याशयः। अन्यत्र तु त्वयि अत्रावस्थिते सति मम सर्वाभीष्टसिद्धिर्भविष्यति। अतस्त्वमिह प्रतिष्ठेत्याशयः। ॐ प्रतिष्ठेतिप्रतिष्ठालिङ्गश्रवणात्सर्वसम्प्रदायेष्वनेनैव मन्त्रेण प्रतिष्ठां विदधति सर्वे याज्ञिकाः। अतो मयापि विनियोगानुसारेणैवं व्याख्यातोऽयं मन्त्रः॥ १॥

॥ इति प्रतिष्ठामन्त्रव्याख्या॥

---

## ॥ अथ प्राणप्रतिष्ठामन्त्रः ॥

ॐ अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाश्चरन्तु च।
अस्यै देवत्वमर्चायै मामहेति च कश्चन॥ १॥

अस्यै प्राणा इतिमन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता अर्चामात्रस्य प्राणप्रतिष्ठापने विनियोगः। "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि—अस्यै ( "षष्ठ्यर्थे चतुर्थीतिवाच्यमि"ति वार्त्तिकेनात्र षष्ठ्यर्थे चतुर्थी बोद्धव्या। एवमग्रेऽप्यनुसन्धेया। ) अस्यै अस्याः अर्चाया इति शेषः। प्राणाः पञ्चप्राणवायवः प्रतिष्ठन्तु प्रकर्षेण तिष्ठन्तु "हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले। उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः॥" इतिवचनात्तत्तत्प्राणायतनेषु प्राणादयः सर्वे पञ्च वायवः सुखेन निवसन्त्विति भावः। तथा च पुनः अस्यै अस्याः अर्चायाः प्राणाः चरन्तु स्वस्वायतनेष्विति शेषः। तत्तत्स्थानेषु सञ्चलन्त्वित्यर्थः। तथा अस्यै अस्याः अर्चायै अर्चायाः देवत्वं देवभावत्वं माम् अह एति ( "अह इति च ह इति च विनिग्रहार्थीयौ" इतियास्कोक्तेरिह अहेत्ययं निपातो विनिग्रहार्थीयो बोद्धव्यः। एतीति क्रियापदञ्चात्र "इण् गतौ" इत्यस्य लोडर्थे लटि प्रथमपुरुषैकवचने रूपमित्यवगन्तव्यम्। ततोऽयमर्थः। मामेव एतु प्राप्नोतु नान्यमप्रतिष्ठाकर्त्तारं पुरुषमितिशेषः, देवप्रतिष्ठातुः पुरुषस्य कृते देवप्रतिष्ठायाः फलं प्रकृत्य बहुविधफलकथनानन्तरम् "अन्ते सायुज्यमाप्नुयादि"ति स्मृतिवचनात्। च पुनः अस्यै अस्याः अर्चायै अर्चायाः देवत्वं देवभावत्वं कश्चन ( अत्र चकारोऽप्यर्थे नकारस्तु निषेधार्थे ) कोऽपि पुरुषः न विनाशयत्वितिशेषः। अस्याः अर्चायाः देवत्वं च अशुचित्वादिना न कश्चिद्दूषयत्विति भावः। पूजकस्य शुचित्वादिना अर्चाया देवत्वशक्तिर्वर्धते। तथा पूजकस्य अशुचित्वादिना अर्चाया देवत्वशक्तिर्नश्यतीति प्रसिद्धेरिह अशुचित्वादिराहित्यमाशास्यते कश्चनेत्यनेन मन्त्रांशेनेत्याशयः॥ १॥

॥ इति प्राणप्रतिष्ठामन्त्रव्याख्या॥

---

## ॥ अथ सर्वप्रायश्चित्तसंज्ञकपञ्चमहावारुणमन्त्राः ॥

तत्र "त्वन्नोऽअग्ने, सत्वन्नोऽअग्ने," इतिमन्त्रद्वयं स्नानमन्त्रव्याख्याप्रकरणे व्याख्यातं, तत्रास्य मन्त्रद्वयस्य व्याख्या द्रष्टव्या ॥ १ ॥ २ ॥

**ॐ अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्त्वमयाऽअसि ।**
**अया नो यज्ञं वहास्यया नो धेहि भेषजꣳ स्वाहा ॥ ३ ॥**

अयाश्चाग्न इत्यस्य प्रजापतिर्ऋषिः पङ्क्तिश्छन्दोऽग्निर्देवता सर्वप्रायश्चित्तसंज्ञकपञ्चमहावारुणहोमे विनियोगः, "अयाश्चाग्ने" इत्यादिमन्त्रलिङ्गात् । स चायं मन्त्रः "अतिरिक्तमि"-तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया । तथाहि–हे अग्ने, त्वम् अयाश्चासि । ( चकारोऽप्यर्थे, अयश्शब्दश्चात्र सकारान्तः शुभावहवाची, ततोऽयमर्थः । ) हे अग्ने, शुभावहो विधिरपि त्वमेवासीत्यर्थः । अत एव त्वम् अनभिशस्तिपाश्च असीत्यनुषङ्गः । नास्ति अभिशस्तिर्निन्दा यस्य सोऽनभिशस्तिः; तम् अनभिशस्तिं पाति रक्षतीति अनभिशस्तिपाः अनभिशस्तिपालकोऽसि । पापरहितस्यैव पुरुषस्य त्वं रक्षको भवसीत्यर्थः, न तु पापयुक्तस्य पुरुषस्येति भावः । निन्दा तु कुकर्माचरणेनैव भवति, यो हि न कुकर्माचारी स एव लोके अनभिशस्तिः कथ्यते । तस्य त्वं पालको भवसीत्यभिप्रायः । यद्वा अभिशस्तिः याञ्चा, नास्ति अभिशस्तिर्याञ्चा यस्य सोऽनभिशस्तिस्तमनभिशस्तिं पाति रक्षतीत्यनभिशस्तिपाः, विधिनेष्टवान् यः कश्चित्पुरुषः स तु स्वाभिरक्षणार्थं त्वां नापि याचते तथापि त्वं तत्कृतयागादिकर्म्मणा सन्तुष्टः सन् तस्य रक्षको भवस्येवेत्याशयः । अतस्त्वां याचामहे यत् हे अग्ने, तथाविधस्त्वम् अयाः आगच्छेत्यर्थः । आगत्य च नोऽस्माकं यज्ञं वहासि वहेत्यर्थः । इह कारणे कार्य्योपचारः । तेनात्र यज्ञशब्देन हविरेवाभिधीयते । यदेतद्धविर्मया हुतं तद्देवान्प्रति त्वं प्रापयेत्यर्थः । वहतेर्लोडर्थे लेट् । तस्य मध्यमपुरुषैकवचने भ्वादित्वाच्छपि शपः शकारपकारयोर्लोपे "लेटोऽडाटावि"त्याडागमे अनुबन्धलोपे शपोऽकारस्य अटोऽकारेण सह सवर्णदीर्घे च वहासीति रूपं बोध्यम् । किञ्च हे अग्ने, त्वं सत्यम् इत् ( इदित्ययं निपात एवार्थे ) सत्यमेव अया असि ज्ञाता भवसीत्यर्थः । एतिर्यद्यपि गत्यर्थस्तथापीह ज्ञानार्थ एव "ये ये गत्यर्थास्ते ते ज्ञानार्था" इत्युक्तत्वात् । एति जानातीत्ययाः (असुन्प्रत्ययान्तोऽयमयश्शब्द एतेर्बोध्यः । ) हे अग्ने, संसारनिस्तरणोपायस्य त्वमेव ज्ञातासीति भावः । अत एव त्वम् अयाः आगच्छेत्यर्थः । आगत्य च नोऽस्माकं कृते भेषजं धेहि अस्माकं कृते संसारनिस्तरणोपायरूपमौषधं परिकल्पयेत्यर्थः । यद्वा नोऽस्मभ्यं भेषजं संसारनिस्तरणोपायरूपमौषधं धेहि देहीत्यर्थः । "डुधाञ् विधारणे पुष्टौ दाने चापि निगद्यते ।" इतिशब्दकल्पद्रुमवचनादिह दधातिर्दानार्थ एवेति बोद्धव्यम् । अया नो यज्ञं वहास्यया नो धेहि भेषजमित्यत्र "अयाः, अयाः" इति क्रियापदद्वयमतिशयार्थद्योतनार्थम् , "अभ्यासे भूयांसमर्थं मन्यन्ते" इतियास्कोक्तेः । अया इति "इण गतौ" इत्यस्माल्लोडर्थे लेण्मध्यमपुरुषैकवचने "इतश्च लोपः परस्मैपदेष्वि"ति सिप इकारलोपे धातोर्गुणे "लेटोऽडाटावि"त्याडागमे "एचोऽयवायावः" इत्ययादेशे सकारस्य रुत्वे विसर्गे च रूपं बोध्यम् । अत्र "सिब्बहुलं लेटी"ति सिप् न

भवति, सूत्रे बहुलग्रहणात् । बहुलग्रहणादेव क्वचिद्भवति क्वचिन्नापि भवतीत्यनुसन्धेयम् । स्वाहा हे अग्ने, तुभ्यमेतद्धविरस्माभिर्दीयते तत्त्वदर्थं सुहुतमस्त्वित्यर्थः । स्वाहाशब्दस्य त्यागार्थत्वादयमर्थः, "तस्यै द्वौ स्तनौ देवाऽउपजीवन्ति स्वाहाकारं च वषट्कारञ्चे"ति श्रुतेः । एवमस्मद्दत्तेन हविषा सन्तुष्टस्त्वं मां सुखं गमयेत्याशंसावाक्यार्थः ॥ ३ ॥

"ये ते शतम्, उदुत्तमम्," इतिमन्त्रद्वयं स्नानमन्त्रव्याख्याप्रकरणे व्याख्यातं, तत्रैवास्य मन्त्रद्वयस्य व्याख्या द्रष्टव्या । विनियोगभेदेऽपि न हि तत्र व्याख्याभेदः । होमपक्षे केवलमाशंसामात्रं भिद्यते । तदिह मन्त्रद्वये तथा त्वन्नोऽअग्ने, सत्वन्नोऽअग्ने, इत्यत्रापि चोह्यम् । सर्वमन्यत्समानमेव ॥ ४ ॥ ५ ॥

॥ इति सर्वप्रायश्चित्तसंज्ञकपञ्चमहावारुणमन्त्रव्याख्या ॥

---

## ॥ अथ बर्हिर्होममन्त्राः ॥

ॐ देवा गातुविदो गातुं वित्त्वा गातुमित ।
मनसस्पतऽइमं देव यज्ञꣳ स्वाहा व्वाते धाः ॥ १ ॥

देवा गातुविद इत्यस्य मनसस्पतिर्ऋषिर्विराट्छन्दो लिङ्गोक्ता देवता बर्हिर्होमे विनियोगः । हे गातुविदो देवाः, "गै शब्दे" गीयते नानाविधैर्वैदिकशब्दैः प्रतिपाद्यते इति गातुर्यज्ञस्तं विदन्ति जानन्तीति गातुविदस्तत्सम्बुद्धौ हे गातुविदः, यज्ञवेत्तारो देवाः, यूयं गातुं वित्त्वा विदित्वा गातुमित । अत्र तु यज्ञः समाप्तः, अतः परमन्यत्र अस्मदीयो यज्ञः प्रवृत्त इति ज्ञात्वा तं यज्ञं प्रति गच्छतेति भावः । यद्वा गातुमितेत्यत्र गातुशब्दो मार्गवाची । "गाङ् गतौ" गायते गम्यते यत्र स गातुर्मार्गः । ततोऽयमर्थः । हे गातुविदो देवाः, यज्ञवेत्तारो देवाः, यूयं गातुं वित्त्वा अमुं यज्ञं समाप्तं विदित्वा ज्ञात्वा गातुं मार्गमित गच्छत । यज्ञं समाप्तं मत्वा यज्ञेन सन्तुष्टाः सन्तः स्वस्थानं स्वर्गं गन्तुं स्वमार्गं गच्छतेति भावः । वित्त्वेत्यत्र "विद ज्ञाने"इत्यस्मात् क्त्वाप्रत्यये छान्दसत्वादिडागमाभावो बोध्यः । एवं देवान्प्रत्युक्त्वा मनसस्पतिं प्रत्युच्यते । मनसोऽधिपतिस्तु चन्द्रः "दिवि चन्द्रमसि श्रितमि"त्यन्यत्रापि श्रुत्युक्तेः । यद्वा देवान् यष्टुं मनसः प्रवर्त्तकः परमेश्वर एव मनसस्पतिस्तं प्रत्युच्यते । हे मनसस्पते, अस्मदीयस्य मनसो यष्टुं प्रेरकत्वेन पालक, परमेश्वर, हे देव, इममनुष्ठितं यज्ञं स्वाहा त्वद्धस्ते ददामीत्यर्थः । स्वाहाशब्दस्य त्यागार्थत्वादिति भावः । यद्वा इममनुष्ठितं यज्ञं स्वाहा स्वाहाकारेण त्वद्धस्ते दधामीति शेषः । त्वं च तं यज्ञं वाते वायुरूपे देवे धाः स्थापयेत्यर्थः । वाते हि यज्ञोऽवतिष्ठते । तदुक्तं श्रुत्या "वायुरेवाग्निस्तस्माद्यदैवाध्वर्युरुत्तमं कर्म्म करोत्यथैतमेवाप्येति"इति । वायुर्वै क्षिप्रेष्ठा देवतेतिश्रुतेर्वायौ यज्ञस्यावस्थानाद्यजमानस्य क्षिप्रमेव यज्ञफलं वायुदेवताद्वारा भविष्यतीत्यभिप्रायेणैव इह 'वाते धाः' इत्युक्तं भवतीत्याशयः । अतः सर्वेऽपि साम्प्रदायिका अनेनैव मन्त्रेण बर्हिर्होमं विदधति । अतो मयापि इह विनियोगानुसारेण व्याख्यातोऽयं मन्त्रः ॥ १ ॥

॥ इति बर्हिर्होममन्त्रव्याख्या ॥

---

## ॥ अथ पूर्णाहुतिमन्त्रो मूर्द्धानमन्त्रश्च ॥

तत्र "पूर्णादर्वी"ति पूर्णाहुतिमन्त्रः कलशस्थापने व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या ॥ १ ॥ मूर्द्धानमन्त्रश्च मूर्द्धानन्दिव इति। स च यथा—

ॐ मूर्द्धानन्दिवोऽअरतिं पृथिव्या व्वैश्वानरमृतऽआजातमग्निम्।
कविꣳ सम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः ॥२॥

मूर्द्धानन्दिव इत्यस्य भारद्वाजऋषिस्त्रिष्टुप्छन्दो वैश्वानरोऽग्निर्देवता मूर्द्धानहोमे विनियोगः। वैश्वानरश्चात्र सर्वात्मना स्तूयते। तथाहि—देवाः प्रजापतेः प्राणावयवा ईदृशमग्निं जनयन्त उत्पादितवन्त इत्यर्थः। अत्र छान्दसोऽडागमाभावो बोध्यः। देवा इन्द्रादय इति वा, ते हि स्वदूतार्थमीदृशमग्निं जनयन्त उत्पादितवन्तः "अग्निर्वै देवानां दूत"इतिश्रुतेः। यद्वा देवा वेदाध्ययनादिजनिततेजसा देदीप्यमाना ऋत्विज एव ईदृशमग्निं जनयन्त अरण्योर्मन्थनेन उत्पादितवन्त इत्यर्थः। कीदृशमग्निमित्यपेक्षायामुच्यते। दिवो मूर्द्धानं द्युलोकस्य शिरोवदुन्नतप्रदेशे सूर्य्यरूपेण अवस्थाय जगद्भासकमित्यर्थः। तथा पृथिव्या अरतिम् रतिः उपरतिस्तद्रहितम्। अयमग्निर्नहि पृथिव्या उपरि कदाचिदपि उपरमते किन्तु दाहपाकप्रकाशैः सर्वाननुगृह्णन् सर्वदा वर्त्तत एवेति भावः। यद्वा पृथिवीशब्देन इहान्तरिक्षमुच्यते, "आकाश आपः पृथिवी"त्यन्तरिक्षनामसु पठितत्वात्। ततोऽयमर्थः। पृथिव्याः अन्तरिक्षस्य अरतिम् अलंमतिं पर्य्याप्तमतिं स्वभासा तत्पूरकमित्यर्थः। वैद्युतात्मना तत्र स्थितत्वादिति भावः। तत्र स्थितोऽसौ यथाकालं वृष्टया पुष्णातीत्यभिप्रायेण वा पूरकमित्याशयः। तथा वैश्वानरं विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितो वैश्वानरस्तं तथोक्तं नरशब्दोऽत्र सर्वप्राणिनामुपलक्षकं तेन जाठराग्निरूपेणान्नपाचकत्वात्सर्वहितमित्यर्थः। तथा ऋते यज्ञे आजातं यज्ञनिमित्तमरणीद्वयादुत्पन्नम्। ऋत्विग्भिररण्योर्मन्थनेनोत्पादितमिति भावः। तथा कविं क्रान्तदर्शनं स्वभक्ताननुगृहीतुमभिज्ञमित्यर्थः। तथा सम्राजं सम्यग् राजते दीप्यते इति सम्राट् तं सम्राजं सम्यग्दीप्यमानम्, ऐश्वर्य्येण युक्तमित्यर्थः। तथा जनानां यजमानानामतिथिं हविर्भिः सत्कारयोग्यमित्यर्थः। यज्ञादन्यत्रापि अयमग्निर्जनानामतिथिरेव। अतो हि विज्ञायते यदाग्निरतिथिरूपेण गृहान्प्रविशति तदा तस्यातिथिसत्कारार्थमेव जनास्तदर्थमुदकमाहरन्ति। तथा आसन् आसनि आस्ये मुखे आपात्रम् आभिमुख्येन पीयतेऽनेनेत्यापात्रम्, देवानां पानपात्रमित्यर्थः। "विज्ञायते हि चमसो देवपान इति चमसेन ह वा एतेन भूतेन देवा भक्षयन्ति" (१।४।२।१४) इतिश्रुतेः। ईदृशमग्निं देवा अजनयन्त यज्ञसम्पादनार्थमुत्पादितवन्तः। अतोऽस्मिन्नग्नौ यज्ञपरिपूरणार्थमिदानीं मूर्द्धानहोमं करोमीति वाक्यशेषः। अनेन होमेन सन्तुष्टोऽयमग्निर्यज्ञफलप्रदानेन मां सुखयत्वित्याशंसावाक्यार्थः। आसन्नित्यत्र आस्यशब्दस्य सप्तम्येकवचने "पद्दन्न—०"इति पाणिनीयसूत्रेणासन्नादेशः "सुपां सुलुक्—०"इति सप्तमीविभक्तेर्लोपश्च बोद्धव्यः। कस्मिंश्चित्सम्प्रदाये तु समुद्रादूर्मिरित्यादि मूर्द्धानं दिव इत्यादिकञ्च मन्त्रजातं पठित्वा पूर्णादर्वीति पूर्णाहुतिहोमं विदधति याज्ञिकाः। नहि तत्र पृथङ्मूर्द्धानहोमः। यत्र च सम्प्रदाये मूर्द्धानं दिव इति मूर्द्धानहोम एव भवति, नहि तत्र पृथक्पूर्णाहुतिहोमश्च

दर्शदृश्यते । तत्र मूर्द्धानहोमस्यैव पूर्णाहुतिहोम इत्यपरा संज्ञा बोद्धव्या । तत्राप्येके सम्प्रदायविदस्तु देवागातुविद इति बर्हिर्होमं कृत्वा ततो मूर्द्धानन्दिव इति मूर्द्धानहोमं कुर्वन्ति । अपरे तु समुद्रादूर्मिरित्यादिभिर्मन्त्रैर्मूर्द्धानन्दिव इत्यादिभिश्च मन्त्रैः सहैव पूर्णादर्वीति पूर्णाहुतिहोमं विधाय ततो देवा गातुविद इति बर्हिर्होमं कुर्वन्ति । तत्र यथासम्प्रदायं प्रमाणमूह्यम् ॥ २ ॥

॥ इति पूर्णाहुतिमन्त्रमूर्द्धानहोममन्त्रव्याख्या ॥

---

"त्र्यायुषञ्जमदग्नेरि"ति त्र्यायुष्करणमन्त्रस्तु शतरुद्रियप्रकरणे चूडाकरणप्रकरणे च व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या ॥ १ ॥

"सुमित्रिया न" इति प्रणीताजलेन शिरः संमृज्य दुर्मित्रिया इति प्रणीतान्युब्जीकरणं कर्त्तव्यमिति याज्ञिकाः समामनन्ति । स चायं मन्त्रः स्नानप्रकरणे व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या ॥ २ ॥

## ॥ अथाभिषेकमन्त्राः ॥

ॐ देवस्यं त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
सरस्वत्यै वाचो यन्तुर्यन्त्रियै दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिंञ्चाम्यसौ ॥१॥

प्रजापतिदृष्टं यजमानदेवत्यं यजमानाभिषेके विनियुक्तं यजुरिदम् । तत्र यजमानम्प्रत्याचार्य्यादेरियमुक्तिः । हे यजमान, सवितुः देवस्य प्रसवे अभ्यनुज्ञायां वर्त्तमानः अहमाचार्य्यादिः अश्विनोः बाहुभ्यां पूष्णः हस्ताभ्यां त्वा त्वां वाचः वाण्याः यन्तुः ( पुंस्त्वमार्षम् । ) यन्त्र्याः नियमनकर्त्र्याः सरस्वत्यै ( षष्ठ्यर्थे चतुर्थी ) सरस्वत्याः यन्त्रिये नियमने ऐश्वर्य्ये दधामि स्थापयामि । तथा बृहस्पतेः "वाग्वै बृहती तस्या एष पतिः बृहस्पतिरि"तिश्रुतेरिह बृहस्पतिशब्देन इन्द्र एवाभिप्रेतः । "इन्द्रश्च सम्राडि"तिश्रुतेः इन्द्रस्य सम्राड्भावत्वावगतेः बृहस्पतेः अर्थादिन्द्रस्य साम्राज्येन सम्राड्भावेन त्वा त्वामभिषिञ्चामि । असाविति तन्नामग्रहणम् ॥ १ ॥

ॐ देवस्यं त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिंञ्चामि ॥ २ ॥

प्रजापतिदृष्टं यजमानदेवत्यं यजमानाभिषेके विनियुक्तं यजुरिदम् । यजमानं प्रत्याचार्य्यादेरुक्तिरियम् । हे यजमान, सवितुः देवस्य प्रसवे अभ्यनुज्ञायां वर्त्तमानः अहमाचार्य्यादिः अश्विनोः बाहुभ्यां पूष्णः हस्ताभ्यां त्वा त्वां सरस्वत्यै ( षष्ठ्यर्थे चतुर्थी । ) सरस्वत्याः सम्बन्धिन्याः वाचो वाण्याः यन्तुः नियन्तुः प्रजापतेश्च यन्त्रेण नियमेन अग्नेः साम्राज्येन च चक्रवर्त्तित्वेन अभिषिञ्चामि । मत्कृताभिषेकेण वाक्सिद्धिरैश्वर्य्यं साम्राज्यं च तव सम्पद्यन्तामिति भावः ॥ २ ॥

ॐ दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् अ॒श्विनो॒र्भैष॑ज्येन॒ तेज॑से ब्रह्मवर्च॒सा॑या॒भिषि॑ञ्चामि॒ सर॑स्वत्यै॒ भैष॑ज्येन वी॒र्या॑या॒न्नाद्या॑या॒भिषि॑ञ्चा॒मीन्द्र॑स्येन्द्रि॒येण॒ बला॑य श्रि॒यै यश॑से॒ऽभिषि॑ञ्चामि ॥ ३ ॥

प्रजापतिदृष्टाः सयजुस्का बृहतीगायत्रीछन्दस्का इमे मन्त्रा इह यजमानाभिषेके विनियुक्ता "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायन्ते । तथाहि-हे यजमान, सवितुः देवस्य प्रसवे अभ्यनुज्ञायां वर्त्तमानः अहमाचार्य्यादिः अश्विनोः बाहुभ्यां पूष्णः हस्ताभ्यां त्वा त्वाम् अश्विनोः देववैद्ययोः भैषज्येन भिषजः कर्म्म भैषज्यं तेन तथोक्तेन वैद्यकर्म्मणा अभिषिञ्चामि । किमर्थमित्यपेक्षायामुच्यते । तेजसे कान्त्यै, तथा ब्रह्मवर्चसाय सर्वत्रास्खलितवेदवेदाङ्गजनिता कीर्त्तिर्ब्रह्मवर्चसं तस्मै तल्लाभार्थमित्यर्थः । तथा हे यजमान, सरस्वत्यै ( षष्ठ्यर्थे चतुर्थी ) सरस्वत्याः वाग्देवतायाः भैषज्येन भिषक्कर्मणा च त्वामभिषिञ्चामि । अत्रापि किमर्थमित्यपेक्षायामुच्यते । वीर्य्याय वीर्य्यं सामर्थ्यं तस्मै तल्लाभार्थमित्यर्थः । तथा अन्नाद्याय अन्नाद्यम् अन्नभक्षणसामर्थ्यं तस्मै तल्लाभार्थमित्यर्थः । तथा हे यजमान, इन्द्रस्य इन्द्रियेण इन्द्रियपाटवेन सामर्थ्येन च त्वामभिषिञ्चामि । अत्रापि किमर्थमित्यपेक्षायामित्युच्यते । बलाय सामर्थ्याय तल्लाभार्थमित्यर्थः । तथा श्रियै समृध्यै तथा यशसे कीर्त्त्यै, एतत्सर्वलाभार्थं त्वामभिषिञ्चामि । मत्कृताभिषेकेण मन्त्रोक्तयावदुक्तसमस्तपदार्थप्राप्तिस्तवास्त्विति भावः ॥ ३ ॥

अभिषेकान्तर्गता अवशिष्टमन्त्राश्च स्नानप्रकरणादौ व्याख्यातास्तेषां व्याख्या तत्रैव द्रष्टव्या । तत्र हि केवलमाशंसावाक्यं भिद्यते । तत्सर्वत्रोह्यम्, अन्यत्समानमेव ॥

॥ इत्यभिषेकमन्त्रव्याख्या ॥

इति श्रीदामोदरशर्म्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये शान्तिस्वस्त्ययनादिमन्त्रव्याख्यात्मकोऽयं षोडशः परिच्छेदः समाप्तः ।

---

# अथ सप्तदशपरिच्छेदारम्भः ।

## ॥ अथ श्राद्धमन्त्रव्याख्या ॥

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥ १ ॥

पौराणिकोऽयं मन्त्रः श्राद्धमात्रे सङ्कल्पोत्तरजपे विनियुक्तः । स्पष्टोऽर्थः ॥ १ ॥
गायत्रीमन्त्रस्तु सन्ध्याप्रकरणे व्याख्यातस्तत्र द्रष्टव्यः ॥ २ ॥

ॐ विश्वेदेवासऽआगत शृणुता मऽइमꣳ हवम् ।
एदम्बर्हिर्निषीदत ॥ ३ ॥

वैश्वदेवी गायत्री गृत्समदद्दष्टा पार्वणश्राद्धे सपिण्डनश्राद्धे च विश्वेदेवाह्वाने विनियुक्ता ऋगियम्, "विश्वेदेवास इत्यनयाऽऽवाह्य"तिकात्यायनोक्तेः । अथ मन्त्रार्थः । हे विश्वेदेवासः, विश्वेदेवाः, यूयमागत अस्मिञ्छ्राद्धे समागच्छत । आगत्य च मे मम इमं हवमाह्वानं शृणुता शृणुत युष्मानहं पूजयिष्यामि अतोऽत्रावस्थातव्यं युष्माभिरिति मदुक्तं वचः शृणुतेत्यर्थः । श्रुत्वा च इदं वर्हिः "कौशं बर्हिरि"तिकात्यायनवचनादिदं कौशं कुशमयमासनम् आनिषीदत अत्र कुशासनोपर्युपविशतेत्यर्थः । विश्वेदेवास इत्यत्र "आज्जसेरसुगि"त्यसुगागमो बोद्धव्यः । "शृणुता" इत्यत्र संहितायां दीर्घश्च छान्दसः, "शृणुत त्विषि भ्रजि भवत पिबेत समतिष्ठ रक्षामकारे" इति शुक्लयजुःप्रातिशाख्ये कात्यायनोक्तेः । आनिषीदतेत्यत्र व्यवहितोपसर्गसम्बन्धोऽप्यवगन्तव्यः, "व्यवहिताश्च" इति पाणिनिवचनात् ॥३॥

ॐ विश्वेदेवाꣳ शृणुतेमꣳ हवं मे येऽअन्तरिक्षे यऽउपद्यविष्ठ ।
येऽअग्निजिह्वा उत वा यजत्राऽआसद्यास्मिन्बर्हिषि मादयध्वम् ॥४॥

वैश्वदेवी त्रिष्टुप् सुहोत्रदृष्टा पार्वणश्राद्धे सपिण्डनश्राद्धे च विश्वेदेवाह्वानोत्तरकालिकतदीयमन्त्रजपे विनियुक्ता ऋगियम्, "विश्वेदेवाः शृणुतेममिति जपित्वे"ति कात्यायनवचनात् । अथ मन्त्रार्थः । हे विश्वेदेवाः, ये यूयमन्तरिक्षे अन्तरिक्षलोके स्थ तथा ये च यूयम् उप समीपे अर्थात्पृथिव्यां द्यवि द्युलोके च स्थ । किञ्च ये यूयमग्निजिह्वाः स्थ अग्निर्जिह्वा भोजनसाधनं येषां ते अग्निजिह्वाः वह्निमुखाः अग्निमुखेन हविषामत्तारः स्थेत्यर्थः । तथा "उत वा" उतशब्दोऽप्यर्थे वाशब्दश्चार्थे । ततोऽयमर्थः । अपि च ये यूयं यजत्राः यजन्तं श्राद्धकारिणं त्रायन्ते इति यजत्राः पुरूरवार्द्रवप्रभृतयः स्थ । हे विश्वेदेवाः, ते सर्वेऽपि यूयमिमं मे मम हवमाह्वानं शृणुत । श्रुत्वा च अस्मिन्बर्हिषि आसद्य उपविश्य मादयध्वं

तृप्यध्वं तृप्ता भवतेत्यर्थः। "मद तृप्तियोगे चुरादिरात्मनेपदी" इत्यस्य मध्यमपुरुषबहुवचने मादयध्वमितिरूपं बोध्यम्॥ ४॥

ॐ उ॒शन्त॑स्त्वा नि॒धी॑मह्यु॒शन्त॒: समि॑धीमहि।
उ॒शन्नु॑श॒तऽआव॑ह पि॒तॄन् ह॒विषे॒ऽअत्त॑वे ॥५॥

पितृदेवत्यानुष्टुप्छन्दस्का शङ्खदृष्टा "उशन्तस्त्वेत्यनयाऽऽवाह्य" इति कात्यायनोक्तेः पार्वणश्राद्धादौ पित्राह्वाने विनियुक्ता ऋगियम् "अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायते। तथाहि–हे अग्ने, उशन्तः पित्राह्वानं कामयमाना इच्छन्तो वयं त्वा त्वां निधीमहि स्थापयामः। तथा उशन्तः पित्राह्वानमेव कामयमाना इच्छन्तो वयं त्वा त्वां समिधीमहि सन्दीपयामः सम्यक् प्रज्वालयामः। अतस्त्वमपि उशन् मत्पित्राह्वानं कर्त्तुमिच्छन् उशतः श्राद्धीयं हविः मद्दत्तमन्नं कामयमानानिच्छतः पितॄन् हविषे अत्तवे हविः अत्तुं भक्षितुमावह इहानयेत्यर्थः। हविषे इत्यत्र विभक्तिव्यत्ययेन द्वितीयार्थे चतुर्थी बोद्धव्या "सुपां सुपो भवन्ती"ति पाणिनिवचनात्। अत्तवे इत्यत्र तु "तुमर्थे सेसेन०—"इत्यादिना तुमथ तवेङ्प्रत्ययोऽवगन्तव्यः। आहिताग्निकर्त्तृकपार्वणश्राद्धे दक्षिणाग्नेः सद्भावात्तत्र स्थितमग्निं प्रकृत्य तं प्रत्युक्तिरियमित्यनुसन्धातव्यम्। अनाहिताग्निकर्त्तृकपार्वणश्राद्धे तु दक्षिणाग्नेरभावात्तदानीं रक्षादीपस्थमग्निं प्रकृत्य तं प्रत्युक्तिरियमित्यूह्यम्। तत्र हे रक्षादीपस्थिताग्ने, उशन्तः पित्राह्वानं कामयमाना वयं त्वा त्वां निधीमहि अत्र श्राद्धस्थाने स्थापयामः। एवमुशन्त एव वयं त्वां समिधीमहि स्नेहादिप्रदानेन सम्यक् प्रज्वालयाम एतावन्मात्रविशेषः। अन्यत्समानमेव॥ ५॥

ॐ आय॑न्तु नः पि॒तर॑: सो॒म्यासो॑ऽग्निष्वा॒त्ताः प॒थिभि॑र्देव॒यानै॑: ।
अ॒स्मिन्य॒ज्ञे स्व॒धया॒ मद॑न्तो॒ऽधि॑ब्रुवन्तु॒ ते॑ऽवन्त्व॒स्मान् ॥ ६ ॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप्छन्दस्का "आयन्तु न इति जपित्वा" इति कात्यायनोक्तेः पार्वणश्राद्धे एकोद्दिष्टश्राद्धे च पित्राह्वानजपे विनियुक्ता ऋगियं तर्प्पणप्रकरणे व्याख्याता। तत्रास्या ऋचो व्याख्या द्रष्टव्या। मातुरेकोद्दिष्टेऽन्यस्य वा एकोद्दिष्टश्राद्धेऽप्यविकृत एव पठनीयोऽयं मन्त्रः। पितृपदं मात्रादेरप्युपलक्षकं, पितृशब्दस्य मृतमात्रपरत्वात्॥ ६॥

ॐ शन्नो॑ दे॒वीर॒भिष्ट॑य॒ऽआपो॑ भवन्तु पी॒तये॑।
शँय्योर॒भिस्र॑वन्तु नः ॥ ७ ॥

अब्देवत्या प्रजापतिदृष्टा गायत्री "एकैकस्मिन्नप आसिञ्चति शन्नो देवीः" इति कात्यायनोक्तेः पार्वणश्राद्धे विश्वेदेवार्घ्यपात्रे चैकोद्दिष्टश्राद्धे पित्रर्घ्यपात्रे च जलदाने विनियुक्ता ऋगियं स्नानप्रकरणे व्याख्यातापि विनियोगभेदेन "अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य पुनरत्र व्याख्यायते। तथाहि–आपः जलानि शं भवन्तु कल्याणकारिण्यो भवन्तु अस्मिन्पितृश्राद्धे नोऽस्माकं सम्बन्धिनां पितॄणां कृते इति शेषः। विश्वेदेवपक्षेऽप्येवमेवो-

ह्यम्। किम्भूता आप इत्यपेक्षायामुच्यते। देवीः दीव्यन्तीति देव्यः स्तुतिक्रीडादियोग्या इत्यर्थः। (देवीरित्यत्र "वा छन्दसी"ति प्रथमाबहुवचने पूर्वसवर्णदीर्घश्छान्दसः।) किमर्थं तत्रोच्यते, अभिष्टये पीतये च, अभिषेकाय पानाय चेत्यर्थः। अस्माकं पितॄणां कृते स्नाने पाने च आपो देव्यः सुखकरा भवन्त्वित्यभिप्रायः। अपि च नोऽस्माकं पितॄणां कृते आपो देव्यः शंयोरभिस्रवन्तु कल्याणार्थमाभिमुख्येन स्रवन्तु अस्मत्पितॄणां कल्याणार्थमब्धिष्ठात्र्यो देवताः स्नानपानादियोग्यं सुखकरं माधुर्य्योपेतं सुस्वादुशीतलजलमाभिमुख्येन क्षरन्त्वित्यभिप्रायः। शंशब्दाद्युः प्रत्ययो ज्ञेयः। षष्ठीचात्र चतुर्थ्यर्थे बोद्धव्या ॥ ७ ॥

ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीः ॥ ८ ॥

यवदेवत्यः पार्वणश्राद्धादौ विश्वेदेवार्घ्यपात्रे यवदाने विनियुक्तोऽयं यजुर्मन्त्रः। हे धान्यविशेष, त्वं यवोऽसि यौति पृथक् करोतीति यवः पृथक् कारकोऽसि। अतोऽस्मद्द्वेषोऽरातीश्च यवय। द्विषन्तीति द्वेषः कृत्रिमशत्रवः,अरातयः सहजशत्रवः पितृव्यपुत्रादयो ज्ञातयः, तानुभयविधान् सर्वानपि शत्रून् अस्मत्तो यवय पृथक् कुर्वित्यर्थः। द्वेषो दौर्भाग्यानि अरातीः अदानानि, इति वा तानि सर्वाणि अस्मत्तो यवय पृथक् कुरु पृथक् कृत्य च अस्मभ्यं सौभाग्यानि धनानि च देहीत्याशंसोवाक्यार्थः। "द्विष अप्रीतौ, अदादिरुभयपदी" इत्यस्मात्क्विप्, "बहुलं छन्दसी"त्युक्तेश्छन्दसि सर्वविधीनां वैकल्पिकत्वादत्र क्निन्निमित्तगुणनिषेधो न भवति। अथवा द्विषधातोरसुन्प्रत्यये लघूपधत्वात्पुगन्तेति गुणे द्वितीयाबहुवचने द्वेष इति रूपं भवति। "यु मिश्रणेऽमिश्रणे च" अदादिः परस्मैपदी, इत्यस्य पचादित्वा"न्नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" इत्यच्प्रत्यये कृत्तद्धितेति प्रातिपदिकत्वे प्रथमैकवचने यव इति रूपं भवति। अरातिशब्दस्यार्षत्वात्स्त्रीत्वे द्वितीयाबहुवचने अरातीरिति रूपं भवति ॥ ८ ॥

ॐ तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः।
प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान्प्रीणाहि नः स्वाहा ॥ ९ ॥

विष्णुदेवत्यः कात्यायनमहर्षिप्रणीतनवकण्डिकासूत्रमध्ये पठितोऽयं सौत्रो मन्त्रः, "एकैकस्मिन्नेव तिलानावपति 'तिलोऽसीत्या"दिकात्यायनोक्तेः पार्वणश्राद्धे पित्राद्यर्घ्यपात्रे एकोद्दिष्टश्राद्धे च पित्रर्घ्यपात्रे तिलदाने विनियुक्तोऽवगन्तव्यः। यद्यप्यस्य मन्त्रस्य श्राद्धप्रकरणीयत्वात्स्वधान्तः पाठो युक्तः "स्वधाकारं पितरः" (श० ब्रा० ८।६।४।१२।) इति श्रुतेः, तथापि सर्वैरेव साम्प्रदायिकैः स्वाहान्त एव पठ्यते, कात्यायनप्रणीतश्राद्धसूत्रे महर्षिणा कात्यायनेन तथैव पठितत्वात्। हे धान्यविशेष, त्वं तिलोऽसि तेलति गच्छतीति तिलः, देवपितृकर्म्मसु सर्वत्र पवित्रत्वेन गन्ता भवसि। तत्रापि श्राद्धेऽतीव पवित्रत्वेन प्रसिद्धोऽसि, "त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः" इत्यादि (म० स्मृ० ३।२३५) स्मृतेः, तथा सोमदेवत्योऽसि सोमश्चासौ देवता च सोमदेवता सोमदेवतायै अयमितिविग्रहे "देवतान्तात्तादर्थ्ये यत्" इति यत्प्रत्ययः। सोमदेवत्यः सोमदेवताक इत्यर्थः। "ओषध्यः फलपाकान्ताः" इत्यभिधानादोषध्यो व्रीह्याद्यास्तत्र "यवगोधूमधान्यानि तिलाः कङ्कुस्तथैवचे"त्यादिपद्मपुराणीयवचनात्तिलस्याप्योषधीत्वेन प्रतीयमानत्वात्तिलस्य सोमदेवताकत्वं, "सोमऽओषधीना-

मधिपतिरि"तिश्रुतेः । तथा गोसवोऽसि गां स्वर्गं सूते इति गोसवः स्वर्गप्रद इत्यर्थः, "तिलदः स्वर्गमाप्नोती"ति विष्णुवचनात् । अथवा गच्छतीति गौः प्रजा तां सूते इति गोसवः प्रजाप्रद इत्यर्थः, "तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तममि"ति मनुवचनात् । तथा देवनिर्म्मितोऽसि दीव्यतीति देवः द्युतिस्तुतिक्रीडादियुक्तो विष्णुः, देवेन निर्म्मित इति देवनिर्म्मितः विष्णुनिर्म्मितोऽसीत्यर्थः, तिलस्य विष्णुप्रस्वेदोत्पन्नत्वात् । तथा अद्भिः पृक्तोऽसि जलमिश्रितोऽसीत्यर्थः । यतस्त्वमेवम्भूतः सर्वोत्कृष्टोऽसि, अतो नोऽस्माकं पितॄन् पितृपितामहप्रपितामहादीन् लोकान् अस्माकं सम्भवाँश्च प्रत्नं चिरकालपर्य्यन्तं स्वधया "स्वधा वै पितॄणामन्नमि"तिश्रुतेः श्राद्धीयान्नेन "स्वधाकारं पितरः" इति श्रुतेः स्वधाकारेण वा प्रीणाहि तर्प्पय अस्मत्पितॄणां तृप्तिं भूयोभूयः पितृश्राद्धकरणेन अस्मज्जन्मसार्थक्यञ्च कुर्वित्यर्थः । "देवपितृकार्य्याभ्यां न प्रमदितव्यं मातृदेवो भव, पितृदेवो भवेत्यादि" ( तै० उ० वल्ली १ अनु० ११ ) श्रुतेर्निर्विघ्नत्वेन आजन्म भूयोभूयः श्राद्धकरणद्वारा स्वजन्मसार्थक्यमाशास्यते, इत्यभिप्रायः । स्वाहा अतो हे तिल, त्वं सर्वदा देवपितृकार्य्येषु मया सुहुतो भवेत्यर्थः । "तिल गतौ भ्वादिपरस्मैपदी" इत्यस्मादच्प्रत्यये बाहुलकाद् गुणाभावे च कृत्तद्धितेति प्रातिपदिकत्वे प्रथमैकवचने तिल इत्यवगन्तव्यम् । पितॄनित्यत्र पितुरेकोद्दिष्टश्राद्धे मातुरेकोद्दिष्टश्राद्धेऽन्यस्य वा एकोद्दिष्टश्राद्धेऽप्यनूह एव पठितव्योऽयं मन्त्रः,पितृशब्दस्य मृतमात्रपरत्वात् । एकोद्दिष्टपक्षे पितॄनिति बहुवचनं पूजार्थं बोध्यम् ॥ ९ ॥

ॐ या दिव्याऽआपः पयसा सम्बभूवुर्य्याऽआन्तरिक्षाऽउत पार्थिवीर्य्याः ।
हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः शꣳ स्योनाः सुहवा भवन्तु ॥१०॥

अब्दैवत्यः "पत्रपुटेषु या दिव्या० सुहवा भवन्त्वित्यसावेष तेऽर्घ्यः" इति श्राद्धसूत्रे कात्यायनोक्तेः पार्वणादिश्राद्धे देवपित्रर्घ्यदाने एकोद्दिष्टश्राद्धे पित्रर्घ्यदाने च विनियुक्तोऽयमपि श्राद्धसूत्रस्थ एव मन्त्रो ज्ञातव्यः। अथ मन्त्रार्थः। दिवि भवा दिव्या द्युलोकस्थाः स्वर्गङ्गासम्बन्धिन्यः या आपः पयसा सम्बभूवुः क्षीरसमुद्रेण सहैकीभूता इत्यर्थः । अथवा "आदित्याज्जायते वृष्टिरि"तिस्मृतेः दिव्याः द्युलोकस्था आदित्यमण्डलोद्भवा या आपः पयसा सम्बभूवुः क्षीरेण सह सङ्गताः माधुर्य्यशीतत्वादिगुणैरेकीभूता इत्यर्थः । याश्च आपः आन्तरिक्षाः अन्तरिक्षे भवा आन्तरिक्षाः मेघोदरस्था या आप इत्यर्थः । तथा हिरण्यवर्णाः हिरण्यः कान्तः कमनीयो वर्णो यासां ता हिरण्यवर्णाः, हिरण्यं रजतं तत्समानवर्णाः, स्वच्छा हिरण्यं रजतमित्युवटोक्तेः । यज्ञियाः यज्ञार्हाः देवपितृयोग्या इत्यर्थः । एवम्भूताः पार्थिवीः पृथिव्यां भवाः पार्थिव्यः (वा छन्दसीति पूर्वसवर्णदीर्घश्छान्दसः । ) "उत" इत्युपसर्गोऽप्यर्थे पार्थिव्यः भूमिगता अपि या आपः, ताः सर्वा अपि आपः नोऽस्माकं पितॄणाञ्च कृते शिवाः सौम्याः सन्त्विविशेषः शान्ता भवन्त्वित्यर्थः । तथा नोऽस्माकं पितॄणां च शं कल्याणं यथास्यात्तथा स्योनाः (स्योनमिति सुखनामेतिनिघण्टुः ) सुखदाः भवन्तु । तथा च ताः पूर्वोक्ताः सर्वा आपः सुहवा भवन्तु सपात्रकश्राद्धपक्षे ब्राह्मणहस्ते, अपात्रकश्राद्धपक्षे भोजनपात्रे पवित्रोपरि सुष्ठु हुताः सन्त्वित्यर्थः॥१०॥

ॐ पितृभ्यः स्थानमसि ॥ ११ ॥

पितृदेवत्यः "पितृभ्यः स्थानमसीतिन्युब्जं पात्रं निदधाती"ति कात्यायनवचनात्पार्वणादिश्राद्धे पात्रन्युब्जीकरणे विनियुक्तोऽयमपि श्राद्धसूत्रस्थ एव मन्त्रोऽवगन्तव्यः । हे पात्र, त्वं पितृभ्यः स्थानमसि ( अत्र षष्ठ्यर्थे चतुर्थी ) पितॄणां त्वं स्थानं भवसीत्यर्थः, तिष्ठन्त्यस्मिन्निति स्थानं यतस्त्वं पितॄणां स्थानमसि अत एव हे पात्र, त्वामिह न्युब्जीकरोमीति वाक्यशेषः । तथा चोक्तमन्यत्रापि "आगतास्तत्र तिष्ठन्ति पितरः श्राद्धदेवताः" इति ॥११॥

**ॐ अग्नये कव्यवाहनाय स्वाहा ॥ १२ ॥**

कव्यवाहनाग्निदेवत्यः आसुरीपङ्क्तिच्छन्दस्कः प्रजापतिदृष्टः "पिण्डपितृयज्ञवद्धुत्वे"ति कात्यायनवचनात्पार्वणश्राद्धे कव्यहोमे विनियुक्तो यजुर्मन्त्रोऽयम् । कवयः क्रान्तदर्शिनः पितरस्तेषां सम्बन्धि यदन्नं तत्कव्यं हविः, तत्कव्यं वहति पितॄन् प्रति प्रापयतीति कव्यवाहनस्तस्मै कव्यवाहनाय अग्नये स्वाहा एतत्कव्यं हविर्मया दत्तं तत्सुहुतमस्त्वित्यर्थः । कव्योपपदाद्वहेः "कव्यपुरीषपुरीष्येषु ञ्युडि"ति ञ्युट्प्रत्ययेऽनुबन्धलोपे "युवोरनाकावि"ति योरनादेशे "अत उपधायाः" इति धातोर्वृद्धौ "कृत्तद्धिते"ति प्रातिपदिकत्वे चतुर्थ्येकवचने कव्यवाहनायेति रूपमवगन्तव्यम् ॥ १२ ॥

**ॐ सोमाय पितृमते स्वाहा ॥ १३ ॥**

पितृमत्सोमदेवत्यः आसुरीजगतीछन्दस्कः प्रजापतिदृष्टः "पिण्डपितृयज्ञवद्धुत्वे"ति कात्यायनोक्तेः पार्वणश्राद्धे सोमीयहव्यहोमे विनियुक्तो यजुर्मन्त्रोऽयम् । पितरः सन्त्यत्रेति पितृमान् तस्मै पितृमते पितृसंयुक्ताय सोमाय स्वाहा एतद्धविर्मया दत्तं तत्सुहुतमस्त्वित्यर्थः । स्वाहाकारेण वषट्कारेण वा देवेभ्योऽन्नदानश्रुतेर्देवाविमौ मन्त्राववगन्तव्यौ ॥ १३ ॥

**ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नमः,** इति वाक्यरूपेण मन्त्रेण भूस्वामिनेऽन्नं दीयते । स्पष्टोऽर्थः ॥ १४ ॥

**ॐ मधुव्वाता० ॐ मधुनक्त० ॐ मधुमान्नो० ॥१५॥१६॥१७॥**

ऋक्त्रयं तर्पणप्रकरणे व्याख्यातं, तत्रास्य ऋक्त्रयस्य व्याख्या द्रष्टव्या । इह तु वैशिष्ट्यमात्रं प्रदर्श्यते । तद्यथा–पार्वणपक्षे 'ऋतायते' इत्यत्र "सुपां सुपो भवन्ती"ति पाणिनिवचनाच्चतुर्थीबहुवचनस्थाने चतुर्थ्येकवचनमवगन्तव्यम् । ऋतायते अर्थात् ऋतायद्भ्यो ऋतमुदकं तदेव मधु मधुरसमिच्छद्भ्यो नोऽस्माकं पितृभ्यः पितृपितामहप्रपितामहेभ्यो मतामहप्रमातामहवृद्धप्रमातामहेभ्यश्च वाताः मधु मधुमन्तः सन्तो वहन्त्विति शेषः । एवं सर्वत्र वाक्योहेन योजना कर्त्तव्या । एकोद्दिष्टे तु ऋतायते ऋतमुदकं तदेव मधु मधुरसमिच्छते नोऽस्माकं पित्रे वाताः मधु मधुमन्तः सन्तो वहन्त्वितिशेषः । एवं सर्वत्रावगन्तव्यम् । मातुरेकोद्दिष्टे तु पितृशब्दस्य मृतमात्रपरत्वान्मातृत्वमुपलक्ष्य ऋतायते इत्यस्यैव ऋतायन्त्यै ऋतमिच्छन्त्यै नोऽस्माकं मात्रे वाता मधु मधुमन्तः सन्तो वहन्त्वितिशेषः, इत्येवमर्थोऽनुसन्धेयः । एवं सर्वत्र । अर्थविचारदशायामेव वाक्योहोऽवगन्तव्यः । प्रयोगदशायान्त्वनूह एव मन्त्रपाठो विधेयश्छन्दोभङ्गभिया वेदस्य रूपान्तरं कर्त्तुमशक्यमपौरुषेयत्वात् । अथवा "सुप्तिङुपग्रहलिङ्गनराणामि"ति कारिकया ऋतायते इत्यत्र मातृपक्षे प्राप्तस्य स्त्रीत्वस्य पुंस्त्वमार्षत्वादित्येवानुसन्धेयम् ॥ १५ ॥ १६ ॥ १७ ॥

**ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ॥१८॥**

अन्नदेवत्यः "पात्रमालभ्य जपति पृथिवी ते पात्रमि"त्यादिकात्यायनोक्तेः पार्वणादिश्राद्धे देवान्नपित्रन्नपात्रस्पर्शने एकोद्दिष्टश्राद्धे च पित्रन्नपात्रस्पर्शने च विनियुक्तोऽयमपि श्राद्धसूत्रस्थ एव मन्त्रः। हे अन्न, पृथिवी जगदाधारभूता भूमिः ते तव पात्रमाधारोऽस्तीति शेषः। तथा द्यौः आकाशः ते तव अपिधानमाच्छादनमस्तीतिशेषः। (अपिधानमाच्छादनमित्युक्तममरसिंहेन "अपिधानतिरोधानपिधानाच्छादनानि चे"ति) तत्त्वामितिपदद्वयाध्याहारेणायमर्थः। अमृतं हुतावशिष्टं तत्त्वाम् अमृते अनष्टे अभक्ष्यादिभिरदूषिते ब्राह्मणस्य मुखे जुहोमि। पृथिवी ते पात्रमित्यनेनेह भोजनपात्रमभिधीयते, भोजनपात्रान्नयोराधाराधेयत्वसम्बन्धात्। द्यौरपिधानमित्यनेन भोजनान्नोपरि स्थितस्याकाशस्य सद्भावत्वादाकाशे आच्छादनत्वमुपचर्य्यते, अनावृतस्यान्नस्यादृश्यदर्शनोपहतत्वसद्भावात्। ब्राह्मणस्य मुखे अमृते अमृतं जुहोमीत्यनेन परब्रह्ममुखोद्भूतब्राह्मणाग्न्युभयस्य सहजन्मत्वदर्शनेनेह ब्राह्मणमुखेऽग्नित्वोपचारत्वेन ब्राह्मणभोजने होमत्वमुपचर्य्यते, "मुखादग्निरजायते"तिश्रुतिनिदर्शनात्॥ १८॥

**ॐ इदं व्विष्णुर्व्विचक्रमे त्रेधा निदधे पदम्॥ समूढमस्य पाꣳसुरे ॥१९॥**

ब्रह्मयज्ञजपे व्याख्याता ऋगियं, तत्रास्या ऋचो व्याख्या द्रष्टव्या। इह तु वैशिष्ट्यमात्रं प्रदर्श्यते। तद्यथा—अन्नस्य पृथिव्याः सकाशादुत्पन्नत्वात्पृथिव्याश्च विष्णुपादाक्रान्तत्वादस्यान्नस्यापि विष्णुपादाक्रान्तत्वेन इतो रक्षोऽपसरणत्वमभिप्रेत्यानेन मन्त्रेण पार्वणश्राद्धादौ देवान्नपित्रन्नाभिमन्त्रणं क्रियते। यतो विष्णुः पृथिव्यां पदं निहितवानतस्तदुत्पन्नत्वेनान्नमप्याक्रान्तवान् तस्माद्राक्षसा अस्मादन्नादपसरन्त्वित्याशंसावाक्यार्थोऽवगन्तव्यः। अवशिष्टन्तु स्नानप्रकरणे द्रष्टव्यम्॥ १९॥

**ॐ कृष्ण कव्यमिदं रक्ष मदीयमिदमन्नमिमा आप इदमाज्यमिदं हविः ॥२०॥**

अग्निदेवत्यः पार्वणादिश्राद्धे देवपित्रन्नाभिमन्त्रणे विनियुक्तोऽयं मन्त्रः। तत्र देवश्राद्धे विश्वेदेवान्नाभिमन्त्रणे कृष्ण हव्यमित्यूहेन मन्त्रः पठनीयस्तथैवार्थोऽप्यवगन्तव्यः। ऋ० वे० अ० ३ अ० ५ व० ७ "कृष्णं त एम रुशतः पुरोभाश्चरिष्ण्वर्चिर्वपुषामिदेकम्। पदप्रवीता दधते ह गर्भं सद्यश्चिज्जातो भवसीदु दूतः॥" ऋ० वे० अ० ६ अ० ६ व० ७। "अयं वां कृष्णो अश्विना हवते वाजिनी वसू। मध्वः सोमस्य पीतये॥" इति, आभ्यामृग्भ्यां कृष्णशब्दोऽग्निवाचक इति सुस्पष्टतया प्रतीतेरिह देवपितॄणां दूतभूतमग्निं प्रत्येवमुच्यते, यत्किल हे कृष्ण, अर्थात् हे अग्ने, इदं कव्यं कवयः क्रान्तदर्शिनः पितरस्तेषामिदमन्नं कव्यं पितॄणां सम्बन्धि इदमन्नं रक्ष असुरादयो यथा न प्रतिगृह्णीयुस्तथा त्वं पालयेत्यर्थः, इति तु पित्रन्नपक्षे। देवान्नपक्षे त्वित्थं, यत् हे कृष्ण, हे अग्ने, इदं हव्यं देवानामिदं हविः हव्यं विश्वेषां देवानां सम्बन्धि इदमन्नं रक्ष। शेषं पूर्ववद्वाक्यार्थविवरणमत्राप्यनुसन्धेयम्। किं तदन्नं मया रक्षितव्यमित्यपेक्षायामिदं मदीयमन्नमिति अङ्गुल्या निर्दिश्यते। तद्यथा—हे कृष्ण, हे अग्ने, इदं सन्निकृष्टं भोजनपात्रस्थितं मदीयं मामकीनं इह श्राद्धे देवोद्देशेन पित्रुद्देशेन वा यन्मयावस्थापितमन्नं तद्रक्षेत्यभिप्रायः। न केवलमन्नमेव रक्षेति, किन्तु इमाः पात्रस्थाः आपः

जलानि, इदमाज्यं पात्रस्थं घृतं इदञ्च हविः पुनरन्नं तत्सर्वं रक्षेत्याशयः। यतोऽग्निर्वै देवानां पितॄणां च दूतस्तस्मादग्निं प्रत्येवमुक्तं यदेतदन्नादि अन्नजलघृतपदार्थजातं रक्षेति। अन्यथा देवपितृभागेप्सवोऽसुरा इतस्ततः सञ्चरन्तो देवपितृभागमन्नजलघृतपदार्थजातं गृहीत्वा भक्षयिष्यन्ति, ततः श्राद्धमेव विनष्टं स्यात्तन्मा भवतु, एतदर्थमेवान्नाभिमन्त्रणे विनियुक्तोऽयं मन्त्र इति विनियोगकर्त्तुः सम्प्रदायविदश्चायमेवाशयः॥ २०॥

देवान्नपात्रे "यवोऽसी"ति यवविकिरणो मन्त्रः। स चास्मिन्नेव श्राद्धप्रकरणे व्याख्यातस्तत्रास्य व्याख्या द्रष्टव्या॥ २१॥

ॐ अप॑हता॒ऽअसु॑रा॒ रक्षा॑ᳯंसि वेदि॒षद॑ः॥ २२॥

पितृदेवत्यः प्रजापतिदृष्टः "अपहता इति तिलान्प्रकीर्य्ये"ति कात्यायनोक्तेः पार्वणादिश्राद्ध एकोद्दिष्टश्राद्धे च भोजनपात्रे तिलप्रक्षेपणे विनियुक्तोऽयं यजुर्मन्त्रः। स च "अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायते। तत्र पार्वणश्राद्धे हे पितरः, पितुरेकोद्दिष्टश्राद्धे हे पितः, मातुरेकोद्दिष्टश्राद्धे हे मातः, युष्मद्भोजनपात्रे तिलान्विकिरामीतिवाक्यशेषः। यतोऽनेन तिलविकिरणेन पूर्वमपि वेदिषदः वेदिः श्राद्धार्थे परिष्कृता भूमिस्तत्र सीदन्ति देवपितृभागं भोक्तुमिच्छया वेद्यामुपविशन्तीति वेदिषदः श्राद्धार्थपरिष्कृतभूमौ निषीदन्त इत्यर्थः। असुराः अपहृता अपसारिताः, अत इदानीमप्यसुराणामपसारणार्थं तिलान्विकिरामीत्यभिप्रायः। न केवलं वेदिषदोऽसुरा एव अपहृताः अपसारिताः, किन्तु रक्षांसि च अपहृतानि, राक्षसाश्चापसारिता इत्यर्थः। तस्मादिदानीमपि तेषामपसारणार्थं तिलान्विकिरामि। अतोऽनेन तिलप्रक्षेपेणासुरादयोऽस्मात्स्थानादपसरन्त्वित्याशंसावाक्यार्थः॥ २२॥

गायत्री सन्ध्याप्रकरणे व्याख्याता तत्र तस्या व्याख्या द्रष्टव्या॥ २३॥

मधुव्वातेति ऋक्त्रयं तर्प्पणप्रकरणे व्याख्यातम्। श्राद्धपक्षे तद्वैशिष्ट्यञ्चास्मिन्नेव श्राद्धप्रकरणे पूर्वमेव प्रदर्शितं, तत्र द्रष्टव्यम्॥ २४॥ २५॥ २६॥

अत्र ॐ "कृणुष्वपाज" इत्यादिपितृमन्त्रजपस्तत्र कृणुष्वपाज इत्यादि प्रतिकाममन्त्वित्यन्तो मन्त्रसमूहोऽग्रे श्राद्धसूक्ते व्याख्यास्यते तत्र द्रष्टव्यः॥ "सहस्रशीर्षा पुरुषः, आशुः शिशानः, नमः शम्भवायेति मन्त्रत्रयं षडङ्गशतरुद्रिये व्याख्यातं तत्र द्रष्टव्यम्॥ नमस्तुभ्यमित्यादयस्तु पौराणिकमन्त्राः स्पष्टार्थाः॥

ॐ ये रू॒पाणि॑ प्रतिमु॒ञ्चमा॑ना॒ऽअसु॑रा॒ः सन्त॑ः स्व॒धया॒ चर॑न्ति।
प॒रा॒पुरो॑ नि॒पुरो॒ ये भर॑न्त्य॒ग्निष्टाँल्लो॒कात्प्रणु॑दात्य॒स्मात्॥ २७॥

कव्यवाहनाग्निदेवत्या त्रिष्टुप् प्रजापतिदृष्टा इह पार्वणश्राद्धे स्थण्डिलोपरि अपहता इति रेखाकरणोत्तरमङ्गारभ्रामणे विनियुक्ता ऋगियम्। श्रौतेऽपि पिण्डपितृयज्ञे अनया ऋचा परस्तादुल्मुकं क्रियते, "उल्मुकं परस्तात्करोति ये रूपाणी"ति कात्यायनवचनात्। अथ मन्त्रार्थः। ये असुराः देवविरोधिनो राक्षसजातयः स्वधया "स्वधा वै पितॄणामन्नमि"ति श्रुतेः वधा पितॄणामन्नं तया स्वधया पितॄणामन्नेन तन्निमित्तेन पितॄणामन्नमस्माभि-

भक्षितव्यमिति कारणेन रूपाणि प्रतिमुञ्चमानाः ( प्रतिपूर्वकस्य मुञ्चतेर्धारणार्थत्वादिहायमर्थः ) स्वकीयरूपाणि प्रच्छाद्य पितृसमानरूपाणि धारयन्तः सन्तः चरन्ति पितृस्थाने इतस्ततः प्रसरन्ति। तथा ये च असुराः स्वधया पित्रन्नभक्षणार्थं तदन्नप्राप्तिकामनया परापुरः निपुरश्च भरन्ति। पूर्य्यन्ते धातुभिरिति पुरः शरीराणि, पराक्रान्ताः पुरः परापुरः स्थूलदेहान्, निकृष्टाः पुरः निपुरः सूक्ष्मदेहाँश्च ये असुराः धारयन्ति। पितृणामन्नमस्माभिः खादितव्यमितिहेतोः स्वमसुरत्वं प्रच्छादयितुं नानाविधान्देहान् स्वीकुर्वन्तीत्यर्थः। अग्निः अङ्गाररूपः ( उल्मुकरूपो वह्निः ) तानसुरान् अस्माल्लोकात् पितृपिण्डस्थानात् ( पिण्डपितृयज्ञप्रदेशात् ) प्रणुदाति ( लोडर्थे लेट् ) प्रणुदतु इतो दूरं गन्तुं प्रेरयत्वित्यर्थः। अस्मात्स्थानात्प्रकर्षेण अपसारयत्विति भावः॥ २७॥

ॐ अनग्निदग्धा ये जीवा येऽप्यदग्धाः कुले मम।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्॥ २८॥

अनग्निदग्धपितृदेवत्यः पार्वणश्राद्धेऽन्नविकिरणे विनियुक्तोऽयं श्राद्धसूत्रस्थो मन्त्रः। अस्यार्थो यथा—मम कुले मम वंशे ये अनग्निदग्धा जीवाः, अग्निना दग्धा अग्निदग्धाः श्रौतस्मार्त्ताग्निदग्धाः, न अग्निदग्धाः अनग्निदग्धाः लौकिकाग्निदग्धाः अश्राद्धार्हाः अनुपनीता एव ये मृतास्ते इत्यर्थः। अनुपनीतानामेव "असौ स्वर्गाय लोकाय स्वाहे"ति वैदिकमन्त्रेण दाहो न भवति, अतस्ते लौकिकाग्निदग्धा अपि सन्तोऽनग्निदग्धा एवोच्यन्ते। अपीत्ययमुपसर्गश्चार्थे, तथा च मम कुले येऽपि ये च अदग्धाः जीवाः, न दग्धाः अदग्धाः "ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः। अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते॥" इतिमनूक्तेः अदाहार्हा ऊनद्विवार्षिका ये जीवा मम कुले मृता इति शेषः। ते उभयविधा अपि भूमौ दत्तेन अनेन अन्नेन तृप्यन्तु तृप्ता भवन्तु। तृप्ताश्च परां गतिं यान्तु उत्कृष्टगतिं प्राप्नुवन्त्वित्यर्थः। एवमयं मन्त्रो व्याख्यातः। अग्निदग्धाश्चेति पौराणिको मन्त्रः, स च स्त्रीशूद्रकर्त्तृकश्राद्धमात्रे पठनीयः। अर्थस्तु स्पष्टतर एवास्ति तस्मादिह पुनर्न व्याख्यायते॥ २८॥

ॐ अत्र पितरो मादयध्वं यथा भागमावृषायध्वम्॥
अमीमदन्त पितरो यथा भागमावृषायिषत॥ २९॥

पितृदेवत्यः प्रजापतिदृष्टो यजुर्मन्त्रोऽयम्। तत्र "अत्र पितर इत्युक्त्वोदङ्ङास्त आतमनादावृत्यामीमदन्ते"ति कात्यायनवचनादिह श्राद्धकर्त्ता अत्र पितर इत्युक्त्वा श्वासनिरोधेन ग्लानिपर्य्यन्तमुदङ्मुख आस्ते, आवृत्य च अमीमदन्तेति जपति। अथ मन्त्रार्थः। हे पितरः, अत्र मादयध्वं यूयमस्मिन्पिण्डे तृप्तिमालभध्वं हृष्टा भवतेत्यर्थः। ततश्चास्मिन्पिण्डे यथाभागं स्वं स्वं भागमनतिक्रम्य स्वीयं स्वीयमंशं प्राप्य आवृषायध्वं समन्ताद्वृषवदाचरत, यथा वृषो वृषभः स्वाभीष्टं घासं प्राप्य तृप्तिपर्य्यन्तं स्वीकरोति तद्वद्यूयमपि स्वाभिलषितं पिण्डं प्राप्य तृप्तिपर्य्यन्तं स्वीकुरुतेत्यर्थः। युष्मत्तृप्तौ युष्मत्प्रसादान्ममाप्यभीष्टसिद्धिः स्यादित्यभिप्रायेण स्वेच्छया पिण्डोपभोगार्थमिदमभ्यर्थ्यते, इत्याशंसावाक्यार्थः। आङ्पूर्वा-

द्वृषशब्दात् "कर्त्तुः क्यङ् सलोपश्चे"ति क्यङ् ततो लोट्। अमीमदन्तेति यान् पितॄन्प्रति "मादयध्वं, यथाभागमावृषायध्वमि"त्युक्तं ते पितरोऽमीमदन्त मद्दत्तेनानेन पिण्डेन हृष्टाः सञ्जाताः। तथा यथाभागमावृषायिषत स्वं स्वं भागं प्राप्य वृषवत्तृप्तिपर्य्यन्तं स्वीचक्रुः। स्वं भागं प्राप्य प्रसन्नपूर्वकं भक्षितवन्त इति वयमाशास्महे इत्यर्थः। आवृषायिषतेति लुङि रूपम्। पितुरेकोद्दिष्टश्राद्धे मातुरन्यस्य वैकोद्दिष्टश्राद्धेऽप्यविकृत एव पठनीयो मन्त्रः, एतद्विचारस्तु तर्प्पणप्रकरणे "ऊर्ज्जं वहन्तीः" इति मन्त्रस्य व्याख्यायां विशिष्टतया मया व्यलेखि, तत्र द्रष्टव्यः ॥ २९ ॥

ॐ नमो॑ वः पितरो॒ रसा॑य॒ नमो॑ वः पितरः॒ शोषा॑य॒ नमो॑ वः पितरो जी॒वाय॒ नमो॑ वः पितरः स्व॒धायै॒ नमो॑ वः पितरो घो॒राय॒ नमो॑ वः पितरो म॒न्यवे॒ नमो॑ वः पितरः॒ पित॑रो॒ नमो॑ वो गृ॒हान्नः पितरो दत्त स॒तो वः पितरो देष्मै॒तद्वः पितरो॒ व्वास॒ऽआध॑त्त ॥ ३० ॥

नमो व इत्यादीनि षड्यजूंषि पितृदेवत्यानि "नमो व इत्यञ्जलिं करोमी"ति कात्यायनोक्तेर्नमस्कार एव विनियुक्तानि, तथापि साम्प्रदायिकैः पार्वणादिश्राद्धे सूत्राभिमन्त्रणे विनियुक्तानि। एतद्वः पितरो वास इति तु पितृदेवत्यं यजुस्तस्य पार्वणश्राद्धे एकोद्दिष्टश्राद्धे च पिण्डोपरि सूत्रदाने विनियोगः, "एतद्व इत्युपास्यति सूत्राणि प्रतिपिण्डमूर्णा दशा वा वयस्युत्तरे यजमानलोमानि वेति" कात्यायनोक्तेः। तत्रायं क्रमः नमो व इत्यादिदेष्मेत्यन्तेन यजुःसमूहेन सूत्रमभिमन्त्र्य ॐ एतद्वः पितरो व्वासः इति मन्त्रेण पिण्डोपरि सूत्रं दीयते, इति। तर्प्पणप्रकरणे व्याख्यातोऽप्ययं मन्त्र इह विनियोगभेदेन पुनः संक्षेपतो व्याख्यायते। एतद्धै पितॄणां पितृत्वं यदभीष्टदानेन पुत्रादीन्पान्तीति पितरः, इति पितृशब्दनिर्वचनसामान्यात्पितृपितामहप्रपितामहानां मातामहप्रमातामहवृद्धप्रमातामहानां च पितृत्वं सममेव। अतः सर्वान्प्रत्युच्यते। हे पितरः, पित्रादयो मातामहादयश्च वः युष्माकं सम्बन्धिने रसाय रसभूताय वसन्ताय ऋतवे नमः नमस्कारोऽस्त्विति शेषः। यतो वसन्ते मध्वादयो रसा वृक्षेष्वधिकं जायन्ते। अतो रसशब्देन वसन्त एवोच्यते। "षड्वा ऋतवः पितरः" इति श्रुतेर्वसन्तादयः पितॄणां स्वरूपभूता एव। अतो हे पितरः, पित्रादयो मातामहादयश्च, एतद्रूपेभ्यो युष्मभ्यं नमः। नमश्शब्दो नमस्कारार्थोऽन्नार्थश्च, तत्र नमस्कारार्थो व्याख्यातोऽन्नार्थश्चेदानीं व्याख्यायते। तथाहि—"नम इत्यन्ननामेति निघण्टुः" "णम प्रह्वत्वे" भ्वादिपरस्मैपदी इत्यस्मादसुन्प्रत्ययः। "णोनः" इति धातोर्णस्य नकारश्च। नम्यते इति नमः, अन्नं वै ब्रह्मेतिश्रुतेरन्नं ब्रह्मा रसो विष्णुरितिस्मृतेश्चान्नस्य ब्रह्मरूपत्वेन प्रतिपादनात्। नमन्त्यनेन हेतुना तद्वन्तः, प्रयोजनस्य च हेतुत्वेन विवक्षा। वसन्तर्त्तुरूपेभ्यो युष्मभ्यं नमः मद्दत्तमिदमन्नमस्त्वित्यर्थः। मद्दत्तेनानेनान्नेन युष्मत्तृप्तौ युष्मद्रूपो वसन्तः मध्वादिप्रचुररसप्रदानेन मामपि तर्प्पयिष्यतीत्यभिप्रायः। एवमग्रतनेष्वपि मन्त्रेषु तर्प्पणप्रकरणवदिहाप्यनुसन्धेयम्। अवशिष्टं वैशिष्ट्यमिह प्रदर्श्यते। हे पितरः, पित्रादयो मातामहादयश्च, एतद्वासः "वस आच्छादने" (अदादिरात्मनेपदी) इत्यस्मादसुन्प्रत्ययः। वस्यते आच्छाद्यते

इति वासः आच्छादनं वस्त्रं वः युष्मभ्यं मया दीयते इति शेषः। इह कारणे कार्योपचारः। वस्त्रस्य कारणं यत्सूत्रं तद्युष्मभ्यं समर्प्यते इत्यभिप्रायः। गन्धादिदानावसरे उपकरणे वस्त्रदानस्य कृतत्वादप्यत्र पिण्डोपरि यदिदं सूत्रदानेन वस्त्रदानमुपकल्प्यते तदादरातिशयद्योतनार्थमेव, "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः। नमो वः पितरो रसायेत्यादिषु पितुरेकोद्दिष्टश्राद्धे मातुरन्यस्य वैकोद्दिष्टश्राद्धेऽनूह एव मन्त्रपाठो विधेय इति विचारस्तु तर्पणप्रकरणे "ऊर्जं वहन्तीः" इति मन्त्रस्य व्याख्यायां विशिष्टतया मया व्यलेखि तत्र द्रष्टव्यः। शेषं स्पष्टमिह विस्तरभिया नोच्यते, तच्च तर्पणप्रकरणे एतन्मन्त्रभाष्ये द्रष्टव्यम्॥ ३०॥

ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्।
स्वधा स्थ तर्पयत मे पितॄन्॥ ३१॥

तर्पणप्रकरणे व्याख्यातोऽयं मन्त्रस्तत्रास्य व्याख्या द्रष्टव्या। इयञ्च अब्देवत्या विराट्, अस्या विनियोगश्च पिण्डपितृयज्ञे कात्यायनोक्तेः "ऊर्जमित्यपो निषिञ्चती"ति। श्राद्धसूत्रेऽपि "अपो निषिञ्चति ऊर्ज्जमिति" तेनैवोक्तम्॥ ३१॥

ॐ वाजे वाजेऽवत वाजिनो नो धनेषु विप्राऽअमृताऽऋतज्ञाः।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः॥ ३२॥

पितृदेवत्या त्रिष्टुप् वसिष्ठदृष्टा "वाजे वाजेऽवतेति विसृज्ये"ति कात्यायनवचनात् पार्वणादिश्राद्धे पितृविसर्जने विनियुक्ता ऋगियम्। "वाज इत्यन्ननामे"ति निघण्टुः, श्राद्धदत्तमन्नं पितॄणामस्ति, इतिहेतोः पितर एव वाजिन उच्यन्ते। वाजोऽन्नमेषामस्तीति वाजिनस्तत्सम्बुद्धौ हे वाजिनः, हे अन्नवन्तः पितरः, विप्राः विप्रमूर्त्तयः मेधाविनो वा अमृताः अमरणधर्म्माणः ऋतज्ञाः सत्यज्ञानशालिनो यूयं वाजे वाजे अन्ने अन्ने कृतमकृतञ्च यदन्नं श्राद्धार्थं यदुपकल्पितमन्नं तत्र तत्र सर्वत्र श्राद्धार्थमुपकल्पितेऽन्ने समुपस्थिते सति तथा धनेषु श्राद्धार्थं दक्षिणात्वेन देयद्रव्येषु समुपस्थितेषु सत्सु नः अस्मान् अवत रक्षत। किञ्च हे वाजिनः, हे अन्नवन्तः पितरः, यूयमस्य मध्वः मधुनः पिबत तृप्त्यर्थानां कर्म्मणि षष्ठी, एतन्मधु मधुरमन्नरसं माक्षिकं प्रसिद्धं वा इह श्राद्धे श्रद्धयास्मद्दत्तं पिबत पीत्वा च मादयध्वं तृप्यध्वं तृप्ताश्च सन्तः देवयानैः देवाधिष्ठितैः पथिभिः मार्गैः यात स्वस्वस्थानं प्रति गच्छतेत्यर्थः॥ ३२॥

ॐ आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे।
आ मा गन्तां पितरा मातरा चा मा सोमोऽअमृतत्वेन गम्यात्॥३३॥

पितृदेवत्या त्रिष्टुप् वसिष्ठदृष्टा "आ मा वाजस्येत्यनुव्रज्ये"ति कात्यायनोक्तेः पार्वणादिश्राद्धे पितृविसर्जनोत्तरं तदनुव्रजने विनियुक्ता ऋगियम्। सा च "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते। हे पितरः, युष्मत्प्रसादात्, वाजस्य अन्नस्य प्रसवः उत्पत्तिः मा माम् आजगम्यात् आगच्छत्वित्यर्थः। जगम्यादिति गच्छतेर्व्यत्ययेन ह्वादित्वे लिङि

रूपम्। ( अत्र व्यवहितोपसर्गसम्बन्धः, व्यवहिताश्चेति पाणिनिवचनात् ) अस्मिन् श्राद्धे युष्मदुद्देशेन कृतस्यान्नदानस्य फलं मां प्रति पुनः पुनरागच्छत्वित्यर्थः। किञ्च हे पितरः, युष्मत्प्रसादात् विश्वरूपे विश्वात्मिके इमे द्यावापृथिवी ( वा छन्दसीति पूर्वसवर्णदीर्घोऽवगन्तव्यः ) इमे द्यावापृथिव्यौ मा मां प्रति आजगम्यातामितिशेषः, आगच्छेतामित्यर्थः। अत्र "आ" इत्युपसर्गावृत्त्या क्रियापदावृत्तिरपि बोद्धव्या। एतेन द्यावापृथिव्योः सम्बन्धि सर्वमपि कल्याणं मां प्रत्यागच्छत्वित्यभिप्रायः। किञ्च हे पितरः, पितामहादयः युष्माकमाज्ञया पितरा मातरा च मा मां प्रति आगन्तामागच्छतामित्यर्थः। ( पूर्ववदत्रापि व्यवहितोपसर्गसम्बन्धः ) ( गन्तामिति गच्छतेर्व्यत्ययेनादादित्वे लोटि रूपम्। "पितरा मातरा च च्छन्दसी"ति निपातनादिह पितरा मातरेति च छान्दसं रूपम्। अस्मदीयो यः पिता या चास्मदीया माता तयोः पुनः पुनरागमनमिहाशास्यते, तदीयैकोद्दिष्टस्य सम्भावितत्वात्। यदा यदा च एकोद्दिष्टं करिष्यामि तदा तदा च मातापितरावागच्छतामिति भावः। किञ्च हे पितरः, युष्मत्प्रसादात् सोमः युष्माकं पितॄणां राजा अमृतत्वेन मा माम्प्रति आगम्यात् आगच्छेदित्यर्थः। गम्यादिति गच्छतेर्लिङि रूपम्। अमृतत्वेनेति चतुर्थ्यर्थे तृतीया, अमृतत्वाय मम देवत्वजन्मने मम देवत्वलाभार्थमित्यर्थः। अमृतत्वाय मम मोक्षत्वाय इति वा मम मोक्षत्वसम्पादनार्थमित्यर्थः। अनेन चानुव्रजनेन ममैतच्छ्राद्धफलमस्तु यदैहिकं पार्थिवसुखं पारलौकिकं स्वर्गसुखमन्ते मोक्षश्च मम भवत्वित्याशंसावाक्यार्थः ॥ ३३ ॥

एते च मन्त्रा एकोद्दिष्टपार्वणश्राद्धसम्बन्धिनो व्याख्यातास्तेष्वेकादशाहद्वादशाहश्राद्धसम्बन्धिनामपि मन्त्राणामन्तर्भावो द्रष्टव्यः। सपिण्डीकरणश्राद्धमन्त्रा वृद्धिश्राद्धमन्त्राश्च यथाक्रममग्रे व्याख्यास्यन्ते। इदानीन्तु वृषोत्सर्गमन्त्रा व्याख्यायन्ते। तथाहि—

ॐ इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहा।
उपसृजन्धरुणं मात्रे धरुणो मातरं धयन्।
रायस्पोषमस्मासु दीधरत्स्वाहा ॥ १ ॥

अस्यां कण्डिकायां चत्वारि पशुदेवत्यानि यजूंषि सन्ति तानि च इह वृषोत्सर्गश्राद्धे आज्यहोमे विनियुक्तानि, "मध्ये गवाꣳ सुसमिद्धमग्निं कृत्वाऽऽज्यꣳ संस्कृत्येह रतिरितिषड्जुहोती"ति पारस्करवचनात्। तत्र होमस्यायं क्रमः, चतुर्भिर्यजुर्भिर्हुत्वा इह रतिरिति नानामन्त्राभ्यामित्यन्यत्रोक्तेरेतत्कण्डिकान्तर्गतपूर्वोक्ताभ्यां स्वाहेत्यन्ताभ्यां द्वे आहुती जुहोति। एवं कृते षडाहुतयः सम्पद्यन्ते। अथ मन्त्रार्थः। हे गावः, वृषोत्सर्गसम्बन्धिन्यो वत्सतरीरूपाः, युष्माकं रतिः रमणमिह दीयमानेऽस्मिन्वृषभेऽस्त्वितिशेषः, स्वाहा युष्मदर्थमिदमाज्यरूपं हविर्मया परित्यक्तं तद्युष्मदर्थं सुहुतमस्त्वित्यर्थः। अनेनाज्यहोमेन युष्मदधिष्ठात्री देवता प्रीयतामितिभावः। तथा हे गावः, वृषोत्सर्गसम्बन्धिन्यो वत्सतरीरूपाः, यूयमिहैव दीयमानेऽस्मिन्वृषभे रमध्वं अनेन सह क्रीडध्वमित्यर्थः। स्वाहा स्पष्टोऽर्थः पूर्ववत्। तथा हे गावः, वृषोत्सर्गसम्बन्धिन्यो वत्सतरीरूपाः, युष्माकं धृतिः धैर्य्यं सन्तोषः इहैवास्त्वितिशेषः। दीयमानेऽस्मिन्वृषभे युष्माकं सर्वासां गवां सन्तोषो भवतु येन सन्तोषेण युष्माकमनेन वृष-

भेण सह परस्परानन्दसंयोगेऽस्मत्पितॄणामपि स्वर्गलोको भविष्यतीत्यभिप्रायः। स्वाहा स्पष्टोऽर्थः पूर्ववत्। तथा हे गावः, वृषोत्सर्गसम्बन्धिन्यो वत्सतरीरूपाः, युष्माकं स्वधृतिः स्वकीया धृतिः सन्तोष इहैवास्त्विति शेषः, दीयमानेऽस्मिन्नेव वृषभे युष्माकं स्वीया धृतिः सन्तोषोऽस्तु येन परस्परानन्दसंयोगे सत्येवास्मत्पितॄणामपि स्वर्गो भविष्यतीत्याशयः। स्वाहा स्पष्टोऽर्थः पूर्ववत्। अत्र पुनरुक्तिरादरातिशयद्योतनार्था, "अभ्यासे भूयांसमर्थं मन्यन्ते" इतियास्कोक्तेः। उपसृजमित्युष्णिक्, "आद्यावष्टाक्षरौ तृतीयो द्वादशाक्षरः सोष्णि-गित्युक्तेः। हे गावः, वृषोत्सर्गसम्बन्धिन्यो वत्सतरीरूपाः, युष्मत्प्रसादात्, धारयतीति धरुणः अग्निः अस्मासु (स्वभार्य्यापुत्राद्यपेक्षया बहुवचनम्, "अस्मदो द्वयोश्चे" तिपाणिनिवचनाद्वा) यजमानेषु रायो धनस्य पोषं पशुपुत्रसुवर्णादेः पुष्टिं दीधरत् धारयतु। धारयतेर्लोडर्थे लुङि रूपम्। अडभावश्चार्षोऽवगन्तव्यः। किम्भूतः धरुणः मात्रे 'षष्ठ्यर्थे चतुर्थी' मातुः पृथिव्याः धरुणं धारयितारं पार्थिवमग्निमुपसृजन् समीपं प्रापयन् तथा मातरं पृथिवीं धयन् पिबन् तत्रोत्पन्नं हविर्भक्षयन्नित्यर्थः। एवंभूतो यो धरुणः आहुतिपरिणामेन सर्वजगद्धारणसमर्थोऽयं होमीयोऽग्निः, स्वाहा तस्मै एतदाज्यरूपं हविर्मया परित्यक्तं तद्धविः सुहुतमस्त्वित्यर्थः। स च तुष्टः सन्नस्मासु रायस्पोषं धनपुष्टिं धारयत्वित्याशंसावाक्यार्थः। गोभ्यः सकाशात्पयः, पयसो दधि, दध्नो घृतं, तच्च पीत्वाग्निः सुप्रीतो भूत्वा यजमानाभीष्टफलं साधयतीत्यभि-प्रायेणेह घृतस्योत्पत्तिभूता गाव एव प्रार्थ्यन्ते। तदिह प्रदर्शितं गवां वृषभसंयोगे परस्परा-नन्दोत्पत्तौ सत्यां पितॄणामपि स्वर्गप्राप्तिः श्राद्धकर्तुश्चाभीष्टसिद्धिर्भविष्यतीत्याशयेनैवमुक्तम्, "गवां मध्ये यदा चैव वृषभः क्रीडते तु यत्। अप्सरौघसहस्रेण क्रीडन्ति पितरस्ततः। लाङ्गू-लमुद्यतं यावत्तोयेषु क्रीडते तु सः। अप्सरोगणसङ्घैश्च क्रीडन्ति पितरः सदा। सहस्ररत्नपात्रेण कनकेन यथाविधि। तृप्तिस्तु या पितॄणां वै सा वृषेण समोच्यते॥" इत्यादिफलश्रुतेः॥१॥

ॐ पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः।
पूषा वाजꣳ सनोतु नः॥ २॥

पूषदेवत्या व्यूहेन पादपूरणे सति गायत्री परमेष्ठिदृष्टा "पूषा गा०—इति पौष्णस्य जुहो-ती"ति पारस्करवचनादिह वृषोत्सर्गे पौष्णपिष्टचरुहोमे विनियुक्ता ऋगियम्। अथ मन्त्रार्थः। पोषयति सर्वं जगत् वृष्टिद्वारा धारयतीति पूषा पूषनामकः, "आदित्याज्जायते वृष्टिरि"तिस्मृतेः, वृष्टिप्रदानेन सर्वस्यास्य जगतो धारयितेत्यर्थः, द्वादशादित्यान्तर्गतो देवः नोऽस्माकं गाः धेनूरिन्द्रियाणि च अन्वेतु रसप्रदानेन अनुगृह्णातु। तथा स एव पूषा नोऽस्माकम् अर्वतः अश्वान् प्राणान् वा रक्षतु पालयत्वित्यर्थः। तथा स एव पूषा देवो नोऽस्मभ्यं वाजमन्नं सनोतु "षणु दाने" ददात्वित्यर्थः। स्वाहा, यस्मै पूष्णे एतत्पिष्टचरुरूपं यत् हविर्मया दत्तं तत्तदर्थं सुहुतमस्त्वित्यर्थः। "पूषा रक्षतु सर्वतः।" इत्यपि पाठः क्वचिद्दृश्यते। तत्पक्षेऽय-मर्थः। पूषा पूर्वोक्तो देवः नोऽस्माकं गाः वने चरन्तीः अस्मदीया धेनूः, विषयेषु सञ्चरण-शीलानि अस्मदीयानीन्द्रियाणीति वा अन्वेतु अनुगच्छतु, अनुगत्य च सर्वतो रक्षतु। वने चरन्तीः अस्मदीया गाः धेनूः सर्वतः अर्थात्सर्वप्रकारकहिंस्रजन्तुभ्यः पालयत्वित्यर्थः। इन्द्रि-यपक्षे गाः अस्मदीयानीन्द्रियाणि सर्वतः अर्थात्सर्वप्रकारकदुर्वृत्तितः परिरक्षत्विति भावः।

पूषेत्ययं शब्दः "पुष धारणे" (चु० प०) इत्यस्य "श्वन्नुक्षन् पूषन्०"इत्यादिना कनिन्प्रत्ययान्तो निपात्यते । निपातनादुपधाया दीर्घश्चेत्यनुसन्धेयम् ॥ २ ॥

"ॐ नमस्ते०–" इत्ययं रुद्राध्यायस्तु शतरुद्रियमन्त्रव्याख्याप्रकरणे व्याख्यातस्तत्रास्य रुद्राध्यायस्य व्याख्या द्रष्टव्या ॥६८॥

**ॐ हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः ।**
**या अग्निङ्गर्भन्दधिरे सुवर्णास्तान आपः शं स्योना भवन्तु ॥६९॥**

अब्देवत्या त्रिष्टुप् अग्निदृष्टा इह वृषोत्सर्गे वत्सतरीचतुष्टयसहितवृषस्नपने विनियुक्ता ऋगियम् "अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया । तथाहि–हिरण्यवर्णाः "हिरण्यं रजतमि"त्युवटः, हिरण्यं रजतं तद्वद्वर्णो यासां ता हिरण्यवर्णाः, हिरण्यस्य वर्णः हिरण्यवर्णः, हिरण्यवर्ण इव वर्णो यासां ता हिरण्यवर्णा इति वा रजतसमानवर्णाः रजतस्य शुक्लवर्णत्वात् शुक्लवर्णा इतियावत्, तथा शुचयः शुद्धाः, अत एव पावकाः पावयित्र्यः, अन्येषामपि स्नानपानादिना शोधयित्र्य इतियावत्, एवम्भूता या आपः सन्तीतिशेषः । तथा यासु पवित्रासु अप्सु कश्यपः प्रजापतिर्जातः समुत्पन्नः । तथा च श्रुतिः–"तम आसीत्० सलिलं सर्वमा इदम् । तुच्छ्येना० महिना जायतैकम्" ( ऋ. सं. ८।७।१७।३। ) इति । तथा यासु पवित्रास्वप्सु इन्द्रः देवराट् जातः समुत्पन्नः । तथा याश्चापः अग्निं गर्भं दधिरे अग्निं गर्भत्वेन धृतवत्य इत्यर्थः । तथा च श्रुतिः–"आपो ह यद्बृहतीर्विश्वमायन्गर्भन्दधाना जनयन्तीरग्निम्" । ( शु. य. वे. वा. मा. सं. २७।२५। ) इति । ताः सुवर्णाः सु शोभनो वर्णो यासां ताः सुवर्णाः कमनीयवर्णाः आपः नोऽस्माकं शं शिवं कल्याणं यथा स्यात्तथा स्योनाः सुखयित्र्यो भवन्त्वित्यर्थः ॥ ६९ ॥

**ॐ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् ।**
**या अग्निङ्गर्भन्दधिरे सुवर्णास्तान आपः शं स्योना भवन्तु ॥७०॥**

अब्देवत्या त्रिष्टुप् अग्निदृष्टा इह वृषोत्सर्गे वत्सतरीचतुष्टयसहितवृषस्नपने विनियुक्ता ऋगियम् "अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया । तथाहि–राजा "राजा वै राजसूयेनेष्ट्वा भवती"तिश्रुतेः राजसूययाजी वरुणः एतन्नामकः पापिनां निग्रहकर्त्ता देवः यासामपां मध्ये मध्यभागे 'समुद्रमध्ये' इतियावत्, तत्र स्थित्वेतिशेषः । जनानां मनुष्याणां सत्यानृते सत्यं यथार्थभाषणम्, तद्विपरीतम् अनृतम्, सत्यञ्च अनृतञ्चेति सत्यानृते तथ्यातथ्ये अवपश्यन् अवलोकयन् सन् याति अनृतभाषणकर्त्तुर्निग्रहार्थं पाशहस्तस्तत्र तत्र गच्छतीत्यर्थः । तथा च तैत्तिरीयकम् "अनृते खलु वै क्रियमाणे वरुणो निगृह्णाती"ति । तथा याश्चापः अग्निं गर्भं दधिरे धृतवत्यस्ताः सुवर्णाः कमनीयवर्णा मनोज्ञा आपः नोऽस्माकं शं शिवं कल्याणं यथा स्यात्तथा स्योनाः सुखयित्र्यो भवन्त्वित्यर्थः ॥ ७० ॥

ॐ यासां देवा दिवि कृण्वन्ति भक्षँय्या अन्तरिक्षे बहुधा भवन्ति।
या अग्निङ्गर्भन्दधिरे सुवर्णास्तान आपः शं स्योना भवन्तु॥ ७१ ॥

अब्देवत्या त्रिष्टुप् अग्निदृष्टा इह वृषोत्सर्गे वत्सतरीचतुष्टयसहितवृषस्नपने विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि– देवा इन्द्रादयः दिवि स्वर्गे यासामपामंशं सारभागममृतं सोमं वा भक्षं कृण्वन्ति कुर्वन्ति भक्ष्यपदार्थत्वेन स्वीकुर्वन्तीत्यर्थः। कृण्वन्तीति करोतेर्विकरणव्यत्ययेन लटि प्रथमपुरुषबहुवचने रूपम्। तथा या आपः अन्तरिक्षे आकाशे बहुधा भवन्ति मेघोदरान्निःसृत्य वृष्टिरूपेण भूमावागत्य इतस्ततो भूत्वा नानारूपा भवन्तीत्यर्थः। तथा याश्चापः अग्निं गर्भं दधिरे गर्भत्वेन धृतवत्यस्ताः सुवर्णाः कमनीयवर्णा मनोज्ञा आपः नोऽस्माकं शं शिवं कल्याणं यथा स्यात्तथा स्योनाः सुखयित्र्यो भवन्त्वित्यर्थः॥ ७१ ॥

ॐ शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचम्मे।
घृतश्चुतः शुचयो याः पावकास्तान आपः शं स्योना भवन्तु॥७२॥

अब्देवत्या त्रिष्टुप् अग्निदृष्टा इह वृषोत्सर्गे वत्सतरीचतुष्टयसहितवृषस्नपने विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि– हे आपः, अबधिष्ठात्र्यो देव्यः, यूयं शिवेन शान्तेन चक्षुषा सौम्यनेत्रेणेतियावत् मा मां पश्यत अवलोकयतेत्यर्थः। तथा हे आपः, अबधिष्ठात्र्यो देव्यः, यूयं शिवया तन्वा कल्याणमयेन स्वकीयेन शरीरेण मे मम त्वचं त्वगिन्द्रियमुपस्पृशत संस्पृशत। मदीयत्वगिन्द्रियस्योपस्पर्शनं कुरुतेत्यर्थः। तथा हे आपः, घृतश्चुतः "श्च्युतिर् क्षरणे" (भ्वा. प.) यकाररहितोऽप्ययं धातुः। ततः "क्विप् चे"ति क्विप्। घृतं क्षरणशीलं दीप्यमानं वा अमृतं श्चोतन्ति क्षरन्तीति घृतश्चुतः अमृतस्राविण्यः, शुचयः शुद्धाः, अत एव पावकाः पावयित्र्यः अन्येषामपि स्नानाचमनादिना शोधयित्र्यः, एवम्भूता या भवत्यः सन्तीतिशेषः। ता भवत्यो नोऽस्माकं शं शिवं कल्याणं यथा स्यात्तथा स्योनाः सुखयित्र्यो भवन्त्वित्यर्थः॥ ७२ ॥

ॐ "शन्नो देवीरि"ति पार्वणश्राद्धीयमन्त्रव्याख्याप्रकरणे व्याख्यातस्तत्रास्य मन्त्रस्य व्याख्या द्रष्टव्या॥७३॥

ॐ यद्देवा देवहेडनन्देवासश्चकृमा व्वयम्।
अग्निर्म्मा तस्मादेनसो व्विश्वान्मुञ्चत्वꣳहसः॥ ७४ ॥

अग्निदेवत्यानुष्टुप् प्रजापतिदृष्टा इह वृषोत्सर्गाङ्गजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि–दीव्यन्तीति देवाः, देवा एव देवासस्तत्सम्बुद्धौ, अत्र "आज्जसेरसुगि"त्यसुगागमो बोध्यः, हे देवासः हे देवाः, इन्द्रादयः, दीव्यन्तीति देवाः स्तुतिक्रीडादियुक्ताः सन्तः प्रमादात् वयं यत् देवहेडनं देवानां

हेडनं देवहेडनं देवापराधं चकृमा चकृम कृतवन्त इत्यर्थः। "चकृमा" इत्यत्र तु करोतेर्लिटि उत्तमपुरुषबहुवचने संहितायां छान्दसो दीर्घः। लिङ्लकारस्त्विह लङर्थे बोध्यः, "छन्दसि लुङ्लङ्लिटः" इतिपाणिनिवचनात्। तस्मादेनसः देवहेडनरूपात्पापात् अग्निः मा मां मुञ्चतु पृथक्करोत्वित्यर्थः। तथा विश्वात् (ङसेः स्मादभाव आर्षः।) विश्वस्मात्सर्वस्मादंहसः देवहेडनव्यतिरिक्तादपि पापात् सर्वस्माद्विघ्नाच्चेति वा अग्निर्मा मुञ्चतु पृथक्करोत्वित्यर्थः ॥७४॥

ॐ यदि दिवा यदि नक्तमेनांꣳसि चकृमा व्वयम्।
व्वायुर्म्मा तस्मादेनसो व्विश्वान्मुञ्चत्वꣳहसः ॥७५॥

वायुदेवत्यानुष्टुप् प्रजापतिदृष्टा इह वृषोत्सर्गाङ्गजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि-यदि चेद्दिवा अहनि, यदि चेत् नक्तं रात्रौ च वयं प्रमादवशात् यानि एनांसि पापानि चकृमा चकृम कृतवन्तः तस्मात् एनसः "सुपां सुपो भवन्ती"ति वचनात्पञ्चमीबहुवचनस्थाने पञ्चम्येकवचनमुभयत्रापि बोद्धव्यम्। तेभ्यः एनोभ्यः, तेभ्यः दिवाकृतेभ्यो रात्रिकृतेभ्यश्च पापेभ्यो वायुर्मा मां मुञ्चतु पृथक्करोत्वित्यर्थः। तथा विश्वात् विश्वस्मात् सर्वस्मात् अंहसः पूर्वोक्तपापव्यतिरिक्तादपि पापात् सर्वस्माद्विघ्नाच्चेति वा वायुर्मा मां मुञ्चतु पृथक्करोत्वित्यर्थः ॥७५॥

ॐ यदि जाग्रद्यदि स्वप्नऽएनांꣳसि चकृमा व्वयम्।
सूर्य्यो मा तस्मादेनसो व्विश्वान्मुञ्चत्वꣳहसः ॥७६॥

सूर्य्यदेवत्यानुष्टुप् प्रजापतिदृष्टा इह वृषोत्सर्गाङ्गजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि-जाग्रत् (अत्र "सुपां सुलुगि"ति सप्तमीविभक्तेर्लुक्) यदि चेत् जाग्रति जाग्रदवस्थायां तथा यदि चेत्स्वप्ने स्वप्नावस्थायां वयमेनांसि यानि पापानि चकृमा चकृम कृतवन्तः तस्मादेनसः (इहापि पूर्ववद्वचनव्यत्ययो बोध्यः।) तेभ्यः एनोभ्यः पापेभ्यः सूर्य्यो मा मां मुञ्चतु पृथक्करोत्वित्यर्थः। "मनुष्या वै जागरितं पितरः सुप्तं मनुष्यकिल्बिषाच्चैवैनं पितृकिल्बिषाच्च मुञ्चन्ति" (श० ब्रा० १२।९।२।२) इति श्रुतेरयमर्थो वा। तथाहि-जाग्रत् जाग्रत्सु वृषोत्सर्गरूपयज्ञदर्शनार्थमागतेषु मनुष्येषु यत्तदीयासत्काररूपमेनः यदि चेत् वयं चकृमा चकृम कृतवन्तः तथा स्वप्ने (अत्र "सुपां सुपो भवन्ती"ति वचनाद्वचनव्यत्ययः।) स्वप्नेषु पितृषु श्राद्धतर्प्पणाकरणादिरूपं यदेनः यदि चेद्वयं चकृमा चकृम कृतवन्तः। एतद्व्यतिरिक्तमपि यदेनो वयं चकृमेत्यनुषङ्गः। एवं प्रकारेण एनांसि वयं चकृमेत्यर्थः। तस्मात् एनसः तेभ्यः एनोभ्यः पापेभ्यः सूर्य्यो मा मां मुञ्चतु पृथक्करोत्वित्यर्थः। तथा पूर्वोक्तपापव्यतिरिक्तमपि यदंहः पापमस्माकमस्ति चेदितिवाक्यशेषः। तस्मात् विश्वात् विश्वस्मात्सर्वस्मात्पापाद्विघ्नाच्च सूर्य्यो मां मुञ्चतु पृथक्करोत्वित्यर्थः। एनांसीति "सुपां सुपो भवन्ती"ति वचनाद्व्यत्ययेन द्वितीयैकवचने बहुवचनं वा, तस्मादेनस इति पञ्चम्येकवचनश्रवणात्। विश्वस्मादितिप्राप्ते "बहुलं छन्दसी"त्युक्तेश्छन्दसि सर्वविधीनां वैकल्पिकत्वादिह ङसेः स्मादादेशो न भवति। अतो विश्वशब्दस्य पञ्चम्येकवचने विश्वादिति रूपं भवतीति बोद्धव्यम् ॥ ७६ ॥

ॐ पिता वत्सानाम्पतिरघ्न्यानामथो पिता महतां गर्गराणाम् ।
वत्सो जरायुः प्रतिधुक् पीयूष आमिक्षा घृतन्तदस्य रेतः ॥७७॥

वृषदेवत्या त्रिष्टुप्प्रजापतिदृष्टा वृषोत्सर्गीयवृषदक्षिणकर्णाधिकरणकजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि-अयं वृष ईदृशोऽस्तीतिशेषः। कीदृश इत्यपेक्षायामुच्यते, वत्सानां शिशुभूतानां गोपुत्राणां पिता उत्पादक इत्यर्थः। तथा अघ्न्यानां पतिः "अघ्न्येतिगोनामे"तिनिघण्टुः, अघ्न्यानां हन्तुमयोग्यानां स्त्रीत्वविशिष्टानां गवां पतिः स्वामीत्यर्थः। अथो अपि च महतां गर्गराणां गरतिः सेचनार्थः। गरन्ति सिञ्चन्ति रेत इति गर्गरास्तरुणा वृषास्तेषां तथोक्तानामपि पिता उत्पादक इत्यर्थः। किञ्च अस्य वृषस्य तत् उ ( उशब्द एवार्थे ) तदेव रेतो वत्सः, वत्सस्य रेतस एवोत्पत्तिरितिप्रसिद्धेः। तथा जरायुर्गर्भवेष्टनं तदप्यस्यैव वृषस्य तत् उ तदेव रेत इत्यनुषङ्गः। तथा तत् उ तदेव प्रतिधुक् तत्कालदुग्धमित्यर्थः। तथा तत् उ तदेव पीयूषः ( पुंस्त्वमत्र छान्दसम् ।) "पीयूषममृतं सुधे"त्यमरसिंहोक्तेः पीयूषम् अमृतं तदप्यस्य वृषस्य रेत एवेत्यर्थः। तथा आमिक्षा तप्ते पयसि दध्यासेचने यद्दुग्धं स्फुटितं भवति तदेव आमिक्षाशब्देनाभिधीयते। साप्यस्यैव वृषस्य तदु तदेव रेत इत्यर्थः। "रेतो वै तेजस्तेजो वै वीर्य्यमि"तिश्रुतेर्यदस्य वृषस्य रेतस्तेज अर्थाद्वीर्य्यं तदु तदेव वत्सादिसर्वपदार्थजातमिति भावः। तथा अस्य वृषस्य तदु तदेव रेतो घृतं घृतन्तु प्रसिद्धमेव। "तेजो वै घृतमायुर्वै घृतमि"त्यादिश्रुतेस्तस्य घृतस्यापि तेजस्त्वं स्पष्टतया प्रतीयते। वृषेण गवि सिक्तं रेतो वत्साद्यामिक्षान्तं सर्वमपि गोरसपदार्थजातं भवति। तद्यथा वृषेण गवि सिक्तं रेतो यदा भवति, तदा हि गर्भधारणोत्तरं पयो भवति, पयसश्च दधि, दध्नश्च नवनीतं, तस्यैवाग्निसंयोगे सति तदेव नवनीतं वह्निना सुसंस्कृतं द्रवीभूतं च सत् घृतं भवति। गोवृषसंयोगाभावे वृषस्य रेतो विना गवि गर्भस्यासम्भवत्वेन वत्सपयसोरभावात्सुतरां दधिघृताभावस्यापि प्रत्यक्षदर्शनादिह श्रुत्या साधुतरमुक्तं "वत्सो जरायुः प्रतिधुक् पीयूषऽआमिक्षा घृतन्तदस्य रेतः"इति। लोकेऽपि दृश्यते यदैव गोवृषसँय्योगो भवति तदैव गोर्गर्भोदयो भवति। गर्भोदये च गर्भस्य सर्वाङ्गसम्पूर्णत्वे सति तत्प्रसवः, सति प्रसवे गोः प्रसूतात्वे वत्सादिघृतान्तस्य समुत्पत्तिरिति भावः ॥७७॥

ॐ वृषो हि भगवान्धर्म्मश्चतुष्पादः प्रकीर्त्तितः ।
वृणोमि तमहं भक्त्या स मां रक्षतु सर्वतः ॥ ७८ ॥

स्पष्टोऽर्थः ॥ ७८ ॥

ॐ वृषमेतं युवानं पतिं वो ददानि तेन क्रीडन्तीश्चरथ प्रियेण ।
सा नः साप्तजनुषा सुभगा रायस्पोषेण समिषा मदेम ॥७९॥

वत्सतरीगोदेवत्या प्रजापतिदृष्टा त्रिष्टुप्छन्दस्का इह वृषोत्सर्गे वृषोत्सर्जने विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि-हे वत्सतर्य्यः, एतं युवानं तरुणं वृषं सेक्तारं पतिं वः युष्मभ्यं ददानि प्रियेण वल्लभेन तेन पत्या सह

क्रीडन्तीः ("वा छन्दसी"ति पूर्वसवर्णदीर्घः।) क्रीडन्त्यः सत्यो यूयं चरथ वनेष्विति शेषः। (लोडर्थे लट्।) चरत भ्रमत। वनेषु यूयं स्वच्छन्दं विहरतेत्यर्थः। वनेषु स्वच्छन्दं तृणानि स्वादतेति वा, "चर गतिभक्षणयोरि"त्युक्तेः। तथा नोऽस्माकं गृहेषु साप्तजंनुषा सप्तजन्मसंवर्द्धेन पत्या सह असुभगा मा भवतेतिशेषः। सप्तजन्मपर्य्यन्तमनेन पत्या सह क्रीडन्त्यो यूयमस्माकमपि कल्याणं कुरुतेत्यभिप्रायः। ततो युष्मत्प्रसादाद्वयमपि रायस्पोषेण धनपुष्ट्या इषा अन्नेन च संमदेम सम्यक् प्रकारेण तृप्येमेत्यर्थः। अत्रापि समित्युपसर्गो मदेमेति क्रियापदेन सह संबध्यते, व्यवहिताश्चेतिपाणिनिवचनात्। युष्मत्प्रसादाद्वयमपि रायस्पोषेण धनपुष्ट्या इषा अन्नेन च संमदेम सम्यक् तृप्ता भवेमेत्याशास्महे, इति भावः। अमुमेव श्रुत्यर्थमनुसृत्य स्मृत्याप्युक्तं च "ततः प्रमुदितास्तेन वृषेण च समन्विताः। वनेषु गावः क्रीडन्त्यः पितॄणां तृप्तिदायिकाः" इत्यादि ॥ ७८ ॥

समुद्रोऽसि नभस्वानार्द्रदानुः शम्भूर्मयोभूरभिमा वाहि स्वाहा।
मारुतोऽसि मरुतां गणः शम्भूर्मयोभूरभिमा वाहि स्वाहा ॥
अवस्यूरसि दुवस्वाञ्छम्भूर्मयोभूरभि मा वाहि स्वाहा ॥ ८० ॥

अस्यां कण्डिकायां वायव्यानि त्रीणि यजूंषि सन्ति। तानि च वत्सतरीमध्यस्थवृषाभिमन्त्रणे विनियुक्तानि "नाभ्यस्थमभिमन्त्रयते मयोभूरित्यनुवाकशेषेणे"तिपारस्करवचनात्। वायव स्थेति वत्सापकरणश्रुतिनिदर्शनाद्वत्सेषु वायुत्वोपचारादिह वत्सत्वावच्छिन्नप्रतिनिधित्वेन वृष एव वायुरूपत्वेन स्तूयते। तथाहि—हे वायो, वायुसदृशवृष, यस्त्वमीदृशोऽसि स त्वं मा माम् अभिवाहि मदभिमुखमागच्छ अस्य वृषोत्सर्गस्य फलरूपेण माम्प्रत्यागच्छेत्याशयः। स्वाहा "ओहाक् त्यागे" हानं हा त्यागः, सुष्ठु आहा स्वाहा सुष्ठु परित्यागः पितॄणां तृप्तिहेतोर्मया त्वमुत्सृष्ट इत्यर्थः, "गवां मध्ये यदा चैव वृषभः क्रीडते तु यत्। अप्सरौघसहस्रेण क्रीडन्ति पितरस्ततः" इत्यादिफलश्रुतेः। "वा गतिगन्धनयोः" इत्यस्य लोण्मध्यमैकवचने वाहीति रूपं बोध्यम्। कीदृशस्त्वमित्यपेक्षायामुच्यते। समुद्रः सम्यक् उनत्ति स्वमूत्रैर्भूमिं क्लेदयति स्वरेतः सेचनेन गवां योनिर्वा क्लेदयति आर्द्रीकरोतीति समुद्रः भूमेर्गवां योनेर्वा आर्द्रयितेत्यर्थः। "उन्दी क्लेदने" ततो रक्प्रत्ययः। तथा नभस्वान् "नभ इत्युदकनामे"तिनिघण्टुः। नभोऽस्यास्तीति नभस्वान् उदकवानित्यर्थः। उदकञ्चेह रेतस उपलक्षकं रेतस्वानित्यभिप्रायः। रेतस्वतो वृषाद्वृषभोत्पत्तिः, वृषभद्वारा च भूमिकर्षणेन व्रीह्यादिहविर्द्रव्यसम्भवः, गवा वृषसँय्योगे पयोदधिघृतानां च हविषामुत्पत्तिः। एवमुभयथापि व्रीह्यादिहविर्द्रव्येण घृतादिहविर्द्रव्येण च यागसिद्धिः, ततः पर्जन्यः सम्भवति "यज्ञाद्भवति पर्जन्यः" इतिस्मृतेः। स च पर्जन्यो यथासमयमभिवर्षति। तदुक्तं श्रुत्या "निकामे निकामे नः पर्जन्यो वर्षतु" (शु०य० वे० २२।२२) इति। पुनः कीदृशः आर्द्रदानुः आर्द्रं पूर्वोक्तप्रकारेण वृष्ट्युदकं गवां योन्यार्द्रीकरणपक्षे वीर्य्योदकं वा ददातीति आर्द्रदानुः, तथा शम्भूः शमैहिकं सुखं भावयति पूर्वोक्तप्रकारेण व्रीह्यादिधान्योत्पत्त्या प्रापयतीति शम्भूः सर्वेषामैहिकसुखप्रापक इत्यर्थः। तथा मयोभूः मयः पारलौकिकं सुखं भावयति परम्परायज्ञसम्पादकत्वसम्बन्धेन यागादिद्वारा

प्रापयतीति मयोभूः सर्वेषां पारलौकिकसुखप्रापक इत्यर्थः। वृषोत्सर्गकर्त्तुर्यजमानस्यैहिकसुखसाधकस्तत्पितॄणाञ्च स्वर्गादिपारलौकिकसुखसाधक इत्यभिप्रायः। स एतादृशस्त्वं मा मामभिवाहि फलरूपेण माम्प्रत्यागच्छेत्यर्थः। किञ्च हे वायो, वायुसदृशवृष,त्वं मारुतोऽसि मरुतां वातानामयं मारुतः वायुसम्बन्धीत्यर्थः। सम्बन्धश्चात्र निरावरणान्तरिक्षे तदुभयोरेकत्र सहवासत्वसाम्यादेवेत्यवगन्तव्यम्। गतिशैघ्र्यसादृश्येन मरुत इह वत्सा एवोच्यन्ते। तथा सति मरुतामर्थादितस्ततः सञ्चरणे अतिशीघ्रतया धावमानानां वत्सानां गणः गणयतीति गणः समूह इत्यर्थः। त्वयि विद्यमाने सत्येव व्रजस्य शोभा भवतीत्याशयः। शम्भूर्म्मयोभूरभिमा व्वाहि स्वाहेति पूर्वमिहैव प्रथमयजुषो व्याख्यायां व्याख्यातं तद्वदिहापि बोद्धव्यम्। किञ्च हे वायो, वायुसदृशवृष, त्वम् अवस्यूरसि अवनमवः रक्षणं तत्सीव्यतीति अवस्यूः "षिवु तन्तुसन्ताने" ततः क्विप्प्रत्ययः "च्छ्वोः शूडनुनासिके चे"ति ऊठि कृते यणादेशः। तथा त्वं दुवस्वानसि दुवोऽन्नं हविर्लक्षणं तदस्यास्तीति दुवस्वान् पूर्वोक्तप्रकारेण व्रीह्यादिहविरन्नवानित्यर्थः। शम्भूरित्यादि पूर्ववत्॥ ८०॥

ॐ यास्तेऽअग्ने सूर्य्ये रुचो दिवमातन्वन्ति रश्मिभिः॑।
ताभिर्नोऽअद्य सर्व्वाभी रुचे जनाय नस्कृधि॥ ८१॥

अग्निदेवत्या इन्द्राग्निदृष्टानुष्टुप् इह वृषोत्सर्गे वत्सतरीमध्यस्थवृषाभिमन्त्रणे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि— "वृषभो रोरवीति महो देवो मर्त्यां २॥ऽआविवेशे"ति श्रुतेः "वृषो हि भगवान्धर्म्मश्चतुष्पादः प्रकीर्त्तितः"इति स्मृतेश्च वृषस्य धर्म्मरूपत्वेन प्रतिपादनात्तस्यौत्कर्ष्यं सूर्य्याग्न्यादिरूपत्वेन इह द्योत्यते। अथ मन्त्रार्थः। तथाहि—अनक्ति व्यनक्ति स्वीयं पुंस्त्वं प्रकाशयतीति अग्निः पुंस्त्वप्रकाशक इत्यर्थः। व्यक्त्यर्थादञ्जूधातोरौणादिक इप्रत्ययो धातोर्जकारस्य बाहुलकाद्गकारश्च बोध्यः। अग्निशब्दस्य सम्बुद्धौ हे अग्ने, पुंस्त्वप्रकाशक, वृष, याः ते तव रुचः दीप्तयः सूर्ये सूर्य्यमण्डले वर्त्तमानाः सत्यः दिवं द्युलोकं रश्मिभिः स्वरूपभूतैः किरणैः आतन्वन्ति प्रकाशयन्तीत्यर्थः। ताभिः सर्वाभिः रुग्भिः दीप्तिभिर्नोऽस्मान् रुचे दीप्त्यै शोभायै अद्य कृधि कुरु। तथा जनाय पुत्रपौत्रादिकाय च कृधि कुरु। द्युलोकप्रकाशिकाः सर्वाः कान्तीः पुत्रपौत्रादींश्चास्मभ्यं देहीत्यर्थः। वृषस्य धर्म्मरूपत्वाद्धर्म्मस्य च तेजोमूर्त्तित्वाद्धर्म्मसम्बन्धीन्येव तेजांस्यग्निवायुसूर्य्येन्द्रादिषु भासन्ते, तानि तेजांसि स्वार्थमस्माभिराशास्यन्ते, इत्याशंसावाक्यार्थः॥ ८१॥

ॐ या वो देवाः सूर्य्ये रुचो गोष्वश्वेषु या रुचः॑।
इन्द्राग्नी ताभिः सर्वाभी रुचन्नो धत्त बृहस्पते॥ ८२॥

प्रजापतिदृष्टा लिङ्गोक्तदेवत्यानुष्टुप् इह वृषोत्सर्गे वत्सतरीमध्यस्थवृषाभिमन्त्रणे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तत्र वृषस्य धर्म्मरूपत्वाद्धर्म्मस्य च सर्वदेवताकत्वादिह वृषे सर्वदेवताकत्वं प्रकटयता वृषोत्सर्ग-

कर्त्रा वृषम्प्रत्येवमुच्यते। तद्यथा—हे देवाः, हे इन्द्राग्नी, हे बृहस्पते, वः युष्माकं सम्बन्धिन्यः या रुचः दीप्तयः सूर्य्ये सूर्य्यमण्डले सन्तीतिशेषः। एवं गोषु पुंगोषु वृषेषु, गोषु धेनुष्विति वा, तथा अश्वेषु तुरगेषु घोटकेष्विति यावत्, वः युष्माकं सम्बन्धिन्यः या रुचः या दीप्तयः कान्तयः सन्तीति शेषः। ताभिः सर्वाभिः रुग्भिः दीप्तिभिः कृत्वा नोऽस्माकम्। अत्र "सुपां सुपो भवन्ती"ति वचनात्सप्तमीबहुवचनस्थाने षष्ठीबहुवचनं बोद्धव्यम्। अस्मासु रुचं धत्त स्थापयतेत्यर्थः। यद्वा "नः"इति द्वितीयाबहुवचनस्थानेऽवगन्तव्यम्। ततोऽयमर्थः। ताभिः सर्वाभिः रुग्भिः दीप्तिभिर्नोऽस्मान् संयोजयतेति शेषः। तथा रुचं कान्तिञ्च धत्त स्थापयत अस्मिन्पक्षे–"अस्मास्वि"ति सप्तमीबहुवचनान्तं पदमध्याहर्त्तव्यं "हीनं वाक्ये निवेशयेदि"ति वचनात्। अथवा "नः" इति चतुर्थीबहुवचनस्थाने ज्ञेयं तथा "ताभिः, सर्वाभिः"इत्युभयत्र द्वितीयाबहुवचनस्थाने तृतीयाबहुवचनं "रुचम्" इत्यत्र द्वितीयाबहुवचनस्थाने द्वितीयैकवचनञ्चेत्यप्यनुसन्धेयम्, "सुपां सुपो भवन्ती"ति वचनात्। ततोऽयमर्थः। ताः सर्वाः रुचः नोऽस्मभ्यं धत्त दत्तेत्यर्थः। तत्तत्समानकान्तिमस्मभ्यं प्रयच्छतेत्यभिप्रायः। दधातिरिह दानार्थो बोध्यः, "डुधाञ् विधारणे पुष्टौ दाने चापि निगद्यते।" इति कल्पद्रुमोक्तेः। शुक्रबाहुल्येन कान्तिमत्त्वं तु प्रसिद्धमेव, तच्चास्मिन्वृषेऽधिकं वर्त्तते। अतो द्युतिस्तुतिक्रीडादियुक्तत्वाद्वृषस्य देवतात्मकत्वाभिप्रायेण "हे देवाः"इति सम्बोधनमिह वत्सम्प्रत्युक्तं, तत्र श्रेष्ठातिशयद्योतनाय बहुवचनं बोध्यम्। तथा शतक्रतुर्यथा देवानामिन्द्रस्तथायमपि गवामिन्द्रः अर्थात् शतक्रतुः शतयज्ञः पुरन्दराख्यो देवो यथा देवानां मध्ये इन्द्रः श्रेष्ठस्तथायं वृषोऽपि गवां मध्ये इन्द्रः श्रेष्ठ इति भावः। अपि च यथाग्निः सर्वपदार्थप्रकाशकस्तथायमपि वृषः पयोदधिघृतादिरसद्रव्यप्रकाशकोऽस्ति, गवा वृषसंयोगे गर्भोत्पत्तौ प्रसवोत्तरं पयोदधिघृतानां प्रत्यक्षदर्शनात्। अतो वृषस्येन्द्राग्निसाम्यादिह "हे इन्द्राग्नी"इति च सम्बोधनम्। "वाग्वै बृहती तस्या एष पतिर्बृहस्पतिरि"ति श्रुतेर्वाचस्पतेर्बृहस्पतित्वं सुस्पष्टं, तत्र "वाचं धेनुमुपासीत तस्याश्चत्वारस्तनाः"इत्यादिश्रुतेर्वाचो धेनुत्वमित्यपि स्पष्टमेव। तस्या धेनोः पतित्वेनास्य वृषस्य बृहस्पतित्वं तस्मादिह "हे बृहस्पते"इति सम्बोधनम्। एतत्सम्बोधनत्रयेण वृषस्य सर्वदेवतात्मकत्वं प्रकाश्य तत्कान्तिमत्त्वं ततः सकाशात्स्वस्मिन्नाशास्यते, इत्याशंसावाक्यार्थः ॥ ८२ ॥

ॐ रुचं॑ नो धेहि ब्राह्म॒णेषु॒ रुच॒ꣳ राज॑सु नस्कृधि।
रुचं॒ विश्ये॑षु शू॒द्रेषु॒ मयि॑ धेहि रु॒चा रुच॑म् ॥ ८३ ॥

अग्निदेवत्यानुष्टुप्प्रजापतिदृष्टा इह वृषोत्सर्गे वत्सतरीमध्यस्थवृषाभिमन्त्रणे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तत्र अग्निशब्दार्थस्तद्व्युत्पत्तिश्च पूर्ववदिहापि। तथाहि–हे अग्ने, पुंस्त्वप्रकाशक, वृष, नोऽस्माकं ब्राह्मणेषु अस्मत्सम्बन्धिषु विप्रेषु रुचं दीप्तिं कान्तिं धेहि स्थापय। तथा नोऽस्माकं राजसु राजन्येषु अस्मत्सम्बन्धिषु क्षत्रियेषु रुचं दीप्तिं कान्तिं कृधि कुर्वित्यर्थः। "श्रुशृणु०" इत्यादिना हेर्धित्वं व्यत्ययेनादादित्वाच्छपो लुक्। तथा नोऽस्माकं विश्येषु वैश्येषु शूद्रेषु चास्माकीनेषु रुचं दीप्तिं कान्तिं कुरु। अपि च मयि वृषोत्सर्गकर्त्तरि विषये रुचा दीप्त्या सह रुचं दीप्तिं

कान्तिं धेहि स्थापय। अविच्छिन्नां रुचं कान्तिं मयि आरोपयेत्यर्थः। वृषस्य धर्म्मरूपत्वाद्धर्म्मस्य च तेजोमयत्वात्तदीयं तेजः स्वसम्बन्धिब्राह्मणक्षत्रियवैश्यशूद्रेषु स्वस्मिंश्च वृषोत्सर्गकर्त्रा मया अनेन मन्त्रेणाशास्यते, इत्याशंसावाक्यार्थः॥ ८३॥

ओ३म् तत्त्वा यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः।
अहेडमानो व्वरुणेह बोध्युरुशꣳस मा नऽआयुः प्रमोषीः॥ ८४॥

वरुणदेवत्या त्रिष्टुप् शुनश्शेपदृष्टा इह वृषोत्सर्गे वत्सतरीमध्यस्थवृषाभिमन्त्रणे विनियुक्ता ऋगियं स्नानप्रकरणे व्याख्यातापि पुनर्विनियोगभेदेन इह "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि—मन्त्रेऽस्मिन् द्वौ तच्छब्दौ वर्त्तेते। तत्रैकस्य तच्छब्दस्य यच्छब्देन विपरिणामः कार्यस्ततोऽयमर्थः। तत्र "वृषो हि भगवान्धर्म्मश्चतुष्पादः प्रकीर्तितः। वृणोमि तमहं भक्त्या स मां रक्षतु सर्वतः॥" इत्यस्मिन्मन्त्रे वृणोमीति वृञ्धातुप्रयोगदर्शनात् व्रियते वृषोत्सर्गकर्त्रा स्वीक्रियते इति वरुणः, ( "वृञ् वरणे" ( स्वा० उ० ) इत्यस्मात् "कृवृदारिभ्य उनन्नि"त्यौणादिक उनन्प्रत्ययो बोध्यः। ) वृषोत्सर्गकर्त्रा स्वीकृतत्वादिह वरुणशब्देन वृष एवोपलक्ष्यते, प्रकरणसाहचर्य्यवशात्। हे वरुण, व्रियमाण, वृष, यजमानः यजनशीलो यः कश्चिद्देवदत्तादिर्हविर्भिः दत्तैश्चरुपुरोडाशादिभिर्यद्धनपुत्रादिकमाशास्ते इच्छति यत्कामस्तुभ्यं हविर्दत्ते, इत्यर्थः। वृषोत्सर्गकर्त्ता अहमपि तदेव धनपुत्रादिकं त्वा त्वां यामि ( यामीति याञ्चाकर्म्मसु निघण्टौ पठितः। "अथापि वर्णलोपो भवति तत्त्वा यामीती"ति यास्कोक्तेरिह "याचामी"ति प्राप्ते चकारलोपे "यामी"ति लडुत्तमपुरुषैकवचने रूपं भवति। तत्र वृषोत्सर्गकर्त्तुः स्वार्थप्रार्थनाविषयत्वात्प्राप्तस्यात्मनेपदस्य स्थाने "व्यत्ययो बहुलमि"ति व्यत्ययेन इह परस्मैपदमित्यनुसन्धेयम्। ततो यामीत्यस्यायमर्थः। ) यामि याचामीत्यर्थः। प्रकृत्यर्थस्तु याचे, इति भावः। तत्त्वया झटिति दातव्यमित्यभिप्रायः। कीदृशोऽहमित्यपेक्षायामुच्यते। ब्रह्मणा वेदेन वन्दमानः त्वां स्तुवान इत्यर्थः। किञ्च हे उरुशंस, शंसनं शंसः स्तुतिः "शंसु स्तुतौ" उरुर्म्महान् शंसः स्तुतिर्यस्य स उरुशंसस्तत्संबुद्धौ हे उरुशंस, बहुस्तुते, इह अस्मिन् वृषोत्सर्गे अहेडमानः "हेडृ अनादरे" ( भ्वा० आ० ) हेडते क्रुध्यतीति हेडमानः, न हेडमानोऽहेडमानः अक्रुध्यन् सन् त्वं बोधि बुध्यस्व। त्वं मत्प्रार्थनां जानीहीत्यर्थः। "बुध अवगमने"इति भौवादिकस्य विकरणव्यत्ययेन शपि लुप्ते "सेर्ह्यपिच्चे"ति सेर्ह्यादेशे "बहुलं छन्दसी"ति छन्दसि सर्वविधीनां वैकल्पिकत्वादिह हेरपित्वाभावे "पुगन्ते०"ति लघूपधगुणे "हुझल्भ्यो हेर्धिरि"ति हेर्ध्यादेशे छान्दसत्वाद्धातोर्धकारस्य लोपे लोण्मध्यमपुरुषैकवचने बोधीति रूपं बोध्यम्। किञ्च हे उरुशंस, बहुस्तुते, वरुण, व्रियमाण, वृष, त्वं नोऽस्माकम् आयुः जीवनं मा प्रमोषीः लोडर्थे लुङ् माङ्योगाद्वा, मा चोरयेत्यर्थः। "मुष स्तेये"इत्यस्माल्लुङ् "न माङ्योगे"इत्यडभावः। हे वृष, यतस्त्वमाभिर्वत्सतरीभिः सह मयोत्सृष्टः, आभिः सहारण्ये स्वच्छन्दविहारार्थं मया परित्यक्तोऽसि, अतो मह्यं धनपुत्रादिकं पूर्णमायुश्च देहीत्याशंसावाक्यार्थः॥ ८४॥

ॐ स्वर्ण घर्म्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्णशुक्रः स्वाहा स्वर्णज्योतिः स्वाहा स्वर्ण सूर्य्यः स्वाहा ॥ ८५ ॥

अस्यां कण्डिकायां पञ्च यजूंष्यग्निदेवत्यानि इह वृषोत्सर्गे वत्सतरीमध्यस्थवृषाभिमन्त्रणे विनियुक्तानि सन्ति । तानि च "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायन्ते मया । तत्र मन्त्रस्थाः सर्वे नकारा इवार्थेऽवगन्तव्याः । अत्र घर्म्मादिरूपेणापि वृष एव स्तूयते । तथाहि-स्वः न स्वरिव "स्वरित्यादित्यनामे"तिनिघण्टुः, "स्वरादित्यो भवति सु अरणः सु ईरणः स्वृतो रसान् स्वृतो भासं ज्योतिषां स्वृतो भासेति वे"ति यास्कः । स्वरिव आदित्य इव घर्म्मः "घर्म्म इत्यहर्नामे"तिनिघण्टुः, अहश्च प्रकाशस्वरूपं तद्रूपोऽयं वृष इति शेषः । स्ववीर्य्यातिशयेन प्रकाशरूपोऽयं वृष इत्यादित्यसाम्येन घर्म्मरूपेण इह वृषस्तुतिरवगन्तव्या । अथवा स्वर्ण स्वः न आदित्य इव वृषोऽयं सुप्रकाश इतिवाक्यशेषः । तथा घर्म्मः "घर्म्म इतियज्ञनामे"तिनिघण्टुः, घर्म्मो यज्ञस्तद्रूपोऽयं वृष इतिवाक्यशेषः । एवं स्वःपदं घर्म्मपदं च पृथगेव व्याख्येयम् । इवार्थो नकार एकोऽपि सन् काकाक्षिन्यायेनोभयत्र संबध्यते, इत्यवगन्तव्यम् । अतो हि "एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेदि"ति स्मृतेर्घर्म्मस्य अर्थादश्वमेधादियज्ञस्य वृषोत्सर्गस्य चानुष्ठानेन स्वर्गप्राप्तिर्भवतीति प्रतीयते । अतो यस्य वृषस्योत्सर्गः क्रियते तस्य घर्म्म ( यज्ञ ) सादृश्यं युक्तमेवेत्यभिप्रायः । अत एव स्मृत्यन्तरेऽपि वृषोत्सर्गस्य फलश्रुतिप्रसङ्गे वचनानि समुपलभ्यन्ते । यथाहि-"उत्सृष्टो वृषभो यस्मिन्पिबत्यम्बुजलाशये । शृङ्गेणोल्लिखते भूमिं यत्र क्वचन दर्प्पितः ॥ पितॄणामन्नपानं वै तत्प्रभृत्युपतिष्ठते । वृषोत्सर्गादृते नान्यत्पुण्यमस्ति महीतले ॥ वृषभस्य तु शब्देन पितरः सपितामहाः । आवर्तमाना दृश्यन्ते स्वर्गलोके न संशयः ॥ जले प्रक्षिप्य लाङ्गूलं तोयं योद्धरते वृषः । दशवर्षसहस्राणि पितरस्तेन तर्प्पिताः । कूले समुद्धृता यावच्छृङ्गे तिष्ठति मृत्तिका ॥ भक्ष्यभोज्यमयैः शैलैः पितरस्तेन तर्प्पिताः ॥" इत्यादिवचनानि वृषोत्सर्गफलम्प्रकृत्य पारस्करगृह्यसूत्रे वृषोत्सर्गप्रकरणे हरिहरभाष्ये द्रष्टव्यानि । वृषोत्सर्गाकरणे हानिरपि श्रूयते । तत्रैव स्मृत्युक्तं वचो यथा-"एकादशेऽह्नि सम्प्राप्ते यस्य नोत्सृज्यते वृषः । प्रेतत्वं हि स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥" इत्यादि । अपि च "पीयूषऽआमिक्षा घृतन्तद्वास्य रेतः"इति श्रुतेर्वृषे रेतोऽतिशयत्वेन घृतस्य सद्भावत्वादिह वृषस्य घर्म्मत्वेन स्तुतिः । पूर्वोक्तस्मृतिवचनैर्वृषोत्सर्गस्य फलश्रुत्युपलाभाद्वा वृषस्य घर्म्मत्वेनेह स्तुतिः । य एवम्भूतो वृषः स स्वाहा पित्रुद्देशेन मयोत्सृष्ट इत्यर्थः । "ओहाक् त्यागे" हानं हा सुष्ठु आहा स्वाहा सुपरित्यागः । स्वाहाशब्दस्यौत्सर्गिकं स्त्रीत्वमव्ययत्वादव्ययादाप्सुप इति सुपो लुक् । एवमग्रेऽपि सर्वत्र बोद्धव्यम् । अर्कः, शुक्रः, ज्योतिः, सूर्य्यः, एते सर्वेऽपि शब्दास्तेजोवाचकास्तद्रूपेण वृषस्तुतिः । शेषश्च स्पष्टार्थः । स्वर्ण घर्म्मः स्वाहेत्युक्तेः पुनर्विशेषणान्तरैस्तदर्थप्रतिपादनमर्थातिशयद्योतनार्थमित्यवगन्तव्यम् , "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः ॥ ८५ ॥

ॐ यूपव्रस्काऽउत ये यूपवाहाश्चषालं येऽअश्वयूपाय तक्षति । ये चार्वते पचनꣳ सम्भरन्त्युतो तेषामभि गूर्तिर्न इन्वतु ॥ ८६ ॥

"पशुमेके कुर्वन्ती"ति पारस्करवचनाद्वृषोत्सर्गे पितृदेवताकपशुपक्षे "ॐ पित्रे त्वा जुष्टं प्रोक्षामी"ति श्रुतेः पितृदेवताकस्य पशोरिह सद्भावात्तत्पशुबन्धनार्थं यूपस्यावश्यकता सम्भवति । अतो यूपनिखननार्थं यूपावटहोमे विनियुक्ता पितृदेवत्या पितृदेवताकपशुदेवत्या वा दीर्घतमोदृष्टा जगती ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया । तथाहि-तेषामृत्विजाम् अभिगूर्त्तिः अभिगोरणं अभिगूर्तिः ("गूरी उद्यमने"इत्यस्मात् क्तिन्प्रत्ययः । ) अभिगूर्त्तिः अभ्युद्यमः अभि सर्वतो भावेन उद्योगः नोऽस्मान् इन्वतु प्रीणातु व्याप्नोत्विति वा अस्माकं समांसकपितृश्राद्धरूपं यज्ञं सम्यक् साधयत्वित्यर्थः । "इवि व्याप्तिप्रीणनयोः"ततो लोटि शपि "इदितो नुम्धातोरि"ति नुमागमः । तेषां केषामित्यपेक्षायामुच्यते । ये ऋत्विजः यूपव्रस्काः यूपाय वृश्चन्ति वृक्षं छिन्दन्ति ते यूपव्रस्काः यूपार्थं वृक्षस्य छेत्तारः सन्तीति शेषः । तेषामृत्विजामित्यर्थः । उत "उतशब्दोऽप्यर्थे"अपि च ये ऋत्विजः यूपवाहाः यूपं वहन्तीति यूपवाहाः ( "कर्म्मण्यण्"इत्यण्प्रत्ययः । ) छिन्नस्य यूपस्य वोढारोऽपि ये ऋत्विजः सन्तीतिशेषः । तेषामृत्विजामित्यर्थः । किञ्च ये च ऋत्विजः अश्वयूपाय अश्वबन्धनयूपार्थं चषालं तक्षति (तक्षतीत्यत्र वचनव्यत्ययः, "तिङां तिङो भवन्ती"ति वचनात् । ) यूपस्याग्रे स्थाप्यं काष्ठं तक्षन्तीत्यर्थः । अश्वपदं यज्ञियपशुमात्रस्योपलक्षकं पाशुककर्म्मणि सर्वत्र यूपस्य सद्भावत्वात् । पाशुककर्म्ममात्रे पशुबन्धनयूपार्थं चषालं यूपस्याग्रे स्थाप्यं काष्ठं तक्षन्तीत्यर्थः "तक्षू तनूकरणे" साधु सम्पादयन्तीत्यभिप्रायः । चषालो यूपकटक इत्यमरः । उत च अपि च ये नराः अर्वते इयर्त्ति गच्छति यूपं प्रति इति अर्वा, तस्मै अर्वते यूपम्प्रति गतवते पशवे पचनं पच्यतेऽनेनेति पचनं पाकसाधनं काष्ठभाण्डादिकं सम्भरन्ति संहरन्ति आनयन्तीत्यर्थः । तेषामृत्विजामभिगूर्तिः समुद्योगः एतत्समांसपितृश्राद्धसम्पादनेनास्मान्प्रीणात्वित्याशंसावाक्यार्थः ॥ ८६ ॥

ॐ व्वेद्या व्वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम् ।
यूपेन यूपऽआप्यते प्रणीतोऽअग्निरग्निना ॥ ८७ ॥

यूपदेवत्यानुष्टुप्प्रजापतिदृष्टा इह वृषोत्सर्गे यूपाभिमन्त्रणे विनियुक्ता ऋगियम्"अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया । वेद्या अत्र वृषोत्सर्गे विद्यमानया पितृश्राद्धार्थं संस्कृतया अनया भूम्या वेदिः पितृयजनसम्बन्धिनी ऐष्टिकी इयं परिष्कृता भूमिः समाप्यते सम्यक् प्राप्यते इत्यर्थः । तथा बर्हिषा अत्रत्येन बर्हिः "कौशं बर्हिरि"तिकात्यायनोक्तेः कुशमयमैष्टिकवेद्यामासादितं समाप्यते, इत्यनुषङ्गः, सम्यक् प्राप्यते इत्यर्थः । तथा इन्द्रियं वीर्य्यञ्च इन्द्रियेणेतिशेषः, समाप्यते इत्यनुषङ्गः । सम्यक् प्राप्यते इत्यर्थः । तथा यूपेन अत्रत्येन यूपः ऐष्टिकश्च आप्यते प्राप्यते इत्यर्थः । तथा अग्निना अत्रत्येन प्रणीतोऽग्निः ऐष्टिकोऽग्निः आप्यते इत्यनुषङ्गः, प्राप्यते इत्यर्थः । सर्वथेदं पैत्रिकं ममैष्टिकं कर्म्म सुसम्पन्नं भवत्वित्याशास्यते मयेत्याशंसावाक्यार्थः ॥ ८७ ॥

एते च वृषोत्सर्गसम्बन्धिमन्त्रा ग्रन्थेऽस्मिन्मया व्याख्याताः । अतः परञ्च सपिण्डीकरणमन्त्रौ व्याख्यास्येते । तथाहि—

ॐ ये समानाः समनसः पितरो यमराज्ये ।
तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥ १ ॥ [८८]

पितृदेवत्यानुष्टुप् प्रजापतिदृष्टा इह सपिण्डीकरणश्राद्धे प्रेतपिण्डच्छेदने पितामहादिपिण्डैः सह प्रेतपिण्डस्य सम्मेलने च विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया । तथाहि–पितरः खलु यमाधिकारे वर्त्तन्ते । अत एव "धर्म्मराजः पितृपतिः"इत्यभिधानकारेणाप्युक्तम् । तदभिप्रायेणैवमुच्यते । यमराज्ये यमस्य राज्यं यमराज्यं तस्मिन् यमराज्ये यमराजधान्यां यमलोके इतियावत्, समानाः जातिरूपादिभिस्तुल्याः सपिण्डनेनैव समानलोकं गताः, अत एव समनसः समानं मनो येषां ते समनसः ("समानस्य छन्दसी"ति समानस्य सादेशः ।) तुल्यमनस्काः श्राद्धकारिणां पुत्रादीनां कृते अभीष्टाशीःप्रदाने परस्परानुकूलचित्ताः एवम्भूता ये पितरः प्रेतस्य पित्रादयः (श्राद्धकर्तुर्मम पितामहादय इति यावत्) पितृलोके वर्त्तन्ते इति शेषः । तेषां पितॄणां लोकः स्थानमस्मै प्रेतायास्त्विति शेषः, अनेन पिण्डसम्मेलनेन सपिण्डीकरणकर्म्मणा अस्य प्रेतस्य पितृलोकप्राप्तिः शर्म्मवर्म्मादिभाक्त्वञ्च भवत्वित्यभिप्रायः, "सपिण्डीकरणादर्वाक् प्रेतः प्रेत इति स्मृतः । सपिण्डीकरणादूर्ध्वं शर्म्मवर्म्मादिभाग्भवेदि"ति पुराणस्मृतिवचनात् । सपिण्डीकरणेन शर्म्मवर्म्मादिभाक्त्वे सति प्रेतस्य पार्वणश्राद्धार्हत्वं सम्पत्स्यते, तदभिप्रायेणैवमाशास्यते श्राद्धकर्त्रा, स्वपितुः पार्वणश्राद्धार्हत्वसम्पादनायेत्याशयः । किञ्च "स्वधाकारं पितरः"इतिश्रुतेः स्वधा नमः ("नम इत्यन्ननामे"तिनिघण्टुः,) स्वधाकारेण मद्दत्तं श्राद्धीयान्नं "स्वधा वै पितॄणामन्नमि"तिश्रुतेः स्वधासंज्ञकं वा नमोऽन्नं स्वधयोपलक्षितं मद्दत्तं श्राद्धीयान्नं नमः नमस्कारश्चेति वा पितृषु कल्पताम् (अत्राशंसार्थे लोट्) प्रेतस्य सपिण्डीकरणकर्म्मणा पितृभिः सह समानत्वप्राप्तौ प्रेतसहितान् तान्पितॄँस्तर्प्पयितुं पर्य्याप्तं भवत्वित्यभिप्रायः । तथा यज्ञश्च देवेषु कल्पतां वैश्वदेवश्राद्धीयान्नरूपो यज्ञः (इह कारणे कार्य्योपचारः) तदन्नमित्यर्थः, विश्वान्देवाँस्तर्प्पयितुं पर्य्याप्तं भवत्वित्यभिप्रायः ॥ १ ॥ [ ८८ ]

ॐ ये स॒मा॒नाः सम॑नसो जी॒वा जी॒वेषु॒ माम॒काः ।
तेषा॒ᳫं श्रीर्म्मयि॑ कल्पताम॒स्मिँल्लो॒के श॒तᳫं समाः॑ ॥ २ ॥

पितृदेवत्या यजनाशीः श्रीदेवत्या चानुष्टुप्प्रजापतिदृष्टा इह सपिण्डीकरणश्राद्धे प्रेतपिण्डच्छेदने पितामहादिपिण्डैः सह प्रेतपिण्डस्य सम्मेलने च विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया । तथाहि–समानाः जातिरूपादिभिस्तुल्याः सपिण्डनेनैव समानलोकं गताः पितृसमतां प्राप्ताः, अत एव समनसः समानचित्ताः श्राद्धकारिणां पुत्रादीनां कृते अभीष्टाशीः प्रदाने परस्परानुकूल्यहृदयाः जीवेषु जीवन्तीति जीवाः प्राणिनः सूक्ष्मशरीराधिष्ठानेन शुभाशुभकर्म्मफलभोक्तारस्तेषु वर्त्तमानाः जीवाः सूक्ष्मशरीरावच्छिन्नकर्म्मभोक्तारो मामकाः मम इमे मामकाः ("तवकममकावेकवचने" इत्यस्मदो ममकादेशः ।) मामकीनाः मदीया इति यावत् ये पितरः सन्तीतिशेषः । तेषां पितॄणां प्रसादेन अस्मिँल्लोके इहैव जन्मनि शतं समाः शतं वर्षाणि शतवर्षपर्य्यन्तमिति यावत्, श्रीर्लक्ष्मीर्मयि कल्पतां मयि क्लृप्ता भवत्वित्यर्थः । अनेन सपिण्डीकरणकर्म्मणा पितृप्रसादेन च अस्मिन्नेव जन्मनि शतवर्षपर्य्यन्तं मयि लक्ष्मीर्निवसत्वित्याशंसावाक्यार्थः । अस्या ऋचोऽर्थान्तरं वा । तद्यथा–जीवन्तीति जीवाः प्राणिनस्तेषु जीवेषु प्राणिषु मध्ये समानाः जाति-

धनविद्यादिभिस्तुल्याः समनसः समनस्काः मामका मदीया ये जीवाः प्राणिनः सपिण्डा इति यावत्, अस्मिन् लोके भूलोके 'वर्त्तन्ते' इति शेषः। तेषां मामकानां जीवानामर्थान्मम सपिण्डानां सम्बन्धिनी श्रीर्लक्ष्मीः शतं समाः शतं वर्षाणीति यावत्, अर्थात् शतवर्षपर्य्यन्तं मयि कल्पतां ताँस्त्यक्त्वा मयि क्लृप्ता भवत्वित्यर्थः। गोत्रिणो हि सपिण्डाः पापात्मानः सहजशत्रवो भवन्ति। अतस्तेषां धनराहित्यार्थमेवमुच्यते। मदीयसपिण्डा दरिद्रा भवन्तु वयं तदीयैश्वर्य्येण धनिनः सुखिनश्च भूयास्मेत्याशंसावाक्यार्थः॥ २॥ [ ८९ ]॥

सपिण्डीकरणश्राद्धे विशिष्टावेव द्वौ मन्त्राविह व्याख्यातौ मया। अवशिष्टाश्च सपिण्डनमन्त्राः पार्वणश्राद्धे व्याख्यातास्तेषां व्याख्या तत्रैव द्रष्टव्या॥ अतः परञ्च वृद्धिश्राद्धमन्त्रादिवैशिष्ट्यं प्रदर्श्यते। तत्र यद्यपि तिलस्थाने सर्वत्र "यवोऽसी"ति यवो देय इत्येके, "तिलोऽसि सोमदेवत्यः" इत्यमुमेव मन्त्रं विपर्यस्य "यवोऽसि पितृदेवत्यः" इत्यनेनैव तिलस्थाने सर्वत्र यवो देय इत्यपरे समामनन्ति। तथापि "यवोऽसी"त्यनेनैव यवः प्रक्षिप्यते, न तु "यवोऽसि पितृदेवत्यः" इत्यनेन। स चायं मन्त्रो यथा—

ॐ यवोऽसि युवयास्मद्द्वेषो युवयारातीः॥ १॥ [ ९० ]॥

पार्वणश्राद्धप्रकरणे व्याख्यातोऽयं मन्त्रस्तत्रास्य व्याख्या द्रष्टव्या॥ १॥ [ ९० ]॥

वृद्धिश्राद्धे सर्वत्र स्वधास्थाने "पुष्ट्यान् ( पुष्ट्या ) नान्दीमुखान्प्रीणाहि नः स्वाहा" इत्येवं वाक्योहो भवति। पुष्ट्यान् ( पुष्ट्या ) नान्दीमुखान्पितॄन्प्रीणयेत्यपि पाठः क्वचिद् दृश्यते। तत्र यथासम्प्रदायं यथारुचि वाक्ययोजनानुसन्धेया। सर्वस्मिन्नपि पक्षे वाक्यार्थः स्पष्ट एव। अन्यत्सर्वमपि पार्वणवदवगन्तव्यम्।

॥ इति श्राद्धीयमन्त्रव्याख्या॥

---

## ॥ अथ श्राद्धीयसूक्तमन्त्रव्याख्या॥

॥ तत्र रक्षोघ्नं श्राद्धसूक्तम्॥

॥ तद्यथा॥

ॐ कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ२॥ऽइभेन।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः॥ १॥

तत्रादौ कृणुष्व पाज इति पञ्चर्चं रक्षोघ्नसूक्तमस्ति। तत्र वामदेवदृष्टा रक्षोघ्नाः प्रतिसरा अग्निदेवत्याः पञ्च त्रिष्टुभः "जपेद्व्याहृतिपूर्वाङ्गायत्रीं सप्रणवां सकृत्त्रिर्वा रक्षोघ्नी"रित्यादिकात्यायनोक्तेः श्राद्धमात्रेऽन्नोत्सर्गानन्तरजपे विनियुक्ताः सन्ति। तत्र प्रथमेयमृक् "अतिरिक्तमि"तिकारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तत्र पाठक्रमादर्थक्रमो

बलीयानितिन्यायादिहार्थक्रमापेक्षयैव व्याख्यानुसन्धेया। तथाहि—हे अग्ने, द्रूणानः ("द्रूञ् हिंसायां" क्र्यादिस्ततः शानच्।) द्रूणीतेऽसाविति द्रूणानः हिंसमानस्त्वं यतः स्वभावत एव अस्तासि क्षेप्तासि शत्रूणामितिशेषः। अतस्त्वामेवं ब्रवीमीतिवाक्यशेषः। किं ब्रवीमीत्यपेक्षायामुच्यते। हे अग्ने, त्वं पाजः ("पाज इति बलनामे"तिनिघण्टुः, ) बलं कृणुष्व (करोतेस्तनादित्वात्कुरुष्वेति प्राप्ते "व्यत्ययो बहुलमि"तिपाणिन्युक्तेर्विकरणव्यत्ययेन कृणुष्वेति प्रयोगोऽवगन्तव्यः) कुरुष्व स्वीयं बलं विस्तारयेत्याशयः। तत्र दृष्टान्तः प्रदर्श्यते। पृथ्वीं पृथिवीं विस्तृतां प्रसितिं न (नकार इवार्थे) प्रसितिमिव जालमिवेत्यर्थः, "प्रसितिः प्रसयनात्तन्तुर्वा जालं वेतियास्कोक्तेः। "षिञ् बन्धने" प्रकर्षेण सीयन्ते बध्यन्ते पक्षिणो यया सा प्रसितिस्तामिवेति भावः। यथा कश्चित्पक्षिग्रहणाय विशालां प्रसितिं जालं प्रसारयति तथा त्वमपि शत्रुग्रहणाय विशालं बलं विस्तारयेत्यभिप्रायः। किञ्च हे अग्ने, अमवान् "अम गतौ भजने शब्दे च" अमन्ति भजन्ति स्वामिनमित्यमाः सेवकास्तेऽस्य सन्तीति अमवान् (पचादित्वादच्प्रत्यये अमशब्दो निष्पन्नस्तस्माच्च मतुप्प्रत्ययः।) अमवान् अमात्यवान् सहायवान् मन्त्रिवर्गोपेतः राजा इव नृप इव इभेन गजेन याहि। यथा कश्चिद्राजा मन्त्रियुक्तः सन् हस्त्यादिबलेन सह शत्रून्प्रति गच्छति तथा त्वमपि शत्रून्प्रति गच्छेत्याशयः। गत्वा च हे अग्ने, तृष्वीं प्रसितिं ("सुपां सुपो भवन्ती"तिवचनादुभयत्र विभक्तिव्यत्ययेन तृतीयार्थे द्वितीया "तृष्वीतिक्षिप्रनामे"तिनिघण्टुः, स्त्रीत्वञ्च प्रसित्यपेक्षया, ततोऽयमर्थः।) तृष्व्या क्षिप्रया प्रसित्या जालेन शत्रून् बध्वा अनु पश्चात् तपिष्ठैः तपन्ति सन्तापयन्तीति तप्तॄणि ततोऽतिशयार्थे इष्ठन्प्रत्ययः, अतिशयेन तप्तॄणि तपिष्ठानि तैस्तपिष्ठैः तापकतमैरायुधैर्ज्वालारूपैरस्त्रैः ("तुरिष्ठेमेयःसु"इतीष्ठनि परे तृचो लोपः।) रक्षसः राक्षसान् विध्य ताडय मारयेत्यर्थः। 'अग्निर्वै रक्षसामपहन्ते"तिश्रुतेस्तव रक्षोहन्तृत्वादितिभावः। ("व्यध ताडने" दिवादित्वाच्छ्यन्, ग्रहादित्वात्सम्प्रसारणञ्च।) देवपितृकर्म्मविघातकान् देवपितृभागं हविः कामयमानानसुरान् जालेन बध्वा पश्चाज्ज्वालाभिर्दग्धा मद्दत्तं पित्र्यं हविर्मत्पितृसमीपं नयेत्याशंसावाक्यार्थः॥ १॥

ओ३म् तव॑ भ्र॒मास॑ऽआशु॒या प॑त॒न्त्यनु॑स्पृश धृष॒ता शोशु॑चानः।
तपू॑ᳪंष्यग्ने जु॒ह्वा॑ पत॒ङ्गानस॑न्दितो॒ व्विसृ॑ज॒ व्विष्व॑गु॒ल्काः॥ २॥

हे अग्ने, आशुया आशवः शीघ्रगामिनः (आशुशब्दात्परस्य जसः "सुपां सुलुक्०" इत्यादिना यादेशः।) एवम्भूतास्तव सम्बन्धिनो ये भ्रमासः भ्रमन्तीति भ्रमाः भ्रमा एव भ्रमासः (आज्जसेरसुगित्यसुगागमः।) भ्रमासः भ्रमाः भ्रमन्तश्चतुर्दिक्षु सञ्चरन्तो वातोद्धूताः ज्वालासमूहाः पतन्ति इतस्ततो गच्छन्ति तैः भ्रमैर्ज्वालासमूहैः तपूंषि तपन्ति सन्तापयन्तीति तपूंषि तापयितॄणि रक्षांसि पतङ्गान् पतन्तः सन्तो गच्छन्तीति पतङ्गाः पिशाचास्ताँश्चानुस्पृश ज्वालाभिस्तान्निर्दहेत्यर्थः। किञ्च हे अग्ने, ईदृशस्त्वं विष्वक् सर्वत्र तिर्यगूर्ध्वमधश्च उल्काः ज्वालाः विसृज रक्षोविनाशाय मुञ्चेत्यर्थः ("उल्का स्यान्निर्गतज्वाले"त्यमरः।) कीदृशस्त्वमित्यपेक्षायामुच्यते। धृषता शोशुचानः "ञिधृषा प्रागल्भ्ये" (स्वा. प.) धृष्णोतीति धृषन् तेन धृषता प्रगल्भेन धृष्टेन ज्वालासमूहेन शोशुचानः ("शुच

दीप्तौ" इत्यस्माद्यङन्ताच्छानच्प्रत्ययः।) अत्यन्तं शोचते इति शोशुच्यते शोशुच्यते इति शोशुचानः देदीप्यमानः। पुनः कीदृशस्त्वं जुह्वा स्रुचा हूयमान इतिशेषः। तथा असन्दितः अखण्डित इत्यर्थः। यस्त्वमीदृशः स त्वं रक्षोघाताय सर्वतो ज्वाला मुञ्चेत्याशयः॥ २॥

प्रति॒स्पशो॒ वि सृ॑ज॒ तूर्णि॑तमो॒ भवा॑ पा॒युर्वि॒शोऽअ॒स्याऽअद॑ब्धः।
यो नो॑ दू॒रेऽअ॒घश॑ꣳसो॒ योऽअन्त्य॑ग्ने॒ मा कि॑ष्टे॒ व्यथि॒राद॑धर्षीत्॥ ३॥

हे अग्ने, नोऽस्माकम् अघशंसः अघं पापं शंसतीच्छतीत्यघशंसः योऽस्मद्द्रोही दूरे वसतीतिशेषः। तथा यश्चास्माकम् अघशंसः अस्मद्द्रोही अन्ति "अन्तीत्यन्तिकनामे"-तिनिघण्टुः, अन्तिके समीपे वसतीतिशेषः। तमुभयात्मकं शत्रुं प्रतिस्पशो विसृज "स्पश बन्धने" स्पशयन्ति बध्नन्तीति स्पशस्तान् स्पशो बन्धनकारकान् स्वीयसेनाध्यक्षा-न्विसृज प्रेरयेत्यर्थः। किञ्च हे अग्ने, त्वं तूर्णितमो भवा ("द्व्यचोऽतस्तिङः" इति मन्त्रे दीर्घः।) अत्र "सत्वरं चपलं तूर्णमविलम्बितमाशु चे"त्यभिधानदर्शनात्तूर्णं सत्वरमस्या-स्तीति तूर्णी अत्यन्तं तूर्णीति तूर्णितमः, अतिशयेन तूर्णीति तूर्णितम इति वा विग्रहः। तूर्णि-तमोऽत्यन्तं क्षिप्रशालीत्यर्थः। तथा त्वं भवेत्याशयः। तथा अदब्धः अनुपहिंसितः केनापि राक्षसादिना न खण्डितः, एवम्भूतस्त्वम् अस्याः अस्मदीयाः विशः प्रजायाः पायुर्भवेत्यनु-षङ्गः। पातीति पायुः पालको भवेत्यर्थः। किञ्च हे अग्ने, एवमनुग्रहे प्रवृत्तस्य ते तव मा किः मा कश्चित् व्यथिः व्यथयतीती व्यथिः व्यथकः शत्रुः आदधर्षीत् अत्र 'ईषदर्थे आङ्' ईषदपि मा दधर्षीदित्यर्थः। क्रियायोगे वा यथास्थितं व्याख्येयम्। धाष्टर्यं मा करोत्वित्यर्थः। (आङ्पूर्वात् धृषधातोर्लोडर्थे लुङि द्वित्वमडभावश्च छान्दसः। "दूरस्थसमीपस्थोभय-विधमस्मच्छत्रुं प्रति त्वरतो बन्धकान्प्रेरयेत्यर्थः। तथा केनापि न हिंसितः सन् अस्मत्प्र-जायाः पालकश्च भव। एवमुपकारप्रवृत्तं त्वां कश्चिदसुरादिर्धर्षितुं समर्थो मा भूयादित्या-शंसावाक्यार्थः॥ ३॥

उद॑ग्ने तिष्ठ॒ प्रत्यात॑नुष्व॒ न्य॒मित्राँ॑ २॥ऽ ओषतात्तिग्महेते।
यो नो॒ऽअरा॑तिꣳ समिधान च॒क्रे नी॒चा तं ध॑क्ष्यत॒सं न॑ शुष्क॑म्॥ ४॥

हे अग्ने, त्वमुत्तिष्ठ उत्थितो भव। ततः प्रत्यातनुष्व ज्वाला इति शेषः। ज्वालासमू-हान्विस्तारयेत्यर्थः। किञ्च हे तिग्महेते, "तिग्मं तीक्ष्णमि"त्यभिधानात् तिग्मास्तीक्ष्णा हेतयः आयुधाख्याः ज्वालारूपाः अस्त्रविशेषाः यस्य स तथोक्तस्तत्सम्बुद्धौ हे तिग्महेते, तीक्ष्णायुध, "तिग्मं तेजतेरुत्साहकर्म्मणः" इति यास्कोक्तेः तिग्माः सोत्साहा हेतय आयु-धानि यस्य स तिग्महेतिस्तत्सम्बुद्धौ हे तिग्महेते, उत्साहवदायुध, इति वा हे एतादृश, अग्ने, त्वम् अमित्रान् शत्रून् न्योषतात् नितरां दह भस्मीकुर्वित्यर्थः। "उष दाहे" "तुह्योस्तातङा०" इति लोण्मध्यमपुरुषैकवचने तातङादेशः। किञ्च हे समिधान, समिन्धे सन्दीप्यतेऽसौ इति समिधानस्तत्सम्बुद्धौ हे समिधान, सम्यग्दीप्यमान, हे अग्ने, नोऽस्माकं योऽरातिं चक्रे ("छन्दसि लुङ्लङ्लिटः" इति पाणिनिवचनादिह लडर्थे लिट्।) रातिर्दानार्थः न

रातिः अरातिः अदानं चक्रे करोति दानं प्रतिषेधयतीत्यर्थः । तं दानप्रतिषेधकं शत्रुं नीचा नीचैः कृत्वा धक्षि निर्दह भस्मीकुर्वित्यर्थः । "दह भस्मीकरणे" "बहुलं छन्दसी"ति शपि लुप्ते लोडर्थे लटि मध्यमपुरुषैकवचने धक्षीति रूपम् । शत्रोर्भस्मीकरणे दृष्टान्त उच्यते । शुष्कम् अतसं न न इवार्थे अतसमिव शुष्कम् अतसीवृक्षमिव अदातारं निर्दह । यथा पुनर्दानं न प्रतिषेधयेत्तथा भस्मीकुर्वित्यर्थः ॥ ४ ॥

ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ॥ ५ ॥

हे अग्ने, त्वमूर्ध्वो भव ऊर्ध्वस्थितो भव । ऊर्ध्वं स्थित्वापि अस्मदधि अस्माकमुपरि स्थितान् शत्रून् प्रतिविध्य प्रत्येकं ताडयेत्यर्थः । किञ्च हे अग्ने, दैव्यानि देवसम्बन्धीनि कर्म्माणि आविष्कृणुष्व आविष्कुरु प्रकाशीकुर्वित्यर्थः । किञ्च हे अग्ने, दैव्यानि देवसम्बन्धीनि कर्म्माणि आविष्कृणुष्व आविष्कुरु प्रकाशीकुर्वित्यर्थः । किञ्च हे अग्ने, त्वं यातुजूनां यातुधानानां स्थिरा स्थिराणि अर्थात् धनूंषि अवतनुहि अवतारय ( अवेत्ययमुपसर्गस्तनुहीतिक्रियापदेन सह सम्बध्यते, "व्यवहिताश्चे"ति पाणिनिवचनात् । ) किञ्च हे अग्ने, जामिं पुनरुक्तं तथा अजामिम् अपुनरुक्तं च कृत्वा शत्रून् प्रमृणीहि ( मृणातिर्हिंसार्थः । ) अस्मच्छत्रून्मारयेत्यर्थः । स्थिरेति "शेश्छन्दसि बहुलमि"ति शेर्लोपे पूर्वोक्तसाधनप्रणाल्या द्वितीयाबहुवचने रूपं बोध्यम् ॥ ५ ॥ एतच्च श्राद्धीयरक्षोघ्नसूक्तं व्याख्यातं मया । अतः परं श्राद्धीयपितृसूक्तं व्याख्यास्यते । तत्र मन्त्राङ्कसङ्ख्या सर्वापेक्षयावगन्तव्या । तथाहि—

ॐ उदीरता० ॥ ६ ॥ ॐ अङ्गिरसो नः ॥ ७ ॥

एतन्मन्त्रद्वयं तर्प्पणप्रकरणे व्याख्यातं तत्रास्य मन्त्रद्वयस्य व्याख्या द्रष्टव्या ॥ ६ ॥ ७ ॥

ॐ ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः ।
तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ ८ ॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् "जपेद्व्याहृति० पित्र्यमन्त्रानि"ति कात्यायनोक्तेः श्राद्धमात्रेऽन्नोत्सर्गानन्तरजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया । तथाहि—सोम्या एव सोम्यासः ( "आज्जसेरसुगि"त्यसुगागमः । ) सोमसम्पादिनः वसिष्ठाः वसिष्ठस्य गोत्रापत्यानि पुमांसो वासिष्ठा इति प्राप्ते छान्दसो ह्रस्वः, वसिष्ठाः वसिष्ठस्य गोत्रापत्यभूताः पूर्वे पूर्वकालीनाः नोऽस्माकं ये पितरः सोमपीथं सोमपानम् अनूहिरे अनुवहन्ति स्म देवान्प्रति सोमं प्रापितवन्त इत्यर्थः । "वह प्रापणे" (भ्वा० प० ) ततः "सुप्तिङुपग्रहे"तिकारिकया व्यत्ययेनात्मनेपदम् । तत्र लिटि प्रथमपुरुषबहुवचने 'ऊहिरे' इति रूपम् । तेभिः पूर्वकालीनैः वसिष्ठगोत्रापत्यभूतैः उशद्भिः उशन्ति ते उशन्तस्तैः उशद्भिः कामयमानैः हवींषि इच्छद्भिः एवम्भूतैः पितृभिः संरराणः ( "रा दाने" ततः शानच्प्रत्ययः । उपसर्गवशादिह "प्रीङ् प्रीतौ" इत्यस्यार्थे बोद्धव्योऽयं धातुः । सम्यक् प्रीय-

माण इत्यर्थः, उशन् ( "वश कान्तौ" कान्तिरिच्छा, वशधातोः शतृप्रत्यये रूपम्। ) वष्टि कामयते अर्थात् हवींषि इति उशन् हवींषि कामयमानो यमः प्रतिकामं यथाकामं यथेच्छं हवींषि अत्तु भक्षयतु, भक्षयित्वा च हविर्भक्षणे पितॄनप्यनुज्ञाप्य श्राद्धफलत्वेनास्मभ्यमपि सुखं ददात्वित्याशंसावाक्यार्थः ॥ ८ ॥

त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनुनेषि पन्थाम्।
तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ ९ ॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् श्राद्धमात्रेऽन्नोत्सर्गानन्तरजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि—हे सोम, प्रचिकितः "कित ज्ञाने" प्रकर्षेण चिकितः प्रचिकितः प्रकृष्टज्ञानवान् प्रकृष्टचेतनावानिति· यावत्, एतादृशस्त्वं मनीषा ( "सुपां सुलुक्०—" इत्यादिना पाणिनीयसूत्रेण तृतीयैकवचने पूर्वसवर्णदीर्घोऽनुसन्धेयः। मनीषया बुद्ध्या रजिष्ठम् अत्यन्तमृजुः रजिष्ठस्तं रजिष्ठम् ऋजुतमं देवयानं पन्थां पन्थानं देवयानमार्गम् अनुनेषि अनुनयसि अनुप्रापयसीत्यर्थः। किञ्च हे इन्दो, सोम, धीराः धियो बुद्धयः सन्त्येषामिति धीराः ( अस्त्यर्थे रप्रत्ययः। ) धीमन्तो यज्ञज्ञानवन्तो नोऽस्माकं पितरः तव प्रणीती ( पूर्ववदिहापि तृतीयैकवचने पूर्वसवर्णदीर्घत्वे एवं रूपम्। ) प्रणीत्या प्रणयनेन अभ्यनुज्ञातेनेतियावत्, देवेषु रत्नमभजन्त देवविषये रमणीयं यज्ञफलं सिषेविरे "सोमेन यजेत स्वर्गकामः" इतिश्रुतेः सोमयागेनैव स्वर्गप्राप्त्यवगमादित्याशयः। रजिष्ठमित्यत्र "अतिशायने तमबिष्ठनावि"तिपाणिनीयसूत्रेण ऋजुशब्दादतिशयार्थे इष्ठन्प्रत्ययः, "विभाषर्जोश्छन्दसी"ति ऋकारस्य रकारादेशश्च बोध्यः। पन्थानमिति प्राप्ते "अयस्मयादीनि च्छन्दसी"ति सर्वनामस्थानेऽपि पदसंज्ञायां "नलोपः प्रातिपदिकान्तस्ये"ति नलोपे सवर्णदीर्घे पन्थामिति रूपम्। अनुनेषीति अनुपूर्वान्नयतेः शपि लुप्ते धातोर्गुणे लटि मध्यमपुरुषैकवचने रूपम् ॥ ९ ॥

त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः।
वन्वन्नवातः परिधीँ२॥रपोर्णु वीरेभिरश्वैर्मघवा भवानः ॥१०॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् श्राद्धमात्रेऽन्नोत्सर्गानन्तरजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि—हे पवमान, शोधक, हे सोम, धीराः धीमन्तः यज्ञियकर्मज्ञानवन्तः पूर्वे पूर्वकालीनाः पूर्वजाः नोऽस्माकं पितरः हि यतः यस्मात् कारणात् त्वया कृत्वा कर्म्माणि चक्रुः सोमयज्ञं कृतवन्तः। 'अतस्त्वामहं प्रार्थये' इति शेषः। तदिदमभ्यर्थनं स्पष्टीक्रियते। तद्यथा—हे सोम, अवातः नास्ति वातो यस्य सोऽवातः, वात इत्युपद्रवमात्रस्योपलक्षणं तेन अवातः वातादिसर्वोपद्रवरहितस्त्वं वन्वन् वनुते सम्भजते इति वन्वन् अस्मत्कर्म्माणि सम्भजमानः सन् परिधीन् अपोर्णु परिदधति सर्वत उपद्रवाय तिष्ठन्तीति परिधयस्तान् परिधीन् यज्ञोपद्रवकारिणः अपोर्णु अपगमय दूरीकुर्वित्यर्थः। 'ऊर्णु' इति "ऊर्णुञ् आच्छादने"इत्यस्माल्लोटि मध्यमपुरुषैकवचने रूपम्। ततश्च अपेत्युपसर्गस्य 'ऊर्णु'इति क्रियापदेन सह सन्धौ "आद्गुणः"

इति गुणे 'अपोर्णु' इत्येवं भवति। तथा 'परिधीन् अपोर्णु'इत्यवस्थायां "दीर्घादटि समानपादे"इति नकारस्य रुत्वे "अत्रानुनासिकः पूर्वस्य तु वा"इति पूर्वस्यानुनासिकत्वे संहितायामीकारस्य सार्धद्विमात्रिकत्वे सति "परिधीँ३॥रपोर्णु"इत्थं भवति। किञ्च हे सोम, त्वं वीरेभिः वीरैः "पुत्रो वै वीरः" इतिश्रुतेरिह वीरशब्दः पुत्रवाचकः, वीरैः पुत्रैः, तथा अश्वैश्च सहितः सन् नोऽस्माकं कृते मघवा भवा मघवा भव "मघ इतिधननामे"ति निघण्टुः, मघं धनमस्यास्तीति मघवा धनवान् भव। यो यस्मै मघं धनं ददाति स एव तस्य कृते मघवा धनवान् भवतीति लोकप्रसिद्धिः। अतोऽत्रैवमुक्तमिति भावः। वीरेभिरित्यत्र "अतो भिस ऐस्"इति भिस ऐस् न भवति "बहुलं छन्दसी"ति सर्वविधीनां छन्दसि वैकल्पिकत्वात्, किन्तु "बहुवचने झल्येदि"ति वीरशब्दघटकस्याकारस्य एत्वन्तु भवत्येव। "भवा" इत्यत्र "द्व्यचोऽतस्तिङः"इतिपाणिनीयसूत्रेण संहितायां दीर्घः॥ १०॥

त्वꣳ सोम पितृभिः संविदानोऽनु द्यावापृथिवीऽआततन्थ।
तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम्॥ ११॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् श्राद्धमात्रेऽग्न्युत्सर्गानन्तरजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि–हे सोम, यतस्त्वं पितृभिः संविदानः संवित्ते इति संविदानः पितृभिः सह संवादं कुर्वाणः सन् द्यावापृथिवी द्यावापृथिव्यौ अन्वाततन्थ विस्तारितवानित्यर्थः। द्यावापृथिव्यन्तर्गतसर्वभोग्यपदार्थजातं स्वीयसौम्यरसेन आविर्भावितवानित्याशयः, "सदेव सोम्येदमग्रऽआसीदेकमेवाद्वितीयमिति, सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति, तस्मिन्यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तन्ते यथैतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवती"त्यादिच्छान्दोग्यश्रुतेः। अत एव हे इन्दो, सोम, तस्मै ते तुभ्यं वयं हविषा विधेम हविर्दद्मः। (हविषेत्यत्र विभक्तिव्यत्ययेन द्वितीयार्थे तृतीया, "सुपां सुपो भवन्ती"ति वचनात्। विदधतिश्च दानार्थः, "डुधाञ् विधारणे पुष्टौ दाने चापि निगद्यते।" इतिकल्पद्रुमोक्तेः। किञ्च हे सोम, हविर्दानेन च वयं रयीणां धनानां पतयः स्याम भवेम त्वत्प्रसादादितिशेषः। तथाऽस्मान्कुर्वित्याशंसावाक्यार्थः। आङ्पूर्वात् "तनु विस्तारे" इत्यस्माल्लिटि मध्यमपुरुषैकवचने "बभूथाततन्थे"त्यादिना इडभावनिपातनात् "आततन्थे"ति रूपम्। सम्पूर्वस्य "विद ज्ञाने" इत्यस्य "समो गम्यृच्छिभ्यामि"त्यात्मनेपदत्वात्ततः शानचि संविदान इति प्रथमैकवचने रूपम्॥ ११॥

सोमवतां पितॄणां षडृचोऽनुवाकः समाप्तः।

अतः परं बर्हिषदां पितॄणां तृचोऽनुवाको यथा—

ॐ बर्हिषदः पितरऽऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम्।
तऽआगतावसा शन्तमेनाथा नः शंय्योररपो दधात॥ १२॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् श्राद्धमात्रेऽन्नोत्सर्गानन्तरजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तत्र "कौशं बर्हिरि"तिकात्यायनोक्तेः कौशं कुशमयं यद्बर्हिस्तत्र सीदन्तीति बर्हिषदस्तत्सम्बुद्धौ हे 'बर्हिषदः' इति । पृषोदरादित्वादन्त्यलोपो बोध्यः । तथा यत्तदोर्नित्यसम्बन्धत्वादुत्तरार्धे तच्छब्दश्रवणात्पूर्वार्धे यच्छब्दोऽध्याहर्त्तव्यः। तथाहि—हे बर्हिषदः, कुशोपर्युपवेष्टारः, पितरः, यतो वयं येभ्यो वः युष्मभ्यम् इमा इमानि हव्या हव्यानि चकृमा (करोतेर्लिट् , संहितायां छान्दसो दीर्घः) चकृम युष्मदर्थं हवींषि कृतवन्त इत्यर्थः । ते यूयम् ऊती ( "सुपां सुलुगि"त्यादिना तृतीयैकवचने पूर्वसवर्णदीर्घोऽनुसन्धेयः ) ऊती ऊत्या अवने निमित्तेन अर्वाक् आगत अर्वाञ्चं यथा स्यात्तथा आगच्छेत्यर्थः । ( अर्वागित्यत्र "सुपां सुलुगि"ति द्वितीयाविभक्तेर्लुक् ) आगत्य च मत्कृतानि तानि हव्यानि यूयं जुषध्वं सेवध्वं स्वीकुरुतेत्यर्थः । अथा ( "निपातस्य चे"ति संहितायां दीर्घः ) अथा अथ हविःसेवनानन्तरं शन्तमेन सुखयितृतमेन अवसा "अव इत्यन्ननामे"ति निघण्टुः, अवसा अन्नेन अस्मद्दत्तेन श्राद्धीयेनानेन अन्नेन तर्पिताः सन्तो यूयं नोऽस्माकं शँय्योः ( अत्र कर्मणि षष्ठी बोद्धव्या । ) शं सुखं रोगशमनं वा यु यावनं भयपृथक्करणञ्च कुरुतेतिशेषः । "शँय्योः" "शमनं च रोगाणां यावनं च भयानामि"तियास्कोक्तेः । किञ्च हे पितरः, अरपः "रपोरिप्रमितिपापनामनी भवत इति यास्कमुनिवचनात् रपः पापं, न रपः अरपः अपापं पापाभावात्कल्याणमित्यर्थः, दधात धत्त अस्मास्वितिशेषः । "तप्तनप्तनथनाश्चे"तितबादेशात् "श्नाभ्यस्तयोरातः" इति आलोपाभावे दधातेर्लोटि मध्यमपुरुषबहुवचने दधातेति रूपम् ॥ १२ ॥

आहं पितॄन्त्सुविदत्राँ२॥ऽअवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्तऽइहागमिष्ठाः ॥ १३ ॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् श्राद्धमात्रेऽन्नोत्सर्गानन्तरजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि–अहं सुविदत्रान् सु सुष्ठु, वि विशेषेण च ददातीति सुविदत्रास्तान् सुविदत्रान् कल्याणप्रदान् पितॄन् आ अवित्सि आभिमुख्येनाहं वेद्मि जानामीत्यर्थः । ( अवित्सीति "छन्दसि लुङ्लङ्लिटः" इति लडर्थे विदेर्लुङि आत्मनेपदे उत्तमपुरुषैकवचने रूपम् । ) किञ्च विष्णोः वेवेष्टीति विष्णुः स च यज्ञः "यज्ञो वै [illegible]"ति श्रुतेः, तस्य विष्णोः व्यापनशीलस्य यज्ञस्य नपातं विक्रमणं च आ अवित्सि आ[illegible]मुख्येन वेद्मि । नास्ति पातो यत्र स तथोक्तः, यत्र गतानां पातो नास्ति स नपातो देवयानमार्गः, तथा विविधं क्रमणं गमनागमनं यत्र स तथोक्तः, यत्र गतानां भोगान्ते पुनः पतनं भवति स विक्रमणः पितृयाणमार्गः, यज्ञसम्बन्धिनौ याविमौ देवयानपितृयाणमार्गौ स्तस्तावुभौ उद्गामिनः पितॄँश्चाभिमुख्येन जानामीत्यभिप्रायः । अतोऽहं ब्रवीमि यत् , बर्हिषदः यज्ञे बर्हिषि उपरि उपवेष्टारो ये पितरः स्वधया सवनीयलक्षणेन अन्नेन सह सुतस्य अभिषुतस्य सोमस्य पित्वः पानं भजन्त भजन्ते सेवन्ते, इत्यर्थः । ते पितरः इहास्मिन् यज्ञे आगमिष्ठाः आगच्छन्त्वित्यर्थः । भजन्तेति भजतेर्लङि आत्मनेपदे प्रथमपुरुषबहुवचने रूपं, तत्र छान्दसोऽडभावः, "बहुलं छन्दस्यमाङ्योगेऽपी"ति पाणिन्युक्तेः । आगमिष्ठा इत्यत्र आङ्पूर्वाद्गमेर्लोडर्थे लुङ् पुरुषवचनव्यत्ययश्च छान्दसः ॥ १३ ॥

**उप॑हूताः पि॒तर॑ः सो॒म्यासो॑ ब॒र्हि॒ष्ये॑षु नि॒धिषु॑ प्रि॒येषु॑ ।**

**त ऽआग॑मन्तु त ऽइ॒ह श्रु॑वन्त्वधि॑ब्रुवन्तु॒ तेऽव॑न्त्व॒स्मान् ॥ १४ ॥**

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् इह श्राद्धमात्रेऽन्नोत्सर्गानन्तरजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया । तथाहि—ये पितरः सोम्यासः सोम्या एव सोम्यासः ("आज्जसेरसुगि"त्यसुगागमः ।) सोमसम्पादिनः सन्तीति शेषः। तथा ये च पितरः बर्हिष्येषु बर्हिषि भवानि बर्हिष्यानि तेषु तथोक्तेषु निधिषु निधिवत्स्थापितेषु प्रियेषु अभिरुचितेषु हविष्षु उपहूता भवन्तीतिशेषः । ते पितरः इह श्राद्धे पितृयज्ञे आगमन्तु आगच्छन्त्वित्यर्थः । इह व्यत्ययेन शपो लुक् । ते पितरः इहागत्य च श्रुवन्तु ( इह विकरणव्यत्ययः । ) अस्मद्वच इति शेषः । अस्मद्दत्तं श्राद्धीयान्नं स्वीकुर्वन्त्वित्यादिकमस्मद्वचनं शृण्वन्त्वित्यर्थः । श्रुत्वा च अधिब्रुवन्तु पितृभिः पुत्राणां कृते यद्वक्तव्यं तदधिकं ब्रुवन्त्वित्यर्थः। तथा च ते पितरो नोऽस्मानवन्तु कृच्छ्रापत्तेः सकाशात्सर्वतः पालयन्त्वित्यर्थः ॥ १४ ॥

बर्हिषदां पितॄणां तृचोऽनुवाकः समाप्तः ।

अतः परमग्निष्वात्तानां पितॄणामृक्चतुष्टयात्मकोऽनुवाको यथा—

**आयन्तु नः ॥ १५ ॥**

आयन्तु न इति तर्पणप्रकरणे व्याख्यातस्तत्र द्रष्टव्यः ॥ १५ ॥

**अग्नि॑ष्वात्ताः पितर॒ ऽएह ग॑च्छत॒ सद॑ः सदः सदत सुप्रणीतयः ।**

**अ॒त्ता ह॒वीꣳषि॒ प्रय॑तानि ब॒र्हिष्यथा॑ र॒यिꣳ सर्व॑वीरं दधातन ॥ १६ ॥**

पितृदेवत्या शङ्खदृष्टा जगती इह श्राद्धमात्रेऽन्नोत्सर्गानन्तरजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया । तथाहि—अग्निष्वात्तान्पितृन्प्रत्युच्यते । हे अग्निष्वात्ताः, पितरः, यूयमिहास्मिन् श्राद्धे ( पितृयज्ञे इति वा ) आगच्छत । ( अत्र 'आ' इत्युपसर्गो गच्छतेति क्रियापदेन सह सम्बध्यते "व्यवहिताश्चे"तिपाणिनिवचनात् । ) आगत्य च सदः सदः प्रतिगृहं सदत उपविशतेत्यर्थः । ( सदः सदः, इत्यत्र "नित्यवीप्सयोरि"तिद्वित्वम् । ) उपविश्य च सुप्रणीतयः शोभना प्रणीतिः प्रणयनं येषां ते तथोक्ताः सुखोपविष्टाः सन्तो यूयं बर्हिषि प्रयतानि प्रकर्षेण यम्यन्ते नियम्यन्ते तानि प्रयतानि दर्भे नियमपूर्वकं स्थापितानि हवींषि अत्ता अत्त भक्षयतेत्यर्थः । ( अत्तेर्लोटि मध्यमपुरुषबहुवचने अत्तेतिरूपम् । तस्य "द्व्यचोऽतस्तिङः" इति संहितायां दीर्घः । ) अथा अथ हविर्भक्षणानन्तरं तृप्ताः सन्तो यूयं सर्ववीरं सर्वे वीरा यस्मिन् स सर्ववीरस्तं तथोक्तं "पुत्रो वै वीरः" इतिश्रुतेः सर्ववीरं पुत्रपौत्रादिसर्वसम्पन्नं रयिं धनं दधातन धत्त स्थापयत अस्मास्वितिशेषः । 'अथा' इत्यत्र "निपातस्य चे"ति संहितायां दीर्घः । दधातेर्लोटि मध्यमपुरुषबहुवचने "तप्तनप्तनथनाश्चे"ति तनबादेशे दधातनेति रूपम् ॥ १६ ॥

येऽअग्निष्वात्ता येऽअनग्निष्वात्ता मध्ये दिवः स्वधया मादयन्ते ।
तेभ्यः स्वराडसुनीतिमेतां यथावशं तन्वं कल्पयाति ॥ १७ ॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् श्राद्धमात्रेऽन्नोत्सर्गानन्तरजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि—ये पितरः अग्निष्वात्ताः अग्निना सुष्ठु आत्ताः आसमन्ताद्भक्षिताः अग्निष्वात्ताः श्रौतस्मार्त्ताग्निदग्धाः विधिवदौर्ध्वदैहिकं प्राप्ता इत्यर्थः। तथा ये च अनग्निष्वात्ताः न अग्निना सुष्ठु आत्ताः आसमन्तात्खादिता इत्यनग्निष्वात्ताः श्मशानकर्म्म न प्राप्ता इत्यर्थः। एवम्भूता उभयविधा अपि ये पितरः दिवः द्युलोकस्य स्वर्गस्य मध्ये स्वधया "स्वधा वै पितृणामन्नमि"तिश्रुतेः स्वधासंज्ञकेन श्राद्धीयान्नेन स्वकर्म्मोपार्जितेन च कर्म्मफलेन मादयन्ते तृप्यन्ति सुखं सेवन्ते। सुखोपभोगार्थं स्वर्गलोकमाश्रयन्ते, इति भावः। तेभ्योऽग्निष्वात्तेभ्योऽनग्निष्वात्तेभ्यश्च पितृभ्यो यथावशं वशोऽभिलाषस्तमनतिक्रम्य इति यथावशं यथाकामं स्वराट् स्वेनैव राजते शोभते इति स्वराट् स्वयं दीप्तो यमः एताम् असुनीतिम् असून् प्राणान् नयति प्राप्नोतीति असुनीतिस्तां तथोक्तां प्राणयुक्तां चिरकालजीविनीं तन्वं तनूं शरीरं कल्पयाति कल्पयतु। लोडर्थे लेट्। तत्र "लेटोऽडाटावि"त्यडागमः। तेभ्यः पितृभ्योऽर्थे नरशरीरं यमो ददात्वित्यर्थः। "मनुष्याणां वारम्भसामर्थ्यादि"तिकात्यायनोक्तेः सूत्रे वाशब्दस्य एवार्थत्वाच्च मनुष्याणामेव यज्ञकर्मस्वधिकारदर्शनात् "कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतꣳ समाः। एवन्त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे॥" शु. य. वे. वा. मा. सं. ४०।२) इति श्रुतेर्निष्काम्यकर्म्मत्वेन ज्ञानोपलब्धौ सत्यां नरशरीरेणैव ज्ञानद्वारा मोक्षप्राप्तेर्निश्चयान्नरशरीरस्य मोक्षप्राप्तिहेतुत्वात्स्वर्गस्थितानामपि अग्निष्वात्तानामनग्निष्वात्तानाञ्च पितॄणां कृते "तेभ्यः स्वराडसुनीतिमेतां यथावशं तन्वं कल्पयाति।" इतिश्रुत्या नरशरीरमिह संयाचते श्राद्धकर्त्तेतिभावः। यद्वा "क्षीणे पुण्ये मर्त्यलोकं विशन्ती"ति भगवदुक्तेः क्षीणपुण्यात्मनामपि स्वपितॄणां पुत्रपौत्रप्रपौत्रादिरूपेण नरशरीरप्राप्तौ पुनस्तत्तत्कृतश्राद्धकर्म्मद्वारा पितॄणां स्वस्य च नैरन्तर्य्येण चिरस्वर्गवासत्वमाशास्यते, "पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते। अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपमि"तिस्मृतेः॥ १७॥

अग्निष्वात्तान् [illegible]तो हवामहे नाराशꣳसे सोमपीथं यऽआशुः।
ते नो विप्रासः सुहवा भवन्तु वयꣳ स्याम पतयो रयीणाम् ॥ १८ ॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् श्राद्धमात्रेऽन्नोत्सर्गानन्तरजपे विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि—"ऋतवो वै पितरः" इतिश्रुतेः पितॄणामृतुरूपत्वमृतूनाञ्च पितृरूपत्वं "नमो वः पितरो रसाये"त्यादियजुर्मन्त्रसमुदायेनोक्तम्। अतस्तत्सत्त्वे तद्वत्त्वं, तच्च श्रुत्याभिधीयते "अग्निष्वात्ता ह वै ऋतुमन्तस्तानग्निष्वात्तानृतुमतो हवामहे"इति। अमुमेवार्थमयं मन्त्रो वदति। तथाहि–ऋतुमतः ऋतवो विद्यन्ते येषु ते ऋतुमन्तस्तान् ऋतुमतः ऋतुयुक्तान् ऋतुरूपान्वा अग्निष्वात्तान् अग्निना सुष्ठुखादितान् श्रौतस्मार्त्ताग्निदग्धान् तथाविधानामेव श्राद्धार्हत्वात् श्राद्धार्हानितियावत् एवम्भूतान् पितॄन्

वयं हवामहे आह्वयामः 'अस्मिन् श्राद्धे' इति शेषः । यद्वा 'अस्मिन् पितृयज्ञे' इति शेषः । ये पितरः नाराशंसे चमसे सोमपीथं सोमपानम् आशुः अश्नन्ति स्मेत्यर्थः । "अश भोजने" ततो लिट् । "अथ यदि नाराशंसेषु सन्नः" इत्युपक्रम्य "पितृभ्यो नाराशंसेभ्यः स्वाहेति जुहुयादि"तिश्रुत्या नाराशंसे चमसे पितॄणां भक्षः प्रतिपादितः । अतोऽत्रैवमुच्यते "नाराशंसे सोमपीथं यऽआशुः" इति । ते पितरो नोऽस्माकं सुहवा भवन्तु । अस्माभिराहूताः सन्तोऽस्मिञ्छ्राद्धे शीघ्रमागच्छन्त्विति भावः । आगतेषु पितृषु किं स्यादित्यपेक्षायामुच्यते । आगतेषु पितृषु पितॄणां प्रसादाद्वयं रयीणां धनानां पतयः स्याम भवेमेत्यर्थः ॥ १८ ॥

आच्या जानु दक्षिणतो निषद्येमं यज्ञमभि गृणीत विश्वे ।
मा हिंसिष्ट पितरः केन चिन्नो यद्वऽआगः पुरुषता कराम ॥ १९ ॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् श्राद्धीयजप एव विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया । तथाहि—हे पितरः, विश्वे सोमवन्तो बर्हिषदोऽग्निष्वात्ताश्चेति सर्वे पितृगणा यूयमिमं यज्ञं, श्रौतपक्षे इमं पिण्डपितृयज्ञं, स्मार्त्तपक्षे इमं पितृश्राद्धलक्षणं यज्ञम् अभिगृणीत अभिष्टुत दक्षिणामन्त्रकालकर्तृहविःश्राद्धोत्कर्षैः साध्वयं पिण्डपितृयज्ञः साध्वयं पितृश्राद्धरूपो यज्ञ इति स्तुतिं कुरुतेत्यर्थः । किं कृत्वेत्यपेक्षायामुच्यते । जानु आच्या आच्य वामजानु पातयित्वेत्यर्थः । तथा दक्षिणतो निषद्य दक्षिणाभिमुखा भूत्वा उपविश्येत्यर्थः । स हि तेषां स्वभावः । तथा च श्रुतिः "अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपसीदन्नि"ति । किञ्च हे पितरः, केनचित् केनाप्यपराधेन नोऽस्मान् श्राद्धकर्तॄन् यूयं मा हिंसिष्ट मा विनाशयतेत्यर्थः । अस्माकं हिंसां मा कुरुतेति भावः । नोऽस्मानित्यत्र भार्यापुत्राद्यपेक्षया बहुवचनम् । "अस्मदोद्वयोश्चे"ति पाणिनिवचनाभिप्रायेण वा बहुवचनम् । मा हिंसिष्टेत्यत्र हिनस्तेर्लोडर्थे लुङ् "छन्दसि लुङ्लङ्लिटः" इतिपाणिनिवचनात् । माङुपपदत्वाद्वा लुङ् "माङि लुङ्" इति पाणिन्युक्तेः । माङ्युपपदे सर्वलकारापवादकत्वेन लुङेव भवतीति पाणिनेः सिद्धान्तः । यूयमस्मान्मा हिंसिष्टेति पितॄन्प्रत्युक्तम् । कुत एवमिति चेत्तत्रोच्यते । यत् यस्मात् वयं पुरुषता पुरुषस्य भावः पुरुषता तया पुरुषतया ( पुरुषतया इति प्राप्ते "सुपां सुलुक्०–" इत्यादिना तृतीयाविभक्तेरिह लुग् द्रष्टव्यः ) पुरुषभावेन चलचित्तत्वेन वः युष्माकम् आगः अपराधं [illegible]म कुर्म्मः करोतेर्लडर्थे लङ् "छन्दसि लुङ्लङ्लिटः" इतिपाणिनिवचनात् । तत्र "[illegible] बहुलमि"ति पाणिन्युक्तेर्विकरणव्यत्ययेन शपि कृते लङ्लकारस्योत्तमपुरुषबहुवचने करामेतिरूपम् । अडभावश्च छान्दसः "बहुलं छन्दस्यमाङ्योगेऽपी"त्युक्तेः । हे पितरः, यद्यप्यपराधिनो वयं तथाप्यस्माकं हिंसां मा कुरुत । प्रत्युत पुत्रपौत्रादिभिर्धनैश्चास्मान् संयोज्य सुखं गमयतेत्याशंसावाक्यार्थः॥१९॥

आसीनासोऽअरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय ।
पुत्रेभ्यः पितरस्तस्य वस्वः प्रयच्छत तऽइहोर्ज्जं दधात ॥ २० ॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् श्राद्धीयजप एव विनियुक्ता ऋगियम् । अस्या ऋचोऽर्थः प्रदर्श्यते मया । तथाहि–हे पितरः, दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय मह्यं 'श्राद्धकर्त्रे' इति

शेषः। यूयं रयिं धनं धत्त दत्तेत्यर्थः। दधातिरिह दानार्थः, "डुधाञ् विधारणे पुष्टौ दाने चापि निगद्यते।" इति कल्पद्रुमोक्तेः। यूयं च कीदृशा इत्यपेक्षायामुच्यते। अरुणीनामरुणवर्णानामूर्णानामुपस्थे उपरिभागे आसीनासः आसीना एव आसीनासः ("आज्जसेरसुगि"त्यसुगागमः।) आसीना उपविष्टा इत्यर्थः। याभिरूर्णाभिः कुतपाः क्रियन्ते, ता ऊर्णा अरुणा भवन्ति। इह कुतपशब्देन नेपालदेशोद्भवः कम्बल उच्यते, "कुतपं चासने दद्यादि"-तिस्मृतेः। कुतपप्रियाः पितरो भवन्तीत्यनुमीयते। एतदभिप्रायेणैव मनुनाप्युक्तं "त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः।" इति। यद्वा अरुणीनामरुणवर्णानामादित्यरश्मीनामुपस्थे उत्सङ्गे आसीनासः आसीना उपविष्टा आदित्यलोकस्था इतियावत्, एवम्भूता ये यूयं स्थ ते मह्यं धनं दत्तेति भावः। किञ्च हे पितरः, पुत्रेभ्योऽस्मभ्यमितिशेषः। तस्य वस्वः वसुनः धनस्य प्रयच्छत दत्त। उभयत्र कर्म्मणि षष्ठी। तत् प्रसिद्धं वसु धनं प्रयच्छत दत्तेत्यर्थः। यद्वा यत्तदोर्नित्यसम्बन्धत्वादिह तच्छब्दश्रवणाद्यच्छब्दोऽध्याहर्त्तव्यः। पुत्राणां यदभिलषितं वसु धनं वर्त्तते इति शेषः। तद्वसु धनं प्रयच्छत दत्तेत्यर्थः। तथा हे पितरः, येषां युष्माकं तृप्त्यर्थं श्राद्धं कृतं क्रियते वा इतिशेषः। ते यूयमिह 'अस्मिन् पिण्डपितृयज्ञे, अस्मिन् पितृश्राद्धे' वा अनेन पिण्डपितृयज्ञेन अनेन पितृश्राद्धेन वा सन्तुष्टाः सन्तः अस्मासु ऊर्ज्जं रसं दधात स्थापयतेत्यर्थः। पुत्रेभ्य इत्यत्र भार्यापुत्राद्यपेक्षया बहुवचनम्। पुत्रायेति चतुर्थ्येकवचनस्थाने पुत्रेभ्य इति चतुर्थीबहुवचनं "सुपां सुपो भवन्ती"ति वचनात्। यथेन्द्रादीनां देवानां यज्ञकर्त्तारो यजमानास्तस्थैव पितॄणां पुत्रा एव यजमाना भवन्ति। अतो यथा यज्ञे यजमाना देवेभ्यः सकाशात्स्वमनोभिलषितं धनपुत्रादिकं प्रार्थयन्ते, तथैव पिण्डपितृयज्ञे, पितृश्राद्धे वा श्राद्धकर्त्तारः पुत्रादयोऽपि पितृभ्यः सकाशात्स्वमनोभिलषितं धनपुत्रादिकं प्रार्थयन्ते। अतोऽहमपि स्वमनोभिलषितं धनपुत्रादिकं युष्मत्सकाशात्संयाचे इत्यभिप्रायः॥ २०॥

यम॑ग्ने कव्यवाहन॒ त्वं चि॒न्मन्य॑से र॒यिम्।
तन्नो॑ गी॒र्भिः श्र॒वाय्यं॑ देव॒त्रा प॑नया॒ युज॑म्॥ २१॥

कव्यवाहनाग्निदे[illegible]शङ्खदृष्टानुष्टुप् श्राद्धीयजप एव विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हे[illegible]न्यध्याहृत्य व्याख्यायते मया। तत्र प्रथमतस्तु शब्दसाधनप्रणाली प्रदर्श्यते। तथाहि—कवयः क्रान्तदर्शिनः पितरस्तेषामिदं कव्यं पितॄणामन्नमित्यर्थः। तत् कव्यं वहति पितॄन्प्रति प्रापयतीति कव्यवाहनस्तत्सम्बुद्धौ हे कव्यवाहनेति पदं सिध्यति। तत्र "कव्यपुरीषपुरीष्येषु ञ्युट्" इति ञ्युट्प्रत्ययो बोध्यः। "देवमनुष्यपुरुष०" इत्यादिना सप्तम्यर्थे देवशब्दात् त्राप्रत्यये "देवत्रा" इति पदं सिध्यति। "पनयतिर्दानकर्म्मे"ति यास्कोक्तेः पनयेत्यस्य देहीत्यर्थो भवति। श्रोतुं योग्यं श्रवाय्यं "श्रुदक्षिस्पृहिगृहिदयिभ्य आय्यः" इति शृणोतेराय्यप्रत्यये गुणेऽवादेशे श्रवाय्यमिति पदं सिद्ध्यति। "चिदित्यप्यर्थे" इतियास्कोक्तेश्चिच्छब्दोऽप्यर्थकः। ततोऽयमर्थः। हे कव्यवाहन, पितॄणामन्नप्रापक, हे अग्ने, यं रयिं हविर्लक्षणं धनं त्वं चित् मन्यसे उत्कृष्टत्वेन त्वमपि जानासि। गीर्भिः स्तुतिरूपा-

भिर्वाग्भिः श्रवाय्यं श्रोतुं योग्यं नोऽस्माकं तं रयिं हविर्लक्षणं धनं देवत्रा देवेषु पनय देहि। दीव्यन्तीति देवाः द्युतिस्तुतिक्रीडादियुक्ताः पितरस्तान्प्रति प्रापयेत्यभिप्रायः ॥ २१ ॥

योऽअग्निः कव्यवाहनः पितॄन्यक्षदृतावृधः।
प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्यऽआ ॥ २२ ॥

कव्यवाहनाग्निदेवत्या शङ्खदृष्टानुष्टुप् श्राद्धीयजप एव विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तत्र यत्तदोर्नित्यसम्बन्धात्पूर्वार्धे यच्छब्दश्रवणादुत्तरार्धे तच्छब्दोऽध्याहर्त्तव्यः। तथाहि–कवयः क्रान्तदर्शिनः पितरस्तेषामिदं कव्यं, तत्कव्यं वहतीति कव्यवाहनः पितॄणामन्नप्रापको योऽग्निः ऋतावृधः ऋतं सत्यम् अवश्यं भाविफलोपेतत्वादृतं यज्ञं वा वर्धयन्तीति ऋतवृध इतिप्राप्ते ऋतशब्दस्य संहितायां दीर्घे ऋतावृधस्तान् तथोक्तान् सत्यवर्धयितॄन् यज्ञवर्धयितॄन्वा पितॄन् यक्षत् इष्टवानित्यर्थः। सोऽग्निरिदानीं देवेभ्यश्च पितृभ्य आ (आकारः समुच्चयार्थः) देवेभ्यः पितृभ्यश्चेत्यर्थः। हव्यानि हवींषि प्रवोचति प्रब्रवीतु। इमानि हवींषि देवेभ्यः, इमानि च हवींषि पितृभ्यश्चेति वदत्वित्यर्थः। 'इत् उ' निपाताविमौ पादपूरणौ। व्यत्ययेन वचेः शपि "वच उम्" इति छान्दस उमागमे वोचतीति लोडर्थे लटि प्रथमपुरुषैकवचने रूपम् ॥ २२ ॥

त्वमग्नऽईडितः कव्यवाहनावाड्ढव्यानि सुरभीणि कृत्वी।
प्रादाः पितृभ्यः स्वधया तेऽअक्षन्नद्धि त्वं देव प्रयता हवीꣳषि॥२३॥

कव्यवाहनाग्निदेवत्या शङ्खदृष्टा त्रिष्टुप् श्राद्धीयजप एव विनियुक्ता ऋगियम्"अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि–हे कव्यवाहन, हे अग्ने, ईडितः देवैः ऋत्विग्भिश्च स्तुतस्त्वं हव्यानि हवींषि सुरभीणि सुगन्धीनि कृत्वी कृत्वा अवाट् वहसि स्म। किञ्च हे कव्यवाहन, हे अग्ने, त्वं हव्यानि ऊढ्वा स्वधया "स्वधाकारं पितरः" इतिश्रुतेः स्वधया पितृमन्त्रेण स्वधाकारेण पितृभ्यः प्रादाः हवींषि त्वं दत्तवानसीत्यर्थः। ते च पितरः अक्षन् तानि हवींषि भक्षितवन्त इत्यर्थः। अत एव हे देव, त्वमपि प्रयता प्रयतानि हवींषि अद्धि भक्षयेत्यर्थः। वहेर्लुङि इडागमाभावे सिचो लोपे अवाडिति रूपम्। "स्नात्व्यादयश्चे"ति कृत्वीति निपातः कृत्वेत्यर्थे। प्रादा इति ददातेर्लुङि मध्यमपुरुषैकवचने रूपम्। अक्षन्निति "घस्लृ अदने" इत्यस्य लुङि प्रथमपुरुषबहुवचने रूपम्। अत्तेर्लोटि मध्यमपुरुषैकवचने अद्धि इति रूपम्। प्रयतेति "शेश्छन्दसि बहुलमि"ति शेर्लोपे प्रत्ययलक्षणेन नुमि उपधाया दीर्घे नलोपे च द्वितीयाबहुवचने रूपम् ॥ २३ ॥

"ये चेह पितरो०—" ॥ २४ ॥ ऋगियं तर्पणमन्त्रव्याख्याप्रकरणे व्याख्याता, तत्रास्या ऋचो व्याख्या द्रष्टव्या ॥ २४ ॥

इदं पितृभ्यो नमोऽस्त्वद्य ये पूर्वासो यऽउपरासऽईयुः।
ये पार्थिवे रजस्यानिषत्ता ये वा नूनꣳ सुवृजनासु विक्षु ॥ २५ ॥

पितृदेवत्या शङ्खदृष्टा त्रिष्टुप् श्राद्धीयजप एव विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि—पूर्वे एव पूर्वासः ( "आज्जसेर-सुगि"त्यसुगागमः ।) पूर्वासः पूर्वे पूर्वकालीनाः ये पितरः ईयुः स्वर्गमिति शेषः। येऽस्मत्पूर्वजाः स्वर्गलोकं जग्मुरित्यर्थः । तथा ये च पितरः उपरासः उपरमन्ते विरमन्तीति उपराः, उपरा एव उपरासः उपरतव्यापाराः कृतकृत्याः सन्त ईयुः ब्रह्मेति शेषः, परं ब्रह्म प्रापुरित्यर्थः। तथा ये च पितरः पार्थिवे रजसि पृथिव्यां भवं पार्थिवं रजः, पार्थिवं ज्योतिः, पार्थिवोऽग्निरिति यावत्, तस्मिन् आनिषत्ताः आभिमुख्येन निषण्णाः, अग्नीषोमात्मकत्वादस्य जगतः पार्थिवे यस्मिन् कस्मिन्नपि पदार्थगे वह्नौ तेजस्त्वभावेन स्थिताः जाठरेऽग्नौ प्राणभावेन स्थिता इति वा। अपि च ये वा ( वाशब्दः समुच्चयार्थः। ) ये च पितरः नूनं निश्चितं सुवृजनासु विक्षु आनिषत्ता इत्यनुषङ्गः। वृजनमिति बलनामसु निघण्टौ पठितं, ( 'सु' इत्ययं शोभनार्थः। ) सु अर्थात् शोभनं बलं यासां ताः सुवृजनास्तासु सुवृजनासु धर्म्मरूपबलयुक्तासु विक्षु प्रजासु यजमानलक्षणासु आनिषत्ताः आभिमुख्येन निषण्णाः जीवभावेन स्थिता इत्यर्थः। अद्य अस्मिन् पिण्डपितृयज्ञदिनेऽश्राद्धदिने इति वा तेभ्यश्चतुर्विधेभ्यः स्वर्गब्रह्माग्निप्रजासु स्थितेभ्यः पितृभ्यः पितृशब्दस्य मृतमात्रपरत्वात् पितृपितामहप्रपितामहेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यश्च इदं नमोऽस्तु। "नम इत्यन्ननामे"तिनिघण्टुः, इदं नमः इदं मद्दत्तं श्राद्धीयमन्नं पितृभ्योऽस्त्वित्यर्थः। निपूर्वात्सदेः क्तप्रत्यये "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति सूत्रेण नत्वे प्राप्ते "न सत्तनिषत्ताऽनुत्तप्रतूर्त्तसूर्त्तगूर्त्तानि च्छन्दसी"त्यनेन नत्वाभावस्य निपातनादिह 'निषत्ता' इति प्रथमाबहुवचने रूपम् ॥ २५॥

अधा यथा नः पितरः परासः प्रत्नासोऽअग्नऽऋतमाशुषाणाः ।
शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तोऽअरुणीरपव्रन् ॥ २६ ॥

अग्निदेवत्या शङ्खदृष्टा त्रिष्टुप् श्राद्धीयजप एव विनियुक्ता ऋगियम् "अतिरिक्तमि"ति कारिकया हीनपदान्यध्याहृत्य व्याख्यायते मया। तथाहि–हे अग्ने, नोऽस्माकं पितरः अधा (अधशब्दोऽथशब्दार्थे तस्य "निपातस्य चे"ति संहितायां दीर्घः।) अध अथ देहयात्रानन्तरं यथा येन प्रकारेण शुचि इत् ( "सुपां सुलुगि"ति विभक्तिलोपः। इत् एवार्थे। ) शुचिं दीप्तां दीधितिं निर्मलं रविमण[illegible] अयन् आयन् प्राप्ता इत्यर्थः। "अय गतौ"इत्यस्माल्लङि प्रथमपुरुषबहुवचने छान्दस[illegible]भावे 'अयन्' इति रूपम्। कीदृशाः पितरः, परासः परा एव परासः ( आज्जसेरसुगि"त्यसुगागमः ) परा उत्कृष्टा इत्यर्थः। तथा प्रत्नासः ( "प्रत्नमि"ति चिर[illegible]नामसु निघण्टौ पठितन्तस्मादयमर्थः) प्रत्ना एव प्रत्नासः चिरन्तनाः पुराणा इत्यर्थः। त[illegible]ऋतं यज्ञं श्राद्धलक्षणमाशुषाणाः अश्नुवानाः व्याप्नुवन्त इत्यर्थः। ईदृशाः पितरो यथा देवयानं पन्थानं प्राप्तास्तथा वयमपि अरुणीः अरुणवर्णा दीधितीः सूर्य्यरश्मीन् अपव्रन् अपवृणुमः। सूर्य्यरश्मीनपवृत्य देवयानमार्गं प्राप्नुयाम इति वयमाशास्महे इति वाक्यशेषः। कीदृशा वयम्, उक्थशासः उक्थानि शंसन्ति यज्ञे वदन्तीति उक्थशासः (उक्थपूर्वाच्छंसतेः क्विप् संहितायां दीर्घश्च) तथा क्षामा ("सुपां सुलुगि"ति विभक्तिलोपः।) क्षामा क्षामां भूमिं भिन्दन्तः वेद्याद्यर्थं विदारयन्तः सर्वोपकरणैर्यज्ञं कुर्वन्त इत्यर्थः। ईदृशा वयं स्वपूर्वपूर्वजाः

स्वपितर इव यज्ञं कुर्वाणास्तदीयफलेन देवयानमार्गं प्राप्नुयाम इत्याशंसावाक्यार्थः । अपव्रन्निति अपपूर्वात् "वृञ् वरणे" इत्यस्माल्लिङर्थे लङि विकरणव्यत्ययेन शपि लुप्ते रूपं, तत्र अडभावः पुरुषव्यत्ययश्च छान्दसः ॥२६॥

उशन्तस्त्वा. ॥ २७ ॥

श्राद्धप्रकरणे व्याख्याता ऋगियं तत्रास्या ऋचो व्याख्या द्रष्टव्या ॥ २७ ॥

सहस्रशीर्षेत्यादि षोडशर्चस्य पुरुषसूक्तस्य आशुः शिशान इत्यादिसप्तदशर्चस्य अप्रतिरथसंज्ञकस्येन्द्रसूक्तस्य च पाठः श्राद्धमात्रे भवति। तदेतत्सूक्तद्वयं षडङ्गशतरुद्रियमन्त्रव्याख्याप्रकरणे प्रागेव व्याख्यातं, तत्रैवास्य सूक्तद्वयस्य व्याख्या द्रष्टव्या ॥ तथा नमः शम्भवाय चेत्यपि मन्त्रः श्राद्धमात्रे पठ्यते । स च देवपूजनमन्त्रव्याख्याप्रकरणे व्याख्यातस्तत्रास्य मन्त्रस्य व्याख्या द्रष्टव्या ॥

॥ इति श्राद्धीयसूक्तमन्त्रव्याख्या ॥

॥ इति श्रीदामोदरशर्म्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये
सप्तदशोऽयं श्राद्धपरिच्छेदः समाप्तः ॥

---

# ॥ अथाष्टादशपरिच्छेदारम्भः ॥

—— ❀❀❀ ——

## ॥ आश्वमेधिकमन्त्रगताश्लीलार्थपरिहारव्याख्येयम् ॥

तत्र मूलमन्त्रः शु० य० वे० वा० मा० सं० २३ । १८ ॥

ओ३म् प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा ।
अम्बेऽअम्बिकेऽअम्बालिके न मा नयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥ १ ॥

### ॥ अथ मन्त्रव्याख्या ॥

नत्वा रामपदद्वन्द्वं ध्यात्वा ब्रह्म सनातनम् ।
आश्वमेधिकमन्त्राणां यमर्थं कृतवानहम् ॥ १ ॥
तं दृष्ट्वा सुजनाः सर्वे आस्तिका नास्तिका अपि ।
सुतरां तोषमेष्यन्ति तस्मात्सोऽपि प्रदर्श्यते ॥ २ ॥

तथाहि—येषु केषुचिदाश्वमेधिकमन्त्रेषु व्रीडाव्यञ्जकाश्लीलत्वं सम्भाव्य वेदभाष्यकारस्याभिप्रायमज्ञात्वा यैः कैश्चिदनभिज्ञैर्वेदभाष्यकारं महीधरं प्रत्याक्षिप्तं तन्निराकरणार्थमेव मयाऽयमर्थः प्रदर्श्यते । तथाहि, यमनियमग्रहणार्थमादावेव दीक्षणीयेष्टिः क्रियते । ततश्च ब्राह्मणकल्पसूत्राद्यनुसारेण दीक्षितस्य यजमानस्य तदीयपत्न्याश्च यज्ञेऽधिकारो भवति । तत्र तु यजमानस्य तदीयपत्न्याश्च मांसभक्षणानृतसम्भाषणसम्प्राप्तमैथुनधर्म्मादीनामावभृथान्निषेधोऽस्ति । कथन्तर्हि मृताश्वेन सह यजमानपत्न्या राजमहिष्याः मैथुनं सम्भाव्येत । अश्वस्य प्रदक्षिणा, प्रा[illegible]नं, प्राणदानं चेत्येतत्सर्वमश्वालम्भनोत्तरमेव भवतीति ब्राह्मणकल्पसूत्रादिभिर्ज्ञायते । [illegible]व्याख्यायामग्रे स्फुटीभविष्यति । तत्र श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिर्मन्त्राणां कर्मसु विनियोगो भवतीति मीमांसाग्रन्थेषु स्पष्टम् । अतस्तदनुसा[illegible]तात्महर्षिकात्यायनेनापि कल्पसूत्रे मन्त्राणां विनियोगः प्रदर्शितः । तथैव वेदभाष्येष्वपि [illegible]अतो मयापि तदनुसारेणैव विनियोगप्रदर्शनपूर्वकं मन्त्रार्थः क्रियते । किन्तु प्रतिमन्त्रगताश्लीलार्थपरिहारो युक्तिप्रमाणाभ्यां मन्त्रव्याख्यायां मया प्रदर्शयिष्यते । इयानेव विशेषः पूर्वाचार्य्यकृतवेदभाष्यत इति विदाङ्कुर्वन्तु सज्जनाः । तद्यथा—"परिपशव्ये हुत्वा देवेभ्यो देवेभ्यः स्वाहेति तिस्रोऽपराः" ( का० २।१४९ ) इति । परिपशव्यनामके स्वाहा देवेभ्यो देवेभ्यः स्वाहेति द्वे आहुती हुत्वा प्राणायेत्याद्यास्तिस्र आहुतीर्जुहोतीति सूत्रार्थः । त्रीणि यजूंषि "प्राणाय, अपानाय, व्यानाये"ति । आभिराहुतिभिरश्वं प्राणवन्तं करोति । तथा च

श्रुतिः "प्राणानेवास्मिन्नेतद्दधाति, तथोहास्यैतेन जीवतैव पशुनेष्टं भवति" (श०ब्रा०१३।२।२।२) इति। मन्त्रार्थस्तु स्पष्ट एव॥

"वाचयति पत्नीर्नयन्नमस्तेऽम्ब इति" ( का० २०।५० ) सर्वाः पत्नीः पशुशोधनाय पान्नेजनीहस्ताः पादौ निज्येते क्षाल्येते याभिरद्भिस्ता पान्नेजन्यः पादावनेजनार्था आपः, पादग्रहणमन्यावयवोपलक्षणं, पान्नेजन्यो मुखाद्यवयवशोधनार्था आपो हस्ते यासां ताः पान्नेजनीहस्ताः पशून्प्रति नयन् नमस्त आतानेति प्राकृतं मन्त्रमम्ब इत्याश्वमेधिकं च वाचयतीति सूत्रार्थः। अथ मन्त्रार्थः। अश्वदेवत्यानुष्टुप्। पत्न्यः परस्परं वदन्ति अम्बा, अम्बिका, अम्बालिकेति नामान्येतानि तत्तत्सम्बुद्धौ हे अम्बे, हे अम्बिके, हे अम्बालिके, सखि, कश्चन ( चनशब्दोऽप्यर्थे ) कोऽपि नरो मा मां न नयति अश्वं प्रति न प्रापयति। अत एव अश्वकः ("अशू व्याप्तौ" स्वा० उ०) इत्यस्माद्धातोः "अशूप्रुषी"त्यादिना औणादिकक्कन्प्रत्ययः ) अश्नुते सर्वं जगदित्यश्वः सर्वव्यापकः परमेश्वर इतियावत्, "यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशद्"िति श्रुतेः। कुत्सितोऽश्वोऽश्वकः ( कुत्सायां कन् ) अकुत्सितोऽपीर्ष्यया कुत्स्यते, एवम्भूतः परमेश्वरः काम्पीलवासिनीं "कमु कान्तौ" कान्तिरिच्छा काम्यते इति कामः ( अकारलोपश्छान्दसः ) काम् अर्थात्कामः ( "पील प्रतिष्टम्भे" प्रतिष्टम्भो रोधनम् ) पील्यते प्रतिष्टभ्यते प्रतिरुध्यते यत्र तत्काम्पीलं नगरं मणिद्वीपाख्यः स्थानविशेषः, न हि तत्र गतानां साधकानां कामः सञ्जायते, इतिभावः। तत्र काम्पीले काम्पीलाख्ये नगरे अर्थान्मणिद्वीपाख्यस्थानविशेषे वसतीति काम्पीलवासिनी तां तथोक्तां सुभद्रिकां ( सु इति शोभनार्थः ) 'सु' अर्थात् शोभनं भद्रं मङ्गलं षड्विधैश्वर्य्यमित्यर्थः। तदस्या अस्तीति सुभद्रा कुत्सिता सुभद्रा सुभद्रिका या ईर्ष्यया कुत्स्यते तां तथोक्तां परां प्रकृतिमादाय ससस्ति शेते मद्विषये निमीलितलोचनोऽस्तीत्यर्थः। "षस स्वप्ने" यद्यप्ययं धातुः पाणिनीयधातुपाठे कौमुद्यां च अदादौ पठितस्तथापि "बहुलमेतन्निदर्शनमि"ति गणसूत्रेण दशगणीपाठबाहुल्याभिधानाज्जुहोत्यादौ बोध्यः। कोऽपि नरो न नयति तर्हि कथं गम्यते तत्राह–मदगमनेऽश्वोऽन्यां परां प्रकृतिमादाय पुनरपि शयिष्यते इति हेतोः स्वयं मया गम्यते न तु मां कश्चिन्नयतीतिभावः। विषयवासनासक्ताहं परमेश्वरं न स्मरामि, अतो मां भक्तिहीनां ज्ञात्वा ईर्ष्यया क्रुद्धः सन् ससस्ति मद्विषये निमीलितलोचनो भवतीत्यभिप्रायः। अत एव "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते। आब्रह्मभुवनाल्लोकात्पुनरावर्त्तिनोऽर्जुन॥" इत्यादिभगवद्वाक्ये विश्वासं कृत्वाऽपवर्गार्थं परमेश्वरं प्रति गच्छामि न तु सुखान्तराभिप्रायेण। "अथ नवमे मासि सर्वाङ्गसम्पूर्णो भवति [illegible]जातीः स्मरति, कृताकृतं च कर्म्म स्मरति, शुभाशुभं च विन्दति, मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः। नानायोनिसहस्राणि मयोषितानि यानि वै॥ आहारा विविधा भुक्ताः पीता नानाविधाः [illegible] मातरो विविधा दृष्टाः पितरः सुहृदस्तथा॥ अवाङ्मुखः पीड्यमानः शोचामीह सु[illegible] अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम्॥ यन्मया परिजनस्यार्थे कृतं कर्म्म शुभाशुभम्। एकाकी तेन दह्येऽहं गतास्ते फलभोगिनः॥ यदि योन्याः प्रमुञ्चामि साङ्ख्यं योगं समभ्यसे। अशुभक्षयकर्त्तारं भुक्तिमुक्तिप्रदायिनम्॥ यदि योन्याः प्रमुञ्चामि प्रपद्येऽहं महेश्वरम्। अशुभ०॥ यदि योन्याः प्रमुञ्चामि प्रपद्येऽहं निरञ्जनम्। अशुभ०॥ यदि योन्याः प्रमुञ्चामि ध्याये ब्रह्म सनातनम्। अशुभ०॥ यदि योन्याः प्रमुञ्चामि प्रपद्येऽहं सदाशिवम्। अशुभ०॥ पुनर्नैवं

करिष्येऽहं कर्म्म यद्बन्धनं नृणाम्। येनाहमीदृशं दुःखं प्राप्नोमीह निरन्तरम्॥ गर्भवाससमं दुःखं न भूतं न भविष्यति॥" (अ० वे० ग०) इत्येवं यन्मया प्रार्थितं तद्विस्मृत्येदानीं विषयेष्वनुरक्तास्मि, इति हेतोरकुत्सितोऽपीश्वर ईर्ष्यया कुत्स्यते। अन्यः कोऽपि तत्क्षमापनार्थं न मां नयति, अतः स्वयं गम्यते, इति राजमहिषी स्वसखीं प्रति स्वाभिप्रायं वदतीतिभावः। न च ग्राम्यसुखेच्छया मैथुनाभिप्रायेण प्राकृताश्वं प्रति गम्यते। एतच्च वक्ष्यमाणमन्त्रव्याख्यायामग्रे स्फुटीभविष्यति। अश्वक इत्यत्र अश्वपदेन यौगिककल्पनया परमेश्वर एवानुसन्धेयो न तु प्राकृताश्वो घोटकः। न हि प्राकृताश्वस्य वीर्याद्धिरण्योत्पत्तिः सोमोत्पत्तिश्च सम्भवितुमर्हति। तदुभयञ्च श्रुत्याभिहितं, यथा—"अश्वस्य वाऽआलब्धस्य रेत उदक्रामत्तत्सुवर्णँ हिरण्यमभवद्यत्सुवर्णँ हिरण्यं ददात्यश्वमेव रेतसा समर्द्धयति" (श. ब्रा. १३। १। १। ३।) इति। "अयँ सोमो वृष्णोऽअश्वस्य रेतः" (शु० य० वे० वा० मा० सं० २३। ६२।) इति च। सुभद्रिकामित्यत्र सुभद्रायाः षड्विधैश्वर्य्यवत्याः पराप्रकृतेर्जगन्निर्म्माणप्रपञ्चहेतुभूतत्वात्कुत्सितत्वं तत्रापि काम्पीलवासिनीमिति विशेषणेन जगन्निर्म्माणे परमेच्छाशालिनीत्वं च ध्वन्यते। महीधरस्याप्ययमेवाशयः। स च तत्कृतवेदभाष्ये द्रष्टव्यः। एवं मन्त्रस्यास्य भाष्यं यथा मया कृतं महीधरेणापि तथैव कृतम्। तर्हि महीधरेण किमपराद्धं येन तस्मिन्वामाचारित्वं वेदभाष्याभिप्रायानभिज्ञैः कैश्चिदाक्षिप्यते। तां नारीमादाय ससस्ति शेते, तत्र हि विदग्धाः सुरूपाः कामिन्यो भवन्ति, इति वाक्यद्वयेन यदि अश्लीलत्वं मत्वा गर्ह्यते तत्कृतभाष्यमिति चेत्तदपि न युक्तं, नारीशब्दस्य प्रकृतिमात्रवाचकत्वात्प्रकृतेश्च जगन्निर्माणे कारणत्वात्सुभद्रिकात्वं, सुभद्रिकात्वद्योतनाय विदग्धादिशब्दाः प्रयुक्ताः। प्रकृतौ स्त्रीत्वात्सर्वं सामञ्जस्यमेव। तस्मान्महीधरभाष्ये नाश्लीलत्वमिति विदाङ्कुर्वन्तु विद्वांसः॥ १॥ २३। १८॥

॥ मूलमन्त्रः। २३। १९॥

गुणानान्त्वा गुणपतिँ हवामहे प्रियाणान्त्वा प्रियपतिँ हवामहे निधीनान्त्वा निधिपतिँ हवामहे व्वसो मम। आहमजानि गर्भधमात्वमजासि गर्भधम्॥ २॥

अथ व्याख्या [illegible] त्रिस्त्रिः परियन्ति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति॥ २९।१५१॥ स[illegible] पान्नेजनीहस्ता एव पशोः प्राणशोधनात्प्राक् अश्वं त्रिस्त्रिः परियन्ति मध्ये पितृवत् अप्रदक्षिणं परियन्ति त्रिस्त्रिभिर्मन्त्रैः। वसो ममेति त्रिष्वनुषङ्गः। [illegible]त्र प्रथमं गणानामिति त्रिः प्रदक्षिणं परियन्ति तत्र सकृन्मत्रेण द्विस्तूष्णीम्, ततः प्रिया[illegible]प्रदक्षिणं त्रिः। निधीनामिति प्रदक्षिणं त्रिः। एवं नवकृत्व इति सूत्रार्थः। तथा च श्रुतिः। "गणानान्त्वा गणपतिँ हवामह इति पत्न्यः परियन्त्यपन्हुवतऽएवाऽस्माऽएतदतोऽन्ये वास्मै ह्नुवतेऽथो धुवतऽएवैनं त्रिः परियन्ति त्रयो वाऽइमे लोका एभिरेवैनं लोकैर्धुवते त्रिः पुनः परियन्ति षट् सम्पद्यन्ते षड्वाऽऋतवो ऋतुभिरेवैनं धुवते। अथवाऽएतेभ्यः प्राणाः क्रामन्ति ये यज्ञे धुवनं तन्वते नवकृत्वः परियन्ति नव वै प्राणाः प्राणानेवात्मन्धत्ते नैभ्यः प्राणाऽअपक्रामन्ती"ति शतपथब्राह्मणे १३।२।८। त्रीणि यजूंषि लिङ्गोक्तदेवत्यानि। तत्रैवं प्रयोगः।

ॐ गणानान्त्वा गणपतिꣳ हवामहे व्वसो मम ॥ १ ॥
ॐ प्रियाणान्त्वा प्रियपतिꣳ हवामहे व्वसो मम ॥ २ ॥
ॐ निधीनान्त्वा निधिपतिꣳ हवामहे व्वसो मम ॥ ३ ॥

अथ मन्त्रार्थः। "अशू व्याप्तौ" स्वादिः। ततः "अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्"इति क्वन्प्रत्ययः। अश्नुते चराचरं सर्वं जगदित्यश्वः सर्वव्यापकः परमेश्वर इत्यभिप्रायः। एतदभिप्रायेणैव पूर्वाचार्य्यैर्वेदभाष्यकारैरपि प्राकृतिकघोटकबोधकहयतुरगादिशब्दाननुक्त्वा हे अश्व, इत्येव सम्बुद्धिपदमध्याहृत्य मन्त्रो व्याख्यातः। तथैव मयापि "अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत्। यद्यत्स्याच्छान्दसं वाक्यं तत्तत्कुर्य्यात्तु लौकिकम्॥"इति कारिकया हीनपदान्यध्याहृत्य व्याख्यायतेऽयं मन्त्रः। तथाहि—हे अश्व, सर्वव्यापक, परमेश्वर, त्वा त्वां हवामहे आह्वयामः 'अस्मिन्नश्वमेधयज्ञे' इतिशेषः। अश्वमेधयज्ञपदेन इहाश्वमेधीयो हयोऽभिप्रेतः। तत्र कारणे कार्योपचारः, यथा सोमयागे हविर्द्धानमण्डपे विष्णुत्वोपचारः, विष्णुपदेन तत्र यज्ञ एवोपलक्ष्यते "यज्ञो वै विष्णुरि"ति श्रुतेः। मण्डपो यज्ञस्य कारणं यज्ञश्च कार्यं तत्र यथा यज्ञकारणे हविर्द्धानमण्डपे यज्ञरूपकार्यत्वारोपस्तथात्रापि अस्मिन्नश्वमेधीयाश्वे त्वामाह्वयामः परमपवित्रेण यज्ञसाधनभूतेनानेनाश्वेन अश्वमेधयज्ञस्य सम्पत्स्यमानत्वादिति भावः, "यज्ञेन यज्ञमयजन्त देवाः" इत्यादिमाध्यन्दिनीयश्रुतेः। यज्ञेन यज्ञसाधनभूतेन पुरुषाख्येन पशुना यज्ञं यज्ञपुरुषं सच्चिदानन्दाख्यं परमेश्वरम् अयजन्त पूजितवन्तः देवाः प्रजापतेः प्राणावयवा इति श्रुत्यर्थो बोध्यः। अथ प्रकृतमनुसरामः। किम्भूतं त्वां गणानां मध्ये गणपतिं गणाः कूष्माण्डादयः साध्याश्च गणदेवताः इति वा, तत्पालकमित्यर्थः, "नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमः"इति श्रुतेः। विराड्रूपिणं परमात्मानं पूजनार्थमाह्वयाम इतिभावः, प्रदक्षिणायाः पूजाङ्गत्वात् 'त्रिः परियन्ती'त्यादिश्रुतेश्च। तथा हे अश्व, त्वा त्वां हवामहे आह्वयामः "अस्मिन्नश्वमेधयज्ञे वयं यजमानपत्न्यः"इति शेषः। किम्भूतं त्वां प्रियाणां मध्ये प्रियपतिम् प्रियास्तु भक्ता एव भवन्ति, "यो मे भक्तः स मे प्रियः"इति भगवद्वाक्यात्, तेषां पालकमित्यर्थः। स हि स्वभक्तान् पाति। उक्तञ्च भगवता श्रीकृष्णचन्द्रेणार्जुनं प्रति "अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥"इति। तथा हे अश्व, सर्वव्यापक, परमेश्वर, त्वा त्वां हवामहे आह्वयामः 'वयं यजमानपत्न्योऽस्मिन्नश्वमेधयज्ञे' [illegible] किम्भूतं त्वां निधीनां मध्ये निधिपतिं, निधयो महापद्मादयः, "महापद्मश्च पद्मश्च [illegible]कच्छपौ। मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव॥" इत्यभिधानकारोक्तेः। ब्रह्मविद्यारूपा वा "विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मी"तिश्रुतेः। तत्पालकं सुखनिधेः पाल[illegible] रूपेण वा पालकमित्यर्थः। न हि तस्मात्परोऽन्यः कश्चिन्निधिः। योऽयं विज्ञानमयः [illegible] यस्मात्परं न हि किञ्चिदस्ति स सर्वदैव स्वभक्तान्रक्षति नहि तद्भक्तस्य विनाश इति भावः। उक्तञ्च भगवता श्रीकृष्णचन्द्रेण "कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यती"ति। न हि तद्भिन्नोऽन्यनिधिर्म्महापद्मादिर्निर्तरां सुखयति। अत उक्तं श्रुत्या "मा गृधः कस्य स्विद्धनमि"ति। "वस निवासे" इत्यस्मात् "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चे"ति औणादिक उप्रत्ययः। वसन्ति सर्वभूतान्यस्मिन्निति वसुर्वासुदेवाख्यः परमेश्वरस्तत्सम्बुद्धौ हे वसो,

सर्वजगन्निवास, वासुदेवाख्य, परमेश्वर, त्वं मम ( ममेत्यत्र वचनव्यत्ययः। ) अस्माकं यजमानपत्नीनां पतिर्भूया इति शेषः। पातीति पतिः रक्षको भवेत्यभिप्रायः।

आहमजानीति "प्रक्षालितेषु महिष्यश्वमुपसंविशत्याहमजानी"ति ( का० २०।१५२। )। प्रक्षालितेषु शोधितेषु पशूनां प्राणेषु पत्नीभिरध्वर्युणा यजमानेन च प्राणशोधने कृते सति महिषी अश्वसपीपे शेते, इति सूत्रार्थः। अर्थात्पूर्वोक्तप्रकारेण विराड्रूपिणं परमेश्वरमस्मिन् प्राकृतेऽश्वे आवाह्य "प्रकृतिवद्विकृतिः कर्त्तव्ये"ति नियमादग्नीषोमीयपशुसंस्कारवदिहापि अश्वस्य शुक्लयजुर्माध्यन्दिनशाखीयषष्ठाध्यायस्थाभ्यां "वाचन्ते शुन्धामि, मनस्तऽआप्याय-तामि"ति कण्डिकाभ्यां पशोः प्राणशोधनं तथा "ऐन्द्रः प्राणः—०"इत्यादिमन्त्रैः प्राणदानञ्च विधाय तत्रोपविश्य प्राकृताश्वशरीरे अश्वं सर्वव्यापकं वासुदेवं मनसानुसन्धाय ततस्त-त्समीपे राज्ञः पट्टमहिषी शेते। शयनञ्चात्र विषयतो मनो निवृत्त्यर्थं चक्षुरुन्मीलनं यथा कश्चित्पूजावसरे चक्षुर्द्वयमुन्मील्य परमेश्वरं ध्यायति तद्वदिहापि चक्षुरुन्मीलनेन चित्तैका-ग्र्यं विधाय तदवसर एव वक्ष्यमाणलक्षणं स्वप्रयोजनं ततः प्रार्थयति। प्रसिद्धस्वापस्य तदानीं तत्र सम्भवानर्हत्वादिति भावः। अथ मन्त्रार्थः। "प्रजा वै पशवो गर्भः" इतिश्रुतेरिह मन्त्रग-तगर्भशब्दः प्रजापशुवाचकः गर्भोपपदाद्धधातेः "आतोऽनुपसर्गे कः"इति कप्रत्यये अनुबन्ध-लोपे "आतो लोप इटि चे"त्याकारलोपे कृदन्तत्वात्प्रातिपदिकसंज्ञायां द्वितीयैकवचने विभ-क्तिकार्य्ये कृते गर्भधमिति पदं सिध्यति। "रेतः शुक्रेऽथ तेजसी"तिकोशादौ दर्शनादिह पूर्वाचार्य्यकृतवेदभाष्यपङ्क्तिस्थरेतश्शब्दस्तेजो वाचकश्च। अतः श्रुत्याभिहितम् "आहमजानि गर्भधमात्वमजासि गर्भधमिति प्रजा वै पशवो गर्भः प्रजामेव पशूनात्मन्धत्ते" ( श० ब्रा० १३।२।८।५। ) इति। ततोऽयमर्थः। हे अश्व, सर्वव्यापक, परमेश्वर, गर्भधं गर्भं दधातीति गर्भधं प्रजापशुधारकं प्रजापशुपोषकञ्च "डुधाञ् विधारणे पुष्टौ दाने चापि निगद्यते।" इति कल्पद्रुमोक्तेः प्रजापशुप्रदमपि रेतस्त्वदीयन्तेजः अहम् आ अजानि आकृष्य मनसा आभाव्य प्रक्षिपामि स्वशरीरे इति शेषः। अत्र आशंसायां लोट्। तथा त्वमपि गर्भधं प्रजा-पशुधारकं प्रजापशुपोषकं च प्रजापशुप्रदमपि स्वीयं तेज आ अजासि आकृष्य मनसा अज प्रक्षिपेत्यर्थः। मयीति शेषः। "अज गतिक्षेपणयोरि"त्यस्मादाशंसायां लोडर्थे लेट्, "लोडर्थे लेडि"ति पाणिन्युक्तेः। "लेटोऽडाटौ"इत्याडागमे अजतेर्लेण्मध्यमपुरुषैकवचने अजासीति रूपम्। तत्र आ ( आङ् ) इत्युपसर्गो व्यवहितेनापि क्रियापदेन सह सम्बध्यते "छन्दसि परेऽपि, व्यवहिताश्चे"[illegible]नात्। प्रजाः पशवश्च ब्रह्मणस्तेजोंशरूपा एव "पादोऽस्य विश्वा भूतानि त्रिपाद[illegible]तिश्रुतेः, "तत्सृष्ट्वा तदेवानुप्राविशदि"तिश्रुत्यन्तराच्च, "ममैवांशो जीवलोके जीवभूतः सनातनः"इति भगवद्वाक्याच्च। राज्ञा सह राज्या अर्धशरी-[illegible]तः महिषी तदर्थं प्रजापशुधारकं प्रजापशुपोषकं च प्रजापशुप्रदमपि ब्राह्मं तेजो याचते। [illegible]ह्मं तेजो विना सम्राट् सर्वथा जगद्रक्षणसमर्थः स्यादिति भावः। प्रजापालनमेव तस्य महत्कृत्यमितिस्मृतिसम्मतम्। तदुक्तञ्च मनुना "क्षत्रियस्य परो धर्म्मः प्रजानामेव पा-लनमि"ति। एवं सत्येव "राज्ञोऽश्वमेधेऽधिकारः पुत्रकामस्य सर्वकामस्य वे"ति कात्यायन-श्रौतसूत्रमपि सङ्गच्छते। न ह्यश्वशब्देन इह प्राकृतोऽश्वोऽभिप्रेत इति तु पूर्वमन्त्रव्याख्यायां सविशेषमुक्तं मया, तत्तु तत्रैव द्रष्टव्यम्। इह तु विस्तरभिया पुनर्नोच्यते, तत्रोक्तत्वात्। अश्वशब्देन विराड्देही सच्चिदानन्दाख्यः परमेश्वरोऽभिधीयते, इति तु उपनिषत्सु सुप्र-

सिद्धं, तथा च बृहदारण्यकोपनिषदि "ऊषा वाऽअश्वस्य मेध्यस्य शिरः सूर्य्यश्चक्षुर्वातः प्राणो मुखमग्निः सँव्वत्सरऽआत्मे"ति।

गणानान्त्वेति त्रिभिर्म्मन्त्रैस्त्रिभिः प्रदक्षिणायाः श्रुत्युक्ताभिप्रायो वर्ण्यते मया। तथाहि—सर्वाः पत्न्योऽश्वस्य नवकृत्वः प्रादक्षिण्येन स्वस्वशरीरस्य नवच्छिद्राण्यपिधाय विषयवासनातः स्वस्वप्राणान्परिहृत्य धर्म्मानुकूलनियमतः कामक्रोधादिराहित्येन यमनियमवत्यो भूत्वा नव प्राणान् स्वस्वशरीरस्थप्राणायतनेषु स्थापयन्तीत्याशयः। तदुक्तञ्च श्रुत्या "नवकृत्वः परियन्ति नव वै प्राणाः प्राणानेवात्मन्धत्ते।" इति। 'धत्ते' इत्यत्र प्रथमपुरुषबहुवचनस्थाने प्रथमपुरुषैकवचनं बोध्यं, "तिङां तिङः"इतिवचनात्। मनुनाप्युक्तं द्वितीयाध्याये यथा "वेदास्त्यागाश्च यज्ञाश्च नियमाश्च तपांसि च। न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्॥" इति। ततः प्रदक्षिणानन्तरं पशोः प्राणसंशोधने प्राणदाने च सति राजमहिषी प्राकृताश्वसमीपे उपविश्य मृतस्याश्वस्य नवप्रादक्षिण्येन पूर्वमावाहितमश्वं सर्वव्यापकं परमेश्वरं मनसा आभाव्य शेते विषयतो मनोनिवृत्त्यर्थं स्वचक्षुर्द्वयमुन्मीलयति। तदानीं चक्षुर्द्वयमुन्मील्य स्वाभिप्रेतार्थं ततः प्रार्थयतीति मन्त्रसमुदायस्य तात्पर्य्यार्थः। अत आदावेव दीक्षणीयेष्टिः क्रियते, तत्र हि यमनियमग्रहणं यथावद्विहितम्।

नह्यदीक्षितस्य श्रौतकर्म्मसु प्रवेशः। उक्तञ्च "श्रौती स्मार्त्ती तान्त्रिकी च दीक्षा हि त्रिविधा मता। श्रौते श्रौती समाख्याता स्मार्त्ते स्मार्त्ती तथा पुनः। तान्त्रिकी तु तथा ह्येषा येषां न श्रुतिगोचरा॥" इति। अत एव शिवेनोक्तम्—"अदीक्षितस्य वामोरु कृतं सर्वमनर्थक"मिति। "स्त्रीशूद्रानुपनीतानां त्रयी न श्रुतिगोचरे"ति वचनाद्यद्यपि स्त्रियाः श्रौत्यां दीक्षायां नाधिकारः किन्तु "मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीमि"ति "पत्न्याऽऽज्यमवेक्ष्यते यजमानो वेदं बध्नाती"ति दर्शनात् "नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम्। पतिं शुश्रूषते येन तेन स्वर्गे महीयते" इति मनूक्तेश्च पत्या सह स्त्रिया अप्यधिकारः। अतः कात्यायनेनाप्युक्तं "स्त्रीचाविशेषादि"ति। "पत्युर्नो यज्ञसंयोगे" इत्यन्यत्रापि दृश्यते श्रूयते च, अतः स्त्रिया अपि श्रौत्यां दीक्षायामधिकार इति सिद्धान्तः। एवं दीक्षणीयेष्ट्या दीक्षिताया यमनियमवत्या राजमहिष्या मृताश्वेन सह भाष्याभिप्रायानभिज्ञैर्यैः कैश्चिदपि ग्राम्यधर्म्मः सम्भावित इति तु महदाश्चर्यं प्रागवभृथान्मांसमैथुनानृतभाषणादीनान्निषेधात्। ये वेदभाष्यकारस्याभिप्रायं न विदन्ति तेषां कामाद्यासक्तचेतसां मलिनान्तःकरणत्वाद्धृदि एवमेव शास्त्रविरुद्धं लोकविरुद्धं च वाग्जालं परिस्फ[illegible] भाष्यस्य वाऽऽशयमबुध्वा ये केचन वेदं भाष्यकारं वा वृथा निन्दन्ति [illegible]तो नाधिकारः। वेदस्तु परोक्षवादः, देवानां परोक्षप्रियत्वात्तत्र हि येऽनधिकारिणस्ते परोक्षवादं दृष्ट्वा तदभिप्रायमबुध्वा पशुवद्भ्राम्यन्ति। एवञ्च कस्मिंश्चिदंशे परोक्षवादत्वेन अविदितार्थतत्त्वाना[illegible] प्रतीत्या कर्म्मकालेऽपि कामादिग्राम्यवासनायाः स्फुरणत्वान्न वेदोक्तफललाभः [illegible]ष्टहेतुः प्रत्यवाय एव भवतीत्यर्थः। अत उक्तं मनुना "वेदास्त्यागाश्च यज्ञाश्च नियमाश्च तपांसि च। न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित्॥" इति। अतोऽधिकारिपरीक्षार्थं परोक्षवादत्वेन बहिरश्लीलार्थप्रतीत्या रहसि गूढार्थतया च क्वचित्कश्चिदंशः प्रतिभासते किन्तु मनने सति नाश्लीलार्थः प्रतिभाति। एतदभिप्रायेणैव पुराणे तन्त्रे च क्वचिदंशेऽश्लीलार्थगूढार्थोभयत्वेन निक्षिप्तः कश्चित्प्रस्तोभः। यथा श्रीमद्भागवते रासपञ्चाध्यायीरूपः। एवं तन्त्रे-

ष्वपि, यथा कुलार्णवे "ऋतुमत्या भगं पश्यन्नयुतं प्रजपेन्नरः। अनर्घ्यकविता तस्य गद्यपद्यमयी भवेत्॥" इति। एवं सर्वाणि वेदपुराणतन्त्रशास्त्राणि स्वर्गापवर्गसाधककर्म्मप्रतिपादकानि सन्ति तत्र सर्वत्रैवं वरीवर्त्ति, तच्च तत्तत्समालोचनावसरे स्पष्टीभविष्यति इह तु विस्तरभिया न प्रदश्यते। स्वर्गापवर्गौ च परः पुरुषार्थः। तत्साधनं च वेदपुराणतन्त्रान्यतरत एव भवितुमर्हति। तथाचोक्तं पुरुषार्थसाधको वेद इत्युपक्रम्य "अग्निहोत्रं जुहुयात्स्वर्गकामः। ज्योतिष्टोमेन यजेत स्वर्गकामः। राजा वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेन। तरति सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते।" इति। निष्कामत्वेन यज्ञकरणे सर्वेषां यज्ञानामात्मज्ञानप्राप्तिरेव फलं ततो ज्ञानान्मुक्तिः। उक्तञ्च "कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे॥" इति। एवं पुराणस्यापि स्वर्गापवर्गदत्वं श्रूयते। यथाहि सनकादीनां वाक्यं "श्रीमद्भागवतेनैव भुक्तिमुक्ती करे स्थिते।" इति। एवं तन्त्रस्यापि स्वर्गापवर्गदत्वं श्रूयते। यथाहि ताराहस्ये "लभते कवितां विद्यां सर्वशास्त्रार्थविद्भवेत्। लक्ष्मीमनश्वराम्प्राप्य भुक्त्वा भोगान्यथेप्सितम्॥ कीर्त्तिं कान्तिं च नैरुज्यम्प्राप्यान्ते मोक्षमाप्नुयात्।" इति। भैरवीतन्त्रे च बहुतरफलमनुक्रम्य "अन्ते च लभते देव्या गणत्वं दुर्लभं नरः। चन्द्रसूर्य्यसमो भूत्वा वसेत्कल्पायुतं दिवि॥" इति। लोकेऽपि दृश्यते। यथाहि "जगन्नाथमुखं दृष्ट्वा पुनर्जन्म न विद्यते" इत्याद्याप्तवाक्यप्रमाणात्परमपातकिनां चाण्डालादीनामपि भगवद्दर्शनेन मुक्तिफलं समं प्रतिभाति। किन्तु तत्रापि मानसिकवृत्तिपरीक्षार्थं कामशास्त्रोक्तग्राम्यभोगासनविशिष्टानि शिलामयस्त्रीपुरुषचित्राणि मन्दिरोपरि सन्ति तद्दर्शनेन येषां मनसि वैकृत्यं न जायते तेषामेव मुक्तिः, येषां तु हृदि वैकृत्यं जायते तेषां तु नैव मुक्तिः किन्तु विशिष्टतरपापमेव भवति, इति सकलजनानुभवसिद्धिरेव, "अन्यत्र सञ्चितं पापं तीर्थक्षेत्रे विनश्यति। तीर्थक्षेत्रे कृतं पापं वज्रलेपत्वमेष्यती"त्युक्तेः। धीरत्वं कालिदासेनाप्युक्तं "विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः" इति। एवं मृताश्वसमीपेऽपि शयनक्रिया अदृष्टफलेच्छया न तु ग्राम्यधर्म्मेच्छया तत्र शयनं, तथा च पुरा खलु मनुष्याणां जितेन्द्रियत्वादश्वमेधप्रचार आसीत्। कलौ तु तादृशां मनस्विनामभावादेवाश्वमेधो न भवति। कलियुगस्यादावेव जनमेजयस्याश्वमेधे मनुष्याणामजितेन्द्रियत्वाद्विघ्नः समजनीतिश्रूयते। अतस्तदूर्ध्वं यज्ञस्यास्य निषेधो जात इति हेतोरेव कलावश्वमेधो न क्रियते। अत उक्तञ्च "अश्वालम्भं गवालम्भं संन्यासं पलपैतृकम्। देवराच्च सुतोत्पत्तिः कलौ [illegible] र्जयेत्॥" इति। महीधरस्याप्ययमेवाशयः। स च तत्कृतवेदभाष्ये द्रष्टव्यः॥ [illegible]

मूलमन्त्रः शु. य. वे.। २३। २०॥

ता उभौ चतुरः पदः सम्प्रसारयाव स्वर्गे लोके प्रोर्णुवाथां वृषा वाजी रेतोधा रेतो दधातु॥ ३॥

अथ व्याख्या। ता उभाविति पूर्वमन्त्रशेषः। सगुणपुरुषाकारदशायां सर्वव्यापकस्य परमेश्वरस्य ऋतं सत्यं च पदद्वयं, प्रकृतिपुरुषौ वा पदद्वयमित्युपनिषत्सु प्रसिद्धं, राजशक्तिः प्रजाशक्तिश्चेति महिष्याः पदद्वयं, यथा न ऋतसत्याभ्यां प्रकृतिपुरुषाभ्यां वा विना प्रपञ्चवि-

स्तारस्तथैव राजशक्तिप्रजाशक्तिभ्यां विनापि न जगद्विस्तारः। यथा जडचैतन्याभ्यां जगदोतप्रोतं तथैव राजशक्तिप्रजाशक्तिभ्यामपि। अतस्तदुभयसम्पादनार्थं परमेश्वरं प्रार्थयते ता उभौ चतुरः पदः सम्प्रसारयावेति। हे अश्व, सर्वव्यापक, परमेश्वर, ता उभौ आवाम् अश्वमहिष्यौ पूर्वोक्तान् ऋतसत्यादिरूपान् चतुरः पदः पादान् सम्प्रसारयाव एवं संवेशनप्रकारः पटतन्तुवत्सूत्रे मणिवद्वा जगदोतप्रोतप्रकार इति भावः। एतदभिप्रायेणैव भगवताप्युक्तं, यथाहि "एतद्योनीनि भूतानि सर्वाणीत्युपधारय। अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा॥ मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव॥" इति। तथा च श्रुतिः "ता उभौ चतुरः पदः सम्प्रसारयावेति मिथुनस्यावरुध्यै" इति श० ब्रा० १३।२।८।५। एवं निर्दुष्टार्थत्वेऽपि अविदितार्थतत्त्वैरिह मृताश्वेन सह महिष्या ग्राम्यधर्म्मः कथं सम्भावितः। अहो दाम्भिकानामल्पधियां कथं बुद्धिविपर्ययः, प्राकृताश्वस्य तु चत्वारः पादा भवन्ति अत एव पशुश्चतुष्पाद् कथ्यते, इत्यागोपालाङ्गनादिप्रसिद्धिः। प्रथमतस्तु चतुष्पदद्विपदयोर्ग्राम्यधर्म्म एव शिष्टाचारविरुद्धस्तत्रापि मृतजीवितयोरिति तु महानसम्भवः। वेदस्याभिप्रेतश्चेदेवं तर्हि ता उभौ षट् पदः सम्प्रसारयावेत्येवं मन्त्रो विवक्षितः स्यान्न च तथा दृश्यते, अतः पूर्वोक्ताभिप्रायेणैव ता उभौ चतुरः पदः सम्प्रसारयावेत्येवमेव मन्त्रः। का० "अधीवासेन प्रच्छादयति स्वर्गे लोके"। २०। १५३ इति॥ अथ उपरिष्टाचाच्छादनक्षमं वासोऽधीवासस्तेनाश्वमहिष्यौ स्वर्गे लोके प्रोर्णुवाथामिति मन्त्रेणाध्वर्युः प्रच्छादयतीति सूत्रार्थः। अश्वदेवत्यम्। "एष वै स्वर्गो लोको यत्र पशुं सञ्ज्ञपयन्ती"तिश्रुतेरियं यज्ञभूमिः स्वर्गो लोकस्तत्र वास आच्छादनार्थं प्रयुक्तोऽयं मन्त्रः। अध्वर्युर्वदति हे अश्वमहिष्यौ युवां स्वर्गे लोकेऽस्यां यज्ञभूमौ प्रोर्णुवाथां वासः आच्छादयतम्। ऊर्णुञ् आच्छादने। कर्म्मविस्ताररूपं वासो महिषी प्रच्छादयतु तत्फलविस्ताररूपं वासोऽश्वः परमेश्वरोऽपि स्वर्गे लोगे द्युलोके, प्रच्छादयत्विति भावः। एतदभिप्रायेणैवाधीवासेन यज्ञभूमौ प्रच्छादनं, न चाभिप्रायान्तरेण। तथा च श्रुतिः–"स्वर्गे लोके प्रोर्णुवाथामित्येष वै स्वर्गो लोको यत्र पशुꣳ संज्ञपयन्तीति तस्मादेवमाह" (श०ब्रा० १३।२।८।५) इति, का० "अश्वशिश्नमुपस्थे कुरुते वृषा व्वाजी"ति २०।१५४॥ अश्नुते सर्वं जगदित्यश्वः सर्वव्यापकः परमेश्वरः "योऽसावादित्ये पुरुषः सोऽसावहमि"तिश्रुतिप्रतिपाद्यस्तस्य अश्वस्य शिश्नं 'शिष' हिंसार्थो धातुस्तत औणादिको नक्प्रत्ययः। धातोः षस्य शकारादेशश्छान्दसः शेषति तमोऽपहन्तीति शिश्नः प्रकाशः गायत्रीमन्त्रप्रति[illegible]र्गः सर्वप्रार्थनीयं सर्वपापानां भर्जनसमर्थं तेज इत्यर्थः। तं शिश्नं सर्वैः [illegible] तेजो राजमहिषी स्वयमेव उपस्थे स्वयोनौ स्वरूपे स्थापयतीति सूत्रार्थः। योनिशब्दोऽन्यत्रापि स्वरूपवाचक[illegible] च श्रुतिः "तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि व्विश्वे"ति, [illegible]त्यम्। अथ मन्त्रार्थः। वाज इति वेगनाम सोऽस्यास्तीति वाजी वेगवान् "अनेजदे[illegible]जवीयो नैनद्देवाऽआप्नुवन्पूर्वमर्शदि"त्यादिश्रुतिप्रसिद्धोऽश्वः सर्वव्यापकः परमेश्वरः रेतो दधातु। "रेतः शुक्रेऽथ तेजसी"ति कोषादौ दर्शनाद्रेतस्तेजस्तच्चेह ब्राह्मं वरेण्यं श्रुतिस्मृतिप्रतिपाद्यं "यदादित्यगतं तेजो जगद्भासतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमि"तिभगवद्वाक्याच्च। तत् रेतः ब्राह्मं तेजः दधातु स्थापयतु मयीतिशेषः। कीदृशोऽश्वः वृषा सेक्ता कामाभिवर्षुक इत्यर्थः। तथा रेतोधाः रेतो दधातीति रेतोधाः, रेतसः पूर्वो-

क्तस्य तेजसः, वीर्य्यस्य, पराक्रमस्य वा धारयितेत्यर्थः । एवं निर्दुष्टार्थत्वेऽपि अविदितार्थतत्त्वज्ञैर्मृताश्वेन सह राजमहिष्या ग्राम्यधर्म्मः (मैथुनधर्म्मः) कथं सम्भावितः । यस्मिन्नश्वमेधे राज्ञो धर्म्मात्मत्वप्रतिपादनमेव प्रयोजनं तत्र कामित्वमूलमश्वेन सह राज्ञ्या मैथुनकल्पनन्तु धर्म्मविरोधिनामेव कृत्यं सम्भवितुमर्हति, किमधिकं च वक्तव्यम्, अवशिष्टन्तु वक्ष्यमाणमन्त्रव्याख्यायामग्रे स्फुटीभविष्यति । महीधरस्याप्ययमेवाशयः । स च तत्कृतवेदभाष्ये द्रष्टव्यः ॥२३।२०॥ [ ३ ]॥

॥ मूलमन्त्रः । शु. य. वे. वा. मा. सं. २३।२१ ॥

**उत्सक्थ्या॒ऽअव॒ गुदं॑ धेहि॒ सम॒ञ्जिं चा॑रया वृषन् ।**

**यः स्त्री॒णां जी॑व॒भोज॑नः ॥ ४ ॥**

अथ व्याख्या । "उत्सक्थ्या इत्यश्वं यजमानोऽभिमन्त्रयते"(का०२०।१५५॥) इति । अध्वर्युर्माभूदिति हेतोर्यजमानग्रहणमन्यत्तु स्पष्टार्थम् । अश्वदेवत्या गायत्री । यतो महिष्या मृताश्वेन सह ग्राम्यधर्म्मो (मैथुनधर्म्मो) विरुध्यते, अतोऽत्र इत्थं बोध्यं 'गुद क्रीडायामि'ति धातोर्घञर्थे कप्रत्ययः । गुदशब्दस्य पायौ रूढित्वेनापि उत्सक्थ्या अवगुदन्धेहीत्यत्र यौगिककल्पनया गुदशब्दः क्रीडावाचकः । एवं वेदे[1] भूरिशो यौगिका एव शब्दा दरीदृश्यन्ते । ते च इह विस्तरभिया न प्रदर्श्यन्ते । मन्त्रब्राह्मणेषु बहुशो वर्त्तन्ते, ते च तत्र द्रष्टव्याः । यौगिकशब्दनिर्वचनार्थमेव निरुक्तशास्त्रं प्रवृत्तम् । अत उक्तं भाष्यकारेण 'ऊहः खलु कर्तव्यः'इति । ततोऽयमर्थः ।

हे वृषन्, सेक्तः, कामाभिवर्षुक, अश्व, सर्वव्यापक, परमेश्वर, उत्सक्थाः उत् ऊर्ध्वं सक्थिनी यस्याः सा उत्सक्थी तस्याः उत्सक्थ्याः उत्कृष्टजङ्घायाः महिष्याः गुदम् अव गुदो-

---

१ वेदे यौगिकशव्दा यथा-शु० य० वे० अ० १क० १ वायव स्थ. देवोव इत्यत्र 'वा गतिगन्धनयोः' वान्ति गच्छन्तीति वायव इति व्युत्पत्त्या वायुशब्देन मातृभ्यः सकाशादन्यत्र गन्तारो वत्सा उच्यन्ते । पुनः शु० य० वे० १ अ० २ क० वसोः पवित्रमित्यत्र 'वस निवासे' वासयति वृष्यादिद्वारा स्थापयति विश्वमिति वसुर्यज्ञः । अत्रापि यौगिक[illegible]शब्दो यज्ञवाचकः । पुनः शु० य० वे० अ० ३ क० ६ आयङ्गौरित्यत्र 'गम्लृ गतौ' गच्छतीति गौः[illegible]निष्पत्तये तत्तद्यजमानगृहेषु गन्ताऽग्निरुच्यते नतु गोपशुः । पुनस्तत्रैव. क० महिषो दिवमित्यत्र 'षणु दाने' महि माहात्म्यं यागकर्तृस्वरूपं सनोति ददातीति महिष इति व्युत्प[illegible]शब्देन वह्निरभिधीयते न च यमवाहनं महिषपशुः । पुनस्तत्रैव ८ क० पतङ्गाय धीयते इत्यत्र पतन् [illegible]पतङ्गः अग्निः । अत्रापि यौगिककल्पनयैव पतङ्गशब्दोऽग्निवाचको न तु पतङ्गः पक्षिसूर्य्ययोरिति कोषादिप्रमाणतः सूर्य्यः पक्षी वा । पुनस्तत्रैव १३ क० उभावामिन्द्राग्नी इत्यत्र 'इदि परमैश्वर्य्ये' इन्दतीति इन्द्र इति व्युत्पत्त्या इन्द्रशब्देन यज्ञसाधकत्वरूपैश्वर्य्ययुत आहवनीयोऽग्निरभिधीयते न च देवराडिन्द्रः । तथा तस्मिन्नेवाध्याये १६ क० सहस्रसामृषिमित्यत्र 'ऋष गतौ' अर्षति दोहनस्थानं गच्छतीति ऋषिर्गौरिति व्युत्पत्त्या ऋषिशब्देन गौरभिधीयते न च मन्त्रद्रष्टा वसिष्ठादिः । इत्थं दिङ्मात्रमिह प्रदर्शितं विशेषतस्तु मन्त्रब्राह्मणेषु स्पष्टमित्यलम् ॥ * ॥

परि क्रीडायामित्यर्थः। रेतो धेहि वीर्य्यं धारय "वीर्य्यं बले प्रभावे चे"ति कोषादौ दर्शनात् क्रीडायां बलं स्थापयेति भावार्थः। नहि बलं विना क्रीडा सम्भाव्यते, अतः परमेश्वराद्बलं प्रार्थयत इति फलितार्थः। "वीर्य्यं तेजः प्रभावयोः, शुक्रे शक्तौ चेति हैमः" इत्यमरटीकादौ स्पष्टदर्शनाद्वीर्य्यशब्दः शक्तिवाचकोऽपि, नहि शक्तिं विना यागादि किमपि कर्म्म कर्तुं शक्यते अतः शक्तिं याचते निर्विघ्नपूर्वकयागपरिसमाप्त्यनन्तरानन्दक्रीडायां रेतः वीर्य्यं शक्तिं धेहि इति वा वक्तुं शक्यते। रेतो वीर्य्यं बलं शक्तिं वा कथं दधामीत्यपेक्षायामुच्यते। अञ्जि लिङ्गं सञ्चारय अनक्ति व्यनक्ति पुंस्त्वम् अर्थात्पुरुषार्थबोधकं स्वर्गापवर्गदं धर्म्ममित्यञ्जिर्लिङ्गं धर्म्मप्रवर्त्तकचिह्नं प्रकाशाख्यमित्यर्थः। पुंस्त्वं तु स्वर्गापवर्गौ परः पुरुषार्थ इत्यन्यत्रापि स्पष्टं, "धर्म्मध्वजी लिङ्गवृत्ति"रित्यादौ लिङ्गशब्दस्य धर्म्मचिह्नवाचकत्वादिहापि लिङ्गशब्दो धर्म्म-चिह्नवाचकः स चेह सूर्य्यप्रकाश एव गृह्यते अर्थसाहचर्यात्। "यदेतन्मण्डलन्तपती"ति श्रुतेः। "यदादित्यगतं तेजो जगद्भासयतेऽखिलमि"ति स्मृतेश्च। अश्नुते सर्वं जगदित्यश्वः परमेश्वरस्तस्य श्रुतिस्मृतिप्रतिपाद्यं सकललोकप्रसिद्धं सूर्य्यगतं प्रकाशाख्यं यत्तेजस्तदिह प्रार्थ्यते। तद्यथा–हे अश्व, सर्वव्यापक, परमेश्वर, अञ्जि लिङ्गं धर्म्मप्रवर्त्तकं चिह्नम् अर्थात् सूर्य्यगतं स्वीयं तेजःप्रकाशाख्यं सञ्चारय योनौ प्रवेशय लोके प्रवर्त्तयेति भावः। सूर्य्य-प्रकाशात्प्रायेण धर्म्मः प्रभवति सूर्य्यप्रकाशाभावे च रजन्यां स्तेयं व्यभिचारादिकं च वर्धते। अतोऽन्यत्राप्युक्तम्—"आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिर-ण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥" इति। अञ्जिरित्यत्र व्यक्त्यर्थादञ्जू-धातोरौणादिक इप्रत्ययो बोध्यः। योऽञ्जिः सूर्य्यप्रकाशः स्त्रीणां जीवभोजनः "कामश्चाष्टगुणः स्मृतः"इत्यादिवचनेन पुरुषापेक्षया स्त्रीणां कामाधिक्यादिह स्त्रीणामित्युक्तं, किन्तु स्त्रीणामिति पुरुषाणामप्युपलक्षकं स्त्रीणां पुरुषाणां च योऽञ्जिः जीवभोजनः जीवयतीति जीवः भोजय-तीति भोजनः जीवश्चासौ भोजनश्चेति जीवभोजनः यस्मिन् अञ्जौ लिङ्गे धर्म्मप्रवर्त्तकचिह्ने सूर्य्यप्रकाशे योनौ प्रकृतौ प्रकृत्यात्मिकायां जगत्यां प्रविष्टे सति स्त्रिय इत्युपलक्षणं स्त्रियः पुरुषाश्च कृष्यादिजीवनोपायेन याजनाध्यापनप्रतिग्रहैश्च केचिज्जीवन्ति यथाशक्ति अभ्या-गतादिसत्कारेण अध्ययनयजनदानैश्च ऐहिकाऽऽमुष्मिकान् भोगांश्च लभन्ते तं प्रकाशं लोके प्रवर्त्तयेति भावः। भोजन इति भुजेरौणादिको ल्युः प्रत्ययः। सूर्य्योदयाभावे रात्रावेव सत्यां कामिन्यः स्त्रियः कामिनः पुरुषाश्च कामसेवनादनिवृत्ताः सद्यः सद्यो म्रियेरन्। सति सूर्य्योदये दिवा मैथुनस्य निषेधात्सर्वप्रकाशः स्त्रीणां पुरु[illegible]भोजनः प्राणरक्षको भोग्यप्रदोऽपि भवतीति सकलजनानुभवसिद्धमेव। [illegible]ऽपि वेदार्थतत्त्वानभि-ज्ञैरिह महिष्या मृताश्वेन सह कथं ग्राम्यधर्म्मः सम्भावितः। अवगुदन्धेहीत्यनेन महिष्या गुदोपरि वीर्य्यपातनं यैः सम्भाव्यते तेन च तेषां बुद्धिविपर्य्ययो ध्वन्यते, स्त्रिया [illegible] शुक्रपातः प्रसिद्धो नतु गुदोपरि। अहो कामिनामन्धत्वं रेतःपातः कुत्र क्रियते कु[illegible] न बुध्यते किं, गुदोपरि रेतःपातस्तु सर्वथा शिष्टाचारविरुद्ध एव "रेतः सिक्त्वा गुदायान्तु चरेत्सान्तपनव्रतमि"ति वचनात्। लिङ्गशब्दो योनिशब्दश्च प्रकरणवशाद्वक्तुरभिप्रायभेदतोऽ-नेकार्थकोऽन्यत्रापि दृश्यते श्रूयते च यथा तैत्तिरीयारण्यके (प्र० १ क० ६) "नानालिङ्ग-त्वादृतूनां नानासूर्य्यत्वमि"त्यत्र लिङ्गशब्दो हि ऋतुवाचको न चोपस्थेन्द्रियवाचकः। तथा च सांख्यसूत्रे "अव्यक्तं त्रिगुणल्लिङ्गादि"त्यत्र लिङ्गशब्दो गुणत्रयवाचकः। वाल्मी-

कीय रामायणे उत्तरकाण्डे ( स० ३२ श्लो० ५२। ) "यत्र यत्र च याति स्म रावणो राक्षसेश्वरः। जाम्बूनदमयं लिङ्गं तत्र तत्र स्म नीयते ॥" इत्यत्र लिङ्गशब्दः शिवरूपिणः परमात्मनो मूर्त्तिवाचकः। मनुस्मृतौ ( अ० ८ श्लो० २४९ ) 'सीमालिङ्गानि कारयेदि"त्यत्र लिङ्गशब्दः सीमावाचकः। न्यायसूत्रे ( अ० १ पा० १ सू० ४। ) इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमि"त्यत्र लिङ्गशब्द आत्मनो गुणवाचकः। "न लिङ्गं धर्म्मकारणमि"त्यत्र लिङ्गशब्दः शिखासूत्रादि चिह्नवाचकः। "यत्र लिङ्गज्ञानेन लिङ्गिनो ज्ञानं जायते तदनुमानमि"त्यत्र लिङ्गशब्दो धूमादिवाचकः। वैशेषिकदर्शने ( अ० २२आ० १ सू०२०। ) "निष्क्रमणप्रवेशनमित्याकाशस्य लिङ्गमि"त्यत्र लिङ्गशब्द आकाशवाचकः। अन्यत्रापि सङ्ग्रहे सूक्त्यावल्यां च "धर्म्मस्य तस्य चिह्नानि दयाक्षान्तिरहिंसनम्। ततो दानं च शीलं च सत्यं शौचं वितृष्णता ॥" इत्यत्र लिङ्गशब्दो धर्म्मचिह्नवाचकः। भविष्यपुराणे—"आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका। आलयं सर्वभूतानां लयनाल्लिङ्गमुच्यते ॥ १ ॥ लिङ्गमध्ये जगत्सर्वं त्रैलोक्यं सचराचरम्। लिङ्गे तु पूजिते सर्वमर्चितं स्याच्चराचरम् ॥ २ ॥ यो लिङ्गं द्वेष्टि संमोहात्सर्वदेवनमस्कृतम्। नरो नरकगामी स्यात्तस्य सम्भाषणादपि ॥३॥" इत्यादिषु लिङ्गशब्दो विराड्पुरुषवाचकः। "अप्शब्दो नियतस्त्रीलिङ्गो बहुवचनान्तश्चे"त्यत्र लिङ्गशब्दः स्त्रीलिङ्गवाचकः। जैमिनीयसूत्रे ( अ० ३। पा० ३। अ० १ ) "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि"त्यत्र लिङ्गशब्दोर्थप्रकाशनशब्दसामर्थ्यवाचकः। "शब्दसामर्थ्यं लिङ्गमि"त्यन्यत्राप्युक्तम्। शतपथब्राह्मणे (का० १४। अ० ७। ब्रा० १। क० ८। ) "तदेष श्लोको भवति तदेव सक्तस्सह कर्म्मणेति लिङ्गं मनो यत्र निषक्तमस्ये" त्यादौ लिङ्गशब्दो लिङ्गशरीरवाचकः। नच पूर्वोक्तस्थलेषु कुत्रचिल्लिङ्गशब्द उपस्थेन्द्रियवाचकः। एवं योनिशब्दोऽपि प्रकरणवशाद्वक्तुरभिप्रायभेदतोऽनेकार्थवाचको यथा ( शु० य० वे० वा० मा० सं० अ० ७ क० ११। ) "एष ते योनिर्मो्द्भ्रीभ्यान्त्वे"त्यत्र योनिशब्दः स्थानवाचकः। पुनः ( शु० य० वे वा० मा० सं० ८। क० २२। "यज्ञो यज्ञङ्गच्छ यज्ञपतिङ्गच्छ स्वां योनिङ्गच्छ स्वाहे"त्यत्र द्रव्यदेवताक्रियाशक्तिवाचकः। स्वां योनिं स्वकारणभूतां वायोः क्रियाशक्तिं गच्छ द्रव्यं देवता च यज्ञस्य योनिरिति भाष्यकृतः। पुनः ( शु० य० वे० वा० मा० सं० अ ३१। क० १९। ) "तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वे"त्यत्र योनिशब्दः परब्रह्मणः स्वरूपवाचकः। गीतायां भग[illegible] यथा हि "एतद्योनीनि भूतानि सर्वाणीत्युपधारये"त्यत्र योनिशब्दः कारणवाचकः। [illegible]निर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहमि"त्यत्र योनिशब्दः प्रकृतिवाचकः। हरिवंशे विष्णुपर्वणि अ० ५० "नारायणं जगद्योनिं पुराणं पुरुषं ध्रुवमि"त्[illegible]योनिशब्दः कारणवाचकः। "दिव्याः काञ्चनरत्नाद्या दिव्याभरणयोनयः" इत्यत्र [illegible]ब्दः आसनवाचकः। "पञ्चयोनिसमुत्थानि गन्धचूर्णान्यनेकशः" इत्यत्र योनिशब्दः कारणवाचकः। यथा पूर्वोक्तस्थलेषु नहि कुत्रचिद्योनिशब्दः स्त्रिया उपस्थेन्द्रियवाचकः, तद्वदत्रापि सुज्ञैर्बोद्धव्यम्। एवं निर्दुष्टार्थत्वेऽपि अश्लीलार्थपरिकल्पनं न्यायविरोधिनां कृत्यं नतु वास्तविकतयाऽश्लीलार्थः, महिष्या मृताश्वेन सह ग्राम्यधर्म्मस्यासम्भवाज्जीवितेन सह शिष्टाचारविरोधाच्च। महीधरस्याप्ययमेवाशयः। स च तत्कृतवेदभाष्ये द्रष्टव्यः। य स्त्रीणामित्यत्र संहितायां विसर्गलोपश्छान्दसः ॥ २३। २१ ॥ [ ४ ] ॥

॥ मूलमन्त्रः शु. य. वे. अ. २३ क. २२ ॥

यकाऽसकौ शकुन्तिका हलगिति वञ्चति ।
आहन्ति गभे पसो निगल्गलीति धारका ॥ ५ ॥

अथ व्याख्या। का० "अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते यकाऽसकाविति दशर्चस्य द्वाभ्यां द्वाभ्याᳬ हये हयेऽसावित्यामन्त्र्यामन्त्र्य" (।२०।५६।) अध्वर्य्यादयः पञ्च हये हयेऽसाविति सम्बुद्धय तन्नामोच्चारणपूर्वकं सम्मुखीकृत्य यकाऽस्काविति दशर्चसम्बन्धिनीभ्यां द्वाभ्यामृग्भ्यां कुमारीपत्नीभिः सह सोपहासं सकाकुमित्यर्थः, संवदन्ते । तत्र प्रथममध्वर्य्युः कुमारीं पृच्छति, कुमारि, हये हये कुमारि ! यकासकौ शकुन्तिकेति सूत्रार्थः । कुमार्य्यादिदेवत्या दश, तन्मध्ये द्वितीयोपरिष्टाद्बृहती अन्या नवानुष्टुभः।'विड्वै शकुन्तिके'ति- श्रुतेरिह शकुन्तिकाशब्दः कुत्सितप्रजावाचकः। तत्राध्वर्य्युरङ्गुल्या योनिं प्रकृतिं प्रकृत्यात्मिकां प्रजां प्रदर्शयन्नाह हये हये कुमारि यकासकाविति। "अव्ययसर्वनाम्नामकच् प्राक्टेरि"त्यकच् कुत्सायाम् । अल्पा शकुन्तिः शकुन्तिका, "अल्पे"इति कन् । हये हये कुमारि, यकाऽसकौ या असौ शकुन्तिका अल्पपक्षिणीव राज्ञः कोपात्सद्यो विनश्यमाना स्वार्थसाधनरता कुत्सिता प्रजा आहलगिति शब्दानुकरणम् । हले हले इति शब्दयन्तीतिशेषः, मृदुभाषमाणा वञ्चति राजानं प्रतारयति राज्ञे देयभागमपि नैव दातुमिच्छति किन्तु स्वार्थमेव गच्छतीत्यर्थः । कुत्सिता प्रजा सैवास्ति या स्वार्थसाधनरता सती धर्म्मिष्ठमपि राजनं वञ्चयेदिति भावः । यथा पक्षिणी कोकिला स्वार्थसाधनरता सती मधुरभाषणेन राजानं व्यामोहयति तद्वत्प्रजाऽपीत्यर्थः । तथा च श्रुतिः "यकाऽसकौ शकुन्तिकेति विड्वै शकुन्तिका हलगिति वञ्चतीति विशो वै राष्ट्राय वञ्चन्ती"ति शतपथब्राह्मणे १३।२।९।६ ॥ स्त्रीणां स्त्रीवन्मोहयित्रीणां प्रजानां शीघ्रगमने राजपुरुषाज्ञया राज्ञः समीपगमने सति (तत्र हि सत्वरं भिया गम्यते) योनौ स्थाने राजभवने हलहलाशब्दस्तन्मोहनार्थं मधुरशब्दो भिया कातरशब्दो वा भवतीति सुप्रसिद्धमेव । यथा स्त्रीजनो मधुरभाषणेन तीक्ष्णतरमपि पुरुषं मोहयति तद्वत्प्रजाजनोऽपि दुर्द्धर्षमपि राजानं मधुरभाषणेन मोहयतीत्यभिप्रायेणैवमाह आहलगिति वञ्चतीति । योनिशब्दोऽन्यत्रापि स्थानवाचको यथा ( शु० य० वे० ७।११।) "एष ते योनिर्माध्वीभ्यान्त्वे"ति ॥ "आहन्ति गभे पस"इति-"विड्वै गभो राष्ट्रं पसः" इति श्रुते[illegible]शब्दः प्रजावाचकः पसशब्दश्च राष्ट्रवाचकस्ततोऽयमर्थः । गभे विशि प्रजाय[illegible] आहन्ति करं गृहीतुमागच्छति तदा धारका धान्यादिसकलवस्तूनां धारयित्री प्रजा निगल्गलीति 'शब्दानुकरणं' नितरामत्यन्तं गलगलेति करोति । अहोऽयं राजा गलग्रहणेन मां पीडयतीति करप्र[illegible] स्वार्थसाधनरता प्रजा प्राय एवं वदतीति भावः । नीतिविरुद्धमेवैतत् । राज्ञो[illegible] दातव्य एव करप्रदाने सत्येव प्रजा सर्वथा सुखमश्नुते । स्वार्थसाधनरता प्रजा राज्ञे करं न दातुमिच्छति प्रत्युत राज्ञ एव दोषं वदति तस्मात्प्रजैव सर्वथा सदोषा न च राजेति स्वार्थसाधनरताप्रजानिन्दायां मन्त्रतात्पर्य्यमवगन्तव्यम् । तथा च श्रुतिः "आहन्ति गभे पसो निगल्गलीतिधारकेति विड्वै गभो राष्ट्रं पसो राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशं घातुकः" इति शतपथब्राह्मणे (१३।२।९।६॥) गभे इत्यत्र वर्णव्यत्ययेन भगे योनौ प्रकृतौ प्रकृत्यात्मिकायां

शकुनिसदृश्यां रक्षकस्य कोपात्सद्यो विनश्यमानायां विशि प्रजायां पसो लिङ्गं लिङ्गशरीरी राजा आहन्ति करं गृहीतुमागच्छति । अर्थात् यदा भगे योनौ प्रकृत्यात्मिकायां प्रजायां शिश्नमागच्छति ( शिषधातुर्हिंसार्थस्तत औणादिको नक्प्रत्ययः बाहुलकात्षस्य शः लिङ्गव्यत्ययश्च ) शेषति प्रजादुःखम् अपहन्तीति शिश्नः राजा आगच्छति करग्रहणार्थं तदा धारका धरति लिङ्गं धान्यादिसकलभोग्यपदार्थचिह्नं या सा धारका योनिः प्रकृतिः प्रकृत्यात्मिका प्रजेत्यर्थः, निगल्गलीति नितरां वीर्य्यं पराक्रमं गलति क्षरति प्रस्रवतीत्यर्थः । एवमपि कैश्चिद्व्याख्यातं परोक्षवृत्त्या तदप्यस्मद्भाष्यसम्मतमेव । प्रकृत्यात्मिका प्रजैव सदोषा नतु राजेति सर्वेषां तात्पर्य्यम् । अतोऽध्वर्युस्तदुद्दिश्य कुमारीं प्रत्याह यकासकाविति । योनिशब्दो लिङ्गशब्दश्च प्रकरणवशाद्वक्तुरभिप्रायभेदतोऽनेकार्थक इति तु उत्सक्थ्या अवगुदन्धेहीतिमन्त्रव्याख्यायां सविस्तरं प्रागुक्तं तत्प्रमाणमपि तत्रैव द्रष्टव्यम् । इह तु भगशब्दस्यानेकार्थत्वे प्रमाणानि प्रदर्श्यन्ते । यथा ( शु० य० वे० ३४।३६। ) भगप्रणेतर्भगसत्यराधो भगेमान्धियमुदवाददन्नः । भग प्रनो जनय गोभिरश्वैर्भग प्रनृभिर्नृवन्तः स्याम ।।" इत्यादौ भगशब्दः आदित्यवाचको न च स्त्र्युपस्थेन्द्रियवाचकः । तथा भग इति धनमानेति निघण्टुः, यथा—( ऋ० वे० सं० २।६।६।६। ) "शिक्षास्तोतृभ्यो मातिधग्भगो नः ।" इति । मेदिनीकोषेऽपि यथा "भगं श्रीयोनिवीर्य्येच्छाज्ञानवैराग्यकान्तिषु । माहात्म्यैश्वर्य्ययत्नेषु धर्म्मे मोक्षेऽथ नारदावि"ति । "ऐश्वर्य्यस्य समग्रस्य धर्म्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणेत्युक्तेः । एवं भगशब्दो योनिवाचकः, योनिशब्दश्च प्रकृतिवाचकः, प्रकृत्यात्मिका च प्रजा । एतदभिप्रायेणैव गभे इत्यत्र भगे इति वर्णव्यत्ययेन तैर्व्याख्यातम् । महीधरस्याप्ययमेवाशयः । स च तत्कृतवेदभाष्ये द्रष्टव्यः ।।२३।५।। [५] ।।

मूलमन्त्रः । शु० य० वे० वा० मा० सं० २३।६ ।

यकोऽसकौ शकुन्तकऽआहलगिति वञ्चति ।

विवक्षतऽइव ते मुखमध्वर्यो मा नस्त्वमभिभाषथाः ।। ६ ।।

अथ व्याख्या । अङ्गुल्या शिश्नं शेषति प्रजादुःखमपहन्तीति शिश्नः राजा तम् अङ्गुल्या प्रदर्शयन्ती कुमारी अध्वर्युं प्रत्याह । हे अध्वर्य्यो, यकः यः असकौ असौ शकुन्तकः अल्पः शकुन्तः शकुन्तकः का[illegible]शीलत्वात्पक्षीव सद्यो विनश्यमानः स्वार्थसाधनरतः राजा विवक्षतः प्रजादोष[illegible]तस्ते तव मुखमिव आहलगिति वञ्चति अहमेव [illegible] भोक्ता भवेयं मदधीनमेव सर्वं भोग्यं वस्तु स्यादिति मत्वा लोभेन धनाद्युत्तमव[illegible]र्थाय प्रजाजनान् वञ्चति प्रतारयति न वास्तविकतया प्रजां रक्षतीत्यर्थः । यथा तव मु[illegible]दोषं वक्तुमितस्ततश्चलति तद्वत् राजापि प्रजाधनं गृहीतुमितस्ततश्चलति कुत्र धनं प्राप्स्यामीति कामनया सर्वतो गच्छतीति भावः । अतोऽस्मान् प्रति मा अभिभाषथाः उभयोः प्रजाराज्ञोस्तुल्यदोषत्वात्प्रजादोषमस्मत्समीपे मा वदेत्यर्थः । सर्वथा राजैव सदोषो नतु प्रजाजन इति प्रजापक्षतः कुमारी स्वार्थसाधनतत्परराजदोषमध्वर्युं प्रति वदतीतिमन्त्रतात्पर्यमवगन्तव्यम् । अग्रभागे सच्छिद्रं लिङ्गं तव मुखमिव भासते इति कैश्चिद्व्याख्यातं तदपि न विरुद्धं, स्वार्थसाधनरतानां गणानामग्रभागे सच्छिद्रं सदोषं लिङ्गं लिङ्गशरीरोपेतं राजपुरुषवृन्दं

तव मुखमिव भासते, यथा प्रजादोषं वक्तुं तव मुखमितस्ततश्चलति तद्वत्प्रजाधनं नेतुमितस्ततो राजपुरुषवृन्दमपि चलतीति तेषां तात्पर्य्यं नान्यदाशयान्तरमिति भावः । महीधरस्याप्ययमेवाशयः । स च तत्कृतवेदभाष्ये द्रष्टव्यः ॥ २३ । ६ ॥ [६] ॥

मूलमन्त्रः शु० य० वे० अ० २३ क० २४ ।

माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः ।
प्रतिलामीति ते पिता गभे मुष्टिमतꣳसयत् ॥ ७ ॥

अथ व्याख्या । "द्यौः पिता पृथिवी माते" ति वेदेऽन्यत्र स्पष्टम् । मानुषादिसर्वप्राणिशरीरमपि द्यावापृथिवीभ्यामेव जायते अतो महिष्या अपि मातापितरौ तावेव स्थितौ ततोऽयमर्थः । महिषीं प्रति ब्रह्मा वदति, हे महिषि ! हये हये महिषि, ते तव माता इयं पृथिवी च पुनस्ते तव पिता असौ द्यौः यदा वृक्षस्य वृश्च्यते छिद्यते इति वृक्षो नश्वरं राष्ट्रमित्यर्थः । तस्य वृक्षस्य नश्वरस्य राज्यस्य अग्रं मुख्यं प्रधानांशं श्रियं लक्ष्मीं रोहतः आरोहतः आक्रमतः तदा ते तव पिता द्यौः द्युलोकाधिष्ठाता परमेश्वरः प्रतिलामीति वदन्निति शेषः, गभे मुष्टिम् अतंसयत् । "प्रतीत्येतस्य प्रातिलोम्यमर्थो ला आदाने, आदानं प्रतिकूलदानं" राज्यं ददामीति वदन्निति भावः । "विड्वै गभः" इति श्रुतेरिह गभशब्दः प्रजावाचकः "राष्ट्रं वै मुष्टी" तिश्रुतेरिह मुष्टिशब्दो राज्यवाचकस्ततोऽयमर्थः । राज्यं ददामीति वदन् परमेश्वरः विशि प्रजायां मुष्टिं राष्ट्रं राज्यम् अतंसयत् तंसतिः क्षेपणार्थः, प्राक्षिपदित्यर्थः । तस्मात्प्रजापालनेऽभिषिक्तो राजा प्रजातः करं गृह्णाति तस्मात्करग्रहणे राज्ञो न दोषः किन्तु या प्रजा राज्ञः करं दातुं नेच्छति तस्या एव दोष इति स्वार्थसाधनरताप्रजानिन्दायां मन्त्रतात्पर्यं, तथा च श्रुतिः "माता च ते पिता च त इति इयं वै मातासौ पिताऽऽभ्यामेवैनꣳ स्वर्गं लोकं गमयति । अग्रं वृक्षस्य रोहत इति श्रीर्वै राष्ट्रस्याग्रꣳ श्रियमेवैनꣳ राष्ट्रस्याग्रं गमयति । प्रतिलामीति ते पिता गभे मुष्टिमतꣳसयदिति विड्वै गभो राष्ट्रं मुष्टी राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशंघातुक" इति शतपथब्राह्मणे १३।२।९।७ वृक्षस्य वृक्षजस्य काष्ठमयस्य मञ्चकस्याग्रमुपरिभागं रोहतः आरोहतः ते पिता गभे भगे मुष्टिं मुष्टितुल्यं लिङ्गमतंसयत् तंसतिः क्षेपणार्थे एवं तवोत्पत्तिरित्यश्लीलं "तसि अलङ्कृतौ" चुरादिः, लिङ्गमुत्थानेनालंकरोतीति वा प्रतिलामीति वदन् "तिल स्नेहने [illegible]स्निह्यामीति वदन् एवं तवोत्पत्तिरिति कैश्चित्प्रतिपादितं तदपि नासमञ्जसं, [illegible]स्य काष्ठमयस्य मञ्चकस्य तद्वदुन्नतस्य राज्यस्याग्रमुपरिभागं लक्ष्मीमित्यर्थः, "श्रीर्वै राष्ट्रस्याग्रमि" तिश्रुतेः । ते तव माता च पुनः ते तव पिता तवेत्युपलक्षणं जगतो मातापितरौ भूलोकद्युलोकाधि[illegible] प्रकृतिपुरुषौ यदा आरोहतस्तदा ते तव पिता जगतः पिता परमेश्वरः "यो नः पित[illegible] यो विधाते" ति "स नो बन्धुर्जनिता स विधाते" ति च श्रुतेः, गभे भगे योनौ प्रकृत्यात्मिकायां विशि मुष्टिं "राष्ट्रं वै मुष्टी" तिश्रुतेः मुष्टितुल्यं स्थूलं महद्राज्यं लिङ्गं "तदेवसक्तस्सह कर्म्मणैति लिङ्गं मनो यत्र निषक्तमस्ये" तिश्रुतेर्लिङ्गं लिङ्गशरीरमतंसयत् प्रक्षिपति अतः परमेश्वरस्य सृष्टिप्रपञ्चसिद्ध्यर्थं जगत्यां राजतन्त्रप्रजातन्त्रव्यवहारः अतो राजा प्रजायाः करं गृह्णाति । "तसि अलतौ चुरादिः" लिङ्गं लिङ्गशरीरम् अर्थाल्लिङ्गशरीरिणां जीवम् उत्था-

नेनालङ्करोतीति वा लिङ्गशरीरिणो जीवस्योत्थानं ज्ञानद्वारैव भवति ज्ञानं तु परमेश्वराधीनं ज्ञानप्राप्तिस्तु परमेश्वरानुग्रहतो भवति अत उच्यते किं कुर्वन् प्रतिलामीति वदन्निति शेषः । "तिल स्नेहने" तव भोगेन स्निह्यामि त्वत्कर्तृकसपर्यादिना सन्तुष्टोऽहमिति वदन्नित्यर्थः, एवं तवोत्पत्तिरिति लोकेऽश्लीलं, पारमार्थिकदशायान्तु एवं तवोत्पत्तिः तवेत्युपलक्षणं जगत इति भावः । अमुना पूर्वोक्तप्रकारेण यतः प्रपञ्चविस्तारार्थं तवोत्पत्तिरतस्त्वं स्त्रीजातिः पुरुषान् व्यामोहयसीति काकुः, अतः प्रजास्थानिका स्त्रीशक्तिः प्रकृत्यात्मिका स्त्रीजातिर्वा राजानं व्यामोहयतीत्यभिप्रायः । परमेश्वरः स्वधर्म्मनिष्ठं राजानं "ऐश्वर्य्यस्य समग्रस्य धर्म्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणे"त्युक्तेः ऐश्वर्य्यादिषड्विधभगप्रदाने-नोत्थापयति स्वार्थसाधनतत्परा प्रकृत्यात्मिका प्रजा स्त्रीजातिर्वा राजानं व्यामोहयति तस्मा-त्प्रकृतिसंगादेव पुरुषो दुःखान्याप्नोति संसारबन्धनं च लभते । तस्मात्प्रकृत्यात्मिकायाः प्रजायाः स्त्रीजातेर्वा एव दोषो न तु राज्ञ इति प्रकृत्यात्मिकास्त्रीनिन्दायामेव तेषां तात्पर्य्यं तस्मात्संगो न विधेयः । तथा चोक्तं भगवता श्रीकृष्णेन "सङ्गात्सञ्जायते कामः कामात्क्रो-धोऽभिजायते । क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः । स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यती"ति । एवं सर्वं जगत्स्वार्थप्रियमेव न कश्चित्कस्यचिदर्थमपि । तथा च श्रुतिः "सहोवाच याज्ञवल्क्यः । न वाऽअरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वाऽअरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति न वाऽअरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भ-वन्ति न वाऽअरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति न वाऽअरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति न वाऽअरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति न वाऽअरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति न वाऽअरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति न वाऽअरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वाऽअरे सर्वस्य कामाय सर्वं प्रियं भव-त्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वाऽअरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वाऽअरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्वं विदितमि"ति शतपथब्राह्मणे १४।५।४।५।। एतदभिप्रायेणैव ब्रह्मा महिषीम्प्रत्येवं वदतीति भावः । महीधरस्याप्ययमेवा-शयः ।।२३।२४।। [७ [illegible]

मूलमन्त्रः । शु[illegible] य० वे० वा० मा० सं० २३।२५ ।

माता च ते पिता च तेऽग्रे वृक्षस्य क्रीडतः ।
विवक्षतऽइव ते मुखं ब्रह्मन्मा त्वं वदो बहु ॥ ८ ॥

अथ व्याख्या । प्रकृत्यात्मिका प्रजा स्त्रीजातिर्वा राजानं व्यामोहयति अतस्तस्या एव दोषो न तु राज्ञ इति पूर्वमन्त्रेण ब्रह्मा महिषीं प्रत्युक्तवान् । इदानीं प्रकृत्यात्मिकायाः प्रजायाः स्त्रीजातेर्वा पक्षतः सानुचरी राज्ञो महिषी ब्रह्माणं प्रत्याह हे ब्रह्मन्, ते तव माता च पुनः ते तव पिता च तवेत्युपलक्षणं जगतो मातापितरावित्यर्थः । प्रकृतिपुरुषभूतौ पृथिवीद्युलोकौ

अर्थात् तदधिष्ठातारौ प्रकृतिपुरुषौ वृक्षस्य छिद्यमानस्य विनश्वरस्य राज्यस्य अग्रे प्रथममेव क्रीडतः रमेते अतः प्रजाराज्ञोः राज्ञिराज्ञोर्वा क्रीडने प्रजायाः स्त्रीजातेर्वा एव दोष इत्येवं त्वया न वक्तव्यं "यत्रोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे" इति न्यायात्। एवं सत्यपि विवक्षतः प्रजादोषं स्त्रीदोषं वा वक्तुमिच्छत इव ते तव मुखं लक्ष्यते, इति शेषः। तस्मात् हे ब्रह्मन् त्वं बहु मा वदः प्रजासंगाद्योषित्संगाद्वा राजा स्त्रीसंगात्सामान्यपुरुषो वा दुःखान्याप्नोति संसारबन्धनं च लभते इति बहुलं मा ब्रूहीत्यर्थः। हे ब्रह्मन् ते तव माता ते पिता च यदा वृक्षविकारस्य मञ्चकस्याग्रे क्रीडतः रमेते तदा तवोत्पत्तिरिति तवापि तुल्यमिति देवानां परोक्षप्रियत्वाद्वेदस्य च परोक्षवादत्वादधिकारिणां परीक्षार्थं ग्राम्यशब्देन कैश्चित्प्रतिपादितं तदपि नासामञ्जस्यम्। हे ब्रह्मन्, ते तव माता ते पिता च तवेत्युपलक्षणं जगतो मातापितरावित्यर्थः। वृक्षस्य वृक्षजस्य मञ्चकस्य तद्वदुन्नतस्य प्रपञ्चमयस्य राज्यस्य अग्रे प्रथमं प्राकृतसृष्टेः पूर्वमेव क्रीडतः रमेते, "पतिश्च पत्नी च अकामयत एकोऽहं बहुस्यां प्रजायेयमि"त्यादिश्रुतेः। तदा तवोत्पत्तिः तवेत्युपलक्षणं जगत उत्पत्तिरिति भावः। एवं जगदुत्पत्तौ सत्यामन्योन्यासक्तयोः प्रकृतिपुरुषयोस्तदात्मिकयोः प्रजाराज्ञोः योषित्पुरुषयोर्वा समो दोषः "यत्रोभयोः समो दोषः परिहारोऽपि वा समस्तत्र नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे" इति न्यायात्। भोक्त्रधीनाया अबलायाः प्रजायाः स्त्रीजातेर्वा न कोऽपि दोषः किन्तु प्रजापेक्षया योषिदपेक्षया वा स्वतन्त्रस्य कर्त्तव्याकर्त्तव्यविचारवतो राज्ञः पुरुषसामान्यस्य वा एव दोषः बलवता दुर्बलो बाध्यते इति सकललोकप्रसिद्धिः, तस्मात्प्रकृतिस्तदात्मिका प्रजा स्त्रीजातिर्वा निर्दोषा पुरुष एव सदोष इति पुरुषनिन्दायामेव तेषां तात्पर्य्यं न त्वत्र कश्चित्तात्पर्य्यभेदः। महीधरस्याप्ययमेवाशयः। स च तत्कृतवेदभाष्ये द्रष्टव्यः॥ २३। २५॥ [ ८ ]॥

मूलमन्त्रः शु० य० वे० अ० २३। क० २६॥

ऊर्ध्वामेनामुच्छ्रापय गिरौ भारᳬं हरन्निव।
अथास्यै मध्यमेधताᳬं शीते व्वाते पुनन्निव॥ ९॥

अथ व्याख्या। वावातां प्रति उद्गाता वदति हे वावाते, एनां श्रियं राज्यलक्ष्मीम् ऊर्ध्वाम् उच्छ्रापय उन्नतां कुरु त्वं हि कामभोगाद्यासक्ता राज[illegible] व्यसनासक्तं करोषि तस्मात्तवैष दोषः। अतो राज्यश्रियाः उन्नतेरवनतेश्च [illegible]ते भावः। राज्यलक्ष्या उच्छ्रापणे दृष्टान्तमाह गिरौ भारं हरन्निव, यथा कश्चिद्भारवाही गिरौ पर्वते भारं हरन् पर्वतोपरि भारमारोपयन् यथा तमुच्छ्रयति तथा त्वमपि गिरौ गिरिवदुन्नते रा[illegible] "श्रीवैं राष्ट्रस्य भारः" इति श्रुतेः श्रियं राजकार्य्यमारोप्य तदधिष्ठितां राज्यलक्ष्मीमुच्[illegible] भावः। अथ राज्यश्रिया अग्रभागोन्नत्यनन्तरम् अस्यै ( षष्ठ्यर्थे चतुर्थी ) अस्याः राजलक्ष्म्याः मध्यं मध्यमोऽपि भाग एधतां वर्द्धताम् एवं सत्यधमो भागस्तु सुतरां वर्द्धिष्यत इति भावः। धर्म्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयस्य यथावकाशं यथावसरमुन्नतिकरणमेव राज्याग्रभागोन्नतिरस्ति। विशेषेण धर्म्मार्थकामानामेवोन्नतिर्मध्यमा, अर्थकामयोरेवोन्नतिरधमेत्येवं विभागः तत्प्रार्थनं मन्त्रतात्पर्य्यमवगन्तव्यं, राजलक्ष्म्या उच्छ्रापणे दृष्टान्तान्तरमाह शीते

वाते पुनन्निवेति, "क्षेमो वै राष्ट्रस्य शीतमि"तिश्रुतेरिह शीतशब्दः क्षेमवाचकः पुनन्निति "पूञ् पवने" ततः शतृप्रत्ययः "वा गतिगन्धनयोः" इह वातिः प्राप्तिः राष्ट्रस्य क्षेमे प्राप्ते पुनन्निव यथा कश्चित् स्वस्मिन्पुण्ये सति अन्यं पवित्रीकुर्वन् तद्धर्म्मेण वर्धते तथैवास्य राष्ट्रस्य क्षेमे सति मध्यं मध्यमोऽपि भागः जगदिदं पवित्रीकुर्वन्नेधतामिति भावः। राष्ट्रस्य क्षेमं तदैव भवति यदा राजा समुचितकरमादत्ते, तथा सत्येव धर्म्मार्थकामानामप्युन्नतिर्भवितुमर्हति कामाद्युपभोगासक्त एव राजा कराधिक्यमिच्छति तस्यैव राज्ञः प्रजा सन्तुष्टा न भवति तथा सति न राष्ट्रोन्नतिश्च तथा मा भूदेतदेव मन्त्रतात्पर्य्यं तदर्थमेव राज्ञामयमश्वमेधः। तथा च श्रुतिः "अप वाऽएतस्मात् श्री राष्ट्रं क्रामति योऽश्वमेधेन यजते। ऊर्द्ध्वामेनामुच्छ्रापयेति श्रीर्वै राष्ट्रमश्वमेधः श्रियमेवास्मै राष्ट्रमूर्द्ध्वमुच्छ्रयति। गिरौ भारᳬहरन्निवेति
६ श्रीर्वै राष्ट्रस्य भारः श्रियमेवास्मै राष्ट्रᳬ संनह्यत्यथो श्रियमेवास्मिन् राष्ट्रमधि निदधाति। अथास्यै मध्यमेधतामिति श्रीर्वैराष्ट्रस्य मध्यᳬ श्रियमेव राष्ट्रे मध्यतोऽन्नाद्यं दधाति शीते वाते पुनन्निवेति क्षेमो वै राष्ट्रस्य शीतं क्षेममेवास्मै करोति।" शतपथब्राह्मणे १३।२।९। क० १।२।३।४।५। उद्गाता वावातां राजपत्नीमुद्दिश्य कश्चिन्नरं प्रत्याह हे नर, एनां वावातामूर्द्ध्वामुच्छ्रापय उच्छ्रितां कुरु कथमिव गिरौ भारं हरन्निव। अथेत्ययं निपातो यथार्थे यथा अस्यै अस्या वावाताया मध्यमेधतां योनिप्रदेशो वृद्धिं यायात् यथा योनिर्विशाला भवति तथा मध्ये गृहीत्वोच्छ्रापयेत्यर्थः। तत्र दृष्टान्तान्तरं शीते वाते पुनन्निव शीतले वा यौ वाति पुनन् धान्यपवनं कुर्वाणः कृषीवलो धान्यपात्रं यथा ऊर्द्ध्वं करोति तथेत्यर्थः। देवानां परोक्षप्रियत्वाद्वेदस्य च परोक्षवादत्वादधिकारिणां परीक्षार्थं ग्राम्यशब्देन एवं कैश्चित्प्रतिपादितं तदपि नासमञ्जसं वावातां तत्संज्ञकां राजपत्नीमुद्दिश्य उद्गाता तन्नामकः कश्चिदृत्विक् कश्चिन्नरं मन्त्रिणं प्रत्याह हे नर, एनां वावातां राजपत्नीमूर्द्ध्वामुच्छ्रापय उच्छ्रितां कुरु राष्ट्रोन्नत्या महदुन्नतां कुर्विति भावः। राष्ट्रोन्नतिश्च समुचितकरदानेन प्रजापालने सत्येव भवितुमर्हति। कथमिव गिरौ भारं हरन्निव यथा कश्चित् गिरौ पर्वते भारं हरन् पर्वतोपरि भारमारोपयन् यथा तमुच्छ्रयति तथा त्वमपि पर्वताकारे राज्ञि भारं "श्रीर्वै राष्ट्रस्य भारमि"तिश्रुतेः राष्ट्रश्रियं राज्यलक्ष्मीं समारोप्य तदुन्नत्या एनां राज्ञो गृहलक्ष्मीं वावातां तन्नाम्नीं राजमहिषीं महदुन्नतां कुर्विति भावः। कथमूर्द्ध्वा कार्येत्यत्राह अथेति निपातोऽयं यथार्थे यथा अस्यै (षष्ठ्यर्थे चतुर्थी) अस्याः वावातायाः राजमहिष्याः मध्यमेधतां योनिप्रदेशः योनिः प्रकृतिस्तदात्मिका प्रजा तस्याः [illegible]विशेषः सामन्तभूपतिप्रदेश इत्यर्थः। वृद्धिं यायात् यथा योनिः प्रकृतिः प्रकृत्यात्मि[illegible]शाला विस्तृता भवति तथा मध्ये गृहीत्वोच्छ्रापय "हरणं प्रापणं स्वीकारः स्तेयं नाशनञ्चे"त्युक्तेः मध्ये मध्यप्रदेशस्थसामन्तभूपालप्रापणेन [illegible]तद्राष्ट्रोन्नत्या राज्ञीमुच्छ्रापयेति भावः। तत्र दृष्टान्तान्तरं शीते वाते पुनन्निव। यथा [illegible]लेयौ वाति सति पुनन् धान्यपवनं कुर्वाणः कृषीवलो धान्यपात्रं यथा ऊर्द्ध्वं करोति तथैव त्वमपि "क्षेमो वै राष्ट्रस्य शीतमि"ति श्रुतेः शीते क्षेमे वाते राष्ट्रे प्रसरति सति राष्ट्रोन्नत्या एनां राजपत्नीं महदुन्नतां कुरु। दृश्यते चैवं यः सम्राड् भवति तन्मत्री सामन्तभूपालद्वारा समस्तराष्ट्रोन्नत्या राज्यलक्ष्मीं गृहलक्ष्मीं राज्ञो धर्म्मपत्नीमपि तया सह यागादिद्वारा धर्म्मोन्नत्या उच्छ्रापयति एतदर्थमेव राज्ञाऽश्वमेधः क्रियते। तत्र सम्राज एवाधिकारो नच सामन्तभूपालस्येति सकललोकवेदप्रसिद्धिरेवेति तेषामपि तात्पर्य्यम्। अमुमेवार्थं श्रुति-

रप्याह "श्री राष्ट्रं क्रामति योऽश्वमेधेन यजते" इति । महीधरस्याप्ययमेवाशयः । स च तत्कृतवेदभाष्ये द्रष्टव्यः ॥ २३ । २६ ॥ [ ९ ] ॥

मूलमन्त्रः शु० य० वे० २३।२७ ॥

ऊर्ध्वमेनमुच्छ्रयताद्गिरौ भारꣳ हरन्निव ।
अथास्य मध्यमेजतु शीते वाते पुनन्निव ॥ १० ॥

अथ व्याख्या । वावातानाम्नी राजमहिषी उद्गातारमृत्विजं प्रत्याह–हे उद्गातः, एनं राजानमूर्ध्वमुच्छ्रयतात् उन्नतं कुरु । भवादृशा धार्म्मिकविद्वद्ब्राह्मणानामनुमत्या राजानो जितेन्द्रिया भूत्वा स्वातन्त्र्येण सम्यग् राज्योन्नतिं कर्त्तुं समर्थाः सम्भवन्ति । न तु ते स्त्रीणामनुमतिं मन्यन्ते न च स्त्रिय एव पुरुषान् विषयासक्तान् कुर्वते । अपि तु लीलावतीनां सहजाः स्वभावास्ते एव मूढस्य हृदि स्फुरन्ति, रागो हि नलिन्याः स्वभावसिद्धस्तत्र यथा द्विरेफः स्वयं भ्राम्यति तथैव पुरुषोऽपि विषयभोगवासनावागुराकृष्टः सन् स्वयमेवाधः पतति तस्मादेव स्वगृहस्यापि प्रबन्धं कर्त्तुं न शक्नोति सर्वदेशस्य तु कथैव का, अतः सदुपदेशद्वारा राष्ट्रोन्नत्या एनं राजानं महदुन्नतं कुर्विति भावः । यदि तु राजपुरोहितादयः सर्वे राजसदस्याः अमात्यादयश्च राज्ञश्चित्तं सदाचारपरं राज्योन्नतिपरं देशोन्नतिपरं च कर्त्तुं सदैवोपदिशेयुस्तदा राजनैतिकविचारोन्नतिः सम्यक् सम्भाव्येत न चेदेवं तर्हि भवद्विधानां पुरुषाणामेवापराधोऽस्ति न चास्मद्विधानामबलानामिति तात्पर्य्यार्थः । कथमुच्छ्रापयामीत्यपेक्षायामाह गिरौ भारं हरन्निव । यथा कश्चिद्भारवाही भाराक्रान्तः सन् भारं भूमौ निधाय पुनश्चोत्थापनसमये गिरौ पर्वते उन्नतप्रदेशे भारं हरन् आरोपयन् पुनस्तमुच्छ्रापयति तथा त्वमपि गिरौ पर्वताकारे महद्राष्ट्रकार्य्ये एनं राजानमारोपयन् पुनरुच्छ्रापयेत्यर्थः, "श्रीर्वै राष्ट्रस्य भारः"इति श्रुतेः । अथानन्तरम् अस्य राज्ञो मध्यं राज्यव्यवस्थापनम् एजतु कम्पताम् । उक्तप्रकारेण स्वप्रान्ते राज्योन्नतौ सत्यां भिन्नप्रान्तेषु विजातीयजनेषु च राज्यकार्य्यं चेष्टताम् । अस्य राष्ट्रे सर्वत्र अर्थधर्म्मकामानामुन्नतिरस्त्विति भावः । कथमिव शीते वाते पुनन्निव । हे उद्गातः, शीते शीतले वायौ वाति सति पुनन् धान्यपवनं कुर्वाणः कृषीवलो यथा धान्यपात्रमूर्ध्वं करोति तथा त्वमपि "क्षेमो वै राष्ट्रस्य शीतमि"तिश्रुतेः क्षेमे सर्वत्र प्रसरति सति राजलक्ष्म्याः पात्रम् एनं राजानं सदुपदे[illegible]न्नत्या महदुन्नतं कुर्विति भावः । वावातोद्गातारं प्रत्याह । भवतोऽप्येतत्समा[illegible] एनमुद्गातारमूर्ध्वमुच्छ्रयतात् ऊर्ध्वं कुरु गिरौ भारमिति पूर्ववत् । अथ यथा अस्य उद्गातुर्मध्यं लिङ्गमेजतु कम्पतां शीते वाते पुनन्निवेति पूर्ववद् दृष्टान्तोऽवगन्तव्यः । इत्येवं देवानां परोक्षप्रियत्वाद्वेदस्य च परोक्ष[illegible]दधिकारिणां परीक्षार्थं ग्राम्यशब्देन कैश्चित्प्रतिपादितं तदपि नासमञ्जसं, वावाता [illegible]ो उद्गातारं प्रत्याह । हे उद्गातः, भवतोऽप्येतत्समानं यथा मत्सङ्गेन राज्ञः उन्नतिरवनतिर्वा तथा त्वत्सङ्गेनापि त्वत्तः सदुपदेशद्वारा राष्ट्रोन्नतिः असदुपदेशद्वारा चावनतिः, अत एव भवतोऽप्येतद्गुणदोषाख्यानं तुल्यमेव । एवञ्च राष्ट्रावनतौ नास्माकमबलानां दोषः किन्तु भवादृशानां पुरुषाणामेव । अतस्तवैव दोषो न ममेति भावः । एवमुद्गातारं प्रत्युक्त्वा पुनस्तमेवोद्दिश्यान्यं कञ्चिन्नरं प्रत्याह–हे नर, एनमुद्गातारं सामवेदाध्यायिनमूर्ध्वमुच्छ्रयतात् ऊर्ध्वं कुरु

एतस्यैव सदुपदेशद्वारा राष्ट्रोन्नतौ च सत्यां राज्ञः सन्तुष्ट्या धनमानाभ्यामेनमुन्नतं कुर्विति भावः । गिरौ भारमिति पूर्ववत्स्पष्टमेव । अथेत्ययं निपातो यथार्थे । अथ यथा अस्य उद्गातुः मध्यं लिङ्गं "लिङ्गं चिह्नेऽनुमाने च सांख्योक्तप्रकृतावपि । शिवमूर्त्तिविशेषेऽपि मेहनेऽपि नपुंसकमि"तिमेदिनीकोषादिह लिङ्गशब्दोऽनुमानवाचकः, तत्कम्पनं स्फुरणं तद्यथा स्यात्तथेत्यर्थः । अस्योद्गातुरुपदेशकालेऽनुमानस्फूर्त्तिर्यथा भवेत्तथा एनमुद्गातारमुच्छ्रयतादुन्नतं कुरु, शीते वाते पुनन्निवेति पूर्ववदिहापि स्पष्टमेव । नहि अनुमानस्फुरणं विना विदुषामुन्नतिरिति सकललोकप्रसिद्धिरतस्तत्स्फुरणं तद्द्वारा राष्ट्रोन्नत्यादि मन्त्रतात्पर्य्यमवगन्तव्यमिति तेषामभिप्रायः । महीधरस्याप्ययमेवाशयः । स च तत्कृतवेदभाष्ये द्रष्टव्यः ॥ २३।२७ ॥ [ १० ] ॥

मूलमन्त्रः शु० य० वे० २३।२८ ॥

यद॑स्याऽअᳬहुभेद्याः॑ कृ॒धु स्थू॒लमु॒पात॑सत् ।
मु॒ष्कावि॒द॑स्याऽएजतो गोश॒फे श॑कु॒लावि॑व ॥ ११ ॥

अथ व्याख्या । होता परिवृक्तामाह अस्याः अंहुभेद्याः "अहि गतौ" तत औणादिक उप्रत्ययः । अंहुर्गतिर्गमनशक्तिस्तस्याः भेदो विदारणं यया सा अंहुभेदी तस्याः अंहुभेद्याः राजशक्तिविरोधिन्याः प्रजायाः पुरुषशक्तिनाशिकायाः स्त्रीजातेर्वा कृधु "कृध्विति ह्रस्वनामेनि" निघण्टुः, कृधु ह्रस्वं स्थूलं वा अपराधमितिशेषः । यत् यदा उपातसत् प्रकाशयति रक्षको राजा पुरुषसामान्यो वेति शेषः । यत्तदोर्नित्यसम्बन्धात्तत्पदमध्याहार्य्यं तत् तदा अस्याः राजविरोधिन्याः प्रजायाः पुरुषविरोधिन्याः स्त्रीजातेर्वा मुष्कौ "मुष्को वृषणसंघयोरि"ति कोषादौ दर्शनादिह मुष्कशब्दः संघवाचकस्ततोऽयमर्थः । मुष्कौ संघौ विज्ञाविज्ञौ शिक्षिताशिक्षितौ वा द्वावपि प्रजासंघौ स्त्रीसंघौ वा एजनः "एजृ कम्पने" रक्षकस्य राज्ञः पुरुषसामान्यस्य वा भिया कम्पेते दुःखितौ भवत इत्यर्थः । काविव, गोशफे अत्यल्पजलाशये शकुलौ मत्स्याविव तौ यथा दुःखितौ भवतस्तथैव । "चाञ्चल्यं साहसं माया मूर्खत्वमतिलोभता । अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥" इति वचनेन चलचित्तत्वादयो दोषाः स्त्रीषु नैसर्गिका एव ते चाल्पपुंस्त्वकजनेष्वपि सन्त्येव तेषामपि स्त्रीपक्षे संख्या युक्तमैव तद्दोषनिवारणाय यदा पुरुषा यतन्ते तदा ताः सर्वा अपि योषितो दुःखाकुल[illegible]तो योषिदपेक्षया पुरुषो निर्द्दोषः योषिदेव सदोषेतिवेदादिसकलशास्त्राशयेनावसा[illegible]योनिन्दायामेव मन्त्रतात्पर्य्यमवगन्तव्यम् ।

[illegible] होता परिवृक्तामाह । यत् यदा अस्याः परिवृक्तायाः कृधु ह्रस्वं स्थूलं च शिश्नमुपात[illegible]ताच्छेत् योनिं प्रति गच्छेत् तदा मुष्कौ वृषणौ इत् एव अस्याः योनेरुपरि एजतः क[illegible]लिङ्गस्य स्थूलत्वात् योनेरल्पत्वात् वृषणौ बहिस्तिष्ठत इत्यर्थः । तत्र दृष्टान्तः गोशफे जलपूर्णे गोःखुरे शकुलौ मत्स्याविव, यथा उदकपूर्णे गोःपदे मत्स्यौ कम्पेते तद्वदिहापि तौ कम्पेते इति भावः । कीदृश्याः अस्याः अंहुभेद्याः अंहु भगं भेद्यं विदार्य्यं यस्याः सा अंहुभेदी तस्याः, अंहुर्भिद्यते यस्या वेति विग्रहः, देवानां परोक्षप्रियत्वाद्वेदस्य च परोक्षार्थत्वादधिकारिणां परीक्षार्थमेवं कैश्चित्प्रतिपादितं तदपि न विरुद्धं, होता परिवृक्तां राजमहिषीमुद्दिश्य वदति यत् यदा अस्याः परिवृक्तायाः राज्याः कृधु ह्रस्वं स्वल्पं, स्थूलं बहुतरं वा

शिश्नं (शिपतिर्हिंसार्थस्तत औणादिको नक्प्रत्ययः धातोः षस्य शश्छान्दसः । ) शेपति मदजन्यं तमोऽपहन्तीति तत्तथोक्तं स्वार्थसाधनपरत्वाभिमानभञ्जकम् अमात्यवृन्दमुपातसत् उपगच्छेत् योनिं प्रकृतिं प्रकृत्यात्मिकां प्रजां प्रति गच्छेत् करं गृहीतुमित्यर्थः । तदा मुष्कौ विज्ञाविज्ञौ शिक्षिताशिक्षितौ वा द्वावपि प्रजासंघौ वृषणौ इत् एव वृषणावेव सम्भोगकाले तयोर्निष्प्रयोजनत्वादिहापि करग्रहणकाले विज्ञाविज्ञयोः शिक्षिताशिक्षितयोर्वा प्रजासंघयोर्निष्प्रयोजनत्वात् पूर्वोक्तौ द्वावपि प्रजासंघौ वृषणत्वेनोपचर्य्येते । अस्याः योनेः प्रकृतेः प्रकृत्यात्मिकायाः प्रजायाः उपरि राजपुरुषाणां न दया अत एव भिया एजतः कम्पेते । "तत्सह कर्म्मणैति लिङ्गं मनो यत्र निषक्तमस्ये"तिश्रुतेर्लिङ्गं लिङ्गशरीरं तस्य लिङ्गस्य लिङ्गशरीरस्य प्रकरणसाहचर्य्यात् तदधिष्ठातुश्चैतन्यस्य अर्थात् राजपुरुषस्येति भावः । स्थूलत्वान्महत्त्वात् योनेः प्रकृतेः प्रकृत्यात्मिकायाः प्रजाया इत्यर्थः । अल्पत्वात् ऐश्वर्य्यातिशयाभावप्रयुक्तेन लघुत्वाद्द्वावपि पूर्वोक्तौ प्रजासंघौ वृषणाविव बहिस्तिष्ठतः न तयोर्विज्ञाविज्ञयोः शिक्षिताशिक्षितयोः प्रजासंघयोर्वक्तव्यं किमपि राजपुरुषः शृणोतीति भावः । तस्मादेव द्वावपि पूर्वोक्तौ प्रजासंघौ गोशफे जलपूर्णे गोःखुरे शकुलौ मत्स्याविव दुःखितौ भवत इत्यभिप्रायः । हे परिवृक्ते, अयं दोषस्तवैव स्त्रिया मोहितचेतसो व्यसनासक्तस्य राज्ञो विज्ञाविज्ञौ शिक्षिताशिक्षितौ द्वावपि प्रजासंघौ राजपुरुषैरमात्यवर्गैर्नितरां पीड्येते । जितेन्द्रियस्य स्वतः कार्य्याकार्य्यनिरीक्षणे प्रवृत्तस्य विवेकिनो राज्ञो राष्ट्रं वर्धते, तथा सति राज्ञो राज्याश्च एवं प्रजाया अपि निरन्तरं सुखमस्तीति मन्त्रतात्पर्य्यम् , अंहुभेद्या इत्यत्र अंहु भगं षड्विधैश्वर्य्यं भेद्यं विदार्य्यं प्रकाश्यं यस्याः सा अंहुभेदी तस्यास्तथोक्ताया इति स्पष्टं भगशब्दोऽत्र प्रकरणसाहचर्य्यादैश्वर्य्यवाचकोऽभिप्रेतः, "भगं श्रीयोनिवीर्य्येच्छाज्ञानवैराग्यकीर्त्तिषु । माहात्म्यैश्वर्य्ययत्नेषु धर्म्मे मोक्षेऽथ ना रवावि"तिमेदिनीकोषादौ दर्शनादिति तेषामभिप्रायः । महीधरस्याप्ययमेवाशयः । स च तत्कृतवेदभाष्ये द्रष्टव्य ॥२३।२८॥ [ ११ ] ॥

मूलमन्त्रः शु० य० वे० २३।२९ ॥

**यद्देवासो ललामगुम्प्र विष्टीमिनमा विषुः ।**
**सक्थ्ना देदिश्यते नारी सत्यस्याक्षिभुवो यथा ॥ १२ ॥**

अथ व्याख्या । परिवृक्तानाम्नी राजपत्नी होता[illegible]त्या म[illegible]सः देवाः प्रमादपराः "प्राणा वै देवाः"इति श्रुतेः पुरुषप्राणेन्द्रियरूपाः "दि[illegible] एनमर्वाजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिष्वि"त्युक्तेः देवाः मोदकाः, कामादयो वा विष्टीमिनं "ष्टीम क्ले[illegible]ने" विशेषेण स्तीमनं विष्टीमः घञि रूपमेतत् विष्टीमोऽस्यास्तीति विष्टीमी मृदुस्तं तथोक्त[illegible] दृशं ललामगुं ("ललामेति सुखनामे"तिनिघण्टुः "गम्लृ गतावि"त्यस्माद्गमेर्डुरितिडुः[illegible] ..) ललामं सुखं गच्छति प्राप्नोतीति ललामगुः पुरुषस्तं यत् यदा प्राविषुः प्रविशन्ति तदा दोषभाक् पुरुष एव वेश्यादिरतः कामक्रोधलोभग्रस्तो विशेषेण दूषितो भवतीत्यर्थः । नारी तु सक्थ्ना ऊरुणा देदिश्यते निर्दिश्यते अतिशयेन निर्दोषा लक्ष्यते, इत्यर्थः । न कदापि कमपि सक्थि दर्शयति अपि तु लज्जापरायणा सती सदैव सक्थ्याद्यङ्गानि गोपायतीति भावः । तत्र दृष्टान्तः सत्यस्याक्षिभुवो यथा उभयत्र "सुपां सुपो भवन्ती"ति प्रथमैकवचनस्थाने ङसादेशश्छा-

न्दसः अक्षिभ्यां भवतीति अक्षिभु प्रत्यक्षं वस्तु यथा सत्यं भवति विश्वासजनकं भवति तथैव सक्थ्याद्यङ्गानुद्घाटनोपलक्षितेन प्रत्यक्षप्रमाणेनैव स्त्रीणां सलज्जात्वं सदाचारपरत्वं च प्रकटयति, तस्मान्न ममापराधः अहङ्कारः सर्वानर्थहेतुः। स च सर्गारम्भादेव विशेषेण पुरुषनिष्ठ एव सिद्धः, अहङ्काराधिक्यात्पुरुषः सबलः, तदल्पत्वाच्च योषिदबलेत्यागोपाङ्गनादिप्रसिद्धिः। अहं कर्त्ता अहं भोक्ता भोग्यं वस्तु सर्वं ममाधीनमित्यहङ्कारबुध्या वासनामयं कर्म्म कुर्वन् पुरुषो भ्रंस्यते। तथा च श्रुतिः "यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्म्मणा भवति पापः पापेनेति। अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तथा क्रतुर्भवति यथा क्रतुर्भवति तत्कर्म्म कुरुते यत्कर्म्म कुरुते तदभिसम्पद्यते" इति श० ब्रा० १४।७।२ क० ६।७। परिवृक्ता होता प्रत्येवं ब्रवीति यत् यदा देवासः देवाः दीव्यन्ति क्रीडन्तीति देवा होत्रादय ऋत्विजो ललामगुं लिङ्गं प्र आविषुः योनौ प्रवेशयन्ति। अवधातुरिह प्रवेशनार्थः, ततश्च लङर्थे लुङ्। 'प्रेत्ययमुपसर्गः, आविषुरिति क्रियापदेन सह सम्बध्यते "व्यवहिताश्चे"ति पाणिनिवचनात् 'ललामेति सुखनामे"ति निघण्टुः, ललामं सुखं गच्छति प्राप्नोतीति ललामगुः शिश्नः, यो ललामं पुण्ड्रं गच्छतीति ललामगुः लिङ्गं योनिं प्रविशदुत्थितं पुण्ड्राकारं भवतीत्यर्थः कीदृशं ललामगुं विष्टीमिनं "ष्टीम क्लेदने" विशेषेण स्तीमनं क्लेदनं विष्टीमः घञ्प्रत्यय विष्टीमः क्लेदोऽस्यास्तीति विष्टीमी तं तथोक्तम् "अत इनिठनावि"ति अस्त्यर्थे इनिप्रत्यय शिश्नस्य योनिप्रवेशे क्लेदनं भवति यदा देवा शिश्नक्रीडिनो भवन्तो होत्रादय ऋत्विज ललामगुं लिङ्गं योनौ प्रवेशयन्ति तदा नारी सक्थ्ना ऊरुणा वचनव्यत्ययः, ऊरुभ्यां देदिश्यते निर्दिश्यते अत्यन्तं लक्ष्यते। दिश्यतेर्यङ्प्रत्ययः। भोगसमये सर्वस्य नार्यङ्गस्य नरेण व्याप्तत्वादूरुमात्रं लक्ष्यते इयं नारीतीत्यर्थः। तत्र दृष्टान्तः—सत्यस्याक्षिभुवो यथेति, सत्यं द्विविधम् अक्षिभ्यां भवतीत्यक्षिभु प्रत्यक्षम् एकम् अपरं च श्रोत्रग्राह्यं षष्ठ्यौ तृतीयार्थे यथा कश्चिदक्षिभुव प्रत्यक्षेण सत्येन निर्दिश्यते तत्र विश्वासो भवति तथा ऊरुणा दृष्टेन नारीति लक्ष्यते, श्रोत्राग्राह्ये तु सत्ये वक्तुराप्ततमत्वमपेक्ष्यते। देवानां परोक्षप्रियत्वाद्वेदस्य च परोक्षवादत्वादधिकारिणपरीक्षार्थं कैश्चिद्देवमपि प्रतिपादितं किन्तु तदपि न विरुद्धं, परिवृक्तानाम्नी काचिद्राजमहिषी होतारं प्रत्याह यत् यदा देवासः देवा दीव्यन्ति क्रीडन्ति वेदाध्ययनेन रमन्ते इति देवाः होत्रादय ऋत्विजो ललामगुं लिङ्गं, "तत्सहकर्म्मणैति लिंगं मनो यत्र निषक्तमस्ये"तिश्रुतेर्लिङ्गं लिङ्गशरीरम् अर्थाल्लिङ्गश[illegible]ं प्रआविषुः योनौ प्रकृतौ प्रकृत्यात्मिकायां प्रजायां प्रविशन्ति अन्तर्भावितण्यर्थोऽयं प्रवेश[illegible]र्थं करग्रहणाय तत्र गन्तुं प्रेरयन्तीति भावः। "ललामेति सुखनामे"ति निघण्टुः, ललामं सुखं गच्छति प्राप्नोतीति ललामगुः प्राप्तसुखः शिश्नः "शिष-[illegible]तुर्हिंसार्थः" तत औणादिको नक्प्रत्ययः धातोः षस्य शश्छान्दसः। शेषति उन्मादजं तमः [illegible]पहन्तीति शिश्नो राजा स हि दण्ड्यान्दण्डयति अपराधिनां दण्डेन उन्मादजं तमो नाशयतीत्यर्थः। यद्वा ललामं पुण्ड्रं गच्छतीति ललामगुः लिङ्गं लिङ्गशरीरं तद्विशिष्टो लिङ्गशरीरी राजेत्यर्थः। योनिं प्रकृतिं प्रकृत्यात्मिकां प्रजां विशन् करं गृहीतुं तत्र गच्छन् पुण्ड्राकारो भवति पुण्ड्रः इक्षुर्यथा बहिः कठिनोऽन्तमृदुर्मधुरश्च भवति तथैव राजापि, स हि दण्डप्रदानकाले कठिनस्तद्रक्षणसमये मृदुश्च भवति एवं स्वार्थसाधनवेलायां मधुरश्च भवतीति सकललोकप्रसिद्धिरेवास्ति। कीदृशं ललामगुं विष्टीमिनं सार्द्रं मृदुस्वभावमित्यर्थः। शिश्नस्य

पूर्वोक्तप्रणाल्या प्रजोन्मादविनाशकस्य राज्ञः योनिप्रवेशे योनिः प्रकृतिः प्रकृत्यात्मिका प्रजा तस्यां प्रवेशः करग्रहणार्थं तत्र गमनं तत्र छेदः सर्वथा भवति यदा देवा शिश्नक्रीडिनो राज्ञा सह रममाणा भवन्तो धर्म्माधिकारिणो राजनैतिककलाकुशलाः ललामगुं पूर्वोक्तं सुखिनं राजानं योनौ प्रकृतौ प्रकृत्यात्मिकायां प्रजायां प्रवेशयन्ति करग्रहणार्थं तत्र गन्तुं प्रेरयन्तीति भावः, तदा नारी मानुषी प्रजा सक्थ्ना ऊरुणा देदिश्यते निर्दिश्यते। दिश्यतेर्यङ्प्रत्ययः। प्रजा पुष्टापुष्टा वेति ऊरुभ्यामेवात्यन्तं लक्ष्यते। पुष्टजनस्यैव जंघे सुपुष्टे भवतः भोगसमये भोग्यपदार्थग्रहणसमये करादानसमय इत्यर्थः, सर्वस्य नार्यङ्गस्य मानुषीप्रजावयवरूपिणः समस्तभोग्यपदार्थस्येत्यर्थः, नरेण राज्ञा राजपुरुषेण वा व्याप्तत्वादूरुमात्रं लक्ष्यते व्यसनासक्तो राजा प्रजाजनानुपहत्य तदीयं सर्वस्वं हरति सदुपदेशद्वारा तन्निरोधो यतो भवद्भिर्न क्रियते, अतो भवादृशानां दुर्म्मन्त्रिणामेव दोष इति दुर्म्मन्त्रिनिन्दायां मन्त्रतात्पर्य्यमिति तेषामाशयः। लिङ्गशब्दो योनिशब्दश्च प्रकरणवशाद्वक्तुरभिप्रायतोऽनेकार्थवाचक इति उत्सक्थ्याऽअवगुदमित्यस्य व्याख्यायां सविस्तरं प्रागुक्तं तच्च तत्रैव द्रष्टव्यम्। एवं महीधरस्याप्ययमेवाशयः। स च तत्कृतवेदभाष्ये द्रष्टव्यः ॥२३।२९॥ [ १२ ]॥

मूलमन्त्रः शु० य० वे० २३।३० ॥

यद्धरिणो यवमत्ति न पुष्टम्पशु मन्यते।
शद्रा यदर्य्यजारा न पोषाय धनायति ॥ १३ ॥

अथ व्याख्या। क्षत्ता प्रजामुद्दिश्य पालागलीं प्रत्याह। "विड्वै यवो राष्ट्रꣳ हरिणः" इति श्रुतेरिह हरिणशब्दो राष्ट्रवाचको यवशब्दश्च प्रजावाचकस्ततोऽयमर्थः। यत् यदा हरिणः राष्ट्रम् अर्थात् राजा यवं प्रजाम् अत्ति प्रजास्वमादत्त इत्यर्थः। तदा प्रजा पशु पशुशब्दात् "सुपां सुलुगि"त्यमो लुक् पशुवत्पराधीनं स्वात्मानं पुष्टं न मन्यते मद्रक्षार्थमेव मत्तः स्वमादत्ते इति न बुध्यते। तत्र दृष्टान्तः, यथा शूद्रा शूद्रजातिः स्त्री यत् यदा अर्यजारा भवति "अर्यः स्वामिवैश्ययोरि"तिनिपातनादर्यो वैश्यः स जारः उपपतिर्यस्याः सा तथोक्ता भवति तदा पोषाय पोषणाय न धनायति पुष्ट्यर्थं धनं नेच्छति स्वयं व्यभिचारदोषेण दूषिता सत्यपि पुरुषमेव दोषयुक्तं मन्यते। तथैव प्रजारक्षार्थमेव करमाददानं राजानं प्रजापि दोषयुक्तं वदति न चात्मानं पुष्टं मन्यत इति भावः। अयञ्च [illegible] मत्या महाः स्त्रीशक्तेरेव दोषः। तथा च श्रुतिः "यद्धरिणो यवमत्तीति विड्वै यवो [illegible] एनमहारणो विशमेव राष्ट्रायाद्यां करोति तस्माद्राष्ट्री विशमत्ति। न पुष्टं पशु मन्यत इति तस्माद्राजा पशून्न पुष्यति शूद्रा यदर्यजारा न पोषाय धनायतीति तस्माद्वैशीपुत्रं नाभिषिञ्चति" श० ब्रा० १३।२।९।८। तथा मनुनाप्युक्तं द्वितीयाध्याये "स्वभाव एष नारीणां नराणामिह दूषणम्। अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः ॥ २१३ ॥" इति। अतः सिद्धमेतत् यत्स्वभावत एव प्रमदाः पुरुषाणां दूषणं वदन्ति तस्मात्तासामेव दोष इति स्त्रीनिन्दायां मन्त्रतात्पर्य्यम्। स्त्रिया व्यभिचारकर्म्मणा भर्त्तैव दुःखी न च तदीयभार्या तद्वत्प्रजापालने जायमानकष्टेन प्रजाकर्त्तृकदोषारोपणेन च राजैव दुःखी भवति न च प्रजास्थानिका स्त्रीशक्तिरिति स्त्रीनिन्दायामेव महीधरस्यापि तात्पर्यमवगम्यते। तच्च तत्कृतवेदभाष्ये द्रष्टव्यम् ॥ २३।३० ॥ [ १३ ] ॥

मूलमन्त्रः शु० य० वे० २३ । ३१ ॥

यद्धरिणो यवमत्ति न पुष्टं बहु मन्यते ।

शूद्रो यदर्यायै जारो न पोषमनुमन्यते ॥ १४ ॥

अथ व्याख्या । पालागलीनाम्नी काचिद्राज्ञो महिषी क्षत्तारमाह यद्धरिण इति । "विड्वै यवो राष्ट्रꣳ हरिणः" इति श्रुतेरिह हरिणशब्दो राष्ट्रवाचको यवशब्दश्च प्रजावाचकस्ततोऽयमर्थः । यत् यदा हरिणो राष्ट्रम् अर्थाद्राजा यवमत्ति प्रजास्वमादत्ते तदा स राजा प्रजावर्गं पुष्टं बहु न मन्यते नावबुध्यते । करादानमप्रियकरं प्रजाया भवतीति स्वयं जानन्नपि राजा करग्रहणपूर्वकप्रजारक्षणस्य राजनैतिकतया स्वकर्त्तव्यं मन्यमानः प्रजास्वमादत्ते नानुपहृत्य भूतान्युपभोगः सम्भवतीति राजा चेतरसाधारणजनापेक्षया श्रेष्ठतममुपभोगं प्रजावर्गादेवाददानः स्वयं दोषभाग्भवति न च प्रजास्थानिकायाः स्त्रीशक्तेर्दोष इति भावः । तत्र दृष्टान्तो यथा अर्यायै ( षष्ठ्यर्थे चतुर्थी ) अर्यायाः वैश्यजातेः स्त्रियाः जारः उपपतिः यत् यदा शूद्रो भवति तदा सा पोषं पुष्टिं नानुमन्यते अपितु नीचपुरुषेणोत्तमजातेः स्त्रियाः समागमात्स्त्रिया एव हानिर्भवति । यदि वैश्यजनः शूद्रकन्यामुद्वाहयेत्तदा नैतद्विशिष्टमनुचितम् अपितु अनुलोमत्वाद्धर्म्मशास्त्रानुकूलमप्यस्ति । तत्र शूद्रायाः प्रमदाया अल्पदोषोऽस्ति यत्र तु शूद्रः पुरुषः स्वत उत्कृष्टया वैश्यकन्यया व्यभिचरति तत्र शूद्रपुरुषस्यैव दोषाधिक्यं न च तावत् स्त्रियाः कश्चिद्दोषः तद्वदिहापि राजस्थपुरुषशक्तेरेव दोषो नच प्रजास्थानिकस्त्रीशक्तेर्दोष इति पुरुषनिन्दायामेव मन्त्रतात्पर्य्यमवगन्तव्यम् । महीधरस्याप्ययमेवाशयः । स च तत्कृतवेदभाष्ये द्रष्टव्यः ॥ अश्लीलभाषणं समाप्तम् । अश्लीलत्वञ्चात्र जुगुप्साव्यञ्जकत्वं बोध्यं न च व्रीडाव्यञ्जकत्वममङ्गलव्यञ्जकत्वं वा । अत्र परस्परसंवादे स्त्रियो राजपत्न्यः प्रजादिरक्ष्यवर्गस्य समस्तस्त्रीजातेर्वा प्रतिनिधिरूपाः सत्यः समस्तप्रजादिरक्ष्यपक्षात्स्त्रीजातिपक्षाद्वा प्रत्युत्तरं द[illegible] रक्ष्यरक्षकयोः प्रजाराज्ञोर्भोग्यभोक्त्रोः स्त्रीपुरुषयोर्वा द्वयोरपि दोषवतोः सतोर्भोक्तू रक्षक[illegible]ति समस्तसंवादाशयो न च व्रीडाव्यञ्जकाश्लीलार्थाभिप्रायोऽस्तीति विदाङ्कुर्वन्तु विद्वांसः ॥ २३ । ३१ ॥ [ १४ ]

आश्वमेधिकमन्त्राणामश्लीलं येषु भासते ।

तस्याभिप्रायमाश्रित्य इयं व्याख्या प्रदर्शिता ॥ १ ॥

स्वर्गापवर्गदो नृणां योऽयं धर्म्मः सनातनः ।

तस्य मूलमसौ वेदः कामिनां कल्पपादपः ॥ २ ॥

न तत्राश्लीलता काचिन्न भाष्ये ग्राम्यता तथा।
आशयान्तरमाश्रित्य क्षिप्ता सा कुत्रचित्स्थले ॥ ३ ॥
तस्यास्तत्त्वं मया प्रोक्तमत्रैव बहु विस्तरम्।
एतस्य दर्शनादेव भ्रान्तिर्दूरं गमिष्यति ॥ ४ ॥

॥ इति श्रीदामोदरशर्म्मकृते मन्त्रार्थचन्द्रोदयनाम्नि वेदमन्त्रभाष्ये आश्वमेधिकमन्त्र-व्याख्यात्मकोऽयमष्टादशः परिच्छेदः समाप्तः ॥

॥ समाप्तश्चायङ्ग्रन्थः ॥

बाणग्रहग्रहसुधाकरवैक्रमाब्दे माघे दले धवलिते कुसुमेषुतिथ्याम्।
गिद्धौरराजनगरेऽसुरपूज्यवारे भाष्यस्य पूर्त्तिरभवच्छ्रुतिमन्त्रराशेः ॥ १ ॥
मन्त्रार्थचन्द्रोदयनामकस्य ग्रन्थस्य सारं हृदि सन्निवेश्य।
कर्म्माणि कुर्य्युः सकलानि लोका येभ्यो भवेदिष्टसमस्तसिद्धिः ॥ २ ॥
वैदिकस्यास्य धर्म्मस्य सुप्रचारो यथा भवेत्।
तथा द्विजैः प्रकर्त्तव्यं मन्त्रार्थज्ञैर्विचक्षणैः ॥ ३ ॥
धर्म्मा अवैदिकास्तावद्भारते प्रसरन्तु वै।
यावद्वेदार्थतत्त्वस्य प्रचारो न भवेदिह ॥ ४ ॥
वेदतत्त्वप्रचारेण धर्म्मश्चायं सनातनः।
सर्वानवैदिकान्धर्म्मानधः कृत्वैव जेष्यति ॥ ५ ॥
ग्रन्थेऽस्मिन् दृष्टिदोषेण यन्त्रदोषेण वा पुनः।
अशुद्धिर्यत्र सञ्जाता तत्रोह्यं सुविचक्षणैः ॥ ६ ॥
पुनः संस्करणे ह्यस्य शोधनं तु भविष्यति।
तथाप्यादौ प्रदत्तानि शुद्धिपत्राणि यत्नतः ॥ ७ ॥
भवद्भिः सदयैर्नूनं द्रष्टव्यानीह तान्यपि।
ततो भाष्यं च [illegible]व्यं [illegible]त्या म[illegible] कृ[illegible]भिः ॥ ८ ॥
धर्म्मानुरागिणामग्रे विदुषाञ्च वि[illegible] एनमहम्
पुरतोऽभ्यर्थना ह्येषा श्रीदामोदरशर्म्मणः ॥ ९ ॥

॥ हरिः ॐ शान्तिः शान्तिः शान्तिः ॥ श्रीरस्तु, शुभमस्तु ॥



